संस्कृतविद्यापीठग्रन्थमालायां अशीतितमम्पुष्पम्

देवयाज्ञिकपद्धतिमाधारीकृत्य

# श्रौतयज्ञविश्लेषणम्

लेखकः सम्पादकश्च

डॉ॰ सुन्दरनारायणझाः




श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्
( मानितविश्वविद्यालयः )
नवदेहली-110016

संस्कृतविद्यापीठग्रन्थमालाया अशीतितमम्पुष्पम्

देवयाज्ञिकपद्धतिमाधारीकृत्य

# श्रौतयज्ञविश्लेषणम्

प्रधानसम्पादकः
**प्रो. राधावल्लभत्रिपाठी**
कुलपतिः

लेखकः सम्पादकश्च
**डॉ. सुन्दरनारायणझाः**



**श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्**
(मानितविश्वविद्यालयः)
**नवदेहली**

प्रकाशकः
श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्
(मानित-विश्वविद्यालयः)
कुतुब सांस्थानिकक्षेत्रम्
नवदेहली-११००१६

आई.एस.बी.एन : 81-87987-54-5

प्रकाशनवर्षः - 2012



मूल्यम् : 280/- ₹

मुद्रकः
**अमरप्रिंटिंगप्रैसः**
देहली-११०००९
दूरभाषः : 9871699565, 8802451208

# भूमिका

विदन्त्येव विज्ञा यद् विश्वस्य ज्ञान-विज्ञान-विमर्शपरम्परासु अतिमहदवदानं वरीवर्त्यते भारतीयप्रज्ञायाः। अस्या प्रज्ञायाः परमप्रकर्षं विभावयामः अस्माकं शास्त्रपरम्परासु। एताश्च शास्त्रपरम्परा आवेदेभ्यः प्रसृता अद्यावधि विकासं यान्तीति न संशीतिः। विद्- ज्ञाने, विद्- सत्तायाम्, विद्लृ लाभे तथा विद् - विचारणे इति धातुचतुष्टयविनिष्पन्नो वेदशब्दः चतुरस्रतां ज्ञानप्रवाहस्य द्योतयति। विदन्ति जानन्ति, विद्यन्ते भवन्ति, अथवा विन्दन्ते लभन्ते, विन्दन्ति विचारयन्ति सर्वे मनुजाः सत्यविद्यां यैर्येषु वा तथा विद्वांसश्च भवन्ति ते वेदाः- इति ऋषिदयोनन्दोक्तेः। वेद्यते ज्ञायते अनेनेति वेदः इत्युक्त्यापि वेदस्य ज्ञानस्रोतस्त्वं सिध्यति।

अथैतेषां वेदानाम् अतिप्राचीनकालात् शाखा-चरण-परिषद्भिः संरक्षणं प्रसारश्च समजायत। तथैव शाखा-चरण-परिषत्सु शास्त्रपरम्पराऽपि प्रसारं विकासं चापेदे। संहितानां शाखास्तासु तासु गुरुशिष्यपरम्परासु अभ्यस्ताः। चरणशब्दः शाखा- विशेषाध्ययनपरैकतापन्नजनसङ्घवाची' इति जगद्धरोक्तेः शाखाविशेषमधीयानां जनानां समाजश्चरण इति न्यगद्यत। तथा चरणानां सङ्घा एव परिषदिति प्रोक्ताः। परिषत्सु विज्ञाः पण्डिता अवश्यं भवेयुरिति व्यवस्था आसीत्। दर्शन-तर्क-धर्मशास्त्रादिष्वबाह्या एकविंशतिर्विप्राः प्रत्येकं परिषदि स्युरिति मनोः याज्ञवल्क्यस्य च लक्षणात्। परिषदि अभ्यस्ताः ग्रन्थाः पार्षदा इत्यहिताः।

अस्या ज्ञानपरम्परायाः महिमा उपनिषत्सु परां काष्ठां ययौ। उपनिषत्सु वेदप्रतिपाद्यब्रह्मविद्यायाः पुनः सन्धानं विहितम्, तत्कृते च गुरुशिष्यपरम्पराप्रथिता काऽपि संवादशैली ऋषिभिराविष्कृता। इयं शैली दार्शनिकीं पद्धतिमेव प्रथयति। प्रश्नोऽनुप्रश्नोऽनतिप्रश्ननिवारणं व्याख्याऽनुव्याख्या दृष्टान्त आख्यायिकोर्ध्वप्रवचनं चेत्यष्टावस्याः अङ्गानि सन्ति।

आवेदेभ्यः प्रसृतायामस्यां परम्परायां नाना ज्ञानधाराः परम्परं सङ्गच्छन्ते संवदन्ति च। तथाहि - षड्वेदाङ्गानि, आस्तिकनास्तिकदर्शनसम्बद्धाः परःसहस्रं ग्रन्थाः आयुर्वेदाद्युपवेदग्रन्थास्तथा च काव्यशास्त्रललितकलाविषयकं वा साहित्यमिति सर्वथा निरवधिर्वरीवर्ति सुरसरस्वत्याः साहित्यभाण्डागारः। वैदिकवाङ्मय एव सूत्रसाहित्यस्य वर्तते अनितरसाधारणो महिमा, यत्र प्रथन्ते कल्पसूत्राणि श्रौतसूत्राणि गृह्यसूत्राणि च। अस्यामेव परम्परायां श्रौतयज्ञविषयका अपि विविधा ग्रन्था प्राणीयन्त श्रौतकर्मविद्भिर्विपश्चिदपश्चिमैः। अस्यामेव परम्परायां सुन्दरनारायणझावर्यस्य अनुत्तमं ग्रन्थरत्नं प्रकाशयन्तो मुदमनुभवामः, अस्य ग्रन्थस्य प्रसिद्धिं समुपादेयतां च आशास्महे। एतत्प्रकाशनसमायोजनाय विद्यापीठस्य शोधप्रकाशनविभागाय सम्यङ् मुद्रणाय च मुद्रकायापि साधुवादान् वितरामः।

**राधावल्लभः त्रिपाठी**

# भूयिष्ठान्ते नम उक्तिं विधेम

विघ्नेशं प्रथमं वन्दे वाचां देवीमतः परम्।
श्रौतज्ञानविमर्शाय नमः साम्बाय शम्भवे।। 1।।

कौशल्यातनयं नमामि सदयं श्रीजानकीवल्लभं
सौन्दर्यस्य दिवाकरं गुणनिधिं विज्ञानरूपं हरिम्।
श्रौतस्मार्तमयं जगत्त्रयगुरुं यज्ञात्मकं पावनं
मर्यादापुरुषोत्तमं रघुवरं सर्वार्थसिद्धिप्रदम्।। 2।।

चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च।
हूयते च पुनर्द्वाभ्यां तस्मै यज्ञात्मने नमः।। 3।।

विप्रवंशावतंसाय शशिकान्ताय सत्रिणे।
प्रणमामि सदा भक्त्या पित्रे पौरुषपोषिणे।। 4।।

यस्याः पुण्योदराज्जन्म लब्ध्वा वर्ते सुखं सदा।
पूज्यमात्रे तु हीरायै दशप्राचीं करोम्यहम्।। 5।।

श्रीमत्सद्गुरुपादपद्मयुगलं शिष्यैस्सदा सेवितं
ब्रह्मानन्दमयं प्रसन्नहृदयं वैराग्यसम्पोषकम्।
सौभाग्यात्तपसा च गौरवमयं ब्रह्मण्यसन्धायकं
साष्टाङ्गं प्रणमामि दिव्यवपुषं श्रीरामसेवोत्सुकम्।। 6।।

शोधोपाधिनिमित्तसाधुचरणः वेदार्थसम्पादकः
गैर्वाण्या बहुशिष्यपालनपरः सद्ज्ञानवन्मानसः।
नित्यज्ञानविवेचनेऽपि चतुरः सन्मार्गसम्प्रेरकः
विद्वन्मण्डलमण्डितः सुखकरः ख्यातोऽयमाभारतम्।। 7।।

सोपेन्द्रोऽस्ति महान् सदा सुरगिरां सम्पोषयत्यादृतां
कह्लारप्रतिमो विभाति वपुषा विद्वत्समाराधिता।
प्राप्यामुं द्विजसेवकं सकरुणं मज्जीवनं संस्कृतं
सञ्जातं तमुपास्यदेवसविधे कुर्वे नतं मस्तकम्।। 8।।

शास्त्राणामवगाहनेऽति चतुरः सिद्धः प्रजापालने
दक्षः श्रौतक्रियासु विप्रतनयो विज्ञानवन्मानसः।
तत्त्वार्थाधिगमे तथैव निपुणः व्याख्यानविज्ञो महान्
श्रौताचारपरम्पराप्रचरणे संलग्नचेता मुदा।। 9।।

सोऽयं कर्मधुरन्धरश्शुभकरः विप्लाविता वारिधौ
सौभाग्यान्ममजीवनस्य तरणीं द्वाभ्यां कराभ्यां धृतः।
तस्मादद्य गवेषणेऽप्यनुरतस्तिष्ठामि भूमावहं
तं प्राणाधिपतिन्नमामि शिरसा लक्ष्मीश्वरं श्रोत्रियम्।। 10।।

विदग्धं वाच्यध्यात्मनि ककुदभीप्सुं वसुधरं
प्रभावन्तं दिव्यं विगणनधिया विच्युतविदम्।
उपाध्यायं वाचस्पतिममुमनीकं सुरसमं
ममोत्कर्षे हेतुं तमतिपथिनं नौमि सततम्।। 11।।

पदवाक्यप्रमाणेषु यस्य प्रज्ञा प्रतिष्ठिता।
वेदतत्त्वार्थबोधेऽपि नामान्वर्थी महातपाः।। 12।।

तस्य प्रसादान्मम जीवनादौ जाता प्रवृत्तिः श्रुतिसाधनाय।
सोऽयं विदेहेषु वसन् दयालुः यज्ञादिकार्येषु च सिद्धहस्तः।। 13।।

श्रौतज्ञानमहोदधावनुदिनं स्नानेन विद्योतते
यस्याभा पदवाक्यफेनिलयुता शिष्यान् करोत्युद्भटान्।
सोऽयं फूत्कृतिनाऽपसारयति नुः कालुष्यमज्ञानजं
देवं भक्तिनतः प्रणौमि सफलं विद्येश्वरं वैदिकम्।। 14।।

शशिनाथाय विप्राय श्रीनारायणसाधवे।
सुधीराय सुविज्ञाय नतिं कुर्वे मुहुर्मुहुः।। 15।।

सत्यनारायणं वन्दे शीतलमवधं तथा।
मुनीन्द्रं वैष्णवं विप्रं वन्द्यं वन्दे दिवानिशम्।। 16।।

नागेन्द्राय भवेन्द्राय जयकान्ताय धीमते।
सर्वतन्त्रस्वतन्त्राय सज्जनाय नमो नमः।। 17।।

अन्येभ्यश्चोपकृद्भ्यश्च ज्ञाताज्ञातेभ्य एव च।
कृतित्वं संस्मरन्नित्यं नमस्कारं समर्पये।। 18।।

नाहं श्रौतार्थनिष्णातः श्रीसीतारामसंश्रयात्।
तथापि व्यालिखं किञ्चित् प्रीयतां तेन सद्गुरुः।। 19।।

षडर्यनन्तनेत्राख्ये वैशाखस्यासिते दले।।
चतुर्दश्यां गतं पूर्तिं श्रौतविश्लेषणम्मम।। 20।।

कृतिर्ममैषा शुभतामुपेयात् इत्यर्थ्यते दाशरथिर्विभूत्यै।
यया धरैषा नवकौमुदीव सौभाग्यदात्री सुखदा भवेन्नः।। 21।।

इति

# प्रस्तावना

वन्देनिर्मलपूर्णचन्द्रवदनं वन्दे कृपासागरं
वन्दे दाशरथिं सुरेन्द्रविनतं वन्दे जगत्कारणम्।
वन्दे लक्ष्मणसंयुतं रघुवरं सीतापतिं सुन्दरं
वन्दे ब्रह्मशिवादिसेव्यमनिशं भक्तेष्टसिद्धिप्रदम्।।

'अपौरुषेयं वाक्यं वेदा:,' 'वेदा: नित्या:', 'अनन्ता वै वेदा:', इत्यादि वाक्यश्रवणाद्वेदानां नित्यत्वं त्रिकालावाधित्वञ्च स्वरूपं सिद्ध्यति। किन्तु, कथञ्चैते वेदा: अपौरुषेया: नित्याश्च? इत्यस्मिन् विषये साम्प्रतं मनीषिण: कृतभूरिपरिश्रमिणोऽपि न तत्त्वमनुभवन्ति। अस्माकं महर्षय: कृष्णाजिने उपविष्टा: अतीतानागतवर्त्तमानपदार्थानां युगपद्द्रष्टार: यं यं तत्त्वं दृष्ट्वोपदिष्टवन्तस्ते तत्त्वभूता: वेदा:, साम्प्रतमुपलभ्यमानेभ्य: शब्दराशिभ्य ऋग्यजुस्सामाथर्वणेभ्य: ग्रन्थरूपेभ्य: पृथक्-पृथग्भूता: वेदा: सन्ति। यच्चोपदिष्टं मन्त्रब्राह्मणात्मकं वेदा: तदपि सत्यम्। मन्त्रात्मको यो वेदो वर्तते उतवा ब्राह्मणात्मको यो वेदो वर्तते तत्र उभयोर्नास्ति कश्चिद्भेद:। मन्त्रगततत्त्वान् विशदीकृत्य तानि तानि ब्राह्मणानि तैस्तै: ऋषिभिरूपदिष्टानि। वस्तुत: देवताविज्ञानोपपादक: शब्द एव मन्त्र:। देवताविज्ञानोपपादक: मन्त्र एव वेद:। इत्युभयोर्मन्त्रवेदयो: साङ्कर्येण व्यवहारे अभिन्नस्वरूपदर्शनमपि किमपि वैशिष्ट्यमुभयोर्वेदमन्त्रयोरस्तीत्युक्तम्-मन्त्रवेदशब्द: पृथक् पृथग्भूतत्वात्।

यच्चोक्तं देवताविज्ञानोपपादक: शब्द: मन्त्र इति इन्द्राग्निप्रभृतयो ये देवा: सन्ति तेषां सृष्टिसंरचनायां पालने संहरणे च यादृशं स्वरूपं भवति,

तादृशं स्वरूपं दृष्ट्वा ऋषयः मन्त्रस्योपदेशं कृतवन्तः। तत्र ऋषिसम्बुद्धौ तत्तद्देवतादीनां ऋषीणां पितृणाञ्च मौलिकतत्त्वानां यथा-यथा स्वरूपं भवति, तस्योपव्याख्यानं मन्त्रेषु शब्दमुखेनोपवर्णितम्। अत एव ते शब्दाः 'इषेत्वोर्जेत्वा' प्रभृतयः केवलं तेषां स्वरूपवर्णने समर्थभूताः सन्ति। न तु ते शब्दाः तत्तत्स्वरूपभूताः सन्ति। अयमेव भेदः साम्प्रतिके काले विद्यमानेषु ऋग्यजुस्सामाथर्वणेषु ग्रन्थात्मकेषु वेदेषु तत्त्वेषु च वर्तत इति श्रुत्वैव अद्यतनीयाः विद्वांसश्चकिता भवन्ति; किञ्चित् शास्त्रान्तरं कथयतीत्याशङ्कन्ते। यतो हि अद्य प्रभृति इमानेव शब्दराशीन् वेदं (मन्यमानः) स्वीकुर्वन्तः विद्वांसः इतोऽप्यधिकं किमपि तत्त्वात्मकं स्वरूपं अस्तीत्यपि स्वीकर्तुं न क्षमा भवन्ति। तथा चोक्तम्-

**द्वे ब्रह्मणी वेदितव्ये शब्दब्रह्म परं च यत्।**
**शाब्दे ब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति।।**[1]

इति मन्त्रबलात् शब्दब्रह्म तस्मात्पृथक् कश्चिदन्यदर्थब्रह्म वर्तते। तदर्थब्रह्म एव वेदस्य प्रतिपाद्यो विषयः। तद् ब्रह्म एव जगदिदं सृजति पालयति संहरति च। तस्मादुक्तम्-

**यतो वा इमानि भूतानि जायन्ते, यस्माज्जातानि जीवन्ति। यस्मिन्संविशन्ति तद्ब्रह्म तद्विजिज्ञासस्व।**[2]

अथ च '**जन्माद्यतः**' इति व्याससूत्रमपि तदेव वक्ति। **अस्य** तात्त्विकवेदस्यैव अपौरुषेयत्वं नित्यत्वं व्योमवत् सर्वव्यापकत्वं कूटस्थाविचालीति च धर्मैरुक्तम्। विश्वस्य सर्वस्य भूतम्। इत्थं ब्रह्मणि द्विविरुद्धधर्मणोरेकत्रसम्भवादात्मानम् अमृतत्वम्, अक्षुण्वत्वम्, अव्यक्तत्वञ्च सम्पादयन् विश्वमिदं सृजति धारयति च।

अत एवोक्तं वेदे-

---

1. (मै० उ० 6/12)
2. (तै० उ० भृगुबल्ली पंचमेऽनुवाके)

**प्रजापतिश्चरति गर्भे अन्तरजायमानो बहुधा विजायते।**
**तस्य योनिं परिपश्यन्ति धीरास्तस्मिन् ह तस्थुर्भुवनानि विश्वा।।**[1]

भगवान् मनुरपि मन्त्रममुमनुवादयन् लिखति –

**ततः स्वयम्भूर्भगवानव्यक्तो व्यञ्जयन्निदम्।**
**महाभूतादि वृत्तौजाः प्रादुरासीत्तमो नुदः।।**[2]

इति श्रुतिस्मृतिवचनाभ्यमिदं स्पष्टं यद् ब्रह्मणि विरुद्धधर्मद्वयमेकत्र (अव्यक्तत्वं सर्वव्यापकत्वञ्च) तिष्ठति। अजायमान इति एकः धर्मः, पुनः बहुधा विजायते इत्यपरः विरुद्धधर्मः। उभावपि ब्रह्मणि सन्तिष्ठेते। अजायमानधर्मेण आत्मनि धर्मत्वम् अविकारित्वं संस्थापयन् बहुधा विजायते इत्यपरेण विरुद्धधर्मेण पृथिव्यादिलोकान्, मनुष्यादिजीवान्, पशु-पक्षि-कृमि- कीट-लता-गुल्म-वृक्ष-वनस्पत्यौषध्यन्नादीन् उत्पादयति। इत्थं ब्रह्मणः यत्स्वरूपं वेदैः प्रतिपाद्यं वर्तते तत्र न कस्यापि विप्रतिपत्तिः। सर्वैः दार्शनिकैराचार्यैर्धर्मशास्त्रविज्ञैश्च मतमिदं स्वीक्रियते। स्वकीयेनाव्यक्तस्वरूपेणाजायमानेन च ब्रह्मणः ज्ञानस्वरूपं इति वेदान्तिनः। अथ च 'बहुधा विजायते' इति पूर्ववद्रूपेण यज्ञमुखेन विश्वमिदं सृजतीति मीमांसकाः। परन्तु उभयोर्मार्गयोरेकत्र समष्टिभूतं स्वरूपं यद्वेदेषु दृश्यते तस्य दर्शनमन्येषु शास्त्रेषु च न क्वचिदुपलभ्यते। तस्य हेतुः वर्तते वेदस्य मौलिकस्वरूपस्य विस्मरणम्।

ब्रह्मणो यन्नित्यत्वमनादित्वममृतत्वञ्च स्वरूपं विद्यते तत्स्वरूपं पुरुषवेदस्य। अत 'अनन्ता वेदाः', 'नित्या वै वेदाः' इति तैत्तिरीया आमनन्ति। 'बहुधा विजायते' इति यद्ब्रह्मणः स्वरूपं तत्प्रकृतिवेदस्य स्वरूपम्। इमे प्रकृतिभूताः वेदा ऋग्यजुस्सामाथर्वाख्याः वषट्कारस्य त्र्यस्त्रिंशत् स्तोमपर्यन्तव्याप्ताः सन्तोऽखिलं जगदग्नीषोमाभ्यां सृजन्ति। अत एव यत्र पुरुषवेदाः नित्या अनन्ता अपौरुषेयाः, तत्र प्रकृतिवेदाः सादिशान्ताः।

1. (शु० य० सं० 31/19)
2. (मनु० 1/6)

वस्तुतः अद्यत्वे ऋग्यजुस्साम्नां ये ग्रन्थाः सन्ति शब्दराशिभूतास्ते सर्वे प्रकृतिवेदान्तर्गता एव। पुरुषवेदास्तु प्रकृतिभ्यः परमचिन्त्याः वेदाः। अचिन्त्यस्य तत्त्वस्य लक्षणमेवमवाप्यते –

**अचिन्त्याश्च खलु ये भावाः न ताँस्तर्केण योजयेत्।**
**प्रकृतिभ्यः परे यस्तु तदचिन्त्यस्य लक्षणम्।।**[1]

इति वचनात् पुरुषेवदास्त्वस्माकं चिन्तनपथि न समायान्ति। **'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह'** इति वचनात्।

अस्माकं पुरतः मीमांस्यविषयाः प्रकृतिवेदाः। एभिर्वेदैरेवादौ प्रजापतिः यज्ञमुखेन विश्वमिदं सृजति। उक्तञ्चापि–

**सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः।**
**अनेन प्रसविष्यध्वमेषवोऽस्त्विष्ट कामधुक्।।**[2]

प्रथमान्यासन्। (शु० य० सं० 31/16) इति श्रौतस्मार्तवचनात् यज्ञैरेव जगतः सृष्टिः। विश्वमिदं सृष्ट्वा तस्मिंश्च प्रविश्य सर्वं सज्जीवयति। अत एवोक्तम् – **'तत् सृष्ट्वा तदेवानुप्राविशत्'**[3]

यथा सृष्टेः विविधाः प्रक्रियाः भवन्ति तथैव यज्ञा अपि प्रक्रियाभेदादनेकविधस्वरूपसम्पन्नाः अस्माकं पुरतः समायान्ति। ताः यथा –**'अग्न्याधानाग्निहोत्रदर्शपूर्णमासचातुर्मास्यनिरूढपशुबन्ध–सोमचयनसौत्रामण्याश्वमेधपुरुषमेधसर्वमेधगवामयनवाजपेजराजसूयादयः।** तत्र दर्शपूर्णमासाभ्यां जगतः सृष्टिः, अग्निहोत्रेण चोत्पन्नानां सत्वानामधारणं संरक्षणञ्च, चातुर्मास्येन अन्नौषधिवनस्पतीनां सृष्टिः, निरूढपशुबन्धेन जीवानाम्, सोमेन च देवानाम्, सौत्रामण्या मनुष्याणां सृष्टिः, अश्वमेधेन महापातकनाशनम्, प्रारब्धस्य च क्षयः, चयनेन मुक्तिः, पुरुषमेधेन आत्मज्ञानं, सर्वमेधेन च शरीरस्थं असुरतत्त्वं विहाय सन्यासाय प्रव्रजन्ति प्रमातारः।'

---

1. (आप्तवाक्यम्– उल्लेखः, वेदधर्म्मव्याख्याने 274 तमे पृष्ठे)
2. (गीता 3/10)
3. (तै० उ० 2/6)

एवमुपर्युक्तेभ्य विविधेभ्यः यज्ञेभ्योऽनेकविधक्रियाः सम्पद्यन्ते। न केवलं मनुष्येभ्य एवापितु समस्तचराचरात्मकेभ्यो जीवेभ्य उपर्युक्ताः यज्ञाः सन्त्यावश्यकाः। यतस्तु इमे सर्वेऽपि यज्ञा नित्या अपि सन्ति काम्या अपि च सन्ति। काम्यानुष्ठानानां फलानि तु पृथक्-पृथक् अपि भवन्ति परन्तु उपर्युक्तानि फलानि तु नित्यानामेवोक्तानि। नित्ययज्ञास्तु सर्वैस्त्रैवर्णिकैर-प्यनुष्ठेया एव भवन्ति, अकरणे प्रत्यवायो भवति। यथा अशनपानादिक्रियाः समस्तेभ्यः चराचरेभ्यः सुनिश्चितास्तथैव नित्ययज्ञानामनुष्ठानान्यपि सर्वैरावश्यकान्येव। तस्मादेव इमे यज्ञा नित्यं नैरन्तर्येण सर्वदा सर्वत्र प्रचलन्तो दृश्यन्ते। यथा अग्नि-वायुसूर्यादिषु देवतासु ये यज्ञाः प्रचलन्ति त आधिदैविकाः, भौतिकपदार्थेषु ये यज्ञाः प्रचलन्ति त आधिभौतिकाः तथा च जीवेषु भूयमानाः यज्ञा आध्यात्मिका इत्युच्यन्ते। अतोऽनेन विवेचनेन यज्ञास्तु त्रिविधाः सम्पद्यन्ते - आधिदैविकाधि-भौतिकाध्यात्मिकाश्च।

वस्तुतः यज्ञशब्दस्य लक्षणं कुर्वता महर्षिकात्यायनेन लिखितं - **'द्रव्यं देवता त्यागः'**[1] इति। अर्थात् देवानुद्दिश्य द्रव्याणां त्यागो यत्र भवति तत्र यज्ञः सम्पद्यते। इत्थं यज्ञः देवतास्वरूपमग्निं प्रज्वाल्य तस्मिन्नग्नौ घृतादिद्रव्याणामाहुतिर्दीयते। अस्या आदानविसर्गात्मिकाया क्रियायाः नाम यज्ञ एव। देवता द्रव्यं गृह्णाति एवञ्च यजमानः द्रव्यं त्यजति। एवं यत्र-यत्र देवता द्रव्याणां ग्रहणं करोति, तथा च यत्र-यत्र देवानुद्दिश्य द्रव्याणि दीयन्ते तत्र-तत्र यज्ञः सन्तिष्ठते।

उदाहरणार्थमिह केचन प्रसङ्गा उद्ध्रियन्ते। ते यथा-अस्माकं शरीरे वैश्वानरोऽग्निः देवताऽस्ति। तदुक्तं गीतायाम्-

**अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः।**
**प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम्।।**[2]

---

1. (का० श्रौ० सू० 1/2/2)
2. (गीता-15/14)

तस्मै देवाय वयं प्रतिदिनं भोजनद्रव्याणामाहुतिं दद्मः। अनयाऽऽहुत्या वयं प्रतिदिनं यज्ञं कुर्मः। अस्य यज्ञस्याधिष्ठाता पुरुषः आत्मा इत्युच्यते। यत्र-यत्र भुज्यते तत्र-तत्र यज्ञः सम्पद्यते। पशवः पक्षिणोऽपि भोजनं कुर्वन्ति, अत एव तेऽपि यज्ञं कुर्वन्त्येव। कृमि कीट-पतङ्गादयोऽपि भोजनक्रियया यज्ञं सम्पादयन्ति।

वृक्षाः वनस्पतयः लता-गुल्मौषधयश्च भौतिकपदार्था उच्यन्ते। इमेऽपि स्वमूलैः रसं प्राप्य भोजनं कुर्वन्ति, अतस्तेऽपि यज्ञमेव कुर्वन्ति। एतेषां यज्ञानां माध्यमेनैव षड्भावविकारा उत्पद्यन्ते। बीजगतवृक्षाः यज्ञेभ्य एव अङ्कुरन्तः उत्पन्नाः सन्तः, विकासं प्राप्यैकस्मिन् महति वृक्षरूपे परिणता भवन्ति। लता गुल्मवृक्ष-वनस्पतीनां अधिष्ठातारः जलवाय्वादयः भौतिकाः देवताः सन्ति, तस्मादेषु जायमानः यज्ञ आधिभौतिक इत्युच्यते।

अस्यां पृथिव्यां प्रतिदिनं सूर्यः, चन्द्रो, वायुः, मेघः, ग्रहाः, नक्षत्राणि च स्वरसं जुह्वति येनेयं पृथिवी जीवति। सूर्योऽपि प्रतिदिनं प्रकाशमौष्ण्यञ्चोद्वमन् द्युलोके विभाति। तस्य किरणाः गोरित्युच्यन्ते। सूर्यः स्वकिरणेभ्यः पृथिव्यामागत्य रसानादाय गच्छति। तैः रसैरेव स शक्तिसम्पन्नो भवति। एवमुक्तप्रकारेणेदं स्पष्टं यत् सूर्यकिरणरूपाः गावः द्युलोकात् पृथिव्यामागच्छन्ति, आगत्य च पुनस्तत्र गच्छन्ति। अतो गोः आवागमनं गवामयनमित्युच्यते। इत्थं देवेषु भूयमानो यज्ञः आधिदैविक इत्युच्यते।

त्रिविधानामेषां यज्ञानां देवयाज्ञिकपद्धतौ याः प्रक्रियाः वर्णिताः सन्ति, तदनुसारमस्मिन् शोधप्रबन्धे चिन्तनं कृतमस्ति। इमे एवाधिदैविकाधि-भौतिकाध्यात्मिकयज्ञाः प्राकृताः वैकृताश्चोच्यन्ते। एषामेव प्रयोगाः नित्यनैमित्तिककाम्यभेदेष्वपि वर्णिताः सन्ति। इमे सर्वविधाः यज्ञाः वस्तुतः मन्त्र-ब्राह्मणश्रौतसूत्रादिषु वर्णिताः सन्ति। मन्त्रब्राह्मणश्रौतसूत्रादयः श्रौतग्रन्था इत्युच्यन्ते। यतः वेदशब्दस्यापरपर्यायः श्रुतिरिति। **वेदा हि यज्ञार्थमभिप्रवृत्ताः** (वेदाङ्गज्योतिषे) इति लगधवचनादिदं सुव्यक्तमेव यत् श्रुतिषु यज्ञानां

वर्णनानि सन्ति। एवमुक्तप्रकारेण श्रुतिप्रतिपादिताः यज्ञाः श्रौतयज्ञा इत्युच्यन्ते। तेषां श्रौतयज्ञानां विश्लेषणात्मकमध्ययनं देवयाज्ञिक- पद्धतिमाधारीकृत्य चिकीर्षा मयि जागृता।

आशासे मच्छोधप्रबन्धे वर्णितान् विषयानधीत्य विद्वांसः पाठकाः सन्तुष्टा भविष्यन्ति। अनन्तरकालेषु शोधकार्यकर्तृणां कृते, श्रौतविषये किमपि विशिष्टावगाहनार्थं अध्येतृणां कृते, भारतीयसभ्यता-संस्कृतेश्च परिपालनार्थमयं शोध-प्रबन्धः समुपयुक्तो भविष्यतीति विश्वसिमि।

विषयोऽयं श्रौतयज्ञप्रक्रियासंस्पर्शादलौकिकतत्त्वस्य प्रदर्शनाच्च गाम्भीर्यं विभर्ति। परन्त्वस्माकं महर्षिभिः याज्ञवल्क्यकात्यायनादिप्रभृतिभिः सप्रयत्नमुपदिष्टानि शतपथब्राह्मणश्रौतसूत्रादीनि विषयेऽस्मिन् महदुपकारकाणि। अन्येषाञ्चापि जैमिनिप्रभृति आचार्याणां ग्रन्थाः प्रकाशभूताः अस्मिन् शोधप्रबन्धने। यन्मयाऽत्रानुसन्धानं कृतं तद् यदि विदुषां सन्तोषाय भविष्यति तदाऽस्य सार्थक्यं सिद्ध्येत।

गच्छतः स्खलनं क्वापि भवत्येव प्रमादतः।
हसन्ति दुर्जनास्तत्र समादधति सज्जनाः।।

विदुषामनुचरः

**विद्यावाचस्पतिः डॉ० सुन्दरनारायणझाः**

# कृतज्ञताज्ञापनम्

अस्मिन्नध्ययनप्रसङ्गेऽनेकेषां विदुषां सहयोगः प्राप्तो मया तद्यथा-शोधविषयनिर्धारणे श्रीमतां पूज्यचरणानां सुप्रसिद्धानां कामेश्वरसिंहदरभङ्गासंस्कृतविश्वविद्यालयस्याचार्यवर्याणां वेद-विभागाध्यक्षाणां शोधकार्यस्यास्य मार्गनिर्देशकानां प्रो० उपेन्द्रझामहोदयानां या सत्प्रेरणा समभवत्तदर्थमहं कृतज्ञतां ज्ञापयन् प्रणामाञ्जलिं तेषां चरणारविन्दयोः समर्पयामि, सहैव गुरुवर्याणां धर्मपत्नीभ्यः श्रीमतीभ्यो हृदयेन प्रणामाञ्जलिञ्च समर्पयामि यतस्ताभिः शोधकर्मणि गृहेऽपि समयोऽदायि।

शोधप्रबन्धस्य संशोधनकर्मणि चापि नैकेषु स्थलेषु श्रद्धेयैः प्रो० झामहोदयैः समधिकव्यस्तसमयतश्चापि मदर्थं समयोऽदायि मार्गनिर्देशनञ्च व्यधायि। तदर्थमेतादृशानां कारुण्यहृदयाणां विद्वद्वराणाम्प्रति आभारप्रदर्शनं तु सूर्याय दीपप्रदर्शनमिव भवतीति केवलं हार्दिकीं कृतज्ञतां समभिज्यैव वितनोमि।

श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम् (मानित विश्वविद्यालयः) नई दिल्ली'त्यस्य वेदविभागाध्यक्षाणां वेद-वेदाङ्ग-सङ्कायप्रमुखचराणाञ्च प्रो० लक्ष्मीश्वरझोपाह्वानां चरणारविन्दयोः हृदयेन प्रणामाञ्जलिं समर्पयामि। श्रद्धेयैः प्रो० झामहोदयैः मज्जीवनयात्रायां एकमद्भुतं चमत्कारयुक्तं कार्यं कृतम्, तस्यैवैतत्फलं यदद्य स्थिरतापूर्वकमत्र विद्यापीठस्य वेदविभागेऽध्यापयन् दार्ढ्येन शोधकर्मणि संलग्नोऽभूवम्, अतस्तेषां चरणयुगलयोः पुनः पुनः प्रणामाञ्जलिं समर्पयामि।

श्रीजगदीशनारायणब्रह्मचर्य्याश्रमः, लगमा (रामभद्रपुरम्) इति पुण्यस्थलस्य ब्रह्मचारीजी (सरकार) महोदयानां दीक्षासंस्कारप्रदातृणां चरणकमलयोः हृदयेन प्रणामपुष्पाञ्जलिं समर्पयामि। तेषामनुकम्पयैवाऽहं संस्कृताध्ययने प्रवृत्तः।

मम पितृपादानां स्व० पं० श्री शशिकान्तझा महाशयानां प्रेरणयैवाहं लगमास्थं ब्रह्मचर्य्याश्रमं गत्वा वेदाध्ययने प्रवृत्तोऽभवमिति विषये मूलभूतानामेषां चरणारविन्दयोः कोटिशः प्रणामपुष्पाञ्जलिं समर्पयामि।

मातृपादाभिः श्रीमतीभिः स्व० हीरादेवीभिः शरीरमिदं प्रदाय सम्पोष्य सम्वर्द्धय च शोधकर्मणि प्रवर्तयितृभिः योऽनुग्रहो विहितस्तदर्थं तासाञ्चरणारविन्दयोः पुनः पुनः कोटिशः प्रणामपुष्पाञ्जलिं समर्पयामि।

मम गुरुमहोदयानां वेद-वेदाङ्ग-पुराण-मीमांसादिशास्त्रपारङ्गतानां पूज्यप्रवराणां कामेश्वरसिंहदरभङ्गासंस्कृतविश्वविद्यालयस्य वेदविभागे आचार्यपदमलङ्कुर्वतां प्रो० विद्येश्वरझामहोदयानां चरणारविन्दयोः प्रणामाञ्जलिं समपर्ययामि।

विश्वविद्यालयस्य वेदविभागस्थानामन्येषाञ्चाचार्यवर्याणां डॉ० विनयकुमार मिश्राणां, डॉ० धनेश्वरझोपाख्यानाञ्च चरणारविन्दयोः प्रणामाञ्जलिं समर्पयामि।

कामेश्वरसिंहदरभङ्गासंस्कृतविश्वविद्यालयस्य व्याकरणविभागे आचार्यपदमलङ्कुर्वतां प्रो० शशिनाथझामहाशयानां चरणारविन्दयोः प्रणामाञ्जलिं समर्पयामि।

अन्येषाञ्च गुरुजनानां गुरुवत्पूज्यानाञ्च विदुषां प्रो० रमेशचन्द्रदारशशर्मा प्रो० नागेन्द्र झा, प्रो० भवेन्द्रझा, प्रो० जयकान्तसिंह शर्मा, श्रीश्रीनारायण मिश्र, श्री सुधीरनाथझा, 'आजाद' महोदयानां चरणारविन्दयोः हृदयेन प्रणामाञ्जलिं समर्पयामि।

ज्येष्ठभ्रातृणां श्रीसत्यनारायणझा, श्रीअवधनारायणझा, श्रीशीतल-नारायणझा महोदयानां पादारविन्दयोः प्रणामाञ्जलिं समर्पयामि।

सदसद्विवेकसम्पन्नानां श्रीसीतारामगुणगानरतानां श्वसुरवर्याणां बरिऔलग्रामवासिनां श्रीमुनीन्द्रझावर्याणां चरणकमलयोः प्रणामाञ्जलिं समर्पयामि।

सर्वेषामपि सम्बन्धिनां कृतज्ञताम्मन्ये यत्तैः सत्कर्मण्यत्र शुभावसरः प्रदायि। विशेषेण डॉ० शिवलोचनझामहोदयाय धन्यवादान् वितनोमि।

श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृविद्यापीठम् (मानित-विश्वविद्यालयः) नवदेहली इत्याख्यस्य पूर्वकुलपतिमहोदयाः स्वर्गीयाः प्रो० वाचस्पति उपाध्यायमहाभागाः वन्दनीयाः, दिवोगतानां गतानां तेषां महोदयानां पादपद्मयोः प्रणामपुष्पाञ्जलिं समर्पयामि।

दरभङ्गेत्याख्यस्य कामेश्वरसिंहदरभङ्गासंस्कृतविश्वविद्यालयस्य कुलपतिमहोदयाश्चापि वन्दनीयाः। अतस्तेषां पादपद्मयोः प्रणामाञ्जलिं समर्पयामि।

शोधविभागाधिकारिणामन्येषाञ्चाधिकारिणां लिपिकसंवर्गाणां कृते मे नतिः।

पुस्कालयाध्यक्षाणामतिकृतज्ञताम्मन्ये तेषां चरणारविन्दयोः प्रणामाञ्जलिं समर्पयामि। पुस्तकालयस्य कर्मचारिभ्यो विश्वविद्यालयस्य सर्वेभ्यः पदाधिकारिभ्यो विशेषेण परीक्षानियन्त्रकेभ्यो परीक्षाविभागीय-कर्मचारिभ्यः, विश्वविद्यालयस्य समस्तेभ्यः प्राध्यापकेभ्यश्च अशेषान् धन्यवादान् वितनोमि।

श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठस्य वर्त्तमानकुलपतये प्रो० राधावल्लभत्रिपाठिमहोदयाय प्रणामाञ्जलि समर्पयामि।

शोधप्रबन्धस्य टङ्कयित्रे श्रीकृष्णचन्द्रपाठकमहोदयाय धन्यवादं व्याहरामि यतस्तेनापि सावधानतया टङ्कणमेतत् यथासमयमकारि।

प्रकाशकाय श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठाय, शोध-प्रकाशन विभागाध्यक्षाय प्रो० रमेशकुमारपाण्डेयमहोदयाय च पौनः पुन्येन प्रणामाञ्जलिं समर्पयामि।

श्रीजगदीशनारायणब्रह्मचर्य्याश्रमः, लगमा (रामभद्रपुरम्) इति पुण्यस्थलस्य ब्रह्मचारीजी (सरकार) महोदयानां दीक्षासंस्कारप्रदातृणां चरणकमलयोः हृदयेन प्रणामपुष्पाञ्जलिं समर्पयामि। तेषामनुकम्पयैवाऽहं संस्कृताध्ययने प्रवृत्तः।

मम पितृपादानां स्व० पं० श्री शशिकान्तझा महाशयानां प्रेरणयैवाहं लगमास्थं ब्रह्मचर्य्याश्रमं गत्वा वेदाध्ययने प्रवृत्तोऽभवमिति विषये मूलभूतानामेषां चरणारविन्दयोः कोटिशः प्रणामपुष्पाञ्जलिं समर्पयामि।

मातृपादाभिः श्रीमतीभिः स्व० हीरादेवीभिः शरीरमिदं प्रदाय सम्पोष्य सम्वर्द्ध्य च शोधकर्मणि प्रवर्तयितृभिः योऽनुग्रहो विहितस्तदर्थं तासाञ्चरणारविन्दयोः पुनः पुनः कोटिशः प्रणामपुष्पाञ्जलिं समर्पयामि।

मम गुरुमहोदयानां वेद-वेदाङ्ग-पुराण-मीमांसादिशास्त्रपारङ्गतानां पूज्यप्रवराणां कामेश्वरसिंहदरभङ्गासंस्कृतविश्वविद्यालयस्य वेदविभागे आचार्यपदमलङ्कुर्वतां प्रो० विद्येश्वरझामहोदयानां चरणारविन्दयोः प्रणामाञ्जलिं समपर्ययामि।

विश्वविद्यालयस्य वेदविभागस्थानामन्येषाञ्चाचार्यवर्याणां डॉ० विनयकुमार मिश्राणां, डॉ० धनेश्वरझोपाख्यानाञ्च चरणारविन्दयोः प्रणामाञ्जलिं समर्पयामि।

कामेश्वरसिंहदरभङ्गासंस्कृतविश्वविद्यालयस्य व्याकरणविभागे आचार्यपदमलङ्कुर्वतां प्रो० शशिनाथझामहाशयानां चरणारविन्दयोः प्रणामाञ्जलिं समर्पयामि।

अन्येषाञ्च गुरुजनानां गुरुवत्पूज्यानाञ्च विदुषां प्रो० रमेशचन्द्रदारशशर्मा प्रो० नागेन्द्र झा, प्रो० भवेन्द्रझा, प्रो० जयकान्तसिंह शर्मा, श्रीश्रीनारायण मिश्र, श्री सुधीरनाथझा, 'आजाद' महोदयानां चरणारविन्दयोः हृदयेन प्रणामाञ्जलिं समर्पयामि।

ज्येष्ठभ्रातृणां श्रीसत्यनारायणझा, श्रीअवधनारायणझा, श्रीशीतल-नारायणझा महोदयानां पादारविन्दयोः प्रणामाञ्जलिं समर्पयामि।

सदसद्विवेकसम्पन्नानां श्रीसीतारामगुणगानरतानां श्वसुरवर्याणां बरिऔलग्रामवासिनां श्रीमुनीन्द्रझावर्याणां चरणकमलयोः प्रणामाञ्जलिं समर्पयामि।

सर्वेषामपि सम्बन्धिनां कृतज्ञताम्मन्ये यत्तैः सत्कर्मण्यत्र शुभावसरः प्रदायि। विशेषेण डॉ० शिवलोचनझामहोदयाय धन्यवादान् वितनोमि।

श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृविद्यापीठम् (मानित-विश्वविद्यालयः) नवदेहली इत्याख्यस्य पूर्वकुलपतिमहोदयाः स्वर्गीयाः प्रो० वाचस्पति उपाध्यायमहाभागाः वन्दनीयाः, दिवोगतानां गतानां तेषां महोदयानां पादपद्मयोः प्रणामपुष्पाञ्जलिं समर्पयामि।

दरभङ्गेत्याख्यस्य कामेश्वरसिंहदरभङ्गासंस्कृतविश्वविद्यालयस्य कुलपतिमहोदयाश्चापि वन्दनीयाः। अतस्तेषां पादपद्मयोः प्रणामाञ्जलिं समर्पयामि।

शोधविभागाधिकारिणामन्येषाञ्चाधिकारिणां लिपिकसंवर्गाणां कृते मे नतिः।

पुस्कालयाध्यक्षाणामतिकृतज्ञताम्मन्ये तेषां चरणारविन्दयोः प्रणामाञ्जलिं समर्पयामि। पुस्तकालयस्य कर्मचारिभ्यो विश्वविद्यालयस्य सर्वेभ्यः पदाधिकारिभ्यो विशेषेण परीक्षानियन्त्रकेभ्यो परीक्षाविभागीय-कर्मचारिभ्यः, विश्वविद्यालयस्य समस्तेभ्यः प्राध्यापकेभ्यश्च अशेषान् धन्यवादान् वितनोमि।

श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठस्य वर्त्तमानकुलपतये प्रो० राधावल्लभत्रिपाठिमहोदयाय प्रणामाञ्जलि समर्पयामि।

शोधप्रबन्धस्य टङ्कयित्रे श्रीकृष्णचन्द्रपाठकमहोदयाय धन्यवादं व्याहरामि यतस्तेनापि सावधानतया टङ्कणमेतत् यथासमयमकारि।

प्रकाशकाय श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठाय, शोध-प्रकाशन विभागाध्यक्षाय प्रो० रमेशकुमारपाण्डेयमहोदयाय च पौनः पुन्येन प्रणामाञ्जलिं समर्पयामि।

शोधसहायकाय डॉ० ज्ञानधरपाठकमहोदयाय, मुद्रकाय अमरप्रिंटिंग प्रेसस्य सञ्चालकाय चाशेषान् धन्यवादान् वितनोमि।

अन्येभ्यश्च ज्ञाताज्ञातसहायकर्तृभ्यः सस्नेहं सश्रद्धञ्च कृतज्ञतापूर्वकमशेषान् धन्यवादान् वितनोमि।

धर्मपत्न्यै श्रीमत्यै रेणुदेव्यै, आत्मजानां चि० आशुतोषचन्द्रझा, चि० अभिषेकचन्द्रझा, आयु० शिवानी कुमारी झा इत्येतेषां कृतेऽपि शुभाशीर्वादान् वितनोमि। यतस्तैः शोधकर्मण्यस्मिन् व्यस्ततावशात् मत्पितृकर्तव्यपालने जातां न्यूनतां सोढ्वाऽपि ममोत्साहो वर्धितः।

**दुर्गानभानन्तयमे सुवर्षे दिल्लीनगर्यां कटवारियायाम्।**
**स्थितो मुदा संचितमेति पूर्णं तुष्ट्यै सतामस्तु मम प्रबन्धः।।**

विद्वज्जनचञ्चरीकः

**विद्यावाचस्पतिः डॉ० सुन्दरनारायणझाः**

# विषयानुक्रमणिका

**अग्निहोत्रम्** अग्न्याधेयम्, गार्हपत्याधानम्, दक्षिणाग्न्याधानम्, आहवनीयाधानम्, सभ्याव-सथ्याग्न्योराधानम्, अग्निहोत्रे उदितानुदितहोमिभेदः, अनुष्ठानप्रकारः अग्न्युपस्थानं लेपभक्षश्च, अग्निहोत्रे कर्त्ता, अग्निसमारोपणम् **दर्शपूर्णमासौ**, यज्ञानुष्ठानकालः, दर्शपूर्णमासयोः पद्धतिः, पौर्णमासीदिनकृत्यम्, अग्न्यन्वाधानम्, व्रतग्रहणम्, कृष्णप्रतिपद्दिनकृत्यम्, ब्रह्मवरणम्, अपां प्रणयनम्, परिस्तरणम्, पात्रासादनम्, हवि-निर्वापः, अवहननपेषणे, कपालस्वरूपं देवता च, हविः श्रपणम्, अन्वाहार्यश्रपणम्, वेदिनिर्माणम्, पूर्वपरिग्रहः, दर्शपौर्णमासयागविहारः, उत्तरपरिग्रहः, पात्रसम्मार्जनम्, योक्त्रबन्धनम्, आज्यावेक्षणम्, पवित्रीकरणम्, यजमानाज्यावेक्षणं जुह्वादिषु घृतग्रहणञ्च, इध्मप्रोक्षणम्, वेदिस्तरणं पात्रासादनञ्च, सामिधेनीकर्म, प्रयाजाः, प्रधानयागानुष्ठानम्, स्विष्टकृद्यागः, इडाभक्षणादि, ऋत्विग्दक्षिणा अनूयाजाश्च, पत्नीसंयाजः, पिष्टलेपाहुतिः, योक्त्रविमोकश्च, प्रायश्चित्ताहुतिः, समिष्टयजुर्होमश्च, याजमानम्, अथ दर्शयागे विशेषाः वत्सापाकरणम्; गो-दोहनम्, शुक्लप्रतिपद्दिनकृत्यम् **अथाऽग्निष्टोमः** सोमलतायाः (हविः) उत्पत्तिस्थानानि, सोममहिमा सोमपानफलञ्च, सोमलतास्वरूपं तद्वृद्धिर्ह्रासश्च, सोमयागाधिकारी, दौर्ब्राह्मण्यनिरासः, अग्निष्टोमयाग-स्यानुष्ठानकालः, यागपूर्वाङ्गानि, सोमयागे प्रथमदिनकृत्यम्, अप्सुदीक्षा, पत्नीदीक्षा, दीक्षणीयेष्टिः, नवनीतदीक्षा, अञ्जनदीक्षा, यजमानपावनम्, मुष्टिबन्धनम्,

कृष्णाजिनदीक्षा, दीक्षितघोषणा यजमानपत्न्योर्नियमाः द्वितीयदिनकृत्यम्, प्रायणीयेष्टिः, सोमक्रयणम्, सोमपणनम्, सोमशकटारोहणम्, आतिथ्येष्टिः, तनूनप्त्रविधिः, अवान्तरदीक्षा, सोमालम्भनम्, निह्नवविधिः, सुब्रह्मण्याह्वानम्, प्रवर्ग्यविधिः, घर्मप्राशनम्, उपसदिष्टिः, व्रतप्रदानम्, तृतीयदिनकृत्यम्, वेदिमानम्, अग्निष्टोमयागविहारः, चतुर्थदिनकृत्यम्, घर्मोत्सादनम्, अग्निप्रणयनम्, शकटस्थापनम्, हविर्धानमण्डपनिर्माणम्, उपरवनिर्माणम्, हस्तसम्मर्शनम्, औदुम्बरीस्थापनम्, सदोमण्डपनिर्माणम्, आग्नीध्रीयानिष्पादनम्, धिष्ण्या-निर्माणम्, मार्जालीयामण्डपनिर्माणम्, निर्मितप्रदेशानां निरीक्षणम्, अग्नीषोमीया यागविधिः, वैसर्जनहवनम्, आग्नीध्रीयायां हवनम्, शकटे सोमस्थापनम्, अङ्गुलिविसर्जनम्, व्रतविसर्जनम्, यूपसम्पादनम्, पशूपाकरणम्, शामित्रशालागमनम्, संज्ञपनप्रकारः, वसतीवरीग्रहणम्, पशुपुरोडाशनिर्वापः, अङ्गनिष्कासनम्, औपभृताङ्गानि, अग्न्यावदानाङ्गानि, शामित्रानुशासनम्, अङ्गावदानविभागः, अङ्गावदानविधिः, अग्नीषोमीयः प्रधानयागः, सुत्यानिमित्तकं पूर्वदिनकृत्यम्, पञ्चमदिनकृत्यम्, ऋत्विक्प्रबोधनम्, यज्ञसारथि-सामगानम्, अभिषवणनिमित्तं सोमस्थापनम्, लोकद्वारी सामगानम्, विश्वरूपासामगानम्, प्रातरनुवाकः, सवनीयनिर्वापः, पात्रयोजनम्, पात्रासादनक्रमः, उत्तरशकटे पात्रासादनम्, सोमाभिषवणकाले उपवेशनक्रमः, महाभिषवः, क्षुल्लकाभिषवः,

सोमरसस्याहुतिः, महाभिषवशेषविधिः, निष्क्रमणम्, विप्रुद्ढोमः, वहिष्पवमानम्, पञ्चविलापात्र्यां हविर्द्रव्यस्थापनक्रमः, सवनीयपुरोडाशयागः, गमनागमनमार्गम्, ग्रहप्रचारः, शुक्रामन्थिग्रहप्रचारः, चमसपात्रेण यागः, नाराशंसचमसः, अच्छावाक्-चमसः, इडाभक्षणम्, ऋतुग्रहयागः, ऋतुग्रहयागकाले गमनागमनम्, शस्त्रपाठः, ऐन्द्राग्नग्रहयागः, चमसकल्पनम्, वैश्वदेवग्रहयागः, माध्यन्दिनसवनम्, माध्यन्दिनं पवमानम्, याजमानकृत्यम्, शस्त्रस्तोत्रपाठः, सवनीयनिर्वापः, प्रसर्पणम्, अध्वर्युकर्तृकप्रैषः, पिण्डदानम्, तृतीयसवनम्, स्तोत्रोपाकरणम्, धिष्ण्याहुतिः द्रोणकलशेन यागः, पत्नीसंयाजः, अवभृथयागः, उदयनीयेष्टिः, अनूबन्ध्यायागः, उदवसानीयेष्टिः, ब्राह्मणभोजनम् **अथ पशुयागपद्धतिः** निरूढपशुबन्धस्य पद्धतिः, कार्यारम्भः, यूपस्य वृक्षविशेषः, प्रहृत्य यूपच्छेदनम्, वेदिनिर्माणम्, अथनिरूढपशुबन्धविहारः, निरूढपशुबन्धयागविहारविवरणम्, परिस्तरणम्, पात्रासादनम् उत्तरपरिग्रहादीनाञ्च विधानम्, यूपसम्पादनम्, कौश्या रशनया यूपस्य त्रिवृत् परिव्ययणम्, पशोरुपस्पर्शनम्, पशु-समञ्जनम्, मैत्रावरुणाय दण्डदानम्, प्रयाजानुयाजाश्च, पर्यग्निकरणं पशुविशसनञ्च, पश्वङ्गशोधनम्, वपोत्खेदनम्, वेष्टनम्, छेदनम्, श्रपणमभिघारणञ्च, पशुपुरोडाशनिर्वापः, शामित्रानु-शासनम्, वसाहोमः, पशुसम्मर्शनं इडाभक्षणञ्च, उपयद्ढोमः, एकादशानुयाजाः, पत्नीसंयाजः,

# संकेतसूचिः

| | | |
|---|---|---|
| 1. पा० धातु | – | पाणिनीय धातुपाठः |
| 2. अष्टा० | – | अष्टाध्याय्याम् |
| 3. यजुर्भाष्ये | – | यजुर्वेदभाष्यम् |
| 4. पा० सू० | – | पाणिनीयसूत्रम् |
| 5. भ्वा० उ० | – | भ्वादिगण |
| 6. शु० य० सं० | – | शुक्लयजुर्वेदसंहिता |
| 7. श० प० ब्रा० | – | शतपथब्राह्मणम् |
| 8. ऋ० सं० | – | ऋग्वेदसंहिता |
| 9. का० श्रौ० सू० | – | कात्यायनश्रौतसूत्रम् |
| 10. यजु० सं० | – | शुक्लयजुर्वेदसंहिता |
| 11. बृ० जा० उप० | – | बृहज्जाबालोपनिषद् |
| 12. बृ० उप० | – | बृहदारण्यकोपनिषद् |
| 13. ऐ० ब्रा० | – | ऐतरेयब्राह्मणम् |
| 14. छां० उप० | – | छान्दोग्योपनिषद् |
| 15. तै० सं० | – | तैत्तिरीयसंहिता |
| 16. आप० श्रौ० सू० | – | आपस्तम्बश्रौतसूत्रम् |
| 17. आप० परि० सू० | – | आपस्तम्बपरिभाषासूत्रम् |
| 18. तै० ब्रा० | – | तैत्तिरीयब्राह्मणम् |
| 19. पै० सं० | – | पैप्पलादसंहिता |
| 20. गो० ब्रा० | – | गोपथब्राह्मणम् |
| 21. मी० न्या० प्र० | – | मीमांसान्यायप्रकाशः |

| | | |
|---|---|---|
| 22. आप० परि० | – | आपस्तम्बपरिभाषासूत्रम् |
| 23. जै० सू० | – | जैमिनीयसूत्रम् |
| 24. पू० मी० | – | पूर्वमीमांसा |
| 25. शा० भा० | – | शाबरभाष्यम् |
| 26. बौ० गृ० सू० | – | बौधायनगृह्यसूत्रम् |
| 27. ऐ० आ० | – | ऐतरेयआरण्यकम् |
| 28. गोप० ब्रा० | – | गोपथब्राह्मणम् |
| 29. मै० उ० | – | मैत्रायणी उपनिषद् |
| 30. जै० उ० | – | जैमिनीयोपनिषद् |
| 31. तां० ब्रा० | – | ताण्ड्यब्राह्मणम् |
| 32. मै० | – | मैत्रायण्याम् |
| 33. अथर्व० सं० | – | अथर्ववेदसंहिता |
| 34. च० सं० | – | चरकसंहिता |
| 35. पा० गृ० सू० | – | पारस्करगृह्यसूत्रम् |
| 36. वै० श्रौ० सू० | – | वैखानसश्रौतसूत्रम् |
| 37. सत्या० श्रौ० सू० | – | सत्याषाढ़श्रौतसूत्रम् |
| 38. दे० या० प० | – | देवयाज्ञिकपद्धतिः |
| 39. द्रा० श्रौ० सू० | – | द्राह्यायणश्रौतसूत्रम् |
| 40. ऐ० ब्रा० सा० भा० | – | ऐतरेयब्राह्मणे सायणभाष्यम् |
| 41. ला० श्रौ० सू० | – | लाट्यायनश्रौतसूत्रम् |
| 42. वे० गा० | – | वेयगानम् |
| 43. छा० ल० | – | छागलक्षणम् |
| 44. यू० ल० | – | .यूपलक्षणम् |
| 45. शां० श्रौ० सू० | – | शांखायनश्रौतसूत्रम् |
| 46. उ० गा० | – | ऊहगानम् |
| 47. काठ० सं० | – | काठकसंहिता |
| 48. जै० ब्रा० | – | जैमिनीयब्राह्मणम् |

| | | |
|---|---|---|
| 49. मै० सं० | – | मैत्रायणीसंहिता |
| 50. मनु० | – | मनुस्मृतिः |
| 51. आप० धर्म० | – | आपस्तम्बधर्मसूत्रम् |
| 52. शां० पर्व० | – | शान्तिपर्व (महाभारतम्) |
| 53. मुण्डके० | – | मुण्डकोपनिषद् |
| 54. महा० शा० प० | – | महाभारत शान्तिपर्व |
| 55. ना० शा० | – | भरतनाट्यशास्त्रम् |
| 56. हरि० पु० | – | हरिवंशपुराणम् |
| 57. वा० पु० | – | वायुपुराणम् |
| 58. वा० रामायणे० | – | वाल्मीकिरामायणम् |
| 59. का० हौ० प० | – | कात्यायनहौत्रपद्धतिः |
| 60. कठ० सं० | – | कठसंहिता |
| 61. मा० श्रौ० सू० | – | मानवश्रौतसूत्रम् |

## अथ प्रथमोऽध्यायः

# ( क ) प्रकृतियज्ञाः ( प्रकृतिविकृत्योर्लक्षणम् )

**यज्ञ-शब्दार्थः**

'यज्' 'धातोर्यजयाचयतविच्छप्रच्छरक्षोनङ्'[1] इत्यनेन पाणिनिसूत्रेण 'नङ्' प्रत्यये सति 'यज्ञ' शब्दो निष्पद्यते। पाणिनीयधातुपाठे 'यज्' धातोः पाठो विद्यते। 'धातव अनेकार्थाः' इत्यनेन वैयाकरणसिद्धान्तेन कतिपया आचार्याः 'यज् देवपूजासङ्गतिकरणदानेषु' इति सूत्रानुसारं यज् धातोः प्रयोगः 'देवपूजा'- 'सङ्गतिकरणम्' - 'दानम्' इति त्रिष्वर्थेषु कुर्वन्तो दृश्यन्ते। अर्थाद्यज्ञेषु देवतानां पूजा, देवतुल्यानां ऋषि-महर्ष्यादीनां सङ्गतिकरणं, दानञ्च भवति। त्रयाणामेषामर्थानां विषये तावत्किञ्चिद्विचार्यते।

**देवपूजा**

1. यजनमिन्द्रादिदेवानां पूजनं सत्कारभावनं यज्ञः।
2. इज्यन्ते (पूज्यन्ते) देवा अनेनेति यज्ञः।
3. इज्यन्ते देवा अस्मिन्निति यज्ञः।
4. इज्यते देवेभ्योऽस्मिन्निति यज्ञः।
5. इज्यते असाविति यज्ञः (विष्णुः)।
6. इज्यन्ते सम्पूजिताः तृप्तिमासाद्यन्ते देवा अत्रेति यज्ञः।

अत इन्द्रादीनां देवानां पूजनं सत्कारश्च यज्ञ इत्युच्यते। येन देवतानां पूजनं भवेत्स यज्ञः। यस्मिन्देवतानां पूजनं स्यात्स यज्ञः। यस्मिन् कर्मविशिष्टे देवेभ्योऽनुष्ठानं भवेत्स यज्ञ इत्युच्यते। यस्य पूजनं भवति यज्ञे स पूजनीयो

1. पा० धा० 3/3/90

विष्णुर्यज्ञ इत्युच्यते। यस्मिन् कर्मणि देवाः पूजितास्सन्तः तृप्ता भवन्ति तद्यज्ञः।

### सङ्गतिकरणम्

1. यजनं-धर्म-देश-जाति-मर्यादारक्षायै महापुरुषाणामेकीकरणं यज्ञः।
2. इज्यन्ते सङ्गतीक्रियन्ते विश्वकल्याणाय परिभ्रमणं कृत्वा महान्तो विद्वांसः वैदिकशिरोमणयः व्याख्यानरत्नाकराः निमन्त्र्यन्ते अस्मिन्निति यज्ञः।
3. इज्यन्ते स्वकीय बन्धु-बान्धवादयः प्रेमसम्मानभाजाः सङ्गतिकरणायाहूयन्ते प्रार्थ्यन्ते च येन कर्मणेति यज्ञः।

अर्थाद्धर्मः, देशः, जातिः (वर्णाश्रमादयः) इत्यादीनां मर्यादायाः संरक्षणाय महापुरुषाणामेकीकरणं यज्ञ इत्युच्यते। विश्वकल्याणाय जगद्भ्रमणं कृत्वा महापुरुषेभ्यः महान्तो विद्वाँसः, वैदिकमूर्धन्याः, व्याख्यानरत्नाकराः यत्र निमन्त्रिताः भवन्ति तद्यज्ञः। यस्मिन् सदनुष्ठाने स्वकीयान् बन्धुबान्धवान् सम्मेलनार्थं समाह्वयन्ति जनाः तदनुष्ठानं यज्ञ इत्युच्यते।

### दानम्

1. यजनं यथाशक्ति देश-काल-पात्रादिविचारपुरस्सरद्रव्यादि त्यागः।
2. इज्यते देवतोद्देशेन श्रद्धापुरस्सरं द्रव्यादि त्यज्यते अस्मिन्निति यज्ञः।
3. इज्यन्ते सन्तोष्यन्ते याचका येन कर्मणा स यज्ञः।
4. इज्यते भगवति सर्वस्वं निधाप्यते येन वा स यज्ञः।
5. इज्यन्ते चत्वारो वेदाः साङ्गाः सरहस्याः सच्छिष्येभ्यः सम्प्रदीयन्ते (उपदिश्यन्ते) सदाचार्यैः येन वा स यज्ञः।

अर्थाद्देशकालपात्रपुरस्सरं यथाशक्ति द्रव्याणामुत्सर्गो यत्र क्रियते तद्यज्ञः।

यस्मिन् कर्मणि श्रद्धापूर्वकं देवतोद्देशेन घृतादीनामाहुतिर्द्रव्याणां त्यागो विधीयते तद्यज्ञः। येन कर्मणा याचकाः, दरिद्राः, ब्राह्मणाश्च सन्तुष्टा भवन्ति तद्दानजन्यं कर्म यज्ञ इत्युच्यते। यस्मिन् कर्मणि स्वकीयं सर्वस्वमेव भगवते (यज्ञपुरुषाय इष्टदेवाय वा) समर्प्यते तद्यज्ञः। यस्मिन् कर्मणि चत्वारो ऋगादयो वेदाः षड्भिरङ्गैस्सह योग्यैराचार्यैरुत्तमेभ्यः शिष्येभ्य उपदिश्यन्ते तद्यज्ञ इत्युच्यते।

पूर्वं यदुक्तं यज्ञशब्दो 'यजदेवपूजासङ्गतिकरणदानेषु[1]' इत्यनेन पाणिनिपठितेन सूत्रेण देवपूजाद्यर्थकाद् यज् धातोः 'यजयाचयत-विच्छप्रच्छरक्षोनङ्[2]' इति लक्षणाद् भावे नङ् प्रत्ययेन सिद्ध्यति। **देवपूजा पदे** देवेति पूर्वपदं 'दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोद-स्वप्नकान्तिगतिषु[3]' इति क्रीडाद्यनेकार्थकाद् दिवुधातोः निष्पद्यते- दीव्यतीति देवः। धातोरनेकार्थत्वाद्-देवशब्दोऽपि वह्वर्थः। **पूजेति** नाम सत्कारः - **यथायोग्यं** व्यवहारः। देवपदवाच्यं प्राकृतं जडत्तत्वं स्याद् यदि वा चेतनतत्त्वम्, सर्वैः सह **अनुकूलवेद्यव्यवहरणं** देवपूजेत्युच्यते। प्राकृतानाम् अग्नि-जल-वाय्वादीनां पदार्थानां प्राणिमात्रस्य कल्याणायोचितोपयोगो देवपूजा ज्ञेया। अग्निना कस्यचिद् गृहस्य दाहः, कस्यचिद् क्षेत्रस्य जलप्रवाहमवरुध्यान्यक्षेत्रे जला-भावोत्पादनम्, नद्यादिषु मलादीनां प्रवाहणम्, वायुं विविधदोषैर्दूषयित्वा प्राणिनां जीवनसंकटोत्पा-दनमित्येवंरूपो व्यवहारो देव-अपूजा भवति। **सङ्गतिकरणम्**- प्राकृतानां पदार्थानां यथोचितमात्रासु तथा संयोगकरणं, येन प्राणिनां कल्याणम्, उत्कर्षो वा स्यात्, श्रेष्ठानां धर्मात्मनां विदुषां सङ्गश्च। अनेन सङ्गतिकरणेन

---

1. पा० धातु 1/728
2. अष्टा० 3/3/90
3. पा० धातु 4/1

शिल्पविज्ञानमपि यज्ञपदेन व्यवह्रियते। **दानम्** स्वयमुपार्जितधन-सम्पत्ति-विद्यादीनां प्राणिमात्रस्य कल्याणायोत्सर्जनम्। एवं च यज्ञशब्दस्य प्रयोगक्षेत्रमतिविस्तृतं वर्तते। अनयैव दृष्ट्या दयानन्दसरस्वतीस्वामिना यजुर्वेदभाष्ये लिखितम् -

**धात्वर्थाद् यज्ञार्थस्त्रिविधो भवति - विद्या-ज्ञान-धर्मानुष्ठानवृद्धानां देवानां विदुषाम् ऐहिक पारलौकिक-सुख-सम्पादनाय सत्करणम्, सम्यक् पदार्थगुणसम्मेलनविरोधज्ञानसङ्गत्या शिल्पविद्याप्रत्यक्षीकरणं नित्यविद्वत्समागमानुष्ठानं (च), विद्यासुखधर्मादिशुभगुणानां नित्यं दानकरणम्।।**[1]

यज्ञशब्दस्य निर्वचनं कुर्वता श्रीमता यास्काचार्येणोक्तम्-

**प्रख्यातं यजति कर्मेति नैरुक्ताः, याञ्च्यो भवतीति वा। यजुर्भिरुन्नो भवतीति वा। बहुकृष्णाजिन इत्यौपमन्यवः। यजूँष्येनं नयन्तीति वा।**[2] यज्ञः, वेनः, अध्वरः, मेध इत्यादयः सर्वे शब्दाः परस्परं पर्यायाः। काम्यन्ते हि यज्ञाद्धोमपशुस्वर्गादयः। गच्छत्यनेन स्वर्गम्। प्रक्षिप्यते देवतोद्देशेन वाऽस्मिन्हव्यम्। इत्ययं वेन इत्युच्यते। अध्वर इति ध्वरतेर्वधकर्मणः **'पुंसि संज्ञायां घः**[3]**'** इति घः। नञ्पूर्वः। ध्वरो हिंसा तदभावो यत्र सः। ध्वरतिर्हिंसाकर्मा तत्प्रतिषेधः। अत एव शिष्टाः स्मरन्ति - **'ओषध्यः पशवो वृक्षास्तिर्यञ्चः पक्षिणस्तथा। यज्ञार्थां निधनं प्राप्ताः प्राप्नुवन्त्युच्छ्रितां गतिम्'** इति। दुर्गाचार्योऽप्याह- **"आम्नायवचनादहिंसा प्रतीयेत"**[4] इति। तस्माद्यज्ञीया हिंसा हिंसा न भवतीति सुविचारितं जैमिनीये। द्वेषपूर्वको हि प्राणिवधो हिंसेति राद्धान्तः। नह्योषध्यादयो द्विषन्तीति यज्ञे हिंस्यते। अथवा षष्ठ्यर्थे बहुब्रीहिः। अविद्यमानोऽध्वरो रक्षोभिरहिंसितः रक्षोघ्नमन्त्रैस्ते तत्र वार्यन्ते

1. यजुर्भाष्ये 1/2
2. निरुक्ते 3/4/19
3. पा० सू० 3/4/118
4. निरुक्ते 1/5/2

महर्षिभिः।। मेध इति '**मिधृ मेधृ सङ्गमे च**[1]' चान्मेधाहिंसयोः। मिधिसङ्गत्यर्थ इति माधवः। आशुसंगच्छन्त्यत्र देवता हविर्ग्रहीतुम्। दक्षिणार्थं वा सदस्याः। हिनस्त्यनेन पापं वा। दुर्गाचार्येणोक्तम्– 'ममेदं दास्यतीत्येवं यज्वभिः अस्मात्फलं प्रार्थ्यत इत्यसौ मेध' इत्याह।

'**यजुभिर्यजन्ति**[2]' इति वचनानुसारं याजुर्वैदिकमन्त्रैर्यस्य यज्ञकर्मणो निरूपणं क्रियते, तस्य निर्देशो याजुर्वेदस्योपक्रमे '**श्रेष्ठतमाय कर्मणे**[3]' इत्यनेन श्रेष्ठतमकर्मरूपेण कृतः, उपसंहारे च '**कुर्वन्नेवेह कर्म्माणि**[4]' इत्यत्र निष्कामकर्मरूपेण संकेतितः। इत्थं च संसारस्य समस्तानि शुभकर्माणि यानि व्यक्तिभेदैः देशकालपरिस्थितिभेदैश्च स्वस्य प्राणिमात्रस्य च कल्याणाय च कर्त्तव्यरूपाणि सन्ति, तेषां समस्तानां यज्ञरूपकर्मणामेव यजुर्वेदे वर्णनं वर्तते।'**यज्ञो वै श्रेष्ठतमं कर्म**[5]' इत्युक्तम्। केचन विद्वांसः 'यज्ञो वै श्रेष्ठतमं कर्म' इत्यस्य 'यज्ञो नाम श्रेष्ठतमं कर्म' अर्थात् यज्ञेन सर्वाणि श्रेष्ठतमानि कर्माण्युच्यन्ते इत्यर्थमाचक्षते। तच्चिन्त्यम्। अत्र हि मन्त्रस्थे 'श्रेष्ठतमाय कर्मणे' इति पदे व्याख्येये स्तः, 'यज्ञः' इति तयोर्व्याख्या पदमिति प्रकरणेऽस्मिन् स्पष्टम्। अत एतादृशानां ब्राह्मणवचनानामर्थपरिज्ञानाय व्याख्येयोंऽशः पूर्वं विज्ञातव्यः। अन्यथा प्रतिवाक्यं विपरीताभिप्रायस्य सम्भावना भवितुं शक्नोति इति युधिष्ठिरमीमांसकेन श्रौतयज्ञमीमांसायां प्रोक्तम्।

अत एतेन कथनेन सुस्पष्टं भवति यच्छतपथब्राह्मणं द्रव्यमययज्ञानां प्रतिपादकमिति कृत्वा तत्र 'यज्ञो वै श्रेष्ठतमं कर्म' इत्येवं मन्त्रोक्तं सामान्यं श्रेष्ठतमं कर्म द्रव्ययज्ञमात्रविशेषेऽविरुद्धम्।

---

1. भ्वा० उ० पा० धा० – 868–870
2. निरुक्ते 13/7
3. शु० य० सं० 1/1
4. शु० य० सं० 40/2
5. श० प० ब्रा० 1/7/1/5

सम्भाव्यते यज्ञशब्दस्य धात्वर्थानुसारिणोऽर्थस्य व्यापकतामभिलक्ष्यैव भगवद्गीतायां यज्ञानां विविधाः भेदा निदर्शिताः ते यथा –

'द्रव्ययज्ञास्तपोयज्ञा योगयज्ञास्तथापरे।
स्वाध्यायज्ञानयज्ञाश्च यतयः संशितव्रताः।।'

अपाने जुह्वति प्राणं प्राणेऽपानं तथापरे।
प्राणापानगती रुद्ध्वा प्राणायामपरायणाः।।

अपरे नियताहाराः प्राणान्प्राणेषु जुह्वति।
सर्वेऽप्येते यज्ञविदो यज्ञक्षपितकल्मषाः।।
यज्ञशिष्टाऽमृतभुजो यान्ति ब्रह्मसनातनम्।
नायं लोकोऽस्त्ययज्ञस्य कुतोऽन्यः कुरु सत्तम।।

एवं बहुविधा यज्ञा वितता ब्रह्मणो मुखे।
कर्मजान्विद्धि तान्सर्वानेवं ज्ञात्वा विमोक्ष्यसे।।

श्रेयान्द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञः परन्तप।
सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते।।[1]

अत उपर्युक्तेन गीतोपनिषद्वाक्येनेदं स्फुटं भवति यल्लोके यत् किञ्चिदपि लोकोपकारकं कर्म क्रियते, तेन सह यज्ञशब्दस्य प्रयोगो दृश्यते। यज्ञेऽस्मिन् समर्पको यजमानोऽपि ब्रह्मरूप एवोक्तः, येन माध्यमेन आज्यादीनां त्यागः क्रियते तच्छ्रुवादिकमपि ब्रह्मरूप एव, यद्द्रव्यं हूयमानं खलु तदपि ब्रह्म, यस्मै हूयते सोऽपि ब्रह्म। एवमुक्तप्रकारेण ब्रह्मरूपेण यजमानेन ब्रह्मरूपाग्नौ ब्रह्मरूपस्य द्रव्यस्य ब्रह्मरूपेण स्रुवादिसाधनेन ब्रह्मणे आहुतिप्रदानरूपं कर्म ब्रह्म एव। तस्मिन् ब्रह्मकर्मणि स्थितं योगिभिः प्राप्यं फलमपि ब्रह्म एवास्ति। तदुक्तं गीतायाम्–

'ब्रह्मार्पणं ब्रह्महविः ब्रह्माग्नौ ब्रह्मणा हुतम्।
ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्मसमाधिना।।[2]'

---

1. श्रीमद्भगवद्गीता 4/28–33
2. श्रीमद्भगवद्गीता 4/24

यानि कान्यपि कर्माणि आचरन्ति तानि सर्वाणि यज्ञरूपाण्येव अस्यैव रहस्यस्योद्घाटनं कुर्वता महर्षिभिरुक्तम् –

**यज्ञेन यज्ञमयजन्त देवास्तानि धर्म्माणि प्रथमान्यासन्।**
**ते ह नाकं सचन्त यत्र पूर्वे साध्याः सन्ति देवाः।।**[1]

**'प्रजापतिर्यज्ञः**[2]**' 'यज्ञो वै विष्णुः**[3]**' 'पुरुषो वै यज्ञः**[4]**' 'द्रव्यं देवता त्यागो यागः**[5]**' 'अन्नोर्कप्राणानामितरेतर संयोगो यज्ञः**[6]**'** इत्यादीनि बहूनि यज्ञपदबोधकानि प्रमाणानि श्रुतिषूपलभ्यन्ते। **'यज्ञो वै श्रेष्ठतमं कर्म**[7]**'** शतपथश्रुतेरियमुक्तिर्यज्ञस्योत्तमकर्मरूपेण प्रतिपादनं करोति। तदुक्तं भगवता श्रीकृष्णेन – **'यज्ञः कर्मसमुद्भवः**[8]**'** इति। असारे खल्वस्मिन् संसारे ये केऽपि विद्यन्ते, ते सर्वे कर्माणि तु निश्चितरूपेणाचरन्त्येव। सर्वविधकर्मसु यज्ञकर्मणः श्रेष्ठतमत्वं श्रुति–स्मृति–पुराणादिषु प्रतिपादितम्। यज्ञेन यज्ञमिति वेदमन्त्रोऽपि तदेवार्थं स्पष्टयति। 'यज्ञेन=विशिष्टकर्म्मणा, यज्ञम् = प्रजापतिं, देवाः = द्योतनस्वभावाः' अयजन्त = पूजितवन्तः। तानि = यज्ञमयानि, धर्माणि = धार्मिककृत्यानि, प्रथमानि = मुख्यान्यासन् इति सामान्यार्थः। धृञ् धारणाद्धातोः धर्मशब्दो निष्पद्यते तस्माद्यो मानवो यस्य कर्मणः मुख्यत्वेन धारणं करोति तस्य तदेव धर्म इति। तस्माद्यज्ञ एव हि मुख्यो धर्मः। अयं यज्ञ एव मनुष्याणां देवानाञ्च परस्परसम्बन्धस्थापकः। तदुक्तं भगवता श्रीकृष्णेन –

---

1. ऋ० सं० 10/90/16, यजु० सं० 31/16
2. श० प० ब्रा० 1/1/1/13
3. श० प० ब्रा० 1/1/2/13
4. श० प० ब्रा० 1/3/5/1
5. का० श्रौ० सू० 1/2/1
6. मधुसूदन ओझा कृत कादम्बिन्याम्, भूमिकायां 2 पृष्ठे
7. श० प० ब्रा० 1/7/1/5
8. श्रीमद्भगवद्गीता 3/14

**'देवान् भावयतानेन ते देवा भावयन्तु वः।**
**परस्परं भावयन्तः श्रेयः परमवाप्स्यथ।।[1]'**

यज्ञेन मनुष्या देवान् भावयन्ति, भाविताः पूजिताश्च देवाः मनुष्यानुपकुर्वन्तीति देवानां मनुष्याणाञ्च पारस्परिकः सम्बन्धो वैदिकप्रक्रियायां व्याख्यातः। वैदिकाः मनीषिणः अनादिकालादेव यज्ञद्वारेण देवैः सम्बन्धं स्थापितवन्तः। यज्ञेन द्वारेण प्रसादिताश्च देवाः प्रत्यक्षमप्येतान् दर्शयाञ्चक्रिरे।

यज्ञशब्दो हि यज्धातोर्निष्पन्नः। यज्धातोश्चार्थत्रयं भगवान् पाणिनिर्निर्वक्ति – '**यज् देवपूजासङ्गतिकरणदानेषु**[2]' इति। '**तिस्त्र एव देवता इति नैरुक्ताः, अग्निः पृथिवीस्थानः, वायुर्वा इन्द्रो वा अन्तरिक्षस्थानः, सूर्यो द्युस्थान इति त्रयो देवाः**। तेषां सर्वेषामपि देवानां पूजा (पोषणम्) यज्ञेनैव भवतीति देवपूजारूपोऽर्थोऽत्र संगच्छते। अन्यस्य तत्त्वस्य तत्त्वान्तररूपता यज्ञेन सम्पाद्यते, मिथश्च पदार्थान् यज्ञ एव संगमयतीत्यग्रे व्याख्यातव्यम्। तस्मात् सङ्गतिकरणमप्यत्र सुसङ्गतम्। दानशब्देन च दाधातोर्निष्पन्नेन स्वस्वत्वनिवृत्तिः, 'दोऽवखण्डने' इति धातोर्निष्पन्नेन चावयुत्यात्मनोऽन्यत्र समर्पणमभिधीयते प्रवर्ग्यश्चेति तदेतदपि यज्ञपदार्थे सङ्गमनीयम्।'

समीक्षाचक्रवर्तिना म० म० मधुसूदन ओझा सरस्वतिना यज्ञभेदविषय एवमुक्तम् – द्विविधो हि यज्ञः – प्राकृतः, कृत्रिमश्च। तत्र द्विजैरनुष्ठीयमानं कृत्रिमं यज्ञमेव प्राधान्येन लक्षयन्तो मीमांसकाः 'द्रव्यं देवता त्यागो यागः' इति तल्लक्षणमाहुः। देवतोद्देश्येन हविर्द्रव्यत्यागो यज्ञयागशब्दाभिधेय इति तात्पर्यम्। किमर्थमयं त्यागः क्रियते, अनेन च देवानां कथं कीदृश उपयोगः साध्यते, किञ्च तेनास्माकं फलं भवतीत्येतत्सर्वं प्राकृतयज्ञविज्ञानेन शक्यं विज्ञातुम्। प्रकृतौ हि निरन्तरं यज्ञः प्रवर्तते, तदाधारेणैव कथञ्चिद-

1. तत्रैव 3/11
2. पा० धा० 3/3/90

स्मत्प्रतिकूलमपि प्रकृतियज्ञमनुकूलयितुमस्मभ्यमपि यज्ञः शिक्षितः। तस्मात् प्राकृतो यज्ञ एव कृत्रिमस्य यज्ञस्य मूलम्।

शतपथब्राह्मण एकादशकाण्डस्य चतुर्थाध्यायारम्भे एकाऽऽख्यायिका श्रूयते, या कृत्रिमस्य यज्ञस्य प्राकृतयज्ञमूलकत्वं स्फुटीकरोति। कुरुपाञ्चालदेशवास्तव्य आरुणिरुद्दालको यज्ञे वृत उदीच्यां गतः। तस्यादरार्थं तत्र यजमानेन निष्क आहितः, तेन औदीच्या ब्राह्मणा ईर्ष्यां दधानाः स्वैदायनं नाम वेदनिष्णातं ब्राह्मणमग्रेसरीकृत्याऽऽरुणिना सह ब्रह्मोद्याय प्रेषयामासुः। तेन यज्ञे गत्वा गौतमगोत्र आरुणिरुद्दालक एवं पृष्टः –

'स वै गौतमस्य पुत्र वृतो जनं धावयेत्, यो दर्शपूर्णमासयोरष्टौ पुरस्तादाज्यभागान् विद्यात्, पञ्च मध्यतो हविर्भागान् षट् प्राजापत्यानष्टा उपरिष्टादाज्यभागान्।। 4।। स वै गौतमस्य पुत्र वृतो जनं धावयेत्, यस्तद्दर्शपूर्णमासयोर्विद्यात् यस्मादिमाः प्रजा अदन्तका जायन्ते, यस्मादासां जायन्ते यस्मादासां प्रभिद्यन्ते यस्मादासां सन्तिष्ठन्ते यस्मादासां पुनरुत्तमे वयसि सर्वा एव प्रभिद्यन्ते। यस्मादधर एवाग्रे जायन्तेऽथोत्तरे, यस्मादणीयांस एवाधरे प्रथीयांस उत्तरे, यस्माद्दंष्ट्रा वर्षीयांसो यस्मात्समा एव जम्भ्याः।। 5।। स वै गौतमस्य पुत्र वृतो जनं धावयेत्, यस्तद्दर्शपूर्णमासयोर्विद्याद् यस्मादिमाः प्रजा लोमशा जायन्ते, यस्मादासां पुनरिव श्मश्रूण्योपपक्ष्याणि दुर्वीरिणानि जायन्ते, यस्माच्छीर्षण्येवाग्रे पलितो भवत्यथ पुनरुत्तमे वयसि सर्व एव पलितो भवति।। 6।। स वै गौतमस्य पुत्र वृतो जनं धावयेत्, यस्तद्दर्शपूर्णमासयोर्विद्याद् यस्मात् कुमारस्य रेतः सिक्तं न संभवति, यस्मादस्य मध्यमे वयसि संभवति, यस्मादस्य पुनरुत्तमे वयसि न सम्भवति।। 7।। यो गायत्रीं हरिणीं ज्योतिष्पक्षां यजमानं स्वर्गं लोकमभिवहन्तीं विद्यादिति।। 8।।"[1]

एतान् प्रश्नान् समाधातुमसमर्थेनोद्दालकेन स निष्कः स्वैदायनस्याग्रे स्थापितः। त्वं मदपेक्षयाधिको वेदज्ञोऽसि, त्वमेव निष्कमर्हसीति।

1. श० प० ब्रा० 11/4/1/4–8

स्वैदायनस्तमुपगुह्य गृहं गतः। यज्ञान्निवृत्तस्तु गौतम आरुणिः समित्पाणिः स्वैदायनमाससाद, यान् प्रश्नान् त्वमपृच्छस्तेषामुत्तरं मह्यं शिक्षयेति च प्रार्थयाञ्चक्रे। ततः स्वैदायन एवमुत्तराण्याह –

'अथ यदपुरोऽनुवाक्यकाः प्रयाजा भवन्ति, तस्मादिमाः प्रजा अदन्तका जायन्तेऽथ यत्पुरोऽनुवाक्यवन्ति हवींषि भवन्ति तस्मादासां जायन्तेऽथ यदपुरोऽनुवाक्याका अनुयाजा भवन्ति तस्मादासां प्रभिद्यन्तेऽथ यत्पुरोऽनुवाक्यवन्तः पत्नीसंयाजा भवन्ति तस्मादासां सन्तिष्ठन्तेऽथ यदपुरोऽनुवाक्यकं समिष्टयजुर्भवति तस्मादासां पुनरुत्तमे वयसि सर्व एव प्रभिद्यन्ते।। 12।। अथ यदनुवाक्यामनूच्य याज्यया यजति तस्मादधर एवाग्रे जायन्तेऽथोत्तरेऽथ यद्गायत्रीमनूच्य त्रिष्टुभा यजति तस्मादणीयांस एवाधरे प्रथीयांस उत्तरेऽथ यत्प्राञ्चावाघारावाघारयति तस्माद्दंष्ट्रा वर्षीयांसोऽथ यत्सच्छन्दसावेव संयाज्ये भवतस्तस्मात्समा एव जम्भ्याः।। 13।। अथ यद्बर्हिस्तृणाति, तस्मादिमाः प्रजा लोमशा जायन्तेऽथ यत्पुनरिव प्रस्तरं जायन्तेऽथ यत्पुनरिव प्रस्तरं स्तृणाति तस्मादासां पुनरिव श्मश्रूण्यौपपक्ष्याणि दुर्बीरिणानि जायन्तेऽथ यत्केवलमेवाग्रे प्रस्तरमनुप्रहरति तस्माच्छीर्षण्येवाग्रे पलितो भवत्यथ यत्सर्वमेव बर्हिरनुप्रहरति तस्मात्पुनरुत्तमे वयसि सर्व एव पलितो भवति।। 14।। अथ यदाज्यहविषः प्रयाजा भवन्ति, तस्मात् कुमारस्य रेतः सिक्तं न सम्भवत्युदकमिवैव भवत्युदकमिव ह्याज्यमथ यन्मध्ये यज्ञस्य दध्ना पुरोडाशेनेति चरन्ति तस्मादस्य मध्यमे वयसि संभवति द्रप्सीवैव भवति द्रप्सीव हि रेतोऽथ यदाज्यहविष एवानुयाजा भवन्ति, तस्मादस्य पुनरूत्तमे वयसि न सम्भवत्युदकमिवैव भवत्युदकमिव ह्याज्यम्।। 15।। वेदिरेव गायत्री, तस्मै येऽष्टौ पुरस्तादाज्यभागाः स दक्षिणः पक्षो येऽष्टा उपरिष्टादाज्यभागाः स उत्तरः पक्षः सैषा गायत्री हरिणी ज्योतिष्पक्षा यजमानं स्वर्गं लोकमभिवहति य एवमेतद्वेद।। 16।।[1]'

अनया तावदाख्यायिकया स्पष्टमिदं सिध्यति यद्दर्शपौर्णमासमूलभूता

---

1. श० प० ब्रा० 11/4/1/12–16

अध्यात्मं याः क्रियाः, ता एव दन्तलोमाद्युत्पादिकास्तत्र परिवर्तनादिकारिण्यश्च भवन्तीति। ये तु दर्शपौर्णमासादिष्वनुष्ठीयमानाः क्रिया एव दन्तलोमाद्युत्पादिका इत्यागृह्णीरन् ते सर्वेषु प्राणिषु दन्तलोमाद्युत्पत्तिं तत्परिवर्त्तनानि च न समाधातुमीशते। द्विजातिरिक्ताः म्लेच्छाद्याश्च ये सन्ति ते दर्शपौर्णमासादिकं नानुतिष्ठन्ति, तेषामपि दन्तलोमादिर्जायते परिवर्तते च। तस्मान्मूलभूतया प्राणादिक्रिययैवात्र तात्पर्यं नेयं स्यात्। अधिदैवं च या गायत्री सैव यजमानं स्वर्गे लोके प्रापयतीति च। तदित्थं मूलभूतं प्राकृतं यज्ञमेवावलम्ब्य कृत्रिमा यज्ञा श्रौतग्रन्थेषु विहिताः। ताश्च मूलभूताः प्राकृतयज्ञक्रिया अपि तत्तत्कर्मोपपादनार्थं ब्राह्मणेषु बहुत्र निर्दिष्यः परं ता अर्थवादरूपेण प्रख्याप्य मीमांसकैरुपेक्षिता इत्येव कर्मोपपत्तिविषये आन्ध्यं प्रसृतम्। भवतु नाम, अस्माभिरत्र स प्राकृतो यज्ञ एव संक्षेपेण व्याख्यातव्यो यदाधारेण यज्ञानुष्ठानानि प्रवृत्तानि।

बृहज्जावालोपनिषदि – '**अग्नीषोमात्मकं जगत्**[1]' इत्युक्तिर्लभ्यते। तत्राग्निरन्नादः, सोमस्त्वन्नम्। अनेनाधारेण पूर्वं स्थूलतयाऽग्नौ सोमाहुतिरेव यज्ञ इति भावनीयं स्यात्। यतोह्यस्मिन् लोके द्विविधा हि पदार्था भवन्ति – ऋतरूपाः, सत्यरूपाश्च। यद्धि तत्त्वं केन्द्रबद्धं न तिष्ठति प्रत्यृतमेव विकीर्णभावेन प्रसरति तद् ऋतमित्युच्यते। यथा वायुरापः सोम इत्येकस्यैव तत्त्वस्येमास्तिस्रोऽवस्थाः – स्थूलावस्था आपः, तासां सूक्ष्मावस्था वायुः, तदपेक्षयाऽपि सूक्ष्मावस्था सोमः। सोऽयं सोमः सर्वत्राकाशेऽभिव्याप्तः। यथोक्तं सोमस्तुतिमन्त्रे –

**'त्वमिमा ओषधीः सोमविश्वास्त्वमपो अजनयस्त्वं गाः।**
**त्वमा ततन्थोर्वन्तरिक्षं त्वं ज्योतिषा वि तमो ववर्थ।।**[2]'

यवतण्डुलाद्या ओषधीः सोम एवोत्पादयति, आपो गावश्च सोमेनैव जनिताः, ओषधिष्वप्सु गव्येषु च दुग्धादिषु सोमः प्राचुर्येणाभिव्याप्नोतीति

1. बृहज्जाबालोपनिषदि – 2/4
2. ऋ० सं० 1/91/22

तद्भावः। सोम एव चान्तरिक्षं विस्तीर्णं करोति। सर्वत्र विस्तीर्णेऽन्तरिक्षे सोम एवाभिव्याप्त इति तात्पर्यम्। सूर्यरश्मिसम्पर्केण सोम एव प्रज्ज्वलितो ज्योतिरूपतामासाद्य तमो निवर्तयतीति। लोकेऽपि हि घृततैलादिस्थितः सोम एवाग्निसम्पर्काद् दीपादिषु ज्योतीरूपतामासाद्य तमो निवर्तयतीति दृश्यते, तथैव सूर्यरश्मिसम्पर्कादन्तरिक्षे सोमः प्रज्ज्वलतीति। सोऽयं सोमः सर्वस्मिन्नन्तरिक्षे ऋतुरूपेण स्थितः। तदुक्तं शतपथश्रुतौ –'**अन्नाद एवाग्निरभवदन्नं सोमोऽन्नादश्च वा इदं सर्वमन्नं च।।**[1]'

अग्निस्तु केन्द्राधारेण तिष्ठतीति स सत्यः। अग्निरयं विकसनशीलः केन्द्राद्बहिरभितो विकसन्नभिव्याप्नोति। सोमस्तु संकोचनशीलोऽभितः संकुचन्नग्नौ पतति, सेयमेव सोमस्याग्नावाहुतिः। हूयमानश्चाग्नौ सोमोऽग्निरूपतामेव गच्छति। तदिदं रूपान्तरताप्रापणमेव सङ्गतिकरणं यजधातोरर्थ उक्तः। अग्निरूपतामापद्य विकासशीलत्वात् पुनर्बहिर्गच्छति। दूरं प्रसरंश्च केन्द्रसम्बन्धं परित्यजन् पुनः सोमरूपतामापद्यत इत्यग्नीषोमयोरन्योन्यरूपतापत्तिरूपं चक्रमनवरतं प्रवर्तते। सोऽयं प्राकृतो यज्ञः।

सूर्यो ह्यनवरतं प्रकाशमौष्ण्यं चोद्वमन् सर्वत्र संक्रामयतीति वैज्ञानिका अपि प्रतिपादयन्ति। तत्परिमाणमपि चानन्तकोटिमितं ते व्याचक्षते। परमियं प्रतिक्षणं जायमाना सूर्यमण्डलक्षतिः कथं सम्पूर्यत इति नैतदद्यावधि तैर्निश्चेतुं पारितम्। वैदिकं त्वनादिकालादेतन्निश्चितं यत् सूर्यमण्डलं स्वर्लोकः, तदुपरि महोऽन्तरिक्षं तदुपरि च जनलोक एव सोमलोकः। तस्मादनवरतमनन्तकोटिगुणितः सोमः प्रतिक्षणं सूर्यमण्डल आहूयते। तमेव च सोममग्निरूपतामापाद्य सूर्यो लोकमभितः प्रसारयति। इयमेवानवरतं जायमाना सोमाहुतिः '**आहुत्याप्यायते सूर्यः**[2]' इत्यादिना याज्ञवल्क्यादिभिः स्मृतिषु संकेतिता। ब्राह्मणाद्या अप्यग्नौ यद् घृतादि जुह्वति, तदन्तर्गतोऽपि

---

1. श० प० ब्रा० 11/1/6/19
2. या० स्मृ० प्रायश्चित्ताध्याये – 70 तमे श्लोके।

सोमः सूर्यमण्डलं गच्छतीति तद्रीत्या व्याख्यानमपि युज्यते, परमत्यल्पः स न सूर्यमण्डलक्षतिं पूरयितुमीष्ट इति प्राकृतेन यज्ञेनैव सा क्षतिः पूर्यते। यथा प्रदीपे ज्योतीरूपतामापद्य क्षीयमानं तैलं पुनरस्माभिस्तत्र निषिच्यते, यथा वा विद्युत्प्रकाशे प्रतिक्षणं क्षीयमाणा शक्तिर्विद्युत्कोषगृहादागत्य तां क्षतिं प्रपूरयति; तथैव सूर्येऽपि प्रतिक्षणमौष्ण्यप्रकाशोद्गमनाज्जायमाना क्षतिरनवरतमागच्छता तेन सोमेनैव प्रपूर्यते। सूर्याच्चाभितो दिक्षु प्रचारित औष्ण्यप्रकाशमूलभूतोऽग्निः सूर्यमण्डलशक्तेरभिव्याप्तितो बहिर्गतः पुनः सोमरूपतामापद्यत इति चक्रं वैदिकेन विज्ञानेन साध्यते। अनेनैव च चक्रेण जगति सर्वेषां पदार्थानामुत्पत्तिः स्थितिश्चेति यज्ञस्यैव सर्वोत्पादकत्वं सर्वस्थितिकरत्वं च श्रुतिस्मृतिषु सर्वत्र विव्रियते।

लोकेऽपि प्रातिस्विकपदार्थोत्पत्तिं स्थितिं चाग्नौ सोमाहुतिरूपेण यज्ञेनैव पश्यामः। तथाहि– ओषधिलतावृक्षाद्येव पूर्वं परीक्ष्यताम्, पृथिव्यां ह्यग्निर्व्याप्य तिष्ठतीति '**यथाऽग्निगर्भा पृथिवी, यथा द्यौरिन्द्रेण गर्भिणी**[1]' इत्यादि श्रुतिषु '**अग्निः पृथिवीस्थानः**[2]' इत्यादौ निरुक्ते च विवृतम्। सोऽयमग्निः पार्थिवेन घनभागेनावृतस्तिष्ठति इति तस्याग्नेरावरणमपनीय प्रकटनाय कृषकैर्भूमिर्हलेन कृष्यते। आवरणमपनीयाभ्यन्तरस्थाग्नेः प्रकटीकरणायैव कर्षणं प्रवर्त्तते, प्रकटिते चाग्नौ बीजरूपो जलरूपश्च सोमो हूयते। आहुतिं प्राप्य चाग्निर्बीजस्थितमावरणमपनीय स्वसंयोगेन बीजमङ्कुररूपतां गमयतीत्यङ्कुरोत्पत्तिरूपः प्रथमो यज्ञः। इदानीं सौरोऽग्निस्तमङ्कुरं स्वाभिमुखमाकर्षतीत्यङ्कुरः ऊर्ध्वं प्रवर्द्धते। पार्थिवः सोऽङ्कुरः पृथिव्या आकर्षणेन पृथिवीमपि न त्यजति इति स्वस्थानावस्थितस्यैव तस्योपरि गमनं भवति, सेयमेव वृद्धिरित्युच्यते। यावच्च जलं तत्र दीयते, तावत्येव तस्याधिकाधिका वृद्धिर्भवति। जलस्थितस्य सोमस्यैव सौराग्नेरन्नरूपत्वात् 'सोमोऽन्नम्, अग्निरन्नादः' इति पूर्वमेवोक्तम्। तदेषोऽग्निना वृक्षादिवृद्धिप्रकारः श्रुतावाम्नातः –

1. बृहदारण्यकोनिषदि – 8/4/23
2. निरुक्ते दैवतकाण्डे

**'प्रमातुः प्रतरं गुह्यमिच्छन् कुमारो न वीरुधः सर्पदुर्वीः।**
**ससं न पक्कमविदच्छुचन्तं रिरिह्वांसं रिप उपस्थे अन्तः।।[1]'**

मातुः पृथिव्याः, उर्वीः वीरुधः विस्तृतासु लताद्यासु, गुह्यं प्रतरं गुह्यमुत्कृष्टतमं केन्द्रस्थानम्, अग्निः, इच्छन् कुमार इव प्रसर्पति। स च पक्कं शुष्कं वृक्षमपि अभिव्याप्नोति, रिरिह्वांसं रसं गृह्णानमपि अभिव्याप्नोति। अग्निनैव हेतुना रसग्रहणादिकं सर्वं सम्पद्यते। अत एवाग्निर्यज्ञस्य देव उच्यते –

**'अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम्।[2]'**

ऐतरेय ब्राह्मणेऽप्युक्तम् – **'अग्निर्वै शर्माण्यन्नादीनि प्रयच्छति'**[3] इति।

अन्येष्वपि मन्त्रेष्वोषध्यादिकेन्द्रेऽग्निस्थितिः स्पष्टमाम्नाता –

**'गर्भो अस्योषधीनां गर्भो वनस्पतीनाम्।**
**गर्भो विश्वस्य भूतस्याग्ने गर्भो अपामसि।।[4]'**

ऋक्संहितायामपि चैतद् विस्तृतम्–

**'गर्भो यो अपां गर्भो वनानां गर्भश्च स्थातां गर्भश्चरथाम्।**
**अद्रौ चिदस्मा अन्तर्दुरोणे विशां न विश्वो अमृतः स्वाधीः।।[5]'**

अनयाऽग्निव्याप्त्याऽग्निसाध्यो यज्ञः सर्वत्रैव प्रवर्तत इति संकेतितम्। पृथिवीयं कृष्णेत्युच्यते, सौरोऽग्निश्च हिरण्यवर्णः। तदुक्तम् –

**'पिशङ्गं द्रापिं प्रति मुञ्चते कविः।।[6]'**

पीतकृष्णोभयसंयोगादङ्कुरे हरितो वर्ण एव सर्वदा जायते। यदा तु

1. ऋ० सं० 10/79/3
2. ऋ० सं० 1/1/1
3. ऐ० ब्रा० 2/5/9
4. य० सं० 12/37
5. ऋ० सं० 1/70/2
6. ऋ० सं० 4/53/2

यमेन विच्छेदात् पृथिव्या रसग्रहणं न जायते, अर्थादग्नौ सोमाहुतिः प्रतिरुद्ध्यते, तदा शुष्के वृक्षे पर्णादिकं सर्वं पीतवर्णतामेवापद्यत इति स्पष्टं दृश्यते। वृक्षादिषु च शाखा-प्रशाखा-पर्ण-पुष्पादिकं सर्वं सौराग्नेः पार्थिवाग्नेश्च सोमाहुति-सम्पर्काद् यज्ञाज्जायत इति भाव्यम्। तदिदं यज्ञस्योत्पादकत्वं पालकत्वं च प्रत्यक्षं निरीक्ष्यते। प्राणिनामुत्पत्तावपि स्त्रिया गर्भाशयगतेऽग्नौ रेतोरूपः सोम आहूयत इति तत् एव कललोत्पत्तिः गर्भाशयगतेऽग्नावन्नपानादिस्थ सोमाहुत्या च तदभिवृद्धिर्भवतीति सर्व एव शारीरविदो व्याचक्षते। तदेतदग्ने व्याख्येयम्।

अस्माकं शरीरमपि च प्राणाग्निहोत्ररूपेण यज्ञेनैव परिपालितं तिष्ठति। तदुक्तं गीतायाम्-

**'अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः।**
**प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम्।।**[1]'

इत्युक्तो वैश्वानरोऽग्निः सर्वेषां जठरे स्थितः। तत्र हूयमानश्चान्न-पानादिगतः सोमोऽनवरतं रसासृङ्मांसादिरूपमापद्य देहं रक्षतीति सर्वेषां नः प्रत्यक्षसिद्धम्। भुक्तमन्नादि वैश्वानरेण वह्निना रसरूपतां नीयते, असृक् च मांसरूपेण, मांसं मेदो रूपेण, मेदोऽस्थिरूपेण, अस्थिमज्जारूपेण, मज्जा च शुक्ररूपेण परिणमतीति सप्तधातून् आयुर्वेदविद आचक्षते। शुक्रं सन्तत्युत्पादने शारीरबलप्रयोगे च कारणतां गच्छति, रक्षितं त्वोजो रूपेण, ओजश्च मनो रूपेण परिणमतीति **'अन्नमयं हि सौम्य मनः'**[2] इत्यादि छान्दोग्यश्रुतौ विवृतम्। मनश्च सोमरूपं सोमसमष्टिरूपे चन्द्रमण्डलेऽनवरतं गच्छति। ततश्च पुनरोषध्यादिषु सोमः संक्राम्यतीत्येतदेव चक्रम्। एवमनवरतं नवनवोत्पत्तिः पुरातनानां जीर्णानां रूपान्तरतापत्तिश्चेति चक्रं सर्वेषु पदार्थेष्वनुस्यूतं भाव्यमिति स एव प्राकृतो यज्ञः।

अशनपानादि क्रियाया यज्ञरूपता, तत्र यज्ञाङ्गानां समन्वयश्चापि

---

1. श्रीमद्भगवद्गीतायाम् 15/4
2. छान्दोग्योपनिषदि 6/5/4

छान्दोग्यश्रुतौ समाम्नातः–'**स यदशिशिषति, यत्पिपासति, यन्न रमते ता अस्य दीक्षाः।। अथ यदश्नाति, यत्पिवति यद्रमते, तदुपसदैरेति**[1]' इत्यादि। एवंविधयज्ञविज्ञानेनैव घोराङ्गिरसोपदिष्टेन देवकीपुत्रः कृष्णोऽपिपासो बभूवेत्यपि तत्रोक्तम्।

इयमग्नौ सोमाहुतिप्रक्रिया शिवशक्त्युपासनायामप्यनुकृता दृश्यते। शवरूपस्य शिवस्य हृदि विराजमाना आद्याशक्तिः सर्वैः शाक्तैर्ध्येयरूपतां नीयते, मूर्तिष्वपि च तदाकारा पूज्यते। तस्य मुख्य आशयोऽयं यद्ब्रह्मरूपस्य शिवस्य मध्यभागे केन्द्रे शक्तिरनवरतं विराजते। शक्तिविहीनः शिवः कदापि न भवतीति। इदमपि यज्ञरूपं व्याख्यातव्यम्। अयमपि त्ववान्तरः स्थूल आशयो यदग्निः शिवः, तदुपरि मध्यभागे केन्द्रेऽनवरतं शक्तिरूपः सोम आगच्छति। उपर्यन्तरिक्षे सर्वत्र सोमो व्याप्तः, स च संघीभूयाग्नौ निपततीत्युक्तं प्राक्। इदमेव मूर्तिरूपेणोपासकानां सिध्यर्थं ध्याने स्थाप्यते। सोमोऽयं स्वतः कृष्णवर्ण इति शक्तिरपि कृष्णवर्णैव ध्यायते। अग्निरूपः शिवस्तु उज्ज्वलः स्थिरः स्थाप्यते। उः = प्राणः, शिवः, तस्य मा = शंक्तिरित्युमा पदेनैव शक्तिरुच्यते। उमयासहितः, अर्थाच्छक्तिविशिष्टः सोमो भवतीत्याद्यपि भाव्यम्। तदेतत् सर्वं बृहज्जाबालोपनिषदि सुस्पष्टमाम्नातं द्वितीये ब्राह्मणे –

**'अग्नीषोमात्मकं विश्वमित्यग्निराचक्षते। रौद्रीघोरा या तैजसी तनूः। सोमः शक्त्यमृतमयः शक्तिकरी तनूः।**

**'अमृतं यत्प्रतिष्ठा सा तेजोविद्या कला स्वयम्।**
**स्थूलसूक्ष्मेषु भूतेषु स एव रसतेजसी।। 1।।'**
**द्विविधा तेजसो वृत्तिः सूर्यात्मा चानलात्मिका।**
**तथैत रसशक्तिश्च सोमात्मा चानलात्मिका।। 2।।**
**वैद्युदादिमयं तेजो मधुरादिमयो रसः।**
**तेजोरसविभेदैस्तु वृतमेतच्चराचरम्।। 3।।**

---

१. छान्दोग्योपनिषदि 3/17/1-2

अग्नेरमृतनिष्पत्तिरमृतेनाग्निरेधते ।
अत एव हविः क्लृप्तमग्नीषोमात्मकं जगत्।।4।।
ऊर्ध्वशक्तिमयं सोम अधोशक्तिमयोऽनलः।
ताभ्यां सम्पुटितस्तस्माच्छश्वद्विश्वमिदं जगत्।।5।।
अग्नेरूर्ध्वं भवत्येषा यावत्सौम्यं परामृतम्।
यावदग्न्यात्मकं सौम्यममृतं विसृजत्यधः।।6।।
अत एव हि कालाग्निरधस्ताच्छक्तिरूर्ध्वगा।
यावदादहनश्चोर्ध्वमधस्तात्पावनं भवेत्।।7।।
आधारशक्त्यावधृतः कालाग्निरयमूर्ध्वगः।
तथैव निम्नगः सोमः शिवशक्तिपदास्पदः।। 8।।
शिवश्चोर्ध्वमयः शक्तिरूर्ध्वशक्तिमयः शिवः।
तदित्थं शिवशक्तिभ्यां नाव्याप्तमिह किञ्चन।।9।।[1] इत्यादि।

जगति सर्वेष्वेव जडचेतनात्मकेषु पदार्थेषु गत्यागती प्रवर्तेते। सर्वत्र व्याप्तो ह्यग्निः प्राणो भूतसहकृतः स्वभावेन प्रतिक्षणं निष्क्राम्यति, तेन जाता क्षतिश्चापरत आगतेन सोमेनाग्निरूपतामाप्तेन प्रपूर्यत इति सर्वेषामेव पदार्थानां जीवनं यज्ञायत्तम्। यत्रागतिरधिका, गतिश्चाल्पा तत्पुष्टीभवति। यत्र तु गतिरधिका, आगतिश्च यमेन विच्छिन्नतयाल्पा तज्जीर्णं भूत्वा विनश्यतीति भावविकारविवरणे निरुक्तादिषु स्पष्टीकृतम्। इमामेव प्राकृतिकीं प्रक्रियामालम्ब्य कृत्रिमा यज्ञा विहिताः। अनुष्ठीयमानेषु यज्ञेष्वप्यग्नौ सोम आहूयते। सोमयागनाम्ना प्रसिद्धेषु महत्सु यज्ञेषु लतारूपः सोम एव कण्डनेन रसतामापाद्य हूयते। इष्ट्यादिषु यत्र सोमाहुतिर्न भवति तत्रापि येषु द्रव्येषु सोमस्य प्राधान्यं तान्येव गव्यघृतदुग्धादीनि च हूयन्ते। यथा च सोमाहुत्यैवाधिदैवतं दिनमासवर्षादिकालपरिच्छेदः, तथैव कृत्रिमेषु यज्ञेष्वपि

1. बृहज्जाबालोपनिषदि 2/2-9

प्रत्यहं सायं प्रातः सन्धिकालेऽग्निहोत्रम्, माससन्धौ च दर्शपूर्णमासौ, ऋतुसन्धौ च चातुर्मास्यादीनि इति सर्वेयं प्राकृतयज्ञानुकृतिः।

सोमयागेष्वप्येकाहाहीनरात्रिसत्रायनसत्रादिभेदाः प्रकृत्यनुकृत्यैव प्रवर्तन्ते। तदुक्तं श्रुतौ –

**'अयं वै लोको गार्हपत्यः[1]'**

**'संवत्सरोऽग्निः[2]'**

इत्याद्यासु श्रुतिषु लोकत्रयरूपता च गार्हपत्याहवनीय दक्षिणाग्नीनां प्रतिपादिता। तेन यथा लोकत्रयाधिष्ठितेष्वग्निषु सोमः प्रकृत्या हूयते, तथैवात्राप्यग्नित्रये सोमो हूयत इत्यनुकृतिः प्रदर्शिता।

तदित्थं सूर्येऽधिदैवतम्, प्राणिशरीरेष्वध्यात्मम्, सर्वेषु पदार्थेष्वधिभूतं च जगति प्रवर्त्तमानाग्नौ सोमाहुतिरूपा स्थूला यज्ञप्रक्रिया संक्षेपेण निदर्शिता।

इत्थं वेदे श्रुतस्य यज्ञशब्दस्य व्यापकमर्थमिङ्गित्वा प्रतिपाद्यभूतानां द्रव्ययज्ञानां सम्बन्धे विचार्यते।

## द्रव्ययज्ञस्य लक्षणम्

प्रतिपाद्यरूपस्य द्रव्ययज्ञस्य लक्षणं कात्यायनश्रौतसूत्रे – **'द्रव्यं देवता त्यागो यागः[3]'** इत्येवं निरूपिताः। अस्येदं तात्पर्यम् – यस्मिन् कर्मणि द्रव्यस्य देवतायास्त्यागस्य च सहभावो भवति तत्कर्म यज्ञ इत्युच्यते। तेन देवतोद्देशेन द्रव्यस्य त्यागो (त्यागस्यार्थः स्वस्वत्वनिवृत्तिपूर्वकं परस्वत्वोत्पादनम् धातोरर्थः अत्राभिप्रेतः[4]) यज्ञः इत्युक्तं भवति। यत इमे यज्ञाः केनापि द्रव्यविशेषेण

---

1. श० प० ब्रा० 7/1/1/6
2. श० प० ब्रा० 9/3/3/12
3. का० श्रौ० सू० 1/2/2
4. अत एवं तेन त्यक्तेन भुञ्जीथा मागृधः कस्यस्विद्धनम् (शु० य० सं० 40/1) इति श्रुतेरर्थः – 'तेन चराचरस्य जगत ईशा यद् भोग्यपदार्थः कस्मैचित् प्रदत्तः, तस्यैवोपभोगः कार्यः, नान्यस्य धनस्य – भोग्यपदार्थस्याभिलाषां कुरु' इत्येवं द्रष्टव्यः।

क्रियन्तेऽतो गीतायामेते द्रव्ययज्ञाः कथिताः। वयमपीहान्ययज्ञानां व्यावृत्यै एषां निर्देशो द्रव्ययज्ञशब्देनैव करिष्यामः।

यद्यपि यज्ञेषु देवतोद्देशेन हविषस्त्यागः प्रायेणाग्नौ क्रियते, तथापि यज्ञस्योक्तपरिभाषायां त्यागस्थानस्यानिर्देशात् देवतोद्देशेन द्रव्यस्य त्यागः इत्येव यज्ञपदार्थो ज्ञेयः। अत एव सोमयागेष्ववभृथेष्टौ जले होमो विधीयते "**अप्सुजुहोति**"[1] इति। सोमक्रयाय या सोमक्रयणी गौः, तस्याः सोमक्रयार्थं नीयमानाया भूमौ यत्र सप्तमं पदं पतति, तस्मिन्नेव स्थाने घृताहुतिर्दीयते - '**सप्तमे पदे जुहोति**'[2] इत्यनेन तैत्तिरीयवचनेन। इत्थमेव वृषोत्सर्गयज्ञे प्रजापतिदेवतायै वृषभे विशिष्टमङ्कनं कृत्वा तस्य त्यागमात्रम् (उत्सर्गमात्रं) भवति।

## द्रव्ययज्ञानां भेदाः

ये खलु यज्ञा मन्त्र-ब्राह्मण-श्रौत-गृह्य-धर्मसूत्रादिषु विधीयन्ते तेषामनेकधा विभाग उपलभ्यते। तेषामिह क्रमशो निर्देशः क्रियते -

(क) **श्रौतस्मार्तभेदेन द्वौ विभागौ** - येषां यज्ञानां साक्षात् श्रुतिषु विधानमुपलभ्यते ते श्रौतयज्ञा इत्युच्यन्ते। यथा याज्ञिकानाम्मते मन्त्रब्राह्मणयोर्वेदसंज्ञाऽऽम्नायसंज्ञा च पारिभाषिकी, तथैव श्रुति संज्ञाऽपि विनियोगविधायकयोर्मन्त्रब्राह्मणयोः पारिभाषिकी। यथा -'**इत उत्तरं श्रुतिरूपा मन्त्रा आश्वमेधिकानां पशूनां द्रव्यदेवता सम्बन्धस्याभिधायिनः. .......**।[3]' इति। येषां विधानं गृह्य-धर्मसूत्रेषु क्रियते ते स्मार्तयज्ञा इत्याख्यायन्ते। गृह्यसूत्रेषु प्राधान्येन गृहस्थोपयोगीनि संस्कारादिकर्माणि विधीयन्ते। धर्मसूत्रेषु मानवसमाजस्य धर्मसूत्रोक्तानां कर्मणां क्रतौ साक्षाद्विधानं नोपलभ्यते। अत एव ऋषिभिः श्रुतीनामन्यार्थपरेभ्यो

1. का० श्रौ० सू० 10/8/26
2. तै० सं० 6/1/8/1
3. शु० य० सं० - 24/1 मन्त्रस्य उब्वटभाष्ये।

वचनेभ्य एषां कर्म्मणां संकेतम् उपलभ्य विधानं क्रियते अर्थात् स्मर्यते। एतस्मिन्नर्थे मीमांसका: 'दर्शनम्' 'लिङ्गदर्शनम्' इति वा पदस्य व्यवहारं कुर्वन्ति। यथा – प्रपा: प्रवर्तयितव्या:, तडागानि खनितव्यानि इति स्मार्तकर्मणोर्विधानस्य प्रामाण्यार्थं मीमांसाभाष्यकार आह –'तथा च दर्शनम्' **धन्वन्निव प्रपा असि**[1] इति। यथा '**स्थलयोदकं परिगृह्णन्ति**[2]' इति च 'लिङ्गदर्शनपदस्य प्रयोगो मीमांसासूत्रेषु बहुत्रोपलभ्यते। अत एव गृह्यधर्मसूत्रेषु स्मृतिपदमुपयुज्यते। श्रुतिस्मृतिविरोधे न स्मृति: प्रमाणम् इति समेषां वैदिकानाम्मतम्। तदुक्तं भगवता जैमिनिना – '**विरोधे त्वनपेक्ष्यं स्यादसति ह्यनुमानम्**'[3] इति।

(ख) **श्रौतस्मार्तानां त्रयो विभागा:** – श्रौतस्मार्तयज्ञानां पुन: प्रत्येकं नित्यनैमित्तिककाम्यभेदेन त्रयो विभागा भवन्ति।

1. **नित्या:** – ते यज्ञा नित्या उच्यन्ते येषां यथाकालं नियमतो यथाविधानं कर्तव्यत्वमुच्यते। याज्ञिकानां मतानुसारं नित्ययज्ञा: फलभावनां विना क्रियन्ते, अतस्तेषां किञ्चिल्लौकिकं फलं न स्वीक्रियते, परन्तु तेषामकरणे प्रत्यवायो भवति। अस्मन्मते तु नैत्यकानि कर्माणि यतो निष्कामभावनयाऽर्थात् कर्तव्यबुद्ध्या क्रियन्ते। यथा – प्रात: कालात् (शय्यात्यागानन्तरम्) आरभ्य शयनपर्यन्तं शौचादिनिवृत्ति:, स्नानं, संध्या, भोजनं, अध्ययनं, गमनागमनं, शयनं इत्यादिकं दैनिकी चर्या या खलु स्वाभाविकतयाऽनुष्ठीयते तत्र श्वसनमपि अङ्गीक्रियते, ता: सर्वा: क्रिया: नित्ययज्ञान्तर्गता एव भवन्ति। अतस्तेषां फलमात्मशुद्धिपूर्वकं मोक्षप्राप्ति: शक्यते वक्तुम्। अत्र याज्ञिकानामपि मतभेदस्य नास्त्यवकाश:।

1. ऋ० सं० 10/4/1
2. तै० सं० 1/6/10/5 (द्रष्टव्यम् मीमांसाभाष्ये 1/3/2)
3. मीमांसायाम् 1/3/3

अग्निहोत्रादारभ्य सोमान्ताः (अग्निहोत्रं, दर्शपूर्णमासौ, चातुर्मास्यानि, अग्निष्टोमश्च) नित्ययज्ञाः प्रकीर्तिताः।[1] महाभारते शान्तिपर्वणि –

**'दर्शं च पौर्णमासं च अग्निहोत्रं च धीमतः।**
**चातुर्मास्यानि चैवासन् तेषु धर्मः सनातनः।।[2]'**

अग्निहोत्रम्, दर्शपूर्णमासौ, चातुर्मास्यानि च त्रयो यज्ञाः प्राचीनाः सनातना उक्ताः।

2. **नैमित्तिका** – एते यज्ञा भूकम्पातिवृष्ट्यनावृष्टिगृहदाहादिषु निमित्तेषु प्रयुज्यन्ते।

3. **काम्याः** – ये यज्ञाः लौकिकफलानामवाप्त्यै तत्तत्कामनापूर्वकं क्रियन्ते, ते काम्या इत्युच्यन्ते। यतो लौकिक्यः कामना बहुविधा भवन्ति, अतस्तासामवाप्त्यै, शाखा-ब्राह्मण-श्रौतसूत्र-गृह्य-धर्मसूत्रादिषु बहूनां काम्यानां यज्ञानां विधानमुपलभ्यते। एषां काम्यकर्मणां विस्तारस्त्रेतायुगे समभवत् – '**तानि त्रेतायां बहुधा सन्ततानि**[3]' इति।

(ग) **काम्यानां त्रयो भेदाः** – काम्या यज्ञास्त्रिविधाः सन्ति। तत्र केचन एतादृशाः सन्ति येषां कामनाविशेषाय स्वतन्त्रं विधानमुपलभ्यते। यथा – '**वैश्वदेवीं साङ्ग्रहणीं निर्ववेद् ग्रामकामः।**[4]' अपरे काम्या यज्ञा एतादृशाः सन्ति, ये नित्यविहिताः सन्तोऽपि स्वल्पभेदेन तेषु काम्यत्वमुक्तम्। यथा

---

1. आप० श्रौ० सू० 1/1/1, (धूर्तस्वामिनो भाष्यम्, हरदत्तीया व्याख्या 2/21/7 च)
2. महाभारते शान्तिपर्वणि 269/20
3. मुण्डकोपनिषदि 1/2/1
4. तै० सं० 2/3/9/2; एतस्या इष्ट्या विषये न्यायमञ्जर्यां जयन्तभट्टेनोक्तम् तथा ह्यस्मत्पितामह एव ग्रामकामः सांग्रहणीं कृतवान्, स इष्टिसमाप्ति समनन्तरमेव गौरमूलकं ग्राममवाप 'न्यायमञ्जरी पृ० 274'

नित्यस्य पयसा सम्पाद्यमानस्याग्निहोत्रस्यैव इन्द्रियकामनया दध्ना विधानमुक्तम्- '**दध्नेन्द्रियकामस्य**[1]' कतिपयान्येता-दृश्यान्यपि कर्म्माणि सन्ति यानि नित्यविहितानि सत्यानि तेनैव रूपेण कामनाविशेषेभ्योऽपि क्रियन्ते। यथा - '**वसन्ते वसन्ते ज्योतिषा यजेत**[2]' अत्र वसन्ते इति द्विर्वचनं नित्यार्थम्।[3] इदमेव कर्म '**स्वर्गकामो ज्योतिष्टोमेन यजेत। एककामः सर्वकामो वा। युगपत् कामयेताहारपृथक्त्वे वा।**[4]'

**नित्यकाम्ययोः समानत्वेऽप्यनुष्ठाने भेदः** - नित्यकाम्यकर्मणोः समानत्वेऽपि उभयोरनुष्ठानेऽस्त्येको भेदः। यथा - काम्यकर्मणोऽनुष्ठानं सर्वाङ्गपूर्णं कर्त्तव्यं भवति। यतः सर्वाङ्गपूर्णं कर्म एव फलस्य साधकं भवति, परन्तु नैत्यकर्मणः सर्वाङ्गपूर्णानुष्ठानस्य विधानेऽपि यदि कयाचिद् दैव्या बाधया सर्वाङ्गपूर्णकर्मणोऽनुष्ठानेऽशक्तिः स्याच्चेद् यावद्भिरङ्गैः सह प्रधानं कर्म सम्पद्येत, तावतैव तस्य कर्त्तव्यता पूर्यते। अतस्तत्र प्रयोगविधिरशक्यानि अङ्गानि नानुष्ठाने संगृह्णाति। एतस्मादेव कारणात् कतिपयाङ्गानां परित्यागेऽपि दोषो न भवति। एतस्मिन् विषये मीमांसाया 'नित्ये यथा - **शक्त्यनुष्ठातुरप्यधि-काराधिकरणम्**[5]' द्रष्टव्यम्।

नित्यकर्मसम्बन्धे उक्ताधिकरणेनेदमपि विस्पष्टं भवति यन्नित्यकर्मणामनुष्ठाने विकलाङ्गानामप्यधिकारोऽस्ति। यथा - अन्धः पुरुषो यजमानो क्रियमाणमाज्यावेक्षणं कर्म कर्तुं न

---

1. तै० ब्रा० 2/1/5/6
2. मीमांसायाम् 3/3/19 भाष्य उद्धृतम्।
3. द्र० 'नित्यवीप्सयोः अष्टा० 8/1/4'
4. आप० श्रौ० सू० 10/2/1
5. मीमांसायाम् 6/3/1-7

शक्तः, शिष्टं याजमानं कर्म तु कर्तुं शक्नोत्येव। एवमेव पङ्गुर्विष्णुक्रमानुष्ठानव्यतिरिक्तं कर्म तु कर्तुं शक्नोत्येव। एतस्मात् कारणाद् अङ्गहीनानां श्रौतकर्मण्यनधिकारनिदर्शकानां वचनानां '**अङ्गहीनाऽश्रोत्रियषण्डशूद्रवर्जितम्**[1]' इति कात्यायनप्रोक्तानां तात्पर्यं काम्यकर्मविषयकमेव ज्ञेयम्।

(घ) **पुनस्तेषां द्रव्यभेदात्त्रयो भेदाः** - उक्तानां त्रिविधानां श्रौतयज्ञानां यज्ञीयपदार्थानां भेदात् पुनस्त्रयो भेदा भवन्ति। एतेषु प्रथमास्ते यज्ञाः सन्ति येषां द्रव्यं मानवीया भोज्यरूपाः पदार्थाः सन्ति। यथा - व्रीहयो यवास्तिला गोधूमाः पयोदधिघृतादयः। एते पदार्था अग्नौ पक्त्वैव यज्ञेषु प्रयुज्यन्ते अतस्ते पाकयज्ञा इत्युच्यन्ते। अपरे ते यज्ञाः सन्ति येषु सोमस्तत्स्थानीया पूतिका वा प्रयुज्यते। एते सोमयज्ञा उच्यन्ते। अपरे ते यज्ञाः, येषां द्रव्यं विविधाः पशवो भवन्ति। एते पशुबन्धनाम्ना व्यवह्रियन्ते (केचन पशुयज्ञनाम्नापि व्यवहरन्ति।)

(ङ) **पाकयज्ञादीनां त्रयाणां सप्त सप्त भेदाः** - '**अग्निर्यज्ञं त्रिविधं, (त्रिवृतं) सप्तन्तुम्**'[2] इति मन्त्रांशमुद्धृत्य -

**सप्त सुत्याः सप्त च पाकयज्ञाः**
**हविर्यज्ञाः सप्त तथैकविंशतिः।**
**सर्वे ते यज्ञा अङ्गिरसोऽपि यन्ति**
**नूतना यानृषयः सृजन्ति ये च सृष्टाः पुराणैः।।**[3] इत्युक्तम्।

उक्तानां त्रयाणामपि सप्तकानां गोपथब्राह्मण एवेत्थं नामनिर्देशः समुपलभ्यते -

---

1. का० श्रौ० सू० 1/1/5
2. गोपथब्राह्मणे 1/1/12; पैप्पलादसंहितायाम् 5/28/1
3. गोपथब्राह्मणे 1/5/25

'सायंप्रातर्होमौ स्थालीपाको नवश्च यः।
बलिश्च पितृयज्ञश्चाष्टका सप्तमः पशुरित्येते पाकयज्ञाः।
अग्न्याधेयमग्निहोत्रं पौर्णमास्यममावास्ये।
नवेष्टिश्चातुर्मास्यानि पशुबन्धोऽत्र सप्तम इत्येते हविर्यज्ञाः।
अग्निष्टोमोऽत्यग्निष्टोमः उक्थ्यषोडशिमांस्ततः।
वाजपेयोऽतिरात्राप्तोर्यामात्र सप्तम इत्येते सुत्याः।।[1]'

एतद्विभागानुसारम् –

1. पाकयज्ञाः – सायंहोमः प्रातर्होमः, नवः, स्थालीपाकः, बलिवैश्वदेवः, पितृयज्ञः, अष्टका, पशुश्च।
2. हविर्यज्ञाः – अग्न्याधेयम्, अग्निहोत्रम्, पौर्णमासेष्टिः, अमावास्येष्टिः, नवसस्येष्टिः, चातुर्मास्यानि, पशुबन्धश्च।
3. सुत्याः = सोमयागाः – अग्निष्टोमः, अत्यग्निष्टोमः, उक्थ्यः, षोडशी, वाजपेयः, अतिरात्रः, आप्तोर्यामश्च।

गोपथब्राह्मणोक्तानां सप्तपाकयज्ञानां सम्बन्धः गृह्यसूत्रैः सह वर्तते। एते च गृह्योक्ता यज्ञाः स्मार्ता उच्यन्ते इत्युक्तं प्राक्। अवशिष्टानां सप्तहविर्यज्ञानां सप्तसोमयागानां च सम्बन्धो मन्त्रब्राह्मणैस्सहास्तीति कृत्वा एते श्रौतयज्ञा अभिधीयन्ते। एष्वेकविंशतियज्ञेषु पशुयज्ञा अप्युक्ताः।

श्री-लालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम् (मानितविश्व-विद्यालयः) नवदेहलीतः प्रकाशितस्य कात्यायनश्रौतसूत्रनामकस्य ग्रन्थस्य भूमिकायां तृतीये पृष्ठे म० म० पट्टाभिरामशास्त्रिवर्याः यज्ञानां भेदविषये एवं लिखितवन्तः –

'तत्र सप्त पाकयज्ञसंस्थाः, सप्तहविर्यज्ञसंस्थाः, सप्त सोमसंस्था इत्याहत्य श्रौतानि स्मार्तानि चैकविंशतिसंख्याकानि कर्माणि। औपासनहोमः, वैश्वदेवम्, पार्वणम्, अष्टका, मासिश्राद्धम्, श्रवणा, शूलगव इति सप्तपाकयज्ञाः वैवाहिकाग्निनानुष्ठेयाः। वैवाहिकाग्निः दारकाले दायाद्यकाले

---

1. गोपथब्राह्मणे 1/5/23

व्रा यथाविधि आधानेन निष्पन्नो भवति। तस्मिन्नग्नौ पूर्वोक्तान् पाकयज्ञान् यथासूत्रोक्ताननुष्ठाय सप्तहविर्यज्ञानुष्ठाने प्रवर्त्तेत। हविर्यज्ञाश्च– अग्निहोत्रम्, दर्शपूर्णमासौ, आग्रयणम्, चातुर्मास्यानि, निरूढपशुबन्धः, पिण्डपितृयागः, सौत्रामणी चेति। सोमसंस्थाः – अग्निष्टोमः, अत्यग्निष्टोमः, उक्थ्यः, षोडशी, वाजपेयः, अतिरात्रः आप्तोर्यामश्चेति।'

म० म० समीक्षाचक्रवर्ति मधुसूदन ओझा सरस्वतिना स्वकीये 'यज्ञमधुसूदन' नामके ग्रन्थे यज्ञविटपाध्याये यज्ञानां भेदविषये एवमुक्तम्–

यज्ञाः कतिविधाः भवन्तीति जिज्ञासायां कश्चित् तावदाह– पञ्चविधा हीमे सर्वे यज्ञा भवन्ति। अग्निहोत्रम्, दशपौर्णमासम्, चातुर्मास्यम्, पशुबन्धः, सोम इति भेदात्।

एतेषामेव यज्ञभेदानां स्वरूपारम्भकत्वेनोपबृंहणत्वेन विकृतित्वेन समुच्चयेन वान्येषां सर्वेषामेव यज्ञानां विधानान्तेषामप्येतैरेवोपसंग्रहणात्। अत एव – '**पाङ्क्तो वै यज्ञ**[1]' इति श्रूयते। पाङ्क्तः पञ्चविधः।

अपर आह – एक एव हि सर्वो यज्ञोऽग्निहोत्रादिभिः पञ्चसंस्थो विधीयते। एकस्यैव संवत्सराग्नेः संस्काररूपत्वेन सर्वेषामेषां यज्ञानां स्वरूपारम्भात् तस्य चाहोरात्रादिभिः पञ्चभिरेव संस्थाभिः पृथक् संस्करणादग्निहोत्रादिसंस्थाभिः पृथगाख्यानेऽपि वस्तुतोऽनन्यत्वात्। पाङ्क्तो यज्ञ इति हि श्रुतिः पञ्चसंस्थमेवैतमाहेति बोध्यम्।

अपर आह – यज्ञस्त्रिविधः – इष्टयः, पशवः, सोमा इति भेदात्। यत्राज्याहुतौ पशुहिंसा नास्ति तत्रेष्टिशब्दः। यत्र मांसमपि देवतायै दीयते तत्र पशु–शब्दः। यत्र ग्रहयागे सोमरसाहुतिस्तत्र सोमशब्द इति।

एके तावदाहुः एकविंशतिसंस्थः सर्वो यज्ञः – सप्तपाकयज्ञसंस्थाः, सप्तहविर्यज्ञसंस्थाः, सप्तसोमसंस्था इति भेदात्। तथा हि – औपासनहोमो, वैश्वदेवम्, पार्वणम्, अष्टकाः, मासिश्राद्धम्, सर्पबलिः, ईशानबलिरिति सप्तपाकयज्ञसंस्थाः। अग्निहोत्रम्, दशपूर्णमासौ, आग्रयणादीष्ट्ययनानि,

---

1. यज्ञमधुसूदने यज्ञविटपाध्याये प्रथमे पृष्ठे उल्लिखितः।

चातुर्मास्यानि, निरूढपशुबन्धः, सौत्रामणी, पिण्डपितृयज्ञश्चतुर्होतृहोमादयो दर्विहोमाः – इति सप्तहविर्यज्ञसंस्थाः। यज्ञशब्दवाच्यत्वे पिण्डपितृयज्ञस्य वषट्प्रदानत्वाभावात् दर्विहोमता। अग्निष्टोमः, अत्यग्निष्टोमः, उक्थ्यः, षोडशी, अतिरात्रः, वाजपेयः, आप्तोर्यामः इति सप्तसोमसंस्थाः। अग्निष्टोमे षोडशिग्रहणादत्यग्निष्टोमो राजन्यस्येत्येके, ब्राह्मणस्यापीत्येके। एताश्चैकविंशतिर्यज्ञसंस्थाः प्रचारबाहुल्याभिप्रायेण नित्यत्वाभिप्रायेणावश्य-कर्त्तव्यताभिप्रायेण चोपन्यस्ताः। तथाहि – '**जायमानो वै ब्राह्मणस्त्रिभिर्ऋणैर्वा जायते – ब्रह्मचर्येण ऋषिभ्यो, यज्ञेन देवेभ्यः, प्रजया पितृभ्यः। एष वा अनृणी, यः पुत्री यज्वा ब्रह्मचारी च।**[1]' इति श्रुतेः प्राणिमात्रे नाप्राप्तस्य देवर्णस्यापनयनार्थं हीमे एकविंशतिसंस्था यज्ञा विधीयन्ते। तस्मादशूद्राणां सर्वेषामेवैतेऽवश्यकर्त्तव्या इष्यन्ते। शूद्राणां तु विद्या नास्तीत्यशक्त्यत्वादधिकारो निरस्यते इत्यन्यत्। त्रैवर्णिकेन तु समर्थेनाफलार्थिनाऽप्येते कर्त्तव्या इति नित्यत्वम्। अत एव चैषां पुरात्वेऽधिकप्रचार आसीदिति बोध्यम्।

अपरस्तु सर्वानेव यज्ञानन्यथा विभजते। तथाहि – यज्ञः पञ्चधा–शिरोयज्ञः, अतियज्ञः, महायज्ञः, हविर्यज्ञः, पाकयज्ञश्चेति। एषां समेषां यज्ञानां परिचयोऽग्रिमेष्वध्यायेषु करिष्यते। साम्प्रतमिह प्रसङ्गानुसारं यज्ञानां प्रकृतिविकृतिभेदविषये तावद्विचार्यते।

**श्रौतयज्ञानां प्रकृतिविकृतिभेदः**

उपर्युक्तेषु विविधभेदप्रभेदेषु विभक्तेषु यज्ञेषु कतिपया प्रकृतयः कतिपयाः विकृतयश्च सन्ति। ये यज्ञास्तावत्प्रथमेनोक्ताः येषु अन्येषां धर्मातिदेशा न भवन्ति ते प्रकृतियागाः, येषु चापरेषां धर्मातिदेशा भवन्ति ते विकृतयः।

श्रौतयज्ञमीमांसा इति शीर्षके ग्रन्थे 'श्रौतयज्ञानां प्रकृतिविकृतिभेद'

---

1. तै० सं० 3/10/5

इति शीर्षके लेखे (लेखकेन) श्रीमता युधिष्ठिरमीमांसकेनोल्लिखितं यत्–

उक्ताः सर्वेऽपि श्रौतयज्ञाः प्रक्रिया–दृष्ट्या त्रिधा विभज्यन्ते –

1. प्रकृतियागः, 2. विकृतियागः, 3. प्रकृतिविकृत्युभयात्मकश्च।

1. **प्रकृतियागस्य लक्षणम्** – प्रकृतियागस्य त्रीणि लक्षणानि याज्ञिकैर्मीमांसकैश्च प्रदर्श्यन्ते–1. **यत्र कृत्स्नं क्रियाकलापमुच्यते सा प्रकृतिः।**[1] यथा – दर्शपूर्णमासौ। कलापशब्दो लिङ्गानुशासनकारैः प्रायेण पुंल्लिङ्गो निर्दिश्यते। तथापि '**लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य**'[2] इति पतञ्जलिवचनात् '**सम्बन्धमनुवर्तिष्यते**' इति महाभाष्ये (1/1/1) पुंल्लिङ्गस्य नपुंसके प्रयोगाच्च कलापशब्दस्य पुंस्त्वं प्रायिकं ज्ञेयम्।

2. **यतो विकृतिरङ्गानि गृह्णाति सा प्रकृतिः।**[3] यथा – दर्शपूर्णमासौ।

3. **प्रकृतिवद् विकृतिः कर्तव्या इति चोदकाद् यत्र नाङ्गप्राप्तिः सा प्रकृतिः।**[4]

एतानि त्रीण्यपि लक्षणानि स्वल्पभेदेन मीमांसान्यायप्रकाश उपलभ्यन्ते। एषु प्रथमलक्षणानुसारं गृहमेधीयेष्टिः दर्विहोमश्च प्रकृतियागेऽन्तर्गतौ भवतः।[5]

---

1. 'यत्र समग्राङ्गापदेशः सा प्रकृतिः' इति मीमांसान्याय प्रकाशकारः। (द्र० सारविचनी व्याख्यासहिते 52 तमे पृष्ठे, काशी संस्कृत सीरीज, सन् 1925)
   प्रकर्षेण अङ्गोपदेशो यत्र क्रियते सा प्रकृतिः। कृत्स्नाङ्गविषयत्वप्रकर्षः इति सायणः (तै० स० भाष्यभूमिकायाम्, 8 तमे पृष्ठे वै० सं० मण्डल पुणे)
2. महाभाष्ये 2/1/36
3. द्र० मीमांसान्यायप्रकाशः उपर्युक्तमेव संस्करणम्, पृ० 44, पंक्ति 5
4. द्र० तत्रैव
5. मीमांसाप्रवक्त्रा विकृतौ प्राकृतस्य विधेर्दर्शनात् पुनः श्रुतिरनर्थिका स्यात् (10/7/24)

यत इमे कर्मणी यावदुक्ते स्वीक्रियेते। द्वितीयलक्षणानुसारं गृहमेधीयेष्टिर्दर्विहोमतश्च न कापि विकृतिरङ्गानि गृह्णाति, अत्र नैते प्रकृतियागेऽन्तर्भवतः। यतः 'यस्य पर्णमयी जुहूर्भवति इत्यादीनाम् अनारभ्याधीतविधीनां प्रकृतिगामित्वं मीमांसकैरास्थीयते। यदि नाम गृहमेधीयेष्टिर्न प्रकृतिः, तर्हि तत्र पर्णतायाः प्राप्तिर्न भवितुं शक्या, इष्यते च। अत एव मीमांसान्यायप्रकाशकारेणोक्तम् – **'अत्र विकृतिर्यतोऽङ्गानि गृह्णाति सा प्रकृतिरिति न प्रकृतिशब्देन विवक्षितम्, गृहमेधीये पर्णताया अप्राप्तिप्रसङ्गात्। नहि गृहमेधीयात् काचन विकृतिरङ्गानि गृह्णाति मानाभावात्। किन्तु चोदकाद् यत्राङ्गप्राप्तिस्तत्कर्म प्रकृतिशब्देन विवक्षितम्। यथा – 'दर्शपूर्णमासौ........गृहमेधीयादिष्वपि न चोदकादङ्गप्राप्तिः। यत्र चोदकात्प्रवृत्तिस्तत्रानारभ्याधीतानां सन्निवेशः[1]'** इति।

आपस्तम्बपरिभाषाप्रकरणस्थस्य **'त्रिभिः कारणैः प्रकृतिर्निवर्तते प्रत्याम्नानात् प्रतिषेधादर्थलोपाच्च[2]'** इति सूत्रस्य व्याख्यायां हरदत्तकपर्दिस्वामिनौ चकारात् नियम–परिसंख्या–भूतोपदेशानां कारणानामपि संग्रहणं कुरुतः। प्रकृतेः परिसंख्यया गृहमेधीयेष्टौ चोदकाद् प्रयाजादीनां प्राप्तावपि पुनः गृहमेधीयेष्टौ आज्यभागस्य विधानं प्रयाजादीनां निवृत्यर्थं मन्वाते। एतत् प्रमाणेन गृहमेधीयेष्टेर्विकृतित्वं बाधितं भवति।

तृतीयलक्षणानुसारं गृहमेधीयेष्टिर्दर्विहोमश्च प्रकृतिकर्मणी भवतः।

---

इति सूत्रेण विकृतौ चोदकेन प्राज्ञानां प्राकृतधर्माणां दर्शनात् चोदकवचनेन पुनः प्राप्तिरनर्थिका भवेत् इत्यतो गृहमेधीयेष्टिर्यावदुक्तकर्मता प्रतिपादिता। शब्दान्तरेण गृहमेधीयेष्टिर्विकृतियाग इत्युक्तं भवति। तथापि प्रकृतियागात् प्राप्तानां केषाञ्चिद्धर्माणां श्रुतौ निर्देशस्योपलम्भाद् अत्र तावन्त एव धर्माः परिगृह्यन्ते येऽत्रोपदिष्टाः। सूत्रकारस्यैतद्वचनानुसारं प्रकृतेः प्रथमलक्षणानुसारं गृहमेधीयेष्टिः प्रकृतिकर्मान्तर्गता परिगृह्यते। अत्र 25 तमात् सूत्रात् 33 तमसूत्रपर्यन्तं कृत्स्नमधिकरणं द्रष्टव्यम्।

1. मी० न्या० प्र० पृ० 44 पूर्वोक्ते संस्करणे
2. आप० परि० सू० 4/2

एषु लक्षणेषु प्रथमं लक्षणं सुगमं दोषरहितं च वर्तते। नवीनमीमांसकैर्द्वितीयलक्षणानुसारं गृहमेधीयेष्टौ पर्णताया अप्राप्तिकारणात् तृतीयं लक्षणमास्थितम्। इदं तृतीयं लक्षणं न केवलं क्लिष्टमपितु लक्षणान्तर्गतयोः प्रकृतिविकृत्योरन्योन्याश्रयत्वाद् अन्योन्याश्रयदोषदुष्टमप्यस्ति। नहि प्रकृतेर्लक्षणमविज्ञाय विकृतेर्ज्ञानं भवति, अविज्ञाते च विकृतौ 'चोदकाद् यत्र नाङ्गप्राप्तिः' इति न वक्तुं शक्यते। अयं दोषो द्वितीयलक्षणेऽपि वर्तते। यतस्तत्र प्रकृतिलक्षणे विकृतिपदस्यापि निवेशोऽस्ति – 'यतो विकृतिरङ्गानि गृह्णाति सा प्रकृतिः' इति।

## 2. विकृतियागस्य लक्षणम्

येषु यागेषु तत्तत्कर्मोपयोगी समस्तः क्रियाकलापो न पठ्यते, कर्मण पूर्त्यर्थं च य अन्यतः (=प्रकृतेः) क्रियाकलापान् गृह्णन्ति ते विकृतियागा उच्यन्ते। यथा – दीक्षणीयेष्टिः दाक्षायणेष्टिः, मित्रविन्देष्टिः।

## 3. प्रकृतिविकृतियागस्य लक्षणम्

यो यागः स्वयं विकृतिरूपः सन्नप्यन्यस्य कस्यचिद् यागस्य प्रकृतिभाव गच्छति, स प्रकृतिविकृतिरूपो यागो निगद्यते। यथा – चातुर्मास्यानां वैश्वदेवं पर्व। वैश्वदेवं पर्व स्वकर्मपूर्त्यर्थं प्रकृतेः सकाशाद् अङ्गानि समादत्ते परन्त्विदमेव वैश्वदेवं पर्व चातुर्मास्यानाम् उत्तरपर्वणां प्रकृतिभावमापद्यते। तदुक्तम् – '**वैश्वदेवं वरुणप्रघाससाकमेधशुनासीरीयाणाम्**[1]' इति। प्रकृतिरित्युपरिष्टादनुवर्तते।

यतोऽग्निष्टोमे सोमयागसम्बन्धी समस्तः पदार्थः साकल्येनोपदिश्यते, अतोऽयमन्येषां सोमयागानां प्रकृतिरुच्यते – '**अग्निष्टोम एकाह्नानां प्रकृतिः**[2]'। किन्तु तस्याङ्गता दीक्षणीयेष्टिः उपसदिष्टिः, आतिथ्येष्टिश्चेत्यादय इष्टयः स्वक्रियाकलापान् दर्शपूर्णमासाभ्यां गृह्णन्ति। अङ्गैस्सह क्रियमाण कर्मैव

1. आप० परि० 3/36
2. आप० परि० 4/3

फलप्रदं भवति। इत्थमग्निष्टोमोऽन्यसोमयागानां प्रकृतिः, किन्तु तस्याङ्गरूपा अवान्तरेष्टयः विकृतयः। यथा विकृतिरूपेण स्वीकृतासु इष्टिषु प्रधानकर्मणस्तत्तत्प्रकरणे निर्देशे सत्यप्यङ्गकर्मणां प्रकृतेर्ग्रहणाद् ता विकृतय उच्यन्ते तथैवात्रावान्तरेष्टीनां विकृतिरूपत्वात् विकृतिरूपत्वमप्यस्त्येव।

स्वामिकरपात्रनाम्ना प्रसिद्धेन हरिहरानन्दसरस्वतीमहोदयेन स्वकीये 'वेदार्थपारिजात' नाम्नि ग्रन्थे 2095 तमे पृष्ठे 'यागेषु' प्रकृतिविकृतिविचारः इति शीर्षके निबन्धे युधिष्ठिरमीमांसकोक्तं शाबरभाष्यभूमिकायाः 'श्रौतयज्ञमीमांसा' शीर्षकान्तर्गत 'श्रौतयज्ञानां प्रकृतिविकृतिभेदः' इति उपनिबद्धं निबन्धमित्थं परिशीलितम् -

तेनोक्तं यत् लेखेऽस्मिन् लेखकेन यल्लिखितं तत्परिशीलयामः। प्रथमं तेन (युधिष्ठिर मीमांसकेन) भेदत्रयं प्रदर्शितं, तदशुद्धम्। चत्वारो भेदा अत्र वर्तन्ते - (1) केचनयागाः प्रकृतय एव यथा दर्शपूर्णमासौ, अग्निष्टोमसंस्थाकज्योतिष्टोमश्च। (2) केचन विकृतय एव। यथा सौर्यादयः। (3) केचन प्रकृतयो विकृतयश्च। यथा - अग्नीषोमीयः पशुयागः, उक्थ्यषोडश्यतिरात्रसंस्थाका ज्योतिष्टोमयागाश्च। (4) केचन न प्रकृतयो भवन्ति, नापि विकृतयः। यथा दर्विहोमाः गृहमेधीयाश्च।

सर्वत्र लेखकोऽयं सांख्यमतपोषकोऽपि प्रकृति-विकृति-विषये सांख्यमतं नानुसरतीति विचित्रमिदम्। प्रकृतियागस्य त्रीणि लक्षणान्ययं लिखति। तत्र प्रथमं लक्षणम् -'**यत्र कृत्स्नं क्रियाकलापमुच्यते सा प्रकृतिः**।' इति। एवं लक्षणं मीमांसकैः कदापि न क्रियेत, ते हि 'कलाप' शब्दं पुंल्लिङ्गं जानन्ति न क्लीबलिङ्गे। मीमांसकास्तु - '**यत्र समग्राङ्गोपदेशः सा प्रकृतिरि**'ति कथयन्ति। अस्यैव लक्षणस्य परिष्कृतं रूपम् - यः पदार्थो यादृशोपकारद्वारा यदङ्गत्वेनाभिधारितः तस्य पदार्थस्य तत्सम्बन्धित्वेन रूपेण तादृशोपकारद्वारैवान्याङ्गताबोधकं प्रमाणमतिदेशः। यः पदार्थः - प्रयाजानूयाजादिः, यादृशोपकारद्वारा-अदृष्टानामदृष्ट उपकारः, दृष्टार्थानाञ्च दृष्ट उपकार इति रीत्या, यदङ्गत्वेनावधारितः - आग्नेयाङ्गत्वेनावधारितः, तस्य पदार्थस्य प्रयाजानूयाजादेः तत्सम्बन्धित्वेन आग्नेयादिसम्बन्धित्वेन

रूपेण, तादृशोपकारद्वारा – दृष्टादृष्टोपकारद्वारा, अन्याङ्गताबोधकम् – सौर्याद्यङ्गताबोधकं 'प्रकृतिवद्विकृतिः कर्तव्या' इत्येवमादिकं वाक्यं प्रमाणम्। प्रयाजानूयाजादेराग्नेयसम्बन्धित्वं न स्वरूपेण, किन्त्वाग्नेयेतिकर्तव्यतात्वेन। अतश्चाग्नेयेति- कर्तव्यतात्वमेव विकृतिसम्बन्धितावच्छेदकं सिध्यति। यथा प्रकृतौ प्रयाजानूयाजादय इतिकर्तव्यताकाङ्क्षापूरकत्वेन भावनायामन्वियन्ति, तथा विकृतिभावनायामपि तत्तदुपकारद्वाराऽन्वियन्तीत्यर्थः। अतः स्वेतिकर्तव्यताकाङ्क्षापूरकाणामङ्गानां समग्राणामाम्नानं सा प्रकृतिशब्देनोच्यत इति सिध्यति।

अन्यद्यल्लक्षणद्वयमिति प्रदर्शितं, तदज्ञानमूलकम् श्रीमदापदेवेन मीमांसान्यायप्रकाशे वाक्यप्रमाणनिरूपणावसरेऽनारभ्याधीतानामङ्गानां क्व निवेशः – किं प्रकृतौ विकृतौ च? अथवा प्रकृतावेव? इति संशयमुत्थाप्य 'प्रकृतौ वाऽद्विरुक्तत्वात्' इति जैमिनिसूत्रानुसारेण द्विरुक्तत्वरूपदोष-निवारणायानारभ्याधीतानां प्रकृतिगामित्वमेवेति स्वीकृत्य प्रकृतिस्वरूप-निश्चयाय 'अत्र विकृतिर्यतोऽङ्गानि गृह्णाति सा प्रकृतिरिति न प्रकृतिशब्देन विवक्षितम्, 'इत्युक्त्वा अनारभ्याधीतानां गृहमेधीयेष्टौ प्राप्तिसिध्यर्थं चोदकाद्यत्र नाङ्गप्राप्तिस्तत्कर्म प्रकृतिशब्देन विवक्षितम्' इत्युपसंहृतम्। गृहमेधीयेष्टेः प्रकृतिविकृतित्वाभावात् तत्रानारभ्याधीताङ्गानां सन्निवेशाय ग्रन्थकारेणोपायस्सूचितः न तु प्रकृतेर्लक्षणं कृतम्। अत एव प्रकरणविभागावसरे (पृ० 53) तच्च (महाप्रकरणं) प्रयाजादीनां ग्राहकम्, तच्च प्रकृतावेव, 'यत्र समग्राङ्गोपदेशस्सा प्रकृति' रिति प्रकृतेर्लक्षणमुक्तम्। '**इदञ्च लक्षणं सूत्रारूढं कृत्स्नविधानाद्वा अपूर्वत्वम्**[1]' इति सूत्रं अग्निष्टोमस्यापूर्वत्वे प्रकृतित्वे कृत्स्नविधानम् अभिषवादि सकलाङ्गविधानं हेतुरिति सूत्रकारो वदति। अतः 'यत्र समग्राङ्गोपदेशस्सा प्रकृतिः' इत्येव प्रकृतेर्लक्षणम्।

लक्षणद्वयप्रदर्शनस्याज्ञानमूलकत्वेऽयं हेतुः गृहमेधीयेष्टिश्चातुर्मास्येषु

---

1. जै० सू० 8/1/5

वरुणप्रघासपर्वणि 'मरुद्भ्यो गृहमेधिभ्यः सर्वासां दुग्धे सायमोदनम्' इति वाक्येन विहिता। तत्र 'आज्यभागौ यजति यज्ञतायै' इत्याम्नातम्। अत्राष्टौ पक्षाः सन्ति। तेषु सप्तपूर्वपक्षाः, अष्टमपक्षश्च सिद्धान्तः। ओदनद्रव्यकत्वादिदं कर्म 'इष्टिः' इत्युच्यते। इष्टीनां प्रकृतिर्दर्शपूर्णमासौ। दर्शपूर्णमासयोः अग्निसोमदेवताकौ द्वौ आज्यभागयागौ स्तः। दर्शपूर्णमासाभ्यामेवानयो-र्यागयोरतिदेशेन प्राप्तौ सत्यामस्मिन् प्रकरणे समाम्नानमाज्यभागयोः कस्मै प्रयोजनायेत्याकाङ्क्षायामिमे पक्षाः तस्मिन्नधिकरणे प्रदर्शिताः।[1] तेषु पञ्चमाष्टमपक्षौ परिसंख्याविधिपरौ - अर्थात् प्रकृतितः विकृतेरिति कर्त्तव्यताकाङ्क्षापूरणाय प्राप्तानामङ्गानां बाधायै विकृतावस्मिन् 'आज्यभागौ यजति' इति श्रुतम्। गृहमेधीये आज्यभागातिरिक्तप्रयाजानूयाजादयो नानुष्ठेया इत्येतदर्थमिदं वाक्यम्। अतिदेशेन प्राप्तेष्वङ्गेषु विधिरयं तदितराङ्गपरि-संख्यार्थत्वेन स्वसजातीयेतराङ्गानां यागरूपाणां प्रयाजानूयाजादीनां विवर्तक इति प्राप्तबाधोऽत्र पक्षे स्वीकृतः। एवं सति 'आज्यभागौ यजति' इत्यस्य प्रयाजादयो यागा न कर्त्तव्या इत्यर्थस्सम्पद्येत। तथा च स्वार्थहानिः परार्थस्वीकारः प्राप्तबाधश्चेति त्रैदोष्यं स्यात्। अतोऽष्टमः पक्षः। अस्मिन्पक्षे गृहमेधीयप्रकरणपठितम् 'आज्यभागौ यजति' इति वाक्यं प्रकृतिवद्विकृतिः कर्तव्येत्यतिदेशमेव निरूणद्धि। अतिदेशतः प्राप्तान् पदार्थान् न परिसङ्चष्टे, किन्त्वप्राप्तानामेव प्रयाजादीनां पदार्थानां बाधकं भवतीत्यप्राप्तबाधः। अर्थात् स्वप्रकरणाधीतैरेव आज्यभाग-स्विष्टकृदिडोपश्वेडाभक्षणादिभिरेवेष्टेरिति-कर्तव्यताकाङ्क्षोपशमात् आज्यभागादिपठिताङ्गभिन्नप्रयाजादीनां परिसंख्येत्यप्राप्तबाधः। अतः पञ्चमपरिसंख्यापक्षे विकृतित्वं गृहमेधीयेष्टेस्सिद्ध्यति; अतिदेशेन पदार्थानां प्राप्तत्वात्। अष्टमपक्षे च चोदकस्यैव परिलोपात् विकृतित्वशङ्काया अवसर एव नास्ति। आज्यभागाद्यतिरिक्तप्रयाजानूयाजादिसमग्राङ्गोपदेशाभावान्न प्रकृतित्वमपि। तर्ह्यनारभ्याधीतायाः पर्णताया निवेशः कथं गृहमेधीयेष्टौ भवतु? इति शंकायाः

---

1. पू० मी० 10/7/9

समाधानाय 'चोदकाद्यत्र नाङ्गप्राप्तिस्तत्कर्म प्रकृतिशब्देन विवक्षितम्' इत्युक्तम्। एवञ्च गृहमेधीयेष्टिः चोदकादङ्गानि न गृह्णाति, नापि च विकृत्यन्तरं गृहमेधीयेष्टितोऽङ्गानि गृह्णातीति गृहमेधीयेष्टिर्न प्रकृतिः नापि विकृतिरिति सम्प्रदायः। जैमिनिः आज्यभागाधिकरणे[1] प्रथमपक्षनिरूपणायेदं सूत्रं प्रणीतवान्। अस्मिन्नधिकरणेऽष्टौ पक्षा इति पूर्वमुक्तम्। तत्रायं प्रथमः पक्षः – गृहमेधीयेष्टिगतं 'आज्यभागौ यजति' इति वाक्ये चोदकतः प्राप्तेषु पदार्थेषु केवलमाज्यभागस्यानुवादमात्रं करोतीति।

सूत्रस्यायमर्थः – अष्टसु पक्षेष्वाज्यभागवाक्यं गृहमेधीयेष्टिगतमनुवाद-मात्रं करोतीति प्रथमः पक्षः। विकृतौ – विकृतिभूतायां गृहमेधीयेष्टौ प्राकृतस्य विधेः – प्राकृताङ्गकलापस्य ग्रहणात् – अतिदेशत एव ग्रहणसम्भवात्, पुनः श्रुतिः – पुनस्तमाज्यभागश्रुतिः अनर्थिका स्यात् – अप्राप्तप्रापणरूप-प्रयोजनशून्या स्यात्। अनुवाद मात्रं स्यादिति। अत्रैवं लिखति 'अनेन न्यायेन गृहमेधीयेष्टौ यावदुक्तकर्मता मन्यते' अपरस्मिन् शब्दे विकृतियागोऽयमस्ति आदि। अत्र 'यावदुक्तकर्मता मन्यते' इत्यस्य कोऽर्थः? यावदुक्तमङ्गजातं तदनुष्ठेयमिति तस्यार्थः। तमिममर्थं सूत्रकारोऽत्र सूत्रेण किं वदति? उपरिष्टाल्लिखति – सूत्रकारस्योक्तवचनात् प्रथमलक्षणानुसारं गृहमेधीयेष्टिः प्रकृतिकर्मान्तर्गता परिगृह्यते इति। किमनेन सूत्रेण सूत्रकारो गृहमेधीयेष्टिं प्रकृत्यन्तर्गतां प्रतिपादयति? प्रथमलक्षणन्तु तव 'यत्र कृत्स्नं क्रिया-कलापमुच्यते सा प्रकृतिः' इति। (लेखकेन यथोक्तं लक्षणं तथैवात्र लिखितम्) किमनेन सूत्रेण प्रकृतेरेवं लक्षणं सूत्रकारः सूचयति? अहह! सर्वथा जैमिनिर्हतः।

तस्मिन्नेव पृष्ठे युधिष्ठिरमीमांसकेन लिखितम् यत् 'मीमांसकैर्द्वितीय-लक्षणानुसारं गृहमेधीयेष्टौ पर्णताया अप्राप्तिकारणात् तृतीयं लक्षणमास्थितम्' इदं तृतीयं लक्षणं न केवलं क्लिष्टम् अपितु लक्षणान्तर्गतयोः प्रकृतिविकृत्योरन्योन्याश्रयत्वाद् अन्योन्याश्रयदोषदुष्टमप्यस्ति'[2] इति। भोः

1. जै० सू० 10/7/9
2. श्रौतयज्ञमीमांसायाम्, पृ० 12

लेखक! सावधानेन मनसा स्वीयं लेखं निरीक्षस्व। त्वदीयं तृतीयं लक्षणं 'चोदकाद्यत्र नाङ्गप्राप्तिः सा प्रकृतिः' इति। किमस्मिन् लक्षणे प्रकृति-विकृतिशब्दौ परिगृहीतौ? उपनेत्रं धारय, लक्षणञ्चावलोकय। अत्रान्योन्याश्रयदोषञ्चोद्भावयसि। न्यायप्रकाशसन्दर्भस्य स्थितिः पूर्वमेवावबोधिता।

तत्रैव लेखकः 'विकृतियागस्य लक्षणम्' इत्यारभ्य लक्षणं प्रदर्श्योदाहरति – यथा – दाक्षायणेष्टिः, मित्रविन्देष्टिः इति। किमहं ब्रवीमि लेखकस्य बुद्धिप्रकर्षम्! द्वितीयतृतीयपादस्य चतुर्थमधिकरणं 'दाक्षायणयज्ञाधिकरणम्' इति व्यवह्रियते। तत्र शबरस्वामिभाष्यकारो लिखति – 'तस्मात् प्रकृतयोर्दर्शपूर्णमासयोर्गुणात् फलमुच्यते, न यागान्तरं विधीयते' इति।[1] लेखकमहोदयः यज्ञशब्दस्य यत्र प्रयोगः कर्तव्यस्तत्र तं न करोति, यत्र च न कर्तव्यस्तत्र तं प्रयुङ्क्ते। यथा – 'दाक्षायणेष्टिः' इति 'सृष्टियज्ञः' इति। अस्य क्रतोः दाक्षायणेष्टिरिति न व्यवहारो मीमांसकयाज्ञिकेषु, किन्तु दाक्षायणयज्ञ इत्येव व्यवहारः। तपस्वी अयं व्यवहारमिमं कथं जानातु? शबरभाष्यस्यानुवादं परं कर्तुं प्रवृत्तः, किन्तु दाक्षायणयज्ञं विकृतिं लिखति। अत्रायं विषयविवेकः – द्वितीयाऽध्यायो मीमांसायां कर्मभेदाध्याय इत्युच्यते। तत्र कर्मभेदं प्रति षट्प्रमाणानि स्वीक्रितानि द्वितीयाध्यायस्य द्वितीयपादे पञ्चानां प्रमाणानां विचारो जातः – शब्दान्तरम्, अभ्यासः, संख्या, संज्ञा, गुण इति। तृतीयपादे संज्ञया कर्मभेदस्यापवादो विचार्यते। तत्रेदमुदाहरणम् – 'दाक्षायणयज्ञेन स्वर्गकामो यजेत' साकम्प्रस्थायीयेन यजेत पशुकामः' इत्यादि। अत्र किं कर्मान्तरविधिः? अथवा गुणफलविधिः? इति सन्देहः। दर्शपूर्णमाससंज्ञापेक्षया दाक्षायणयज्ञ-इति संज्ञान्तरमस्ति। अतः ज्योतिः विश्वज्योतिः सर्वज्योतिरित्यत्र यथा संज्ञया कर्मभेद उपपादितः, तथैवात्र दाक्षायणयज्ञ इति संज्ञाभेदात् कर्मान्तरमिति पूर्वपक्षः। सिद्धान्तस्तु

---

1. शा० भा० पृ० 124, (चौ० सं० सी०)

गुणफलविधिः। यथा –'दध्नेन्द्रियकामस्य जुहुयात्' गुणफलविधिः, न कर्मान्तरम्, तथा प्रकृतदर्शपूर्णमासयोरेवैतादृशगुणयुक्तयोरनुष्ठाने फलमिदं भविष्यतीति नेदं कर्मान्तरम्। कोऽयं दाक्षायणयज्ञबोधितो गुण इति चेत्, तत्रेदं वाक्यमाम्नायते – 'त्रिंशतं वर्षाणि दर्शपूर्णमासाभ्यां यजेत, यदि दाक्षायणयज्ञी स्यात् पञ्चदश वा वर्षाणि यजेत तथैवं सम्पद्येत' इति।

त्रिंशते वर्षाणि दर्शपूर्णमासयाजिनो यावती दर्शपूर्णमासप्रयोगसंख्या, भविष्यति तावत्संख्याकदर्शपूर्णमासप्रयोगसम्पत्तिं पञ्चदशवार्षिक दाक्षायणयज्ञिनो दर्शयति। तत्रायं वाक्यशेषः – 'द्वे पौर्णमास्यौ यजेत द्वे अमावास्ये' इति। प्रतिपर्व द्वयोर्द्वयोः प्रयोगयोरनुष्ठाने पञ्चदशवर्षेषु त्रिंशत्संख्यासम्पत्तिरित्यर्थः। एवञ्च दर्शपूर्णमासक्रतुः प्रयोगावृत्ति रूपगुणयुक्तो यदि क्रियेत तर्हि निर्दिष्टं फलमिति भावः। तथा च दाक्षायणयज्ञो न क्रत्वन्तरम्। क्रत्वन्तरत्वाभावे तस्य विकृतित्वं कथं स्यादिति लेखक एव जानातु।

किञ्च 'प्रकृति-विकृतियागस्य लक्षणम्' इत्यारभ्य – 13 पृष्ठे तस्योदाहरणं ददाति – यथा 'अग्निष्टोम' इति। अहो मीमांसापाण्डित्यं लेखकस्य। हं हो! श्रौतयज्ञवैदुष्यं श्रौतयज्ञमीमांसाकर्तुः! लेखकस्य दयनीयां शोचनीयाञ्च दशां विलोक्य म० म० चिन्नस्वामिशास्त्रिचरणाः यदि जीवदवस्थायां वर्तेरन् तर्हि नूनं मन्येरन् यन्मया क्षीरप्रदानेन सर्पः-पालित इति। 'अग्निष्टोम' शब्दोऽग्निष्टोमसंस्थाकज्योतिष्टोमवाचीति लेखकोऽङ्गीकुर्यादेव। अग्निष्टोमे चेष्टयस्सन्ति पशुयागाश्च सन्त्यङ्गभूताः। इष्टयश्च दर्शपूर्णमासविकृतयः, पशुयागश्च दर्शविकृतिः पश्वन्तराणाञ्च प्रकृतिः। अग्निष्टोमश्चोक्थ्यादिसंस्थानां प्रकृतिः। विकृतिश्चायं कस्य यागस्य? समग्राङ्गोपदेशस्यात्र सत्वात् प्रकृतित्वमभ्युपेत्यानन्तरं लिखति – 'किन्तु तस्याङ्गता दीक्षणीयेष्टिः, उपसदिष्टिः, आतिथ्येष्टिश्चेत्यादय इष्टयः स्वक्रियाकलापान् दर्शपूर्णमासाभ्यां गृह्णन्ति।' इति। अग्निष्टोमस्वरूप ज्ञानरहितस्येदं लेखनम्। अग्निष्टोमोक्थ्यषोडश्यतिरात्रशब्दानां तत्तत्संस्थायां शक्तिः, तादृशसंस्थावति ज्योतिष्टोमे निरूढलक्षणा, तद्वति क्रत्वन्तरे च

साम्प्रतिकी, ग्रहणे स्तोत्रे च गौणीति विभागः। ततश्चाग्निष्टोमशब्दस्य तन्नामकसंस्थायां रूढ़ि। दीक्षणीयादिष्टीनां तदेकदेशत्वं न, किन्तु तदङ्गत्वम्। तदङ्गानामिष्टीनाम् अग्निष्टोमपदं न बोधकम्। किन्तु तत्संस्थाकयागस्यैव ज्योतिष्टोमस्य बोधकम्। अतोऽस्य प्रकृतित्वमेव, न तु प्रकृतिविकृतित्वमिति हरिहरानन्दसरस्वती करपात्रस्वामिना स्वकीये वेदार्थपारिजातनाम्ना प्रसिद्धे ग्रन्थे लिखितम्।

स्वामिकरपात्रस्वामिना केनचिन्मीमांसकमन्येन अत्र द्वे प्रतिपत्ती प्रदर्शिते। **प्रथमा** – अस्य क्रतोर्दाक्षायणेष्टिरिति न व्यवहारो मीमांसकेषु, क़िन्तु दाक्षायणयज्ञ इत्येव व्यवहार इति। अत्रोच्यते– लेखकस्य मते 'दाक्षायणयज्ञेन' स्वर्गकामो यजेत इत्येवं विहितो दाक्षायणयज्ञो न दर्शपूर्णमासाभ्यां भिन्नोऽपितु तत्रैव अभ्यासरूपगुणफलविधिः।[1] सत्येवं यदि दर्शपूर्णमासयोः दर्शेष्टिः पूर्णमासेष्टिः पदाभ्यां प्रयोगो भवति तर्हि तत्रैव गुणफलविधि रूपेण निर्दिष्टे दाक्षायणयज्ञे इष्टित्वं केन वारयितुं शक्यते? इष्टेर्लक्षणम् – '**इष्टिशब्दः ऋत्विक्चतुष्टयसम्पाद्यसपत्नीकयजमान-कर्तृककर्मनाम**'[2] इदं च लक्षणं दाक्षायणक्रतावपि समवेति। तेनास्येष्टित्वमेव। इदमन्यद् यल्लेखकस्य मतानुसारं मीमांसकेषु दाक्षायणयज्ञ इत्येव व्यवहारः। सत्यपि तथा व्यवहारे कथं तेन दाक्षायणयागस्य इष्टित्वमपाकर्तुं शक्यते।

**द्वितीया** – दाक्षायणयागः दर्शपूर्णमासयोरेवाभ्यासगुणरूपो न क्रत्वन्तरम्। तेन 'नायं विकृतियाग' इति। वस्तुतस्तु शबरस्वामी कुमारिलभट्टस्तदनुयायिनो न दाक्षायणयागं क्रत्वन्तरं मन्यन्ते। परन्त्वेषां मतं वैदिकमतविरोधान्न गृहीतुं योग्यम्। यदा तु दाक्षायणयागस्य विधानं कौषीतकि-ब्राह्मणे दृश्यते तथाऽस्य क्रत्वन्तरत्वे विकृतित्वमेव प्रमाणीभवति। कुतूहलवृत्तिकारेण दाक्षायणयागे गुणफलविधेः प्रत्याख्यानं कृत्वाऽस्य यागान्तरत्वं विकृतियागत्वं च सप्रमाणं व्यवस्थापितम्।

---

1. वेदार्थ पारिजाते 2099 तमे पृष्ठे।
2. श्रौतपदार्थनिर्वचनम् पृ० 1

युधिष्ठिरमीमांसकप्रतिपादितस्य लेखस्य विषये करपात्रस्वामिना लिखितम् यत् – म० म० चिन्नस्वामिशास्त्रिचरणा यदि जीवदवस्थायां वर्तेरन् तर्हि नूनं मन्येरन् यन्मया क्षीरप्रदानेन सर्पः पालित इति परमोदारचरितानां यशः कायशरीरेण वर्तमानानां आचार्याणां विषय इत्थं लेखनं वेदार्थ पारिजातकारस्य मनोविकारमेव प्रकटयति। आचार्यपादैस्तु स्वयं यज्ञतत्त्वप्रकाशे अग्निष्टोम विषय इत्थं प्रत्यपादि –

**"अत्र बहूनामिष्टिपशूनां सत्यप्यनुष्ठाने तेषामङ्गत्वात् सोमद्रव्यकयागस्यैव प्राधान्याच्च सोमयाग इति व्यवहारः। अग्निष्टोमाख्येन साम्ना समाप्यमानत्वाच्च अग्निष्टोम इति प्रकृतियागो व्यवह्रियते।[1]"**

यत्त्वत्रैव (पृ० 2100) वेदार्थपारिजातकृत् लिखति – **"दीक्षणीयादिष्टीनां तदेकदेशत्वं न, किन्तु तदङ्गत्वम्"** अत्राप्येवं समाधीयते यत्किं हस्तपादादीन्यङ्गानि शरीरस्यैकदेशा न सन्ति? यदि सन्ति तर्हि छिन्ने हस्ते अङ्गाभावात् कश्चिदपि तं शरीरं सर्वदेशसम्पन्नं कथं न स्वीकर्तुमर्हति?

अस्तु नामाङ्गैकदेशत्वयोर्भेदः, तदैतद् वक्तव्यम् – यथा नित्या यागा देशकालपरिस्थितिवशाद् कैश्चिदङ्गैर्विहीना अपि सम्पाद्यन्ते कर्मणोऽलोपार्थम्, तथैव किं 'वसन्ते वसन्ते ज्योतिषा यजेत' इत्येवं नित्यविहितो ज्योतिष्टोमो दीक्षणीयेष्ट्यादिभिरङ्गैर्विहीनोऽपि शक्यते सम्पादयितुम्? यदि सम्पादयितुं शक्यते तर्हि दीक्षादिसंस्कारविरहितोऽपि यजमानः सोमयागेऽधिकृतो भवेत्।

षड्दिनसाध्येऽग्निष्टोमे पञ्चमं दिवसमतिरिच्य अवशिष्टेषु पञ्चसु दिवसेषु त्विष्टयः पशुयागाश्चैव भवन्ति। अत आचार्यपादैः स्पष्टं लिखितम् 'अत्र बहूनामिष्टिपशूनां सत्यप्यनुष्ठाने तेषामङ्गत्वात् सोमद्रव्यकयागस्यैव प्राधान्याच्च सोमयाग इति व्यवहारः।'

4. **प्रकृतिविकृतिलक्षणरहिता यागाः** –प्रकृतेर्द्वितीयलक्षणानुसारं तु गृहमेधीयेष्टिर्दर्विहोमश्चैवंभूते कर्मणी ये न कुतश्चित् अङ्गानि गृह्णीतो

---

1. यज्ञतत्त्वप्रकाशे 57 तमे पृष्ठे

नाभ्यां किञ्चित् कर्मान्तरमङ्गानि गृह्णाति। अत एते कर्मणी न प्रकृती स्तो नापि विकृती। सत्येवम् अनारभ्याधीतानां पर्णतादिविधीनां प्रकृतिगामित्वे नैषां गृहमेधीयेष्टौ प्राप्तिः सम्भवति। अत एव मीमांसान्यायप्रकाशकारेण पर्णतादीनां गृहमेधीयेष्टौ प्राप्त्यर्थं चोदकाद् यत्र नाङ्गप्राप्तिः सा प्रकृतिः[1] इति लक्षणं स्वीकृतम्। एतल्लक्षणे स्वीकृते गृहमेधीयेष्टेः प्रकृतित्वं प्राप्नोति। तथा सति मीमांसायाः शाबरभाष्यानुसारं दशमाध्यायस्य सप्तमपादस्य गृहमेधीयेष्टेरपूर्वताविधानाधिकरणे[2] निर्णीतो न्यायो नोपपद्यते। एतच्च वेदार्थपारिजातस्य लेखकेनापि स्वीकृतम्। यदाह – तर्ह्यनारभ्याधीतायाः पर्णताया निवेशः कथं गृहमेधीयेष्टौ भवतु? इति शङ्कायाः समाधानाय 'चोदकाद् यत्र नाङ्गप्राप्तिः लक्षणं प्रकृतियागशब्देन विवक्षितम्[3]' इति। सत्येवं 'यत्र कृत्स्नं क्रियाकलापमुच्यते सा प्रकृतिः' इत्येवं प्रकृतेर्निर्दुष्टं लक्षणम्।[4]

1. हविर्यज्ञानां प्रकृतिः – समस्तानां हविर्यज्ञानां प्रकृतिः दर्शपूर्णमासौ।
2. सोमयागानां प्रकृतिः – समस्तानामेकाहानां प्रकृतिः अग्निष्टोमः।
3. पशुबन्धानां (पशुयागानां) प्रकृतिः – संहिताब्राह्मणयोरनुसारं समस्तपशुयागानां प्रकृतिरग्निष्टोमान्तर्गतोऽग्नीषोमीयः पशुयागः।[5] यतस्तत्प्रकरण एव पशुयाग–सम्बन्धी समस्तः क्रियाकलापः पठ्यते। श्रौतसूत्रकारैस्तु पशुयागसम्बन्धि समस्तमङ्गजातं निरूढपशुबन्धप्रकरण उच्यते। अतः श्रौतसूत्रकाराणां मते निरूढपशुबन्धः पशुयागानां प्रकृतिः।

---

1. मीमांसान्यायप्रकाशे द्र० वेदार्थपारिजाते पृ० 2096
2. अधि० 9, सू० 24–33
3. वेदार्थपारिजाते पृ० 2097
4. वेदार्थ पारिजाते पृ० 2096
5. निरूढपशुबन्धस्य व्याख्यानावसरे पट्टाभिरामशास्त्रिणः कथनं द्रष्टव्यम्।

**यज्ञानां प्रकृति-विकृतित्वे मतभेदः**

अस्माभिर्मीमांसकानां याज्ञिकानाञ्च मतानुसारं प्रकृतिविकृत्योर्यानि लक्षणानि उदाहरणानि- चोक्तानि, तानि न साम्प्रतिकमीमांसकैर्याज्ञिकैश्च सर्वथा मान्यानि। अस्य प्रधानं कारणं तेषामेकाङ्गिज्ञानं सम्प्रदायबद्धता च वर्तते। एतद् अस्माभिर्दाक्षायणेष्टेर्यद्वा दाक्षायणयज्ञस्य प्रकरणे कुतूहलवृत्तिकारमतमुद्धृत्य विस्पष्टीकृतम्।

वस्तुतस्तु प्रकृति-विकृतिभावे आचार्याणां लक्षणभेदैर्दृष्टिभेदैश्च भेदो द्रष्टुं शक्यते। लक्षणभेदैर्गृहमेधीयेष्टेः प्रकृतित्वं विकृतित्वञ्च कथंकारं विज्ञायत इति पूर्वत्रोक्तम्। दृष्टिभेदेन दर्विहोमविषयको मतभेद इह प्रस्तूयते -

**बौधायनगृह्यसूत्रे दर्विहोमं प्रकृत्योक्तम् -**
**'आघारं प्रकृतिं प्राह दर्विहोमस्य बादरिः।**
**अग्निहोत्रं तथाऽऽत्रेयः काशकृत्स्नस्य पूर्वताम्।।[1]'**

अनेन वचनेन बादरिमते दर्विहोमस्याघारः प्रकृतिः, आत्रेयमते अग्निहोत्रम्। अर्थाद् दर्विहोमो विकृतिरूपः। काशकृत्स्नस्तु दर्विहोमस्य अपूर्वतामाह अर्थान्न स प्रकृतिर्न विकृतिः। इदमेव साम्प्रतिकानां मीमांसकानां मतम्।

---

1. बौ० गृ० सू० 1/4/44

# (ख) प्रकृतियज्ञानां सविधिनिरूपणम्

यज्ञाः कतिविधा भवन्तीति जिज्ञासायां कश्चित्तावदाह–पञ्चविधा हीमे सर्वे यज्ञा भवन्ति – '1. अग्निहोत्रम्, 2. दर्शपौर्णमासम्, 3. चातुर्मास्यम्, 4. पशुबन्धः, 5. सोम[1]' इति भेदात्।

एतेषामेव यज्ञभेदानां स्वरूपारम्भकत्वेनोपबृंहणत्वेन विकृतित्वेन समुच्चयेन वान्येषां सर्वेषामेव यज्ञानां विधानात्तेषामप्येतैरेवोप- संग्रहणात्। अत एव 'पाङ्क्तो वै यज्ञ[2]' इति श्रूयते। पाङ्क्तः पञ्चविधः।

अपर आह एक एव हि सर्वो यज्ञोऽग्निहोत्रादिभिः पञ्चसंस्थो विधीयते। एकस्यैव संवत्सराग्नेः संस्काररूपत्वेन सर्वेषामेषां यज्ञानां स्वरूपारम्भात् तस्य चाहोरात्रादिभिः पञ्चभिरेव संस्थाभिः पृथक् संस्करणादग्निहोत्रादि- संस्थाभिः पृथगाख्यानेऽपि वस्तुतोऽनन्यत्वात्। पाङ्क्तो यज्ञ इति हि श्रुतिः पञ्चसंस्थमेवैतमाहेति बोध्यम्।

अपर आह – यज्ञस्त्रिविधः – इष्टयः, पशवः, सोमा इति भेदात्। यत्राज्याहुतौ पशुहिंसा नास्ति तत्रेष्टिशब्दः। यत्र मांसमपि देवतायै दीयते तत्र पशुशब्दः। यत्र ग्रहयागे सोमरसाहुतिस्तत्र सोमशब्द इति।

एके तावदाहुः – एकविंशतिसंस्थः सर्वो यज्ञः – सप्तपाकयज्ञसंस्थाः, सप्तहविर्यज्ञसंस्थाः, सप्तसोमसंस्था इति भेदात्। तथा हि औपासनहोमो, वैश्वदेवम्, पार्वणम्, अष्टकाः, मासिकश्राद्धम्, सर्पबलिः, ईशानबलिरिति सप्तपाकयज्ञसंस्थाः। अग्निहोत्रम् दर्शपूर्णमासौ, आग्रयणादीष्ट्ययनानि, चातुर्मास्यानि, निरूढपशुबन्धः, सौत्रामणी, पिण्डपितृयज्ञ चतुर्होतृहोमादयो दर्विहोमाः – इति सप्तहविर्यज्ञसंस्थाः। यज्ञशब्दवाच्यत्वे पिण्डपितृयज्ञस्य वषट्प्रदानत्वाभावात् दर्विहोमा। अग्निष्टोमोऽत्यग्निष्टोमः, उक्थ्यः, षोडशी, अतिरात्रः, वाजपेयः, आप्तोर्याम–इति सप्तसोमसंस्थाः। अग्निष्टोमे षोडशिग्रहणादत्यग्निष्टोमो राजन्यस्येत्येके, ब्राह्मणस्यापीत्येके। एताश्चैकविंशतिर्यज्ञसंस्थाः प्रचारबाहुल्याभिप्रायेण नित्यत्वाभिप्रायेणा–

1. ऐ० आरण्यके 2/3/3
2. श० प० ब्रा० 1/5/2/16

वश्यकर्तव्यताभिप्रायेण चोपन्यस्ताः। तथाहि – **'जायमानो वै ब्राह्मणस्त्रिभिऋणैर्ऋणवान्, जायते – ब्रह्मचर्येण ऋषिभ्यो, यज्ञेन देवेभ्यः प्रजया पितृभ्यः। एष वा अनृणी, यः पुत्रीयज्वा ब्रह्मचारी च।**[1]' इति श्रुतेः प्राणिमात्रे नाप्राप्तस्य देवर्णस्यापनयनार्थं हीमे एकविंशतिसंस्था यज्ञा विधीयन्ते। तस्मादशूद्राणां सर्वेषामेवैतेऽवश्यकर्तव्या इष्यन्ते। शूद्राणां तु विद्या नास्तीत्यशक्तत्वादधिकारो निरस्यते इत्यन्यत्। त्रैवर्णिकेन तु समर्थेनाफलार्थिनाऽप्येते कर्तव्या इति नित्यत्वम्। अत एव चैषां पुरात्वेऽधिकप्रचार आसीदिति बोध्यम्।

श्रूयते चैकविंशतित्वमित्थं यज्ञानां गोपथश्रुतौ –

**'सप्तसुत्याः सप्त च पाकयज्ञाः हविर्यज्ञाः सप्त तथैकविंशतिः।'**
**सर्वे ते यज्ञा अङ्गिरसोऽपि यन्ति नूतनायानृषयः सृजन्ति ये च सृष्टाः पुराणैः।।**[2]

'सायं प्रातर्नित्यहोमौ स्थालीपाको नवश्च यः। बलिश्चपितृयज्ञश्च अष्टका सप्तमः पशुः।।'

'अग्न्याधेयमग्निहोत्रे पौर्णमास्यामावास्ये। नवेष्टिश्चातुर्मास्यानि पशुबन्धोऽत्र सप्तमः। इत्येते पाकयज्ञाः।' इत्येते हविर्यज्ञाः।

'अग्निष्टोमोऽत्यग्निष्टोम उक्थ्यः षोडशिमांस्ततः। वाजपेयोऽतिरात्रश्च आप्तोर्यामोऽत्र सप्तमः।।' इत्येते सुत्याः।[3]

इत्थं चैकविंशतेः संग्रहेण त्रयो यज्ञाः प्रसिध्यन्ति पाकयज्ञो हविर्यज्ञः सोमयज्ञ इति। पूर्वं त्रेतायामेव त्रैविध्यस्येष्टत्वात् पाकयज्ञं त्यक्त्वा पशुबन्धेन त्रैविध्यमुक्तम्। इह तु त्रेतोपेक्षणात् – पाकयज्ञस्यापि संग्रहेण त्रैविध्यमाख्यातम्। पशुबन्धस्य पशुपुरोडाशतया हविर्यज्ञेऽन्तर्भावयितुं शक्यत्वात्।

समीक्षाचक्रर्तिना म० म० पं० मधुसूदन ओझा सरस्वतिना स्वीये यज्ञमधुसूदननामके ग्रन्थे यज्ञविटपाध्याये सर्वानेक प्रकृतियज्ञानन्यथा विभज्य दर्शितम्। तथाहि यज्ञः पञ्चधा शिरोयज्ञः, अतियज्ञः, महायज्ञः, हविर्यज्ञः, पाकयज्ञश्चेति।

---

1. तै० सं० 3/10/5
2. गोप० ब्रा० 5/25
3. गो० ब्रा० 5/23

**1. शिरोयज्ञः**

यज्ञो वै विष्णुः। सोऽसावादित्यः। तस्य घर्मः प्रवर्ग्यः शिरोभागः। छिन्नशीर्षा हि सर्वोयज्ञः। स शिरोयज्ञेन शीर्षण्वान् भवति। स यदेतेन यज्ञस्य शिरः प्रतिसन्धत्ते तेनासौ शिरोयज्ञो नाम। नात्र प्रणीताः प्रणयन्ति। नात्र प्रयाजानुयाजाः। नाज्यभागावत्र जुहोति मृण्मयैरेवात्र जुहोति न वानस्पत्यैरिति विशेषः तत्र सहस्रे प्रवृञ्ज्यात्, सर्ववेदसे च विश्वजिदिति च वाजपेये च राजसूये च सत्रे च एतान्येवास्य प्रवर्जनानि। नातोऽन्यत्र। तेनाग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्मानि पशुबन्धः सौम्योऽध्वरश्चेत्येते सर्वेऽप्यप्रवर्ग्याः। सोऽयं घर्मयागः। प्रवर्ग्ययागः। सम्राड्यागः। महावीरोपासना चेत्येभिः शब्दैर्व्यपदिश्यत इति।

**2. अतियज्ञः**

अथाग्निचित्या, वाजपेयः, राजसूयः, अश्वमेधः इत्येते चत्वारोऽतियज्ञाः। त इमे परमा यज्ञाः सर्वानन्यानतिक्रामन्ति, नैनानतिक्रामन्ति महायज्ञादयः। अतीनि ह कर्म्माणि सन्ति '**यान्यन्यत् कर्म्माणि, तान्यतीनि तेषामग्निचित्या, राजसूयो वाजपेयोऽश्वमेधः। तद्यत् तान्यन्यानि कर्माण्यति, तस्मात् तान्यतीनि इति वाजिश्रुतेः।।**[1]' एष्वप्यश्वमेधाद्राजसूयादयोऽतिश्रेष्ठाः। तेष्वपि –'**अवरं वै राजसूयं परं वाजपेयम्। राजा वै राजसूयेनेष्ट्वा भवति, सम्राड्वाजपेयेन। अवरं हि राज्यं परं साम्राज्यम्।**[2]' इति वाजपेयश्रुतेः राजसूयाद्वाजपेयोऽतिशेते। ततोऽप्यग्निचित्या त्रीनन्यानतिक्रमते। अमृतप्राप्तिहेतुत्वात्। अन्येषु नामृतत्वस्याशास्ति। तत्र गार्हपत्यो नैर्ऋत्य आहवनीयोऽष्टौ धिष्ण्याश्चेत्येतेषामेकादशानामग्नीनां सोमसम्बन्धिनां संस्कारविशेषाऽ-ग्निचयनं नामातियज्ञः। स द्विविधः – स्वतन्त्रः, सोमाङ्गभूतश्च। अन्तरेणाप्यग्निचयनं सोमः क्रियते। इच्छतस्तु स महाव्रते

---

1. श० प० ब्रा० 6/4/3/1
2. श० प० ब्रा० 5/1/1

सोमेऽग्निचयनस्यावश्यकत्वात्। तत्रायमङ्गभूतश्चयनयागः प्रतिपद्यते। अथ यः सोमयागं विनैव क्रियते स स्वतन्त्रः। तत्राध्वरधर्मा अप्यनुक्रमन्तेऽग्निधर्माश्च। फाल्गुन्यां पशवालम्भोऽनन्तराष्टकायामुखासंभरणमनन्तरामावास्यायां दीक्षा। ततः संवत्सरं यावदुख्याग्निधारणविष्णुक्रमवात्सप्रादि कर्माणि। संवत्सरान्ते फाल्गुण्या अनन्तरामावास्यायां सोमक्रयः। सोमक्रयात् प्रागेव गार्हपत्यचयनं नैर्ऋत्यचयनं सोमक्रयादूर्ध्वं चैत्रशुक्लेऽन्तरोपसदावाहवनीयाग्नेः पञ्चचितयः। ततः शतरुद्रियहोमः। अग्निविकर्षणम्। प्रवर्ग्योत्सादनमग्निप्रहरणं वैश्वानरमारुताः। वसोर्धारा। आहुतयः। धिष्ण्याग्निचयनम्। इति चयनकर्माणि। त एते चत्वारोऽतियज्ञा उक्ताः। एषु चतुर्ष्वतियज्ञेष्वग्निचित्यावाजपेययोर्ब्राह्मण एवाधिकुरुते, राजसूयाश्वमेधयोस्तु राजन्य एवेति विशेषः। इत्यतियज्ञाधिकारः।

### 3. महायज्ञाः

अथ महायज्ञो द्वेधा – सोमः सुरा च। तत्र सोमः पञ्चधा – एकाहः, अहीनः, रात्रिसत्रम्, अयनसत्रम्, महासत्रञ्चेति। ऐकेनाह्ना साध्य एकाहः। द्विरात्रमारभ्य दशरात्रपर्यन्ता अनेकाहसाध्या अहीनाः। तत्र दशाहो द्विविधः – छन्दोमदशाहः, त्रिककुब्दशाहश्चेति भेदात्। एकादशरात्रमारभ्य शतरात्रपर्यन्तं बहुरात्रसाध्यानि रत्रिसत्राणि। शतरात्रादूर्ध्वं सहस्ररात्रिपर्य्यन्तमयनसत्राणि। तदित्थम्- एक-दश-शत-सहस्र-भेदाच्चतुर्धा भिन्नाः सोमा भवन्तीत्येकं मतम्। द्विरात्रमारभ्य द्वादश रात्रपर्य्यन्तमहीनाः। एकादशरात्रमारभ्य संवत्सरादर्वाक् रात्रिसत्राणि। एकसंवत्सरसाध्यमारभ्य सहस्रसंवत्सरपर्य्यन्तमयनसत्राणि। तथा चायमेकादशाहो द्वादशाहश्चेत्युभयो द्वेधा सम्पद्यते अहीनभूतः, सत्रभूतश्चेति। तत्रापि द्वादशाहो द्विविधः – व्यूढद्वादशाहो भरतद्वादशाहश्चेति भेदात्। तदित्थम् – एकाहद्वादशाहैकसंवत्सरसहस्रसंवत्सरपरिच्छेदाच्चतुर्धाभिन्नाः सोमा भवन्तीत्यपरं मतम्। महासत्राणि तु यावज्जन्मसाध्यानि। तत्र सोमानियमेऽपि चिररात्रसाध्यत्वात् सत्रशब्दः प्रवर्तते। अथादौ सोमाधेयमन्ते च काम्यसोमान् प्रवेशयन्तः केचिदिष्टिवत् सोमेऽपि साप्तविध्यमिच्छन्ति।

### (क) एकाहाः

तत्रैकाहा बहुविधा इष्यन्ते। तेषां प्रकृतिभूतः प्रधानैकाहो ज्योतिष्टोमः। स च सप्तसंस्थः प्रतिपद्यते- अग्निष्टोमः, अत्यग्निष्टोमः, उक्थ्यस्तोमः, षोडशिस्तोमः, अतिरात्रस्तोमः, वाजपेयस्तोमः, आप्तोर्यामस्तोमः इति। एता हि तस्य सप्तसंस्थाः। सर्वेऽप्येतेऽग्निष्टोमसम्पन्ना भवन्तीत्यतः सप्तसंस्थोऽप्ययमग्निष्टोम इत्युच्यते। आग्नेय्यां यज्ञायज्ञियानामृच्युत्पन्ने- नाग्निष्टोमसाम्ना समाप्तेप्ययमग्निष्टोमो नाम। प्रातः सवने बहिः पवमानास्त्रिवृत्स्तोम इति नवस्तोत्रीयाः-आज्यस्तोत्राणि चत्वारि पञ्चदशस्तोम इति पञ्चदशस्तोत्रीयाः। पृष्ठस्तोत्राणि चत्वारि सप्तदशानीत्यष्टषष्टिः स्तोत्रीयाः। तृतीयसवने आर्भवः, पवमानः, सप्तदश इति सप्तदशस्तोत्रीयाः। अग्निष्टोमस्तोत्रैकविंशमित्येकविंशतिः स्तोत्रीयाः। इत्थमत्र नवत्यधिकं शतं स्तोत्रीयाः सम्पद्यन्ते। ताश्चोनविंशत्रयोदशा भवन्ति। दशाक्षरत्वाच्चाय- मग्निष्टोमो विराट्। विराड् हि छन्दसां ज्योतिः। तस्मात्तदयमग्निष्टोमो ज्योतिष्टोम इत्युच्यते। त्रिवृत्पञ्चदशसप्तदशैकविंशाख्यैश्चतुर्भिर्ज्योतिषां स्तोमैः साध्यत्वादप्ययं ज्योतिष्टोम इत्युच्येत चतुष्टोमश्च। अग्निष्टोमः, उक्थ्यः, षोडशी, अतिरात्रः इत्येतेषां चतुर्णां संघेऽपि चतुष्टोमशब्दो व्यवह्रियते। त इमे याज्ञिकानां सम्प्रदायभेदाद् व्यवहारभेदा भवन्ति। वाजपेयस्त्व- यमग्निष्टोमसंस्थाविशेषः पूर्वस्मादतियज्ञविशेषाद्वाजपेयादतिरिच्यते।

स चायमग्निष्टोमः पञ्चाहसाध्यः। वसन्ते पूर्णिमायां प्रतिपद्यमायां प्रतिपदि वा प्रारम्भः। प्रथमेऽहनि दीक्षादीक्षणीयाद्यङ्गानुष्ठानम्। द्वितीयेऽहनि प्रायणीययागः। सोमलताक्रयणञ्च। ततो द्वितीये तृतीये चतुर्थे चाहनि प्रातः सायं च प्रवर्ग्योपसद्यागः चतुर्थेऽहनि प्रवर्ग्योद्वासना- दूर्ध्वमग्नीषोमीयप- श्वनुष्ठानम्। सोमलताकण्डनेन सोमरसं निष्कास्य ग्रहैश्चमसैश्च होमः। तत्र सूर्योदयादूर्ध्वमाग्नेयपशुयागः। उक्थ्यपर्य्यायान्ते कृते प्रातः सवनसमाप्तिः. ततो माध्यन्दिनसवनम्। तत्रैव द्वादशोत्तरशतं गावो दक्षिणा दीयन्ते। ततस्तृतीयसवनम्। इत्थं सवनत्रयात्मकः प्रधानयागः। ततोऽवभृथयाग उदके

वरुणदेवताकः पुरोडाशहोमः। ततोऽनुबन्ध्या पशुयागः। तत्र गोः पशोः कलिनिषिद्धत्वात् तत्स्थाने आमिक्षा यागः। तत उदयनीया चोदवसानीया च प्रथमेऽहनि यावद्रात्रि कार्य्या। इति कार्य्यक्रमः। दीक्षोपसत्सुत्यानां सुत्यायाः प्राधान्यात् तदनुरोधेनास्यैकाहत्वमिष्यते।

चतुष्टोमे अग्निमारुतादूर्ध्वमागमात् त्रयाणां शस्त्राणामुक्थो भवति। एकागमादूर्ध्वमुक्थेभ्यः षोडशी। त्रयोदशागमादूर्ध्वं षोडशिनोऽतिरात्रः। अन्तरेणाग्निमारुतमनुयाजांश्चैतेषां स्थानमित्याह शांखायनः। भाष्यकारस्त्वाह अग्निष्टोमादूर्ध्वमुक्थः। ततः षोडशी ततोऽतिरात्रः इति क्रमो नियमेन नापेक्ष्यते। अत्यग्निष्टोमे अग्निमारुतादूर्ध्वं षोडशिग्रहे स्तुते शस्त्रम्। उक्थशस्त्रेऽप्यूर्ध्वं नावश्यं षोडशिचरणम्। अकृत्वापि षोडशिनं त्रयोदशागमादतिरात्रो भवतीति। अथास्मिन् ज्योतिष्टोमे चतुःष्टोमे सामानि प्रयुज्यन्ते।

**अहीनाः**

अथाहीना वैतानसूत्रादिषूक्ता यथा व्युष्टिः। आङ्गिरसः। कापिवनः। चैत्ररथः। गो आयुषी। इत्येते पञ्च द्व्यहाः। चत्वारि सौमिकचातुर्म्मास्यानि वैश्वदेव-वरुणप्रघास-शाकमेध-सुनासीर्य्याणि। गर्गत्रिरात्रम्। वैदत्रिरात्रम्। चतुर्विंशचतुश्चत्वारिंशाष्टाचत्वारिंशैरेकाहैश्छन्दोमवत् त्र्यहः। पराकः। अन्तर्वसुः। अश्वमेधः। स्वरसामानस्त्रयः। पृष्ठत्र्यहः। ज्योतिर्गौचतुरहौ। अभ्यासङ्ग्यः। पञ्चशारदीयः। ज्योतिर्गौरायुर्गौरायुरित्यभिप्लवपञ्चाहः। पृष्ठ्यपञ्चाहः इति चत्वारः पञ्चाहाः। ज्योतिर्गौरायुर्गौरायुर्ज्योतिरित्य-भिप्लवषडहः। त्रिवृत्पञ्चदशसप्तदशैकविंशत्रिणवत्रयस्त्रिंशाः पृष्ठ्यषडहः। इति द्वौ षडहौ। आभिप्लविकः षडहो महाव्रतान्त्यः सप्ताह एकः। आभिप्लविकः षडह एव गौरायुरिति द्व्यहेन युक्तोऽष्टाह एकः।

अभिजित् स्वरसामानस्त्रय (विषुवान् स्वरसामानस्त्रयः) विश्वजित्-इत्येष एतैर्नवरात्र एकः। पृष्ठ्यषडहः छन्दोमत्र्यहः। चतुर्विंशात्मकोऽ-विवाक्यश्चैकाहः इत्येतैः षडहत्र्यहैकाहैः कृतः पृष्ठ्यच्छन्दोमाविवाक्यात्मकः छन्दोमदशाहः त्रिककुबद्शाहः।

दशाह एव महाव्रतान्त्य एकादशाहः। पृष्ठ्यच्छन्दोमाविवाक्यात्मको दशाह एवाद्यन्ताभ्यामतिरात्राभ्यां सम्पुटितो भरतद्वादशाहः। पृष्ठ्यच्छन्दोमाविवाक्यमहाव्रतातिरात्रात्मकस्तु व्यूढद्वादशाहः। द्वादशसुत्यः क्रतुर्द्वादशाहः सुत्यानि सावनमानपरिमितान्यहानि। सर्वमेवाहः – त्रिवृत्स्तोमं रथन्तरपृष्ठमग्निष्टोमसंस्थं भवतीति शांखायनः। इत्यहीनसोमाः पञ्चत्रिंशदाख्याताः।

## रात्रिसत्राणि

द्वादशाहप्रभृतीनि शतरात्रपर्यन्तानि रात्रिसत्राणि। तत्र द्वादशाहप्रभृतीनि चत्वारिंशद्रात्रपर्य्यन्तान्येकोत्तराणि सत्राणि ऊनत्रिंशत्। तत उत्तराणि तु कानिचिद्वैशेषिकाणि त्रीणि भवन्ति। तत्रैतेष्वेकोत्तरसत्रेषु नित्यो द्वादशाहः। स यैरहोभिर्यथा यथा विवर्द्धमानस्तत्तदेकोत्तरसत्ररूपाय सम्पद्यते तान्याख्यायन्ते।

एतेषां स्थानानि यथा –

एतस्य द्वादशाहस्य दशमादह्न ऊर्ध्वं महाव्रतमाहरन्ति, ततस्त्रयोदशरात्रं सम्पद्यते। अथवा पृष्ठ्यं छन्दोमांश्चान्तरेण सर्वस्तोममतिरात्रम्। ततस्त्रयोदशरात्रं सम्पद्यते। तदित्थमेकाहार्थे दशरात्रादूर्ध्वं महाव्रतमाहरेत् पृष्ठ्यादूर्ध्वं सर्वस्तोमं वातिरात्रम्। अथ द्व्यहार्थे गो आयुषी वर्द्धयेत्। चतुरहार्थे तान्येव महाव्रतचतुर्थानि। पञ्चाहार्थे आभिप्लविकान्यादितः पञ्चवर्द्धयेत्–ज्योतिः, गौरायुः, गौरायुरिति। षडहार्थे आभिप्लविकं षडहं वर्द्धयेत्। सप्ताहार्थे तु महाव्रतसप्तमं षडहमाभिप्लविकम्। तदत ऊर्ध्वमप्यनेनैव न्यायेन तां तां संख्यां पूरयन्ति। एतत् सप्तकस्य चतुरावृत्या द्वादशाहे संनिवेशाच्चत्वारिंश–द्रात्राणि सम्पद्यन्ते। द्वादशाहे चान्तरेण प्रायणीयं पृष्ठ्यं चैतेषां द्व्यहादीनां प्रवर्द्धनकानां स्थानम्भवति।

अथ विंशतिरात्रमेकविंशतिरात्रं चतुर्विंशतिरात्रं त्रयस्त्रिंशद्रात्रं सप्तविंशद्रात्रमित्येतेषु पञ्चसु केचन विशेषा आख्यायन्ते। ततोऽन्यत्राचत्वारिंशद्रात्रात्सर्वेषु एकोत्तरसत्रेषु पूर्वोक्तेन क्लृप्तिन्यायेनैव

सा सा संख्या पूर्य्यते। यद्यदल्पसंख्यं तत् तत्पूर्वं कुर्य्यादिति हि स क्लृप्तिन्यायः।

द्वादशाहस्य प्रायणीयं दशरात्रं चान्तरेणागन्तूनामष्टानामह्नां सन्निवेशाद्विंशतिरात्रसिद्धिः। तथा हि प्रायणीयः, अभिप्लवषडहः, अभिजित्, विश्वजित्, पृष्ठ्यषडहः, छन्दोमा त्र्यहः, अविवाक्यम्, उदयनीयः इति क्रमो विंशतिरात्रस्य।

अथैकविंशतिरात्रः। स द्वेधा पूर्वश्चोत्तरश्च। प्रायणीयः, अभिप्लवषडहः, अतिरात्रः, अभिप्लवषडहौ द्वौ, उदयनीयः – इत्येवं पूर्वः। प्रायणीयः, पृष्ठ्यषडहः, स्वरसामानस्त्रयः, विषुवानहः, स्वरसामानस्त्रयः, पृष्ठ्यः षडहो विपरीतः, उदयनीयः इत्येवमेकविंशतिरात्र उत्तरः।

अथ क्लृप्तिन्यायेन कल्पितानामह्नामागन्तूनां द्वादशाहस्य प्रायणीयं दशरात्रं चान्तरेणैव संनिवेशः सर्वत्र। तथा च प्रायणीयः, आगन्तून्यहानि, दशरात्रः, दशरात्रः – उदयनीय इत्येवं क्रमा वक्ष्यमाणानां ज्ञेयाः। आगन्तूनि त्वहानि क्रमेणोदाहरामः –

त्र्यहः, अभिप्लवषडहः, महाव्रतं, चेति द्वाविंशतिरात्रः, अभिप्लवपञ्चाहः, अभिप्लवषडहः– इति त्रयोविंशतिरात्रः।

प्रायणीयः, पृष्ठ्यस्तोमषडहः, त्रयस्त्रिंशमहरनिरुक्तम्। त्रयस्त्रिंशमहर्निरुक्तम् त्रिणवस्तोममेकमहः, एकविंशम्, पुनरेकविंशम्, त्रिणवस्तोममेकमहः, त्रयस्त्रिशं निरुक्तम्, त्रयस्त्रिंशमहरनिरुक्तम्, पृष्ठ्यस्तोमषडहो, विपरीतस्त्रयस्त्रिंशारम्भणः, त्रिवृदहरनिरुक्तम्, ज्योतिष्टोमोऽग्निष्टोमः, उदयनीयः, इति चतुर्विंशतिरात्रः।

अथ द्वावभिप्लवौ महाव्रतमिति पञ्चविंशतिरात्रः। गो आयुषी, द्वावभिप्लवौ – इति षड्विंशतिरात्रः। त्र्यहः, अभिप्लवौ द्वौ इति सप्तविंशतिरात्रः। त्र्यहः, अभिप्लवौ द्वौ, महाव्रतं चेत्यष्टाविंशतिरात्रः। पञ्चाहः, अभिप्लवौ द्वौ– इत्येकोनत्रिंशद्रात्रः। त्रयोऽभिप्लवाः – इति त्रिंशद्रात्रः। त्रयोऽभिप्लवाः, महाव्रतश्चेत्येकत्रिंशद्रात्रः। गो आयुषी, त्रयोऽभिप्लवाः इति द्वात्रिंशद्रात्रः। त एतेऽष्टौ न्यायक्लृप्ताः।

प्रायणीयः, पञ्चाहाभिप्लवास्त्रिरावृत्ताः, विश्वजिदतिरात्रः, पञ्चाहाभिप्लवः, दशरात्रः, उदयनीयः, इत्येवं त्रयस्त्रिंशद्रात्रो विधीयते।

अथ ज्योतिः, गौः, आयुरित्येतान्याभिप्लविकानि त्रीण्यहानि, त्रयोऽभिप्लवाः षडहाः। महाव्रतं चेति चतुस्त्रिंशद्रात्रः। पञ्चाहः, त्रयोऽभिप्लवाः इति पञ्चत्रिंशद्रात्रः। चत्वारोऽभिप्लवाः – इति षट्त्रिंशद्रात्रः। त एते त्रयो न्यायक्लृप्ताः।

प्रायणीयः, चतुर्विंशमहः, अभिप्लवषडहः, पृष्ठ्यषडहः, नवरात्रः, गो आयुषी दशरात्रः, महाव्रतम्, उदयनीय – इति सप्तत्रिंशद्रात्रः।

अत्राभिजित् – स्वरसाम– विषुवत् – स्वरसामविश्वजिद्भिर्नवरात्रः सम्पद्यते। दशरात्रस्तु पृष्ठ्यषडहेन छन्दोमत्र्यहेणाविवाक्येन च सम्पद्यमानो द्वादशाहस्थः।

अथ गो आयुषी, चत्वारोऽभिप्लवाः इत्यष्टत्रिंशद्रात्रः। त्र्यहः, चत्वारोऽभिप्लवाः इत्येकोनचत्वारिंशद्रात्रः। त्र्यहः, चत्वारोऽभिप्लवाः, महाव्रतश्चेति चत्वारिंशद्रात्रः। त एते त्रयो न्यायक्लृप्ताः। तदित्थं वैशेषिकाणि च न्यायक्लृप्तानि चेत्येवं कृत्वा विभक्तान्येकोत्तराणि सत्राणि दर्शितानि। अत ऊर्ध्वं त्रीणि वैशेषिकाणि भवन्ति तान्युदाहरामः।

प्रायणीयः, चतुर्विंशमहः, त्रयोऽभिप्लवाः, नवरात्रः, अभिप्लवः, गो आयुषी, दशरात्रः, महाव्रतम्, उदयनीयः, इत्येष एकोनपञ्चाशद्रात्रः। स एष संवत्सरसत्रधर्मैर्युक्त इत्यतः संवत्सरसम्मित उच्यते। अथैतस्मिन्नेकोन–पञ्चाशद्रात्रे यो नवरात्रः, तमुभयतः पृष्ठ्यावनुलोमप्रतिलोमौ संनिवेश्यौ। तथा चैकषष्टिरात्रः सम्पद्यते। अनुलोमपृष्ठ्यस्त्रिवृदारम्भणस्त्रय–स्त्रिंशपर्य्यवसानः। स नवरात्रात् प्राग् विधीयते। यस्तु त्रयस्त्रिंशारम्भणस्त्रि–वृत्पर्य्यवसानः स प्रतिलोमः। स नवरात्रादुपरिष्टाद्विधीयते। अन्यत् समानम्। प्रायणीयः, आभिप्लविकस्त्र्यहः, अभिप्लवाश्चतुर्दश, दशरात्रः, महाव्रतम्, उदयनीयः, इतीत्थं न्यायक्लृप्तः शतरात्रः। तदित्थं द्वात्रिंशदेतानि रात्रिसत्राणि व्याख्यातानि।

**अयनसत्राणि**

गवामयनम्, आदित्यानामयनम्, अङ्गिरसामयनम्- इति त्रीणि मुख्यानि ज्योतिषामयनानि।

नाक्षत्रं, चान्द्रं, तैर्य्यगयनम्- इति त्रीणि गौणानि ज्योतिषामयनानि। तत्रैतद् गवामयनमष्टविकल्पं नाक्षत्रं तु द्विविधम्। इति चतुर्दशैतानि भवन्ति। संसदामयनम्, उत्सर्गिणामयनम्, अभिप्लवायनम् - इत्येतानि त्रीणि वैकारिकाणि गवामयनानि। कौण्डपायिनामयनम्, दृतिवातवतोरयनम्, सर्पसत्रम् इत्येतानि त्रीणि वैशेषिकाणि। तापश्चितम्, क्षुल्लकतापश्चितम्, महातापश्चितम्- इति त्रीणि तापश्चितानि। बहुसांवत्सरिकम्, प्रजातिकामानामयनम्, प्रजापतेरयनम्, शाक्त्यानामयनम्, साध्यानामयनम्, विश्वसृजामयनम्, अग्नेः सहस्रसाव्यं सत्रम्, प्रजापतेरयनम् - इत्येतान्यष्टौ बहुसांवत्सरिकाणि। मित्रावरुणयोरयनम्, इन्द्राग्न्योरयनम्, अर्य्यमायणम् - इति त्रीणि सारस्वतानि। दार्षद्वतं चैकम्। इत्येवमेतानि कल्पोक्तानि पञ्चत्रिंशदयनसत्राणि।

तत्र गवामयनं नाम संवत्सरसत्रेऽहर्गणाः प्रदर्श्यन्ते। शारदविषुवद्दिनमारभ्य शारदविषुवद्दिनपर्यन्तमह्नां षष्ट्युत्तरत्रिशत्या साध्येऽस्मिन् सत्रे प्रायणीयोऽतिरात्रः प्रथममहः। चतुर्विंशस्तोममुक्थं द्वितीयमहः। तदारम्भणीयम्। अथातः परे चत्वारोऽभिप्लवाः पृष्ठ्यपञ्चमाः प्रथमो मासः। एवं द्वितीयतृतीयचतुर्थपञ्चमा मासाः सम्पाद्याः।

ततस्त्रयोऽभिप्लवाः पृष्ठ्यचतुर्थाः। ततोऽभिजिदेकम्, स्वरसामानस्त्रयः, विषुवदेकं, स्वरसामानस्त्रयः, विश्वजिदेकम्, इत्येतैर्नवभिरग्निष्टोमैर्नवरात्रम्। ततः पृष्ठ्यपूर्वास्त्रयोऽभिप्लवाः। तेन विषुवदहं दिवाकीर्त्यस्तोममभितोऽष्टाविंशिनौ मासौ षष्टसप्तमौ सम्पद्यते। विषुवांस्तु नावरेषां न परेषामित्याहुः कौषीतकिनः। (26/1-2) ततः पृष्ठ्यापूर्वाश्चत्वारोऽभिप्लवा अष्टमो मासः। एवं नवमदशमैकादशा मासाः संपाद्याः। ततस्त्रयोऽभिप्लवाः। ततो गौरायुरिति द्व्यहमुक्थमा। ततः पृष्ठ्यच्छन्दोमाविवाक्यात्मको दशाहः। ततः पञ्चविंशस्तोमं महाव्रतं नामोपान्त्यमहः। तत

प्रायणीयः, पञ्चाहाभिप्लवास्त्रिरावृत्ताः, विश्वजिदतिरात्रः, पञ्चाहाभिप्लवः, दशरात्रः, उदयनीयः, इत्येवं त्रयस्त्रिंशद्रात्रो विधीयते।

अथ ज्योतिः, गौः, आयुरित्येतान्याभिप्लविकानि त्रीण्यहानि, त्रयोऽभिप्लवाः षडहाः। महाव्रतं चेति चतुस्त्रिंशद्रात्रः। पञ्चाहः, त्रयोऽभिप्लवाः इति पञ्चत्रिंशद्रात्रः। चत्वारोऽभिप्लवाः – इति षट्त्रिंशद्रात्रः। त एते त्रयो न्यायक्लृप्ताः।

प्रायणीयः, चतुर्विंशमहः, अभिप्लवषडहः, पृष्ठ्यषडहः, नवरात्रः, गो आयुषी दशरात्रः, महाव्रतम्, उदयनीय – इति सप्तत्रिंशद्रात्रः।

अत्राभिजित् – स्वरसाम– विषुवत् – स्वरसामविश्वजिद्भिर्नवरात्रः सम्पद्यते। दशरात्रस्तु पृष्ठ्यषडहेन छन्दोमत्र्यहेणाविवाक्येन च सम्पद्यमानो द्वादशाहस्थः।

अथ गो आयुषी, चत्वारोऽभिप्लवाः इत्यष्टत्रिंशद्रात्रः। त्र्यहः, चत्वारोऽभिप्लवाः इत्येकोनचत्वारिंशद्रात्रः। त्र्यहः, चत्वारोऽभिप्लवाः, महाव्रतश्चेति चत्वारिंशद्रात्रः। त एते त्रयो न्यायक्लृप्ताः। तदित्थं वैशेषिकाणि च न्यायक्लृप्तानि चेत्येवं कृत्वा विभक्तान्येकोत्तराणि सत्राणि दर्शितानि। अत ऊर्ध्वं त्रीणि वैशेषिकाणि भवन्ति तान्युदाहरामः।

प्रायणीयः, चतुर्विंशमहः, त्रयोऽभिप्लवाः, नवरात्रः, अभिप्लवः, गो आयुषी, दशरात्रः, महाव्रतम्, उदयनीयः, इत्येष एकोनपञ्चाशद्रात्रः। स एष संवत्सरसत्रधर्मैर्युक्त इत्यतः संवत्सरसम्मित उच्यते। अथैतस्मिन्नेकोन-पञ्चाशद्रात्रे यो नवरात्रः, तमुभयतः पृष्ठ्यावनुलोमप्रतिलोमौ संनिवेश्यौ। तथा चैकषष्टिरात्रः सम्पद्यते। अनुलोमपृष्ठ्यस्त्रिवृदारम्भणस्त्रय-स्त्रिंशपर्य्यवसानः। स नवरात्रात् प्राग् विधीयते। यस्तु त्रयस्त्रिंशारम्भणस्त्रि-वृत्पर्य्यवसानः स प्रतिलोमः। स नवरात्रादुपरिष्टाद्विधीयते। अन्यत् समानम्। प्रायणीयः, आभिप्लविकस्त्र्यहः, अभिप्लवाश्चतुर्दश, दशरात्रः, महाव्रतम्, उदयनीयः, इतीत्थं न्यायक्लृप्तः शतरात्रः। तदित्थं द्वात्रिंशदेतानि रात्रिसत्राणि व्याख्यातानि।

## अयनसत्राणि

गवामयनम्, आदित्यानामयनम्, अङ्गिरसामयनम्- इति त्रीणि मुख्यानि ज्योतिषामयनानि।

नाक्षत्रं, चान्द्रं, तैर्य्यगयनम्- इति त्रीणि गौणानि ज्योतिषामयनानि। तत्रैतद् गवामयनमष्टविकल्पं नाक्षत्रं तु द्विविधम्। इति चतुर्दशैतानि भवन्ति। संसदामयनम्, उत्सर्गिणामयनम्, अभिप्लवायनम् - इत्येतानि त्रीणि वैकारिकाणि गवामयनानि। कौण्डपायिनामयनम्, दृतिवातवतोरयनम्, सर्पसत्रम् इत्येतानि त्रीणि वैशेषिकाणि। तापश्चितम्, क्षुल्लकतापश्चितम्, महातापश्चितम्- इति त्रीणि तापश्चितानि। बहुसांवत्सरिकम्, प्रजातिकामानामयनम्, प्रजापतेरयनम्, शाक्त्यानामयनम्, साध्यानामयनम्, विश्वसृजामयनम्, अग्नेः सहस्रसाव्यं सत्रम्, प्रजापतेरयनम् - इत्येतान्यष्टौ बहुसांवत्सरिकाणि। मित्रावरुणयोरयनम्, इन्द्राग्न्योरयनम्, अर्य्यमायणम् - इति त्रीणि सारस्वतानि। दार्षद्वतं चैकम्। इत्येवमेतानि कल्पोक्तानि पञ्चत्रिंशदयनसत्राणि।

तत्र गवामयनं नाम संवत्सरसत्रेऽहर्गणाः प्रदर्श्यन्ते। शारदविषुवद्दिनमारभ्य शारदविषुवद्दिनपर्यन्तमह्नां षष्ट्युत्तरत्रिशत्या साध्येऽस्मिन् सत्रे प्रायणीयोऽतिरात्रः प्रथममहः। चतुर्विंशस्तोममुक्थं द्वितीयमहः। तदारम्भणीयम्। अथातः परे चत्वारोऽभिप्लवाः पृष्ठ्यपञ्चमाः प्रथमो मासः। एवं द्वितीयतृतीयचतुर्थपञ्चमा मासाः सम्पाद्याः।

ततस्त्रयोऽभिप्लवाः पृष्ठ्यचतुर्थाः। ततोऽभिजिदेकम्, स्वरसामानस्त्रयः, विषुवदेकं, स्वरसामानस्त्रयः, विश्वजिदेकम्, इत्येतैर्नवभिरग्निष्टोमैर्नवरात्रम्। ततः पृष्ठ्यपूर्वास्त्रयोऽभिप्लवाः। तेन विषुवदहं दिवाकीर्त्यस्तोममभितोऽष्टाविंशिनौ मासौ षष्टसप्तमौ सम्पद्यते। विषुवांस्तु नावरेषां न परेषामित्याहुः कौषीतकिनः। (26/1-2) ततः पृष्ठ्यापूर्वाश्चत्वारोऽभिप्लवा अष्टमो मासः। एवं नवमदशमैकादशा मासाः संपाद्याः। ततस्त्रयोऽभिप्लवाः। ततो गौरायुरिति द्व्यहमुक्थमा। ततः पृष्ठ्यच्छन्दोमाविवाक्यात्मको दशाहः। ततः पञ्चविंशस्तोमं महाव्रतं नामोपान्त्यमहः। तत

उदयनीयोऽतिरात्रः सर्वान्त्यमहः। तदित्थमिह संवत्सरे षष्टिः षडहा भवन्ति। एकश्चातिरिक्तो विषुवान् स आत्मा। अपि वा अस्मिन् संवत्सरे द्वावतिरात्रस्तोमौ। शतं च षट् चाग्निष्टोमाः। चत्वारिंशे द्वे शते उक्थस्तोमाः। द्वादश तु षोडशिस्तोमाः। इत्थमह्नां षष्ट्युत्तरत्रिशती सम्पद्यते। तथा चोक्तं वैतानकल्पे –

'द्वावतिरात्रौ, षट्शतमग्निष्टोमाः द्वेविंशतिशते उक्थानाम्। द्वादश षोडशिनः, षष्टिः षडहा, वैषुवतञ्चेति।'

तदिदं गवामयनं द्वेधा – द्वादशमाससाध्यं दशमाससाध्यञ्चेत्याहुः। लाट्यायनः पुनरस्याष्टौ विकल्पानाह। तथाहि – 'सर्वाण्यहानि ज्योतिष्टोमेनैव साध्यानीत्येकः। अतिरात्रोक्थाभ्यामुपक्रान्तस्य महाव्रतातिरात्राभ्यां संस्थितस्य अभिजित् स्वरसाम विषुवत् स्वरसाम विश्वजिद्भिर्नवरात्रं मध्ये कृत्वा शेषाण्यहानि ज्योतिष्टोमाः कार्या इत्येकः। गो आयुषी पृष्ठ्याभिप्लवौ, दशरात्रं चाधिकं, शेषाणि ज्योतिष्टोमा – इत्येकः। अभिजित् पृष्ठ्यस्वरसाम विषुवत् स्वरसाम पृष्ठ्यविश्वजिद्भिर्मध्ये एकविंशतिरात्रमित्येकः। अभिजितः स्वस्थाने विश्वजितं कृत्वा विश्वजितः स्थानेऽभिजितं कुर्य्यादित्येकः। अथोत्तरे पक्षसि विषुवद्दिनादारभ्य यत् प्रातिलोम्यं विहितं तदपि द्वेधा विकल्प्यते। केचिदहरावर्तकारिणो भवन्ति। तेऽभिप्लवो क्रमान् पृष्ठ्यासानानेव मासान् कुर्वाणस्तानहः प्रतिमान् कुर्वन्ति स एको विकल्पः। परे तु मासावर्तकञ्जारिणः पृष्ठ्योपक्रमानभिप्लवावसानान् मासान् कुर्वाणास्तत्राहान्यानुलोम्येनैवाचरन्ति स एको विकल्पः। (गो आयुषी च ते विपर्यासयन्ति) दशरात्रमप्येके आवर्तयन्ति स एकः। तदित्थमष्टौ गवामयनविकल्पा भवन्ति।'

आदित्यानामयने शांखायनः प्राह। विषुवतः पूर्वस्मिन् पटले एकस्मिन्नहनि त्रिवृत्। परस्मिन् पञ्चदश इत्येवमहर्व्यत्यासेनाभिप्लवस्तोमौ कार्यौ विषुवत् उत्तरस्मिंस्तु पटले पञ्चदशत्रिवृतावभिप्लवस्तोमौ। मासास्तु मध्ये पृष्ठ्या कार्य्याः। षष्ठे मासि त्रयोऽभिप्लवाः पृष्ठ्यचतुर्थाः। नवरात्रेत्वभिजितः स्थाने बृहस्पतिसवः। विश्वजितः स्थाने त्विन्द्रस्तोमः। ततः पृष्ठ्याभिप्लवौ। ततो व्यूढच्छन्दा दशरात्रस्त्रिवृत्स्तोमोऽग्निष्टोमसंस्थः

तत उद्भिद्बलभिदौ। इत्थं सप्तमो मासः। ततो मध्ये पृष्ठ्याश्चत्वारो मासाः। मध्ये पृष्ठ्यावभिप्लवौ। गो आयुषी छन्दोमदशाहश्चेति द्वादशो मासः। इत्यादित्यानामयनं नाम ज्योतिषामयनम्।

अङ्गिरसामयने तु त्रिवृदभिप्लवस्तोमः। पृष्ठ्यारम्भणाः पूर्वस्मिन् पटले मासाः, पृष्ठ्योदयास्तूत्तरस्मिन्। आयुर्गौः। शेषमादित्यानामयनवत्।

इति अङ्गिरसामयनम्। इति मुख्यानि ज्योतिषामयनानि।

अथ ज्योतिषामयनविकल्पा नाक्षत्रचान्द्रसौरा लाट्यायनद्राह्यायणाभ्यामुक्ताः। तथाहि – 'ये ते त्रिंशिनः सावना अयनमासाः कल्पिताः, तेषामेकैकस्मिन् मासि आद्यस्याभिप्लवस्य स्थाने त्रिकद्रुकाः कार्य्याः। ज्योतिर्गौरायुरित्याभिप्लविकस्त्र्यहस्त्रिकद्रुकः। उत्तरे तु पक्षस्यान्त्यस्याभिप्लवस्य स्थाने त्रिकद्रुकस्त्र्यहः। तदित्थं सप्तविंशनो नाक्षत्रा मासाः – इत्यतः षट्त्रिंशदूनो नाक्षत्रः संवत्सरः। तदिदमेकं नाक्षत्रं ज्योतिषामयनम्।

षष्ठस्य मासस्य आद्योऽभिप्लवः, तस्य स्थाने ज्योतिर्गौश्च स्यातां न त्वन्यानि चत्वारि। उत्तरे तु पक्षसि सप्तममासस्य योऽन्त्योऽभिप्लवः, तस्य स्थाने ज्योतिरेवैकमहः स्यान्न त्वन्यानि पञ्च। तदित्थं सावनात् संवत्सरान्नवभिरहोभिरूनः, स नाक्षत्र एव संवत्सरो भवति त्रयोदशमासात्मकः। तदिदं द्वितीयं नाक्षत्रं ज्योतिषामयनम्।

द्वितीयचतुर्थषष्ठेषु युग्ममासेषु प्रथमस्याभिप्लवस्य स्थानेऽभिप्लवपञ्चाहः कार्यः। उत्तरे पक्षसि त्वष्टमादिमासेष्वन्तिमस्याभिप्लवस्य स्थाने पञ्चाहः। तदित्थं षड्भिरहोभिः सावनसंवत्सरादूनश्चान्द्रमसः संवत्सरः। एषा हि चान्द्रमसी गतिः। इति चान्द्रं ज्योतिषामयनम्।

अथ षष्ठमासस्यादौ त्रिकद्रुकानभिप्लवं चोपदध्यात्। सप्तममासस्यान्तेऽभिप्लवं त्रिकद्रुकांश्चोपदध्यात्। तदित्थं नवभिः पूर्वपक्षसि नवभिरेवोत्तरपक्षसीत्यष्टादशभिरधिकोऽयमादित्यः संवत्सरः। स तैर्य्यगयनिकः। तिरश्ची हि गतिरान्तरिक्षी दृश्यते अस्य च पौर्णमास्यां प्रसवः। इति तैर्य्यगयनम् नाम ज्योतिषामयनम्। अत्राष्टादशदिनाधिकत्वं लाट्यायनोक्तं चिन्त्यम्। अष्टादशदिनाधिकस्य संवत्सरस्याप्रसिद्धेः। त्रिकद्रुकानभिप्लव–

मित्यभिप्लवपदस्य त्रिकद्रुपरिचायकत्वाभ्युपगमे त्रीण्येव पूर्वपक्षसि त्रीण्युत्तरपक्षसीत्येवं षड्भिरेवाधिकः त्रिंशत्युत्तरषट्षष्टिदिनात्मकः सौरः संवत्सरो विवक्षितः स्यादिति मन्यामहे।'

इति गौणानि ज्योतिषामयनानि।

**अथ महासत्राणि**

यावदायुषं कर्तव्या नित्या यज्ञा महासत्राणि तत्रेयं शातपथी श्रुतिः – 'पञ्चैव महायज्ञाः, तान्येव महासत्राणि। भूतयज्ञो, मनुष्ययज्ञः, पितृयज्ञो, देवयज्ञो, ब्रह्मयज्ञ' इति। अहरहर्भूतेभ्यो बलिं हरेत् स भूतयज्ञः। अहरहर्दद्यादोदपात्रात् स मनुष्ययज्ञः। अहरहः स्वधा कुर्य्यादोदपात्रात् स पितृयज्ञः। अहरहः स्वाहा कुर्य्यादाकाष्ठात् स देवयज्ञः। अथ स्वाध्याय एव ब्रह्मयज्ञः। तस्य वागेव जुहूः। मन उपभृत्। चक्षुर्ध्रुवा। मेधा स्रुवः। सत्यमवभृथः। स्वर्गो लोको उदयनम्। यावन्तं खल्विमां वित्तेन पूर्णां पृथिवीं ददल्लोकं जयति त्रिस्तावन्तं जपति। भूयांसं चाक्षय्यं य एवं विद्वानहरहः स्वाध्यायमधीते। तस्मात् स्वाध्यायोऽध्येतव्यः। एषु च बहुकालसाध्यत्वात् सत्रशब्दः प्रवर्तते। सत्रशब्दसाधर्म्याच्चैषामेषु सोमेषु प्रवेश इत्यवधेयम्।

सर्वेऽप्येते सोमयज्ञास्त्रिविधाः नित्याः, नैमित्तिकाः, काम्याश्चेति। ये स्वतन्त्राः कर्तव्यत्वेनादिष्टास्ते नित्याः। य सोमविशेषं कृत्वा परे यज्ञा विधीयन्ते यत्र वा यज्ञान्तरं कृत्वा सोमविशेषा विधीयन्ते तत्र ते यज्ञान्तरसाहचर्य्यक्लृप्ताः सोमा नैमित्तिकाः। यत्र त्वैहिकमामुष्मिकं वा फलमुद्दिश्य सोमाः क्रियन्ते तत्र काम्या एकाहाः काम्या अहीनाः काम्यसत्राणि।

अथाहुः – काम्याः सोमा द्विविधाः आदिष्टसोमाः, प्राक्सौमिकाश्च। तत्रैकाहाहीनसत्राणि आदिष्टसोमाः। अथ वक्ष्यमाणाः सर्वे हविर्यज्ञाः फलविशेषमुद्दिश्य सौम्येन कल्पेन क्रियमाणाः प्राक्सौमिकाः काम्यसोमा भवन्ति।

## इति सोमयज्ञाः

अथ सुराप्रचारः सौत्रामणीनामयज्ञः। सौत्रामणी द्विविधा – कौकिली, चरका च। 'यजेत् सौत्रामण्यामपत्नीकोऽप्यसोमपः' इत्यैतरेयोक्तेर-पत्नीकेनाप्यसोमपेनापि यजमानेन कर्तव्या या स्वतन्त्रा सा कौकिली। 'अग्निं चित्वा वाजपेयेनेष्ट्वा सौत्रामण्या यजेत,' 'एतया राजसूययाजी यजते' इत्यादिष्वङ्गत्वेन श्रूयमाणा चरका।

अत्र चरकायाः सौत्रामण्या हविर्यज्ञत्वमपीच्छन्ति। तदभिप्रायेणैव सप्तसंस्थेषु हविर्यज्ञेषु सौत्रामण्याः प्रवेशः। इति महायज्ञाधिकारः।

## हविर्यज्ञाः

अथ हविर्यज्ञास्त्रेधा – इष्टिः पशुश्च पित्र्यश्च। तत्रेष्टिः सप्तधा – अग्न्याधेयम्, अग्निहोत्रम्, दर्शपूर्णमासः, चातुर्मास्यम्, आग्रयणम्, इष्ट्ययनानि, काम्येष्ट्यश्च।

तत्राग्न्याधेयं पञ्चधा – अपूर्वाधानम्, अन्वाधानम्, पुनराधानम्, तृतीयाधानम्, विच्छिन्नाग्न्याधानञ्चेति। यत्रानाहिताग्निरग्निहोत्रादिहविर्यज्ञं कर्तुमग्नीन् प्रथममाधत्ते तदपूर्वाधानम्। अथ करिष्यमाणस्य कर्म्मणोऽनुकूलं यत्प्रथमं समिधामाधानमग्नौ क्रियते तदन्वाधानम्। अथ यस्य यजमानस्याधानकालादारभ्य संवत्सरादर्वाक् कस्यचित्पदार्थस्य हानिर्भवति, महारोगो वा जायते, अन्यानि वाऽग्न्यनुगत्यादीनि निमित्तानि भवन्ति स पुनर्वसुयुक्तायाममायां पुनरग्नीनाधत्ते तत् पुनराधानम्। पुनराधानानन्तरं संवत्सरादर्वागर्थनाशादिनिमित्तमोगादग्निनाशे पुनरप्यग्नीनाधत्ते तत्तृतीयाधानम्। एतच्च द्वितीयं पुनराधानं भवति। अथ सर्वाग्निनाशे समारूढारणीनाशे च विच्छिन्न संधानार्थमग्नीनाधत्ते तद्विच्छिन्नाग्न्याधानम्। एतत्सर्वं गतिपत्याद्यग्नित्रयभेदात् प्रत्येकं त्रिधा भिन्नम्।

एवमोहितेऽग्नावन्या इष्टयो भवन्ति। तासां काञ्चन वर्जयित्वा सर्वा दिनमाससंवत्सराद्यनुगता भवन्ति। तत्राग्निहोत्रमाह्निकेष्टिः।

तस्याहोरात्रसन्धिभेदात् द्वे पर्वणी भवतः सायमाहुतिश्च प्रातराहुतिश्च। अथ दर्शपौर्णमासो मासिकेष्टिः। तस्य पक्षसन्धिभेदाद् द्वे पर्वणी भवतः - दर्शश्च पौर्णमासश्च। अथ चातुर्मास्यं सांवत्सरिकेष्टिः। तस्य ऋतुसन्धिभेदाद् चत्वारि पर्वाणि भवन्ति। फाल्गुण्यां वैश्वदेवः। आषाढ्यां वरुणप्रघासः। कार्तिक्यां साकमेधाः। अथ फाल्गुण्या अर्वाक् शुनाशीर्येष्टिरिति। त्र्यम्बकयागः पित्र्येष्टिः, पिण्डपितृयज्ञश्च तस्यैव धर्मा भवन्ति। संवत्सरस्य ऋतुत्रयं द्वेधा व्यवतिष्ठते-अग्नितारम्याश्च सस्योत्पत्तिविशेषाच्च। तत्र घर्मकालः, वर्षाकालः, शीतकालः - इत्यग्निपर्वाणि। तद्वैशेष्याच्चातुर्मास्यपर्वाण्युक्तानि। अथ संवत्सरविभागत्रयेण श्यामाकव्रीहियवा नवसस्यान्युत्पद्यन्ते। तद्वैशेष्यादपराणि त्रीणि संवत्सरपर्वाणि भवन्ति। तान्याग्रयणपदेनोच्यन्ते। नवसस्येष्टिराग्रयणम्। तत्र श्यामाकाग्रयणकालो वर्षा, व्रीह्याग्रयणकालः शरत्, यवाग्रयणकालो वसन्तः। वेणुयवाग्रयणकालोऽपि वसन्तः। वेणुयवा वंशफलानि। वैणुयवीष्टिरनित्या। अन्यास्त्वाहिताग्नेर्नित्या। अन्येषां नित्यकाम्याः।

अथेष्ट्ययनकर्माणि। अयनमिष्ट्ययनमित्येकार्थौ। 'कस्मादयनानीति। गमनान्येतानि भवन्ति कामस्य कामस्य स्वर्गस्य च लोकस्य' इति कौषीतकीयश्रुतेः सर्वकामसाधनकर्म्मविशेषेष्वयनशब्दो योगरूढः। द्विविधान्ययनानि श्रूयन्ते - ऐष्टिकानि सत्रविशेषाश्च। तेषु सूत्रव्यावृत्यर्थमिष्टिशब्दः प्रयुज्यते। इष्ट्ययनानीति। इष्ट्यश्चेता अयनानि चैतानि। यद्वा केवलेनेष्टिशब्देन दर्शपूर्णमासप्रतिपत्तिरिति याज्ञिकसम्प्रदायः। ततः समानतन्त्रतया दर्शपूर्णमासं गतानि कर्माण्येवेष्ट्ययनानि। एता हीष्टयो दर्शेष्टितन्त्रेण वा पौर्णमासेष्टितन्त्रेण वा कर्तव्यास्तद्विकारसिद्धा भवन्ति। ताश्च कामनाविध्यपचारादिनिमित्तानन्त्यादसंख्येया इष्यन्ते। 'न चेष्टयः पृथक्त्वतः शक्याः परिसंख्यातुम्' इति शांखायनोक्तेः। अथापि यावत्यो ब्राह्मणेषु कल्पेषु चोपदिष्टाः, तासां काश्चिन्निर्दिश्यन्ते। ताश्च पञ्चधा विभज्यन्ते-अनुनिर्वाप्या। अदीक्षितायनानि। प्रायश्चित्तीयाः। क्रत्वर्थिक्यः। काम्याश्चेति। तत्र विमृद्वती, वैमृधेष्टिः, वैमृध्येति वा, याऽख्यायते सैका अनुनिर्वाप्या। सा नित्या।

शांखायनः प्राह – पौर्णमास्यां पूर्णमासकर्माणि समाप्तेऽमावास्याविकारेण योगेनेन्द्राय विमृधे एकादशकपालं पुरोडाशं निर्वपति। अमावास्यायां त्वामावास्यकर्माणि समाप्ते पौर्णमासीविकारेण यागेनादितिं यजते साऽनुनिर्वपनादनुनिर्वाप्या नामेष्टिः अनया द्विषतो भ्रातृव्यानपहन्ति। त एते इष्टी दर्शपूर्णमासयोः संस्थानमनुसृत्यैव विधीयते इत्यतस्ते अपि दर्शपूर्णमासवद् यावदायुषं कार्ये त्रिंशतं वर्षाणि वा।

अथ दाक्षायणयागः। इलादधः। सार्वसेनियज्ञः। वशिष्ठयज्ञः। शौनकयज्ञः। साकंप्रस्थाय्यः। मुन्ययनं। तुरायणम् – इत्यष्टावदीक्षितायनानि। तत्र पुरा दक्षः पार्वतिरेतेन यज्ञेनेयाज। तस्मादयं दाक्षायणो नाम यज्ञः। अत्र पौर्णमास्यममावास्यं चेति यागद्वयम्। तत्र पौर्णमास्ये–आग्नेयः पुरोडाशः अग्नीषोमीयमुपांशुयाजमाज्यम्, अग्नीषोमीयः पुरोडाशः इति त्रीणि पूर्वेद्युर्हवींषि। अग्नीषोमीयः पुरोडाश एव वा हविरेकं पूर्वेद्युः पौर्णमास्यां भवति। परेद्युस्तु – आग्नेय – पुरोडाशः, ऐन्दं च सान्नाय्यम्। अथ दर्शपूर्वेद्युः। अथवा ऐन्द्राग्नः पुरोडाश एवामावास्यायां पूर्वेद्युः। परेद्युस्तु–आग्नेयः पुरोडाशः पुरोडाशः, मैत्रावरुणी पयस्या च भवति। अयं च फाल्गुन्यामारभ्य यावदायुषं कार्य्यः पञ्चदशवर्षाणि वा। संवत्सरं वा। काम्यस्तु संवत्सरमेव कार्यः। एनमप्येके वशिष्ठयज्ञ इत्याचक्षते- इत्याह भगवान् याज्ञवल्क्यः।

अथेडादधः स प्राजापत्ययज्ञः पशुकामस्यान्नाद्यकामस्य च विधीयते। तत्र पौर्णमास्याम्, आग्नेयः पुरोडाशः, सरस्वत्यै चरुः, अग्नीषोमीयः पुरोडाशश्चोपांशुयाजश्च। ऐन्द्रं सान्नाय्यं च। दर्शे तु आग्नेयः पुरोडाशः। सरस्वत्यै चरुः। ऐन्द्राग्नेयः पुरोडाशः। मैत्रावरुणी पयस्या च। फाल्गुन्यामारभ्य यावदायुषं कार्य्यः। संवत्सरं वा। काम्यस्तु संवत्सरमेव।

अथ यत्र पौर्णमास्यामेव पौर्णमास्यानि हवींषि पूर्वाणि कृत्वा पश्चादामावस्यान्यपि हवींषि क्रियन्ते न पृथगमावास्यायां स सार्वसेनियज्ञः। प्रजापतिकामस्य यज्ञोऽयम्। फाल्गुण्यामारभ्य संवत्सरं कार्य्यः। एनमप्येके वशिष्ठयज्ञ इत्याचक्षते।

यत्र तु अमावास्यायामेवामावास्यानि पूर्वाणि कृत्वा पश्चात् पौर्णमास्यान्यपि हवींषि क्रियन्ते न पृथक् पौर्णमासीं यजते स वशिष्ठयज्ञः। अनेन प्रजावान् पशुमांश्च भवति। द्विषतो भ्रातृव्यांश्चाभिभवति। फाल्गुनस्यामावास्यायामारभ्य संवत्सरं कार्य्यः।

अथ यत्र साकं सम्प्रतिष्ठन्ते, साकं सम्प्रजायन्ते, साकं भक्षयन्ते – स साकं प्रस्थाय्यो नाम। श्रैष्ठ्यकामस्य पौरुषकामस्य चायं यज्ञः। वशिष्ठयज्ञवदयं फाल्गुन्याममावास्यायामारभ्य संवत्सरं कार्य्यः। एतानि षडदीक्षितायनानि। दर्शपूर्णमासायनानीति शांखायनः। पर्वण्येवैषां कर्तव्यतानियमात्। काम्यानि चैतानि। काम्यानामकरणे प्रत्यवायाभावः।

यासां काम्यानां कालविशेषो नोपदिष्टस्तासां पर्वणि शुक्लपक्षे देवनक्षत्रे प्रयोगः नैमित्तिकेष्टीनां तु निमित्तान्तरमेव काम्यानां प्रयोगे दर्शपूर्णमासौ न निवर्तते। आहिताग्निर्दर्शेष्ट्या पौर्णमासेष्ट्या वा नित्येष्ट्या सम्यगिष्ट्वा ततोऽभीष्टां यष्टुमीष्टे। काम्या इष्टीः करिष्यमाणो यजमानः पूर्वं संवत्सरपर्यन्तं द्वादशाहं वा जपादिभिः पूतः पयोव्रती ब्रह्मचारी च भूत्वा काम्यास्वधिकारी भवति। ऋत्विजोऽपि पयोव्रतरहितानेताग्नियमान् धारयेयुः। काम्येष्टियजनशीला इष्टियायजूका उच्यन्ते।

## पशुः

पशुरिति पशुबन्ध इति च तुल्यो व्यवहारः। स चतुर्धा – निरूढपशुबन्धः, अग्नीषोमीयपशुबन्धः, सौत्रामणीपशुबन्धः, चयनपशुबन्धश्चेति। प्रकारान्तरेण पशुबन्धो द्वेधा – हविर्यज्ञविधः, सवविधश्च। तत्र यस्मिन् व्रतमुपैति, अपः प्रणयति, पूर्णपात्रं निनयति, विष्णुक्रमान् क्रमति, यत्र वाज्यभागौ भवतः स हविर्यज्ञविधः। स निरूढपशुबन्धः। अथ यत्रैतानि न क्रियन्ते स सवविधः। सोऽग्नीषोमीयः, स सौत्रामणी पशुः। अत्र पुनः प्रकारान्तरेण स पशुबन्धो द्वेधा। पुरुषार्थः क्रत्वर्थश्च। तत्राद्यः स्वतन्त्रो विधीयते निरूढपशुबन्धो नाम। होता, अध्वर्युः, उद्गाता, ब्रह्मा, प्रतिप्रस्थाता, प्रशास्ता इति षडत्र ऋत्विजो भवन्ति।

प्राकृतवेदिवत् पाशुकवेदिश्च। यूपसम्पादनञ्च। पशुरत्र छाग एव जातदन्तः स्यादव्यङ्गः। अथ एक शृङ्गश्छिन्नकर्णोऽन्धो भग्नदन्तो वामनश्छिन्नपुच्छः शिपिविष्टो वधिरः कच्छनियुक्त एकखुरश्च पशुरत्र प्रतिषिद्धः। वर्हिषि प्रतीचीनशिरसमुदीचीनपादं पशुं शाययित्वा शमितारः संज्ञपयन्ति। पशोर्मारणं संज्ञपनम्। संज्ञप्यमानं यजमानादयो नावेक्षन्ते। ततो वपोत्खेदनम्। सर्वोदरव्यापी पोलिकाकारोऽतिश्वेतो वपा शामित्रशालायां शामित्रेऽग्नौ पशुकुम्भ्यां पशुपाकः। वपा, पशुपुरोडाशः हवींषि। पश्वङ्गयागः। वनस्पतियागः। उपयाजः। पाशुकाग्नेयेष्टिः। पाशुकाग्नौ वैष्णवेष्टिः। प्रयाजाः अनुयाजाः। इत्येवमादीन्यत्र कर्म्माणि भवन्ति। सोऽयं सद्यस्कालपशुप्रकारः। दर्शपौर्णमासयामकालो यजनीयदिनमुच्यते। अथोक्तं मानवश्रौतसूत्रे –

**'षट्सु षट्सु मासेषु पशुना यजेत, संवत्सरे संवत्सरे वा।**
**नैनमनीजानं संवत्सरोऽतीयात।**
**यद्यतीयान्न मांसमश्नीयादापशुबन्धात्।।'** इति।

अथ क्रत्वर्थः पशुबन्धस्त्रेधा – एकपशुश्च त्रिपशुश्च पञ्चपशुश्चेति। तत्रैकपशुरग्नीषोमीयः पशुबन्धोऽग्निष्टोमाङ्गम्। ऐन्द्रपशु – त्रिपशु – वायोधसपशुभिः क्रियमाणायां सौत्रामण्यां त्रिपशुः क्रियते। सौत्रामणी–पशुबन्धः। पञ्चपशुस्त्वग्निचित्याधर्मः। स चयनपशुबन्धः। अन्येष्वपि यज्ञेष्विष्टिवत् पशवोऽङ्गानि भवन्ति ते तत्र तत्रोपेक्ष्याः।

इत्थमिष्टिः पशुश्चेति द्विधाभिन्नो देवयज्ञो व्याख्यातः। अथ पित्र्यं पितृकर्म। तदपि द्विविधम् – पुरुषार्थं च क्रत्वर्थञ्च। तत्राद्यं स्वतन्त्रं पिण्डपितृयज्ञो नाम। यत्तु चातुर्मास्यादियज्ञान्तराङ्गभूतं तत् क्रत्वर्थम्। तच्च पित्र्येष्टिः पितृयज्ञो महापितृयज्ञ इति चोच्यते।

**इति हविर्यज्ञाः**

**पाकयज्ञाः**

यथा हविर्यज्ञे पुरोडाशश्रपणं भवति तथात्र चरुपाको भवति तस्मात्

पाकयज्ञः। यद्वा –पाको बालः स्वल्पकायः। तस्माद्य क्षुल्लको यज्ञः स पाकयज्ञः। यावानेकाग्नौ यज्ञो यावान् वाऽग्नौ यज्ञः स सर्वः पाकयज्ञः।

अग्निस्तावत्त्रेधा – त्रेता, गृह्यः, लौकिकश्च। त्रेता, वैतानः, वैतानिकः, आरण्यः, संस्कृतो, वैदिकः, श्रौत इति तुल्यार्थाः। गार्हपत्यः, आहवनीयः, दक्षिणाग्निरित्येते त्रयोऽग्नयो वितानिताः कर्म्मसाधका इत्यतस्ते त्रेता वैताना इति चोच्यन्ते। यस्तु दारग्रहणकालोपनीतो दायग्रहणकालोपनीतो वाग्निः स गृह्यः। दारासु शालायां च गृहशब्दः। तत्संबन्धादयमग्निर्गृह्यः। गृह्याग्निः, शालाग्निः, आवसथ्यः, औपासनः, स्मार्त इत्येकार्थाः इति गोभिलगृह्यसूत्रभाष्ये उक्तम्।[1] एतद्भिन्नः सर्वोऽप्यसंस्कृतोऽग्निर्लौकिकः। तत्र त्रेताग्निसाध्यास्त्रयो यज्ञा वैतानिका व्याख्याताः – अतियज्ञो, महायज्ञो, हविर्यज्ञश्चेति। अथ गृह्याग्निसाध्या अनग्निसाध्याश्च पाकयज्ञाः प्रदर्श्यन्ते। अल्पयज्ञाः पाकयज्ञा इत्याहुः।

तत्र केचिदाहुः एकविधः पाकयज्ञः 'पाकयज्ञा इत्याचक्षते एकाग्नौ यज्ञान्' इति लाट्यायनोक्तेः। 'पाकयज्ञान् समासाद्य एकाज्यनिकेवर्हिषः। एकस्विष्टकृतः कुर्य्यान्नानापि सति दैवते' – इत्यभियुक्तोक्तेश्च। अथाहुः – द्विविधः पाकयज्ञः। स्थालीपाकः पशुपाकश्च। लाट्यायनीयादिषु तथैव भेदकरणात्। अथवा द्विविधः पाकयज्ञः व्रतचर्य्याश्च शान्तिकर्म्माणि चेति। मानवगृह्यादौ तथैव भेदकरणात्। अन्ये त्वाहुः – त्रिविधः पाकयज्ञः। हुतः प्रहुतो ब्रह्मणि हुतश्चेति। 'त्रयः पाकयज्ञा – हुता अग्नौ हूयमानाः, अनग्नौ प्रहुताः, ब्राह्मणभोजनं ब्रह्मणि हुताः।' इत्याश्वलायनस्मरणात्। परे त्वाहुः– चतुर्विधः पाकयज्ञ – हुतः, अहुतः, प्रहुतः, प्राशितः इति। 'चत्वारः पाकयज्ञाः' इति पारस्करस्मरणात्। यत्र होम एव स हुतः। यत्र होमो बलिहरणं च स प्रहुतः। यत्र भोजनं स प्राशितः। यत्रैतेभ्योऽन्यदेव किञ्चित् सोऽहुत इति।

केचित्तु पञ्चविधमाहुः – व्रतम्, वृद्धिः, पित्र्यम्, पशुः, स्थालीपाक इति भेदात्। अथान्ये नवविधमाहुः – व्रतपाकाः, वृद्धिपाकाः, पित्र्यपाकाः,

1. गोभिल गृह्यसूत्रे 1/1

पशुपाकाः, स्थालीपाकाः, उपयाचितकाः, काम्यपाकाः, पूर्वं, दत्तश्चेति। परे तु इष्टमापूर्तं दत्तं त्रिविधं पाकयज्ञमास्थाय व्रतपाकादीनां सप्तानामिष्टशब्देन यज्ञश्च अष्टका सप्तमः पशुरित्येते पाकयज्ञाः।"[1] इति गोपथब्राह्मणश्रुतिः। अष्टकाः, पार्वणश्राद्धं श्रावण्याग्रहायणी चैत्र्याश्वयुजीति सप्तपाकयज्ञसंस्थाः इति, ब्रुवन्तः सुमन्तुगौतमादयस्तु सप्तविधत्वमाहुः। हुतः, प्रहुतः, आहुतः, शूलगवो, बलिहरणं, प्रत्यवरोहणमष्टकाहोमः इति सप्तपाकयज्ञसंस्थाः इति बौधायनः प्राह। औपासनहोमो वैश्वदेवं पार्वणमष्टका मासिश्राद्धं सर्पबलिरीशानबलिरिति सप्तपाकयज्ञसंस्थाः - इत्यापस्तम्बसूत्र-व्याख्यातारः। तत्र नैते मतभेदा भवन्ति। प्रतिपत्तेरन्यथात्वेऽपि प्रतिपाद्या-नन्यथात्वात्। अनेकरूपोपपादनस्य प्रज्ञावैशद्यार्थत्वात्। तथाहि पाकयज्ञा बहुधा सम्पाद्यन्ते - अग्निषु अनग्निषु च। अग्निसाध्या अपि द्विविधाः लौकिके च गृह्ये च। तत्र गृह्याग्निसाध्यानां धर्मद्वयं भवति- हविर्यज्ञत्वं च पाकयज्ञत्वञ्चेति। ते पाकयज्ञाश्च भवन्ति हविर्यज्ञाश्च। अत एव लाट्यायनीये-

**'सप्त हविर्यज्ञसंस्थाः सप्त सोमसंस्थाः। तासां हविर्यज्ञ-संस्थानामग्न्याधेयमग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यानि पशुबन्धः सौत्रामणी पाकयज्ञः - इति।**[2]' इत्येवं हविर्यज्ञसंस्थात्वेन पाकयज्ञमाख्याय तस्य द्वैविध्यमाचष्टे - पशुः स्थालीपाकश्चेति। तत्रैतयोरेव पाकयज्ञविशेषयो-र्हविर्यज्ञधर्मत्वं नान्येषामिति हि तदाशयो न तु पाकयज्ञेयत्तायां तस्य तात्पर्यम्। तस्माद्धविर्यज्ञत्वमप्राप्ताः सन्त्येवान्येऽपि पाकयज्ञा इत्यविरोधः। **'इडा खलु वै पाकयज्ञः**[3]' इति तैत्तिरीयसंहिताश्रुतिः। ब्रह्मणि हुतत्वादिडायाः पाकयज्ञत्वमाचष्टे। अथ त्रयः पाकयज्ञाश्चत्वारो वेत्यत्रापि नास्ति विसंवादः। अहुतानां प्रहुतेष्वन्तर्भावानन्तर्भावाभ्यां विवक्षावशात्तथोपपत्तेः। अथ हुतप्रहुतब्रह्मणि हुतेषु हुतविशेषाः पशवः स्थालीपाकाश्च। तेषु स्थालीपाका द्वेधा- पार्वणस्थालीपाका गृह्यस्थालीपाकाश्च। तेषु गृह्यस्थालीपाकानामेते भेदा भवन्ति व्रतं, वृद्धिः पित्र्यञ्चेति।

---

1. गोपथब्राह्मणे 5/23
2. लाट्यायनश्रौतसूत्रे 5/4/22-23
3. तै० सं० 1/7/1

पञ्चसु नवसु वा प्रकारेषु स्थालीपाकपदं पार्वणपरम्। तस्मादविरोधः। मानवीये तु गृह्ये वृद्धिर्पूतानां शिशुसंस्कारादीनां व्रतेषु पित्र्यपशुस्थालीपाकानां शान्तिकर्मस्वन्तर्भावविवक्षणाद् द्वैविध्योपदेशः। सुमन्तुगौतमापस्तम्ब-बौधायनादीनां तु स्व - स्वग्रन्थे व्याख्येयतया पाकयज्ञप्रदर्शनमात्रे तात्पर्य्यं न तु तदियत्तायाम्। एवमितरेतरानन्तर्भावान्तर्भावविवक्षावशान्नूनाधिक-विभागोपदेशेऽपि न वस्तुतत्त्वापलापः क्रियते।

इत्थं चातियज्ञो महायज्ञो हविर्यज्ञो हुतयज्ञो प्रहुतयज्ञो ब्रह्मणि हुतयज्ञ इत्येते षोढा विभक्ताः सर्वे यज्ञा भवन्ति। तेषामाद्यास्त्रयः श्रौता। द्रष्टुर्वाक्येभ्यस्तेषां ग्रहणात्। अथ परे त्रयः स्मार्ताः। श्रोतुर्वाक्येभ्यस्तेषां ग्रहणात्।

अथाहुः सर्वे ह्येते यज्ञा उच्यन्ते। यजतिषु जुहोतिषु चायं शब्दः। तत्र पुरोऽनुवाक्या याज्यावन्तस्तिष्ठद्धोमा वषट्कारप्रदाना यजतयः। उपविष्टहोमाः स्वाहाकारप्रदाना जुहोतयः। स इत्थं व्यवस्थितविषयोऽप्ययं यागशब्दः प्रायेण संकीर्णव्यवहारी दृश्यते। यत्रापि न तिष्ठन् जुहोति न वषट् कुरुते तत्रापि दृश्यते प्रयुक्तो यागशब्द इत्युपेक्ष्यम्।

अथ यत्र संवत्सरकालं कर्तव्यताऽनुवर्तते तत्राध्वरशब्दः। यथा चातुर्मास्यमिष्ट्यध्वरो भवति। सौम्याध्वरश्च वर्षान्तकालः। चयनमप्यध्वरो भवति। अथ यत्र ग्रहप्रचारस्तत्र मखशब्दः। यथा ग्रहयागादिः। यानि त्वङ्गभूतानि सूक्ष्मानि महान्ति वा कर्म्माणि सर्वे ते क्रतवः। त एते व्यावहारिकाः शब्दास्तत्र तत्रोपेक्ष्याः।

अथाहुः - एक एवायं सर्वो यज्ञः स एव खलु वृक्षवन्महापरिणाहः। तस्यायं विटपो स एते सर्वे यज्ञा दृश्यन्ते। स एतैर्भिन्नानेकसंस्थैस्तैस्तैः शाखायज्ञैः कृतरूपोऽयमेको महायज्ञः प्रत्येतव्यः। स त्रिसंस्थः। तस्यैतास्तिस्रः संस्था इष्यन्ते- इष्टिः, पशुः, सोम इति। अस्ति स इष्टिमात्रेणायं यज्ञः संतिष्ठते न पशुं सोमं वापेक्षते। स यावदस्य वीर्य्यं तेनैव सम्पद्यते। अथवा पशुपर्य्यन्तेन प्रचारितेनासौ सन्तिष्ठते। न सोमे सज्जते।

स इष्ट्या नानिष्ट्वा पशौ प्रभवति। इष्टिपूर्वकत्वात् पशूनाम्। स यावदस्य

वीर्य्यं तेन सम्पद्यते। अथवा सोमेन यज्ञः सन्तिष्ठते स नेष्ट्याऽनिष्ट्वा न वा पशुना बिना सोमः कृतो भवति। इष्टिपूर्वकत्वात् पशुपूर्वकत्वाच्च सोमस्यः। तथा चायं यज्ञः सम्पूर्णावयवः पूर्णबलो भवति। स यावदस्य वीर्य्यं तेन सम्पद्यते। अथवाऽयमेकाहाहीनसत्रात्मके सोमेऽपि यदि कामयते एकाहस्यैव ज्योतिष्टोमस्य सप्तसंस्थस्य प्रथमायामेव संस्थायां यज्ञं संस्थापयति तृतीयस्यां वा चतुर्थ्यां पञ्चम्यां षष्ठ्यां सप्तम्यां वा। यदि कामयते एकाहेनैव ज्योतिष्टोमादिना संस्थापयति नोपेक्षतेऽहीनं सत्रं वा। अथाहीनेन द्वादशाहेन सत्रेण वा संस्थापयति। अथ यदि कामयते सोऽग्निचिद्भवति। स नेष्टिं पशुं सोमं वा तत्राकृत्वा तमग्निं चिनुते। स यावन्त्यत्र वीर्य्याणि सर्वाणि तानि सम्पाद्यमानः कृतकृत्यो भवति। स इत्थं कामप्रो यज्ञः सर्वान् कामान् यथायथं दुग्धे।

स्मर्यते च -

**'सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः।**
**अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक्।।**
**देवान् भावयतानेन ते देवा भावयन्तु वः।**
**परस्परं भावयन्तः श्रेयः परमवाप्स्यथ।।'**[1] **इति**

**एतानि चैषां यज्ञानां वीर्य्याणि श्रूयन्ते -**

सायं प्रातर्हुत्वा अमुष्मिन् लोकेऽग्निहोत्रहुदश्नाति। तावतीह तस्मिन् यज्ञे ऊर्क्। अर्द्धमासेऽर्द्धमासे दर्शपूर्णमासयाजी। चतुर्षु चतुर्षु मासेषु चातुर्मास्ययाजी। षट्सु षट्सु पशुबन्धयाजी। संवत्सरे संवत्सरे सोमयाजी। शते शते संवत्सरेष्वग्निचित् काममश्नाति कामं न। तद्धैतद् यावच्छतं संवत्सराः तावदमृतमनन्तपर्य्यन्तम्। तस्य यदपीषीकयेवोपहन्यात् तदेवास्यामृतमनन्तमपर्य्यन्तं भवति - इति।

उक्ताः सर्वे यज्ञाः। एतैश्च कृतैः कर्तुरात्मा संस्क्रियते। ते चात्मनः संस्कारा द्विविधाः - दैवसंस्कारा आर्षसंस्काराश्च। तत्राग्निहोत्रादिभ्यो

1. श्रीमद्भगवद्गीतायाम् 3/10-11

विश्वसृजामयनान्तेभ्यः श्रौतेभ्यो यज्ञेभ्यः साध्या देवाः। अथ निषेकादिश्मशानान्तेभ्यः स्मार्तेभ्यः साध्या आर्षाः। उभयविधा अप्येतेऽतिशया धानात्मकाः संस्कारा दोषमार्जनात्मकसंस्कारानन्तरेण नोत्पद्यन्ते। तस्मात् स तृतीयः संस्कारः सामयाचारिको नामेष्यते श्रौतस्मार्तोपायभूतः। यः समयकृतो यश्चाचारसिद्धः कर्तव्यतानियमः स इहैकशब्देनोच्यते सामयाचारिक इति। तत्र समयः, संकेतः, संवित्, सम्प्रतिपत्तिरित्येकार्थाः। स च सामयिको राजधर्मादिः समय - भेदाद्भिद्यते। अथाचारधर्मः शरीरकुलदेशभेदात् त्रिधा भिन्नः। तत्र शरीराचारः शुद्धिः। सा पञ्चधा भिद्यते देहशुद्धिः, द्रव्यशुद्धिः, अघशुद्धिः, एनः शुद्धिः, भावशुद्धिश्चेति। एवं कुलाचारः कुलपरम्परानियतः कर्तव्यताविशेषः। देशाचारोऽपि तत्तद्देशे परम्परासिद्धप्रचारविषयोऽर्थः। न चानाचारस्याशुद्धात्मनोऽन्ये संस्काराः श्रौताः स्मार्ता वा अभ्युपपद्यन्ते। तस्मादाचारः प्रधानम्। तान्येतानि सर्वाणि कर्म्माण्युच्यन्ते। ये चैतेभ्यः कृतेभ्यः कर्तुरात्मन्यपूर्वा अतिशया उत्पद्यन्ते तान्यपि कर्म्माविनाभूतानि कर्म्माण्युच्यन्ते कर्मण्येव धर्माः। अदृष्टा अपूर्वाः आधेयातिशयाः आत्मनः संस्कारा भावनाख्या धर्माः। आहिताश्चातिशया वासनाख्या धर्माः। ये चातिशयाधायकाः व्यापारास्तेऽपि कर्तव्यतया विहिता आधिकारिका धर्माः। यद्व्यतिरेकेण चैषां सर्वेषामनुत्पत्तिस्ते सामयाचारिकाः परमाधर्माः। तदित्थं धर्मश्चतुर्धा - श्रौतधर्मः, स्मार्तधर्मः, आचारधर्मः, समयधर्मश्चेति। तत्र समयधर्मेणाचारधर्मः सम्पद्यते। आचारेण स्मार्त्तः। स्मार्त्तेन श्रौतः। श्रौतेनाभ्युदयः सम्पद्यते निःश्रेयसं च। स पुरुषार्थः सर्वेषां पौरुषाणामानन्दपरमत्वात्।

उपर्युक्तेन विवेचनेनेदं स्फुटम्भवति यच्छ्रौत-स्मार्त्तेषु च कर्मसु प्रकृतित्वेन यद् व्याख्यातं तत्कर्म एव मुख्यरूपेण सर्वत्र प्रयुक्तं भवति। प्रकृतियज्ञेनैव विकृतीनां कल्पना सम्भवति, तस्मात्प्रकृतियज्ञ एव सर्वयज्ञानां मुख्यमवलम्बनम्। तस्य च प्रकृतियज्ञस्य विविधं स्वरूपं प्रकृतेऽस्मिन् प्रकरणे प्रस्तुतमिति।

अथ द्वितीयोऽध्याय:

## ( क ) प्रकृतियज्ञानां भेदास्तेषां कारणानि च

स्वाभाविकरूपेणानवरतं भूयमानाः यज्ञाः प्रकृतियज्ञा इत्युच्यन्ते। यथा सूर्यचन्द्राग्नीन्द्रप्रभृतिषु देवतासु भूयमाना यज्ञाः, वृक्षवनस्पत्यौषध्यन्नादिषु भूयमानाः यज्ञाः, जीवशरीरेषु अक्षिपक्ष्मचलनं श्वासोच्छ्वासरूपेण च भूयमानाः यज्ञाः प्राकृताः। एषां यज्ञानां सम्पादनाय न कश्चित्किमपि विशेषं कर्म करोति तस्मात्स्वाभाविकरूपेण भूयमानानामेषां समेषां त्रीणि स्थानानि मुख्यान्युक्तानि। देवतासु भूयमाना आधिदैविकाः, भौतिकपदार्थेषु भूयमाना आधिभौतिकाः आत्मनि (शरीरे) भूयमाना आध्यात्मिका इत्येतैर्भेदैस्त्रिविधा इमे प्राकृता यज्ञा उक्ताः। तेषां त्रयाणामिह भेदाः कथं सञ्जाता किञ्च तत्र कारणानि तद्विषये किञ्चिद्ब्रूमः।

पूर्वं यदुक्तं त्रिविधा इमे यज्ञाः। तत्र त्रयाणामेषां यज्ञानां त्रिभिर्लोकैर्यत्साम्यं तद्दृष्ट्वा कथमेषां भेदाः सञ्जाता इति प्रश्नः समाधितो भवति।

### त्रयाणां लोकानां यज्ञैः सह साम्यम्

यास्कमुनिरनादिष्टदेवतानां मन्त्राणां देवतोपपरीक्षा-प्रकरणमुपसंहरन्नाह-

**'अथैतान्यग्निभक्तीनि-अयं लोकः, प्रातः सवनं, वसन्तो ऋतुः। अथैतानीन्द्रभक्तीनि - अन्तरिक्षलोकः, माध्यन्दिनं सवनं, ग्रीष्मो ऋतुः। अथैतान्यादित्यभक्तीनि - असौ लोकः, तृतीयं सवनं, वर्षा ऋतुः।[1]'**

---

1. निरुक्ते दैवतकाण्डे, 7/8-11

अस्येदं तात्पर्यम् – अग्नीन्द्रादित्यास्तिस्रो नैरुक्ता याः प्रधानदेवताः सन्ति, तासां यैः सह भक्तिसाहचर्यमुपवर्णितम्, तेषु यदि कस्यचिद् (अग्नीन्द्रादित्यानां भक्तिसाहचर्योक्तस्य) सम्बन्धः कस्मिंश्चिदनादिष्ट-देवताकमन्त्रे दृश्यते चेत् तस्यानिर्दिष्टदेवताकस्य मन्त्रस्य क्रमशोऽग्नीन्द्रा-दित्यदेवतासु अन्यतमा देवता विज्ञेयेति। एतेनापि नैरुक्ता आधिदैविका देवता याज्ञिकाश्च देवताः समानाः, अथ च त्रयाणामपि लोकानां यज्ञगतैस्त्रिभिः सवनैः साम्यमिति सुस्पष्टं भवति।

त्रयाणां लोकानां त्रिभिः सवनैः साम्यमिति निरुक्तस्याधोनिर्दिष्ट-वचनेनाप्यभ्यूहितुं शक्यते –

**'अथासावादित्यः (वैश्वानरः) इति पूर्वे याज्ञिकाः। एषां लोकानां रोहेण सवनानां रोह आम्नातः। रोहात्प्रत्यवरोहश्चिकीर्षतः। तामनुकृतिं होताऽऽग्निमारुते शस्त्रे वैश्वानरीयेण सूक्तेन प्रतिपद्यते।**[1]'

अस्यायमभिप्रायः – पूर्वे याज्ञिका आदित्यं वैश्वानरं मन्यन्ते स्म। तेषां मतानुसारमेषां लोकानां रोहक्रमेण सवनानामपि रोहः समाम्नातः। अतः प्रातःसवने पृथिवीस्थानीयो यजमानो माध्यन्दिने सवने अन्तरिक्षस्थानीयः, तृतीयसवने च द्युस्थानीयः सम्पद्यते। तस्य द्युस्थानीयस्य यजमानस्य प्रत्यारोह आवश्यकः। अतो द्युस्थानीयस्य यजमानस्य प्रत्यवरोहाय होता आग्निमारुते शस्त्रे प्रथमं वैश्वानरीयेण (= आदित्यदेवताकेन) सूक्तेन शस्त्रमारभते।

इह वेदिनिर्माण–अग्न्याधान–सोमयाग–अग्निचयन–प्रक्रियाभिः सवनानां चारोहादिक्रमस्य सृष्टियज्ञैर्या समता ब्राह्मणादिग्रन्थेषु निदर्शिता तस्यैतद् विस्पष्टं यच्छ्रौतयज्ञा सृष्टियज्ञानामेव रूपका इति। सृष्टियज्ञस्यार्थाद् आधिदैविकस्य जगतोऽध्यात्मेन साम्यं वर्तते। अत आधिदैविकज्ञानेना-ध्यात्मज्ञानं भवति। अत एवोक्तं यस्मिन् – **'देवताध्यात्मे वा (पुष्पफले)**[2]' अयमेवाभिप्रायो **'यद्ब्रह्माण्डे तत्पिण्डे'** इति लोकोक्त्याऽपि विज्ञायते।

---

1. निरुक्ते 7/23
2. निरुक्ते 1/19

यद्यपि वैज्ञानिके आधारे प्रकल्पितानां श्रौतयज्ञानां समस्तानां क्रियाणां पदार्थानाञ्चाधिदैविकाध्यात्मिकजगद्‌यां किं सादृश्यं वर्तते इत्यस्य न साक्षाद् विस्तृतं वर्णनं सम्प्रत्युपलब्धे वैदिकवाङ्मय उपलभ्यते, तथापि ब्राह्मणग्रन्थेषु यत्र तत्र याज्ञिकक्रियाणां तद्गतपदार्थानाञ्च निर्देशेन सहैव इत्यधिदैवतम् इत्यध्यात्मम् इत्येवं निर्देशानामुपलब्ध्या इदमञ्जसा अनुमातुं शक्यते यद् यज्ञानामाधिदैविकजगता सहास्ति कश्चित् सम्बन्ध इति।

उपरिष्टाद् यद् यज्ञब्रह्माण्डयोः सादृश्यं निदर्शितं तदनुसारमिदं शक्यते वक्तुं यद्यदा प्रारम्भे यज्ञानां प्रकल्पना ऋषिभिरकारि तदानीं यज्ञस्य समस्ताः क्रियाः तद्गताः पदार्थाश्च आधिदैविकजगतः क्रियाणां तद्गतपदार्थानां च पूर्णं प्रातिनिध्यं कुर्वन्ति स्म। उत्तरकाले यज्ञक्रियासु परिवर्तने च सत्यपि अग्निहोत्र–दर्शपूर्णमास–चातुर्मास्य–सोमयागप्रभृतिष्वपि वह्वीनां क्रियाणां तद्गतपदार्थानां चाधिदैविकजगतः क्रियाभिः पदार्थैश्च सह महद् सादृश्यमुपलभ्यते।

अन्यच्च – यज्ञानां त्रिविधत्वनिदर्शनार्थं ऋगादिवेदेषु प्रसिद्धे पुरुषसूक्ते वर्णिततथ्यानामनुशीलनमावश्यकमेव प्रतीयते। यथा –

'तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे।
छन्दांसि जज्ञिरे तस्माद्यजुस्तस्मादजायत।।[1]'

अर्थात् सर्वहुताख्याद्यज्ञादृग्यजुस्सामादीनां वेदानां छन्दसाञ्चोत्पत्तिर्जाता। अनेन कथनेनैतत्सिध्यति यद्वेदानामुत्पत्तेः पूर्वं यज्ञ आसीत्। यद्यज्ञः वेदादीनां सृष्टिजन्यपदार्थानाञ्चोत्पत्तेः पूर्वं विद्यमान आसीत् स एव सर्वेषां सृष्ट्युत्पत्तेरनन्तरमनुष्ठीयानां यज्ञानां प्रकृतिरित्यवधीयते। वेदानामुत्पत्तिविषयेऽपि एवमुच्यते यत् परब्रह्मपरमात्मनः द्वयोः स्वरूपयोः शब्दब्रह्मरूपं वाग्ब्रह्मनामकमेकं स्वरूपं परब्रह्मरूपं चापरं स्वरूपमिति। तदुक्तं मैत्रायण्याम्–

---

1. शु० य० सं० 31/7

**"द्वे ब्रह्मणी वेदितव्ये शब्दब्रह्म परं च यत्।**
**शाब्दे ब्रह्मणि निष्णातः परब्रह्माधिगच्छति।।"[1]**

एतेन तथ्येनेदं विस्पष्टं भवति यद्यथा समस्तस्य वटवृक्षस्य स्वरूपं तद्बीजे निहितं भवति। बीजवपनानन्तरं तस्मादेव बीजात्तस्य वृक्षस्य वृहत्सर्वाङ्गपूर्णं स्वरूपं प्रस्फुटति (प्रादुर्भवति) इति। एवमेव जगद्बीजभूतस्य परमात्मनोऽन्ते लोक-धर्म-वेद-प्रजादीनां बीजानि व्याप्तानि भवन्ति। आवश्यकतानुगुणं उचिते काले केवलं तेषां प्रकटनमेव भवति। लोके यदा कश्चित् जीवः गर्भाद्बहिरागच्छति तदैव तस्य जन्म मन्यते। गर्भस्थं बीजं कदा स्थापितं इत्यादिकं न कदापि केनापि वा क्वापि विचार्यते। तद्वदत्रापि परब्रह्मणः सकाशाद् यदा वेदादीनां प्राकट्यं जातं तदैव तेषां (वस्तूनां पदार्थानां वोत्पत्तिर्मयन्ते) प्रादुर्भाव इत्युच्यते। तस्मादेतस्मादेव कारणाद्वेदेष्वेषः सिद्धान्तो यदलौकिकस्सन् लोके विद्यमानः प्रतिपादितः।

तदेतया प्रक्रियया प्रादुर्भूतानां वेदमन्त्राणां परमतत्त्ववेत्तारो ऋषयः कृष्णाजिनेषूपविष्टास्सन्तः दर्शनं चक्रुः। दृष्ट्वा च यस्मिन् मन्त्रे यस्य देवस्याधिपत्यमवलोकयामासुः तद्दैवतः स मन्त्र उक्तः। यथोक्तं यास्केन -

**'यत्काम ऋषिर्यस्यां देवतायामार्थपत्यमिच्छन् स्तुतिं प्रयुङ्क्ते तद्दैवतः स मन्त्रो भवति।**[2]' अर्थात् अर्थपतिभावेन यां देवतामुद्दिश्य यस्य मन्त्रस्य प्रवचनं ऋषिभिः कृतं तस्य मन्त्रस्य सा एव देवता, येन ऋषिणा प्रोक्तं स एव ऋषिर्यस्मिन् कर्मणि प्रयुक्तः स एव कर्मविनियोगः। यादृशैः छन्दोभिः यस्य देवस्य प्रीतिस्तस्मिञ्छन्दसि स मन्त्रः प्रयुक्तः। तस्मादत्र ऋषिच्छन्दो देवता - विनियोग इत्येते चत्वारः प्रमुखमार्गा आसन्। एभिश्चतुर्भिरपि मार्गैस्त्रिविधानां लोकानां स्थितिरवबुध्यते। तद्यथा - विनियोगः ऐहिकः तस्माद् भूलोकस्य सम्बन्धः विनियोगेन सह कल्पितः।

---

1. मै० उ० 2/6
2. निरुक्ते दैवतकाण्डस्यारम्भे

देवताः स्वर्गस्थाः सन्ति, तैः सम्बद्धः स्वर्गो लोकोऽत्र व्याख्यातः। ऋषयो पितृलोकस्थानीयाः, एषु त्रिषु लोकेषु आच्छादितः सन् यद् वस्तु वर्तते तच्छन्दः स च सर्वेषु लोकेषु समानभावेन द्योतते। त्रयाणामेषां भूभुर्वः स्वर्लोकानां मध्ये साम्यं स्वरूपं धारयच्छन्दस्तिष्ठति तस्मात् **छन्दांसि छादनात्** इत्युक्तं निरुक्तकारेण। तच्च सर्वे लोकेष्वभिव्याप्तः सन् तिष्ठति। सर्वलोकं परस्परं युक्तं कृत्वा विद्यत इति।

एतादृशस्य महन्महत्वशालियज्ञस्य भेदान् ब्रुवता गोपथश्रुतावुक्तम् – '**स एतं त्रिवृतं सप्ततन्तुमेकविंशतिसंस्थं यज्ञमपश्यत्।**[1]' तेषामेक-विंशतिभेदभिन्नानां यज्ञानां त्रिषु संस्थासु व्यवस्थां प्रदर्शयन्नाह – '**सप्त सुत्याः सप्त च पाकयज्ञाः हविर्यज्ञाः सप्त तथैकविंशतिः। सर्वे ते यज्ञा अङ्गिरसोऽपि यन्ति नूतना यानृषयो सृजन्ति ये च सृष्टाः पुराणैः।**[2]'

इत्यनेन श्रौतवचनेनेदं स्फुटं भवति यत् आसु संस्थासु सप्तसंख्यका यज्ञाः कल्पिताः तेषां क्रमाः एवं विधास्सन्ति –

'**अथातो यज्ञक्रमाः अग्न्याधेयमग्न्याधेयात्पूर्णाहुतिः पूर्णाहुतेरग्निहोत्रमग्निहोत्राद्दर्शपूर्णमासौ, दर्शपूर्णमासाभ्यामाग्रयणमाग्रयणाच्चातुर्मास्यानि चातुर्मास्येभ्यः पशुबन्धः, पशुबन्धादग्निष्टोमोऽग्निष्टोमाद्राजसूयो राजसूयाद्वाजपेयो वाजपेयादश्वमेधोऽश्वमेधात्पुरुषमेधः, पुरुषमेधात्सर्वमेधः सर्वमेधाद्दक्षिणावन्तो दक्षिणावद्भ्योऽदक्षिणा अदक्षिणाः सहस्त्रदक्षिणे प्रत्यतिष्ठंस्ते वा एते यज्ञक्रमाः।**[3]'

एवमुपर्युक्तप्रकारेण क्रमानुसारमावश्यकतानुसारञ्च यज्ञाः विविधाः कल्पिताः। तस्मादेव कारणाद्यज्ञानामनेकविधत्वमवलोक्यत इति शक्यते वक्तुम्।

---

1. गो० ब्रा० 1/1/2
2. गो० ब्रा० 1/5/25
3. गो० ब्रा० 1/5/7

## प्रकृतियज्ञानां भेदत्वे कारणानि

प्रथमेऽध्याये प्रकृतियज्ञानां विवेचनप्रसङ्गे प्रतिपादितमेतद्यद् विविधेष्टसाधननिमित्तं द्रव्ययज्ञानां श्रौत-स्मार्त-नित्य-नैमित्तिक-काम्यभेदा प्रभेदाश्च, द्रव्यभेदात्भेदाः, संस्थाभेदाः, प्रकृतिविकृतिभेदश्च एवं विधमनेक-भेदभिन्नाः यज्ञाः प्रचलिता अप्रचलिताश्च सन्ति। तेषु विविधभेदप्रभेदेषु विभक्तानां सर्वेषामपि यज्ञानां प्रकृतयो विकृतयश्च सन्ति। यथा अग्न्याधेयमाधानानाम्, पूर्णाहुतिराहुतीनाम् दर्शपौर्णमासाविष्टीनां, पशुश्चाग्नीषोमीयः पशूनाम्, सौत्य एकादशिनानाम्, वैश्वदेवं चातुर्मास्यानां, सोमोऽवभृथोऽवभृथानाम्, प्रातः सवनं सवनानाम्, अंश्वदाभ्यौ ग्रहाणां, सुपर्णश्चित्यानाम्, ज्योतिष्टोम एकाहानाम्, ज्योतिरतिरात्राणाम्, द्वादशाहः सत्राहीनानाम्, गवामयनं सांवत्सरिकानाम्, इत्थं यज्ञानां क्रमशो विस्तारोऽग्निहोत्रादारभ्य सहस्रसंवत्सरसाध्ययज्ञपर्यन्तं वर्तते। तत्रैव प्रसङ्गानुसारं होम-इष्टि-सोमयागानां प्रकृतीनां अग्निहोत्र-दर्शपूर्णमास-सोमयागानां च पद्धतिरपि लिखिता। अत्र तेषां यज्ञानां भेदत्वे कारणानि किमिति व्याख्यायते।

तत्र विविधकामनानां पूर्तयेऽनेकविधयज्ञाः ऋषिभिः प्रतिपादिताः यथा '**अग्निहोत्रं जुहुयात्स्वर्गकामः**[1]' अत्र अग्निहोत्रेण स्वर्गप्राप्तिरूपं फलं लभ्यत इति स्फुटं भवति। यो यजमानः स्वर्गं वाञ्छति स अग्निहोत्रेण विशिष्टेन कर्मणा स्वर्गफलं प्राप्नोतीति। तस्मात् स्वर्गकामनयाऽग्निहोत्रस्य विधानं कृतमस्ति।

'**उद्भिदा यजेत पशुकामः**[2]' इत्यत्र उद्भित्संज्ञको यागो विधीयते पशुफलसम्बन्धोऽपि, कर्मणः प्राप्तिं बिना केवलं फलसम्बन्धो न बोधयितुं शक्यते। एवमेव '**सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकामः**[3]' अत्र

---

1. सोऽमृतत्त्वं गच्छति य एवं विद्वानग्निहोत्रं जुहोति। जै० उ० 1/2
2. तां० ब्रा० 19/7/2
3. मै० 2/2/2

सूर्यदेवताचरु- द्रव्यविशिष्टस्य कर्मणो विधानम्, तस्य च फलसम्बन्धबोधनमिति विधिव्यापारेऽत्यन्तगौरवम्।

**'ब्राह्मणस्पत्यमेकादशकपालं निर्वपेद् ग्रामकामः।**[1]' ग्रामकामावाप्तये ब्राह्मणस्पत्यं एकादशकपालं पुरोडाशं निर्वपेदिति विधिप्रकल्पनम्। तरति सर्वं पाप्मानं तरति ब्रह्महत्यां योऽश्वमेधेन यजते तथा च '**तेजसा वा एष ब्रह्मवर्चसेन व्यृध्यते योऽश्वमेधेन यजते।**[2]' "**पुरुषमेधेनेष्ट्वा विराडिति नामधत्त**"[3] "**तस्माद्राजसूयेनेजानः सर्वमायुरेति**[4]" '**एष वाव यज्ञो यदग्निष्टोमः, एकस्मा अन्यो यज्ञा कामायाह्रियते सर्वेभ्योऽग्निष्टोमः**[5]'।

उपर्युक्तैः श्रौतवचनैरेतत्, स्फुटं विज्ञायते यद् विविधानां कामनानामवाप्तये विविधाः यज्ञाः कल्पिताः। सेयं कामना सृष्टिसर्जनात्प्रागेवोत्पन्ना। तदुक्तं नासदीयसूक्ते –'**कामस्तदग्रे समवर्तताधि मनसो रेतः प्रथमं यदासीत्**[6]' अर्थात् कामस्योत्पत्तिः सर्वप्रथममभवत् – स एव कामः प्रजापतेर्मनसि व्याप्तः सन् तिष्ठति। तस्मादुक्तं ब्राह्मणग्रन्थेषु – '**प्रजापतिरकामयत्**' इत्यादि। प्रजानां पतिः पालकः स्वामी ईश्वरो वा प्रजापतिः तस्य अन्तर्हृदि कामः सर्वप्रथममुद्भूतः तस्मात् प्रजापतेस्स-काशादुद्भूताः सर्वेऽपि प्राणिनः कामप्रभावादवञ्चिता एव। अत एवेदं शक्यते वक्तुं यत् कामनानुसारमेव प्रजापतिना अस्य लोकस्य कल्पनं सर्जनं वा कृतम्। तत्र लोकसर्जनप्रक्रियायां काम एव प्रधानः कामप्रधानेऽस्मिन् लोके येऽपि प्राणिनः सन्ति ते सर्वे कामयुता एव सन्ति। कामादुद्भूताः कामरूपा कामिन एव ते सकामिनः कथमकामं कर्म कर्तुमर्हन्ति। तत्रापि कदाचिद् कामतत्त्वस्याधिक्यं कदाचिदकामाधिक्यमिति नूनं द्वयं स्वरूपं प्रस्फुटितं

---

1. तै० ब्रा० 2/3/3/4
2. तै० ब्रा० 3/9/5/1, श० प० ब्रा० 13/3/1/1
3. गो० ब्रा० 1/5/8
4. तै० ब्रा० 1/7/7/5
5. तां० ब्रा० 6/3/1-2
6. ऋ० सं० 10/129/4

भवति तदनुगुणं किमपि कर्म सकामं किमपि च कामरहितं भवति। पूर्वं कामसहितमेव कर्म भवति अनन्तरं गच्छता कालेन तदेव सकामकर्म स्वाभाविकं स्वरूपमवाप्याकामत्वं स्वरूपं धत्ते। परं नैतत् वक्तुं शक्यते यत् सर्वं कर्ममकाममेव उतवा सर्वं सकाम एव। अतः सकामेन कर्मणा कामरहितोपासनायाः यत्रानुशासनं तदेव स्वरूपमत्रोपपादितम्। दृष्टान्तो यथा-

वयं प्रतिदिनमहर्निशं श्वासं गृह्णामः एतत् कर्म पश्यन्, शृण्वन्, स्पृशन्, जिघ्रन्, अश्नन्, गच्छन्, स्वपन्, प्रलपन्, विसृजन् गृह्णन्, नुम्मिषण्णमिषण्णपि अतः सर्वमपि कर्मव्यापारं कुर्वन्तो वयं सर्वास्ववस्थासु सदा सर्वदा श्वासं गृह्णामः। तदर्थं न कश्चिद् विशिष्टमासनं विशिष्टां क्रियां, विशेषमवधानं वा प्राप्नुमः अतः स्वाभाविकतया स्वप्न-जाग्रत् - सुषुप्तावस्थासु स्वयमेव श्वासं गृह्णामः। कथं श्वासग्रहणमस्माभिः क्रियते। इति प्रश्ने सति अस्माकमुत्तरं भवति जीवनव्यापारनियमनाय सञ्चालनाय वेति। यदि वयं श्वासं न गृह्णामश्चेदस्माकं जीवनं नश्यति। अत्र जीवनं प्राणरक्षणमेव हेतुः। तद्धेतुरेवादौ कामरूप आसीत्। स एव कामोऽनन्तरं स्वाभाविकक्रिययानुस्यूतं अकाममिवाभवत् एतदभिलक्ष्यैवोक्तं मया यद् सकामेनैवाकामस्योदयो भवति कदाचित् इति।

अर्थात्तदानीं यद् यद्वस्तुप्राप्तेरभिलाषा कामना वा समुद्भूता तां तामभिलाषां पूर्तये तानि तानि कर्माण्युक्तानि। सर्वाण्यपि तानि कर्माणि ज्ञान-विज्ञान-दर्शन-इतिहास-नीति- समाज-मन-प्राण-वाक्-आन्तरिक-बाह्य-ऐहिक-पारलौकिक-भूत-भव्य- वर्तमानोत्कर्ष- निमित्तानि प्रोक्तानि। तेषां कर्मणां विधानानि श्रौतग्रन्थेषु प्रतिपादितानि, कर्माणि वेदेषूपदिष्टानि च। तस्मात्तानि श्रेष्ठतमान्यपि कर्माण्युक्तानि। अत एवोक्तं श्रुतर्षिभिः- '**यज्ञो वै श्रेष्ठतमं कर्म**' अर्थात् यानि कर्माण्यस्माकमुत्कर्षाय चोदितानि तानि श्रेष्ठतमानीति।

अतस्तासां कामनानां वैभिन्येन कर्मणां वैभिन्यत्वमुपपादितम्। एतान्येव कारणानि यज्ञभेदत्वे प्रमुखानि इत्येवं तावन्मामकीनं मतम्।

# ( ख ) माध्यन्दिनानुसारिणी प्रकृतियज्ञपद्धतिः

यज्ञशब्दः सामान्यतया धर्मस्यार्थे विद्यते। यस्मिन्नग्निं प्रज्ज्वाल्य घृतादिद्रव्यैराहुतिः प्रदीयते तदेव यज्ञ इत्युच्यते। महर्षि कात्यायनेन यज्ञस्य लक्षणं कुर्वता लिखितं यद् '**द्रव्यं देवता त्यागो यागः।**[1]' अर्थाद्यत्र देवेभ्यः द्रव्याणां त्यागः क्रियते तदेव यागः। अत एव सामान्यतः यज्ञेषु देवतास्वरूपमग्निं प्रज्वाल्य तस्मिन्नग्नौ द्रव्याणामाहुतिर्दीयते। अस्या आदान-विसर्गात्मिकायाः क्रियायाः नाम यज्ञ एव। देवता द्रव्यं गृह्णाति एवञ्च यजमानो द्रव्यं त्यजति, इत्थं यत्र-यत्र देवता द्रव्याणां ग्रहणं करोति तथा च यत्र-यत्र देवानुद्दिश्य द्रव्यं दीयते तत्र-तत्र यज्ञो भवति। तद्यथा-

अस्माकं शरीरे वैश्वानरोऽग्निः[2] देवताऽस्ति। तस्यै देवतायै वयं प्रतिदिनं भोजनद्रव्याणामाहुतिं दद्मः। वयं प्रतिदिनं भोजनद्रव्येण आहुतिं प्रदाय यज्ञं कुर्मः। अस्य यज्ञस्याधिष्ठाता पुरुषः आत्मा इत्युच्यते। अत एवायं आध्यात्मिको यज्ञ इत्युच्यते। यत्र यत्र भुज्यते तत्र तत्र यज्ञः सम्पद्यते। पशवः पक्षिणश्चापि भोजनं कुर्वन्ति, अत एव तेऽपि यज्ञं कुर्वन्ति। कृमि-कीट-पतङ्गादयोऽपि भोजनं कुर्वन्ति, अतस्तत्रापि यज्ञो भवति। वृक्ष-वनस्पतयः लतागुल्मादयश्चापि स्वमूलैः रसं प्राप्य भोजनं कुर्वन्ति, अतस्तेऽपि यज्ञमेव कुर्वन्ति। एतेषां यज्ञानां माध्यमेनैव षड्भावविकाराः उत्पन्ना भवन्ति। बीजगतवृक्षाः यज्ञेभ्य एवाङ्कुरन्तः उत्पन्नाः सन्तः पुनः यज्ञेभ्यश्चैव विकासं प्राप्यैकस्मिन् महति वृक्षे परिणता भवन्ति। पशुपक्षिवृक्षादयः पदार्थाः सन्ति भौतिकाः, अत एषु भौतिकपदार्थेषु जायमानो यज्ञ आधिभौतिको यज्ञ इत्युच्यते।

---

1. का० श्रौ० सू० 1/2/2
2. गीता – 'अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः।
   प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम्।।'

सूर्यो देवताऽस्ति चन्द्रमा देवताऽस्ति पृथिवी देवताऽस्ति।[1] अस्यां पृथिव्यां प्रतिदिनं सूर्यः चन्द्रो वायुः मेघाः ग्रहाः नक्षत्राणि च जुह्वन्ति यया आहुत्येयं पृथिवी जीवति। तासामाहुतीनामभावे पृथिव्याः सत्ता न सम्भवति। अस्या आहुतेः क्रमः सर्वत्र सर्वदा प्रचलति स्वाभाविकतया। सूर्येऽपि आहुतिर्दीयते, चन्द्रमस्यपि, ग्रहनक्षत्रेऽपि, परमेष्ठ्यां स्वायम्भुवमण्डलेऽपि च। प्रत्येकं पुरः सत्ता तस्मिन् प्रचलितयज्ञेभ्य एव भवति। उपर्युक्तास्वासु देवतासु सम्पद्यमानो यज्ञः आधिदैविक इत्युच्यते। इत्थमस्माकं शरीरे यद्यज्ञो भवति तदाध्यात्मिकः, सर्वेषु भौतिकपदार्थेषु यद्यज्ञः प्रचलति तदाधिभौतिकस्तथा देवेषु यद्यज्ञो भवति तदाधिदैविको यज्ञ इति चोच्यते।

सृष्ट्यादौ सत्त्वगुणविशिष्टा योगजशक्तिसंपन्नाः परावरज्ञा ऋषयः स्वीयदिव्यमानसशक्त्या अस्य चराचरस्य जगतः परमाणुत आरभ्य परममहद्द्रव्यपर्यन्तं समस्तं पदार्थजातं हस्तामलकवद् द्रष्टुं समर्था बभूवुः। तदुक्तं यास्काचार्येण – '**साक्षात्कृतधर्माण ऋषयो बभूवुः।**[2]' पराशर-कृतज्योतिषसंहितायामपि – '**पुरा खलु अपरिमितशक्तिप्रभावीर्य....... धर्मसत्त्वशुद्धचेतसः पुरुषा बभूवुः**[3]' इति। इत्थमुत्तरोत्तरं सत्त्वगुणस्य ह्रासाद् रजस्तमोगुणयोर्वृद्ध्या च काम क्रोध-लोभ-मोहादयः प्रादुर्बभूवुः तैर्वशीभूता मानवी प्रजा सुखविशेषेच्छया प्राजापत्यान् शाश्वतनियमान् उल्लङ्घ्य कृत्रिमं जीवनं यापयितुं प्रवृत्ता। उक्तं हि यथा शतपथश्रुतौ – '**ता इमाः प्रजाः प्रजास्तथैवोपजीवन्ति यथैवाभ्यः प्रजापतिर्व्यदधात्। नैव देवा अतिक्रामन्ति न पितरो न पशवः। मनुष्या एवैकेऽतिक्रामन्ति**[4]' इति। एवमेव यथा – यथा आवश्यकता वृद्धिं गतवती तथा-तथा

1. 'अग्निर्देवतावातो देवतासूर्यो देवताचन्द्रमादेवतावसवो देवता रुद्रादेवताऽऽदित्यादेवतामरुतोदेवता विश्वेदेवादेवताबृहस्पतिर्देवतेन्द्रोदेवता वरुणोदेवता' शु० य० सं० 14/20
2. निरुक्ते 1/20
3. उत्पलकृतायां बृहत्संहितायाष्टीकायाम् 15शे पृष्ठे
4. श० प० ब्रा० 2/4/2/5-6

जीवनसाधनेषु कृत्रिमता अपि ववर्धे। एतेन सहैव मानवीयानां दिव्यशक्तीनां ह्रासोऽपि समजनि।[1] तासां ह्रासेन सूक्ष्मव्यवहिता पदार्था अज्ञेया अभूवन्। अतो ब्रह्माण्डस्य पिण्डस्य (=शरीरस्य) च कीदृशी रचनेति ज्ञातुं मानवा असमर्था समजायन्त। अत एव आधिभौतिकाधिदैविकाध्यात्मिक-प्रक्रियानुसारी वेदार्थोऽपि दुरूहः समभवत्। एतादृशे काले तात्कालिकैः साक्षात्कृतधर्मभिः परावरज्ञैर्ऋषिभिर्ब्रह्माण्डस्य पिण्डस्य च रचनां विज्ञापयितुम्, अथ चाधिदैविकस्याध्यात्मिकस्य च प्राचीनवेदार्थस्य सुरक्षायै यज्ञानां प्रकल्पनाऽकारि। यज्ञानां मूलभूतं प्रयोजनं दैवताध्यात्मयोर्विज्ञापनमेव वर्तते। एतस्मिन् विषये भगवता यास्केन – '**वाचं शुश्रुवां अफलामपुष्पाम्**[2]' इति ऋक्चरणस्य व्याख्यान उक्तम् – '**अर्थं वाचः पुष्पफलमाह याज्ञदैवते पुष्पफले देवताध्यात्मे वा**[3]' इति। अथर्ववेदेऽप्युक्तम् –'**तस्माद्वा ओदनात् त्रयस्त्रिंशतं लोकान् निरमिमीत प्रजापतिः। तेषां प्रज्ञानाय यज्ञान् असृजत्**[4]' इति।

भगवतो यास्कस्य मतानुसारं यज्ञदैवतयोर्ज्ञानं यथाक्रमं पुष्पफलस्थानीयम् अर्थात् यथा पुष्पाणि फलानां निष्पत्तौ कारणानि भवन्ति, तथैव याज्ञिकप्रक्रियायाः ज्ञानं दैवतज्ञाने (=ब्रह्माण्डविज्ञाने) कारणम्। यदा च दैवतज्ञानं सम्पद्यते, तदा तदेवाध्यात्मज्ञानदृष्ट्या पुष्पस्थानीयं सत् फलस्थानीयमध्यात्मज्ञानं सम्पादयति। अत एव ब्राह्मणग्रन्थेषु बहुत्र याज्ञिकप्रक्रियानुसारं मन्त्रं व्याख्याय इत्यधियज्ञम् इत्युक्त्वा अथाधिदैवतम्, अथाध्यात्मम् इत्यादिना निर्देशा उपलभ्यन्ते। तेन च अधियज्ञ- अधिदैवत – अध्यात्मप्रक्रियाणां पारस्परिकी समता निदर्शिता भवति। या चाथर्ववेदस्य

1. भ्रंश्यति तु कृतयुगे...........लोभः प्रादुरासीत्। ततस्त्रेतायां लोभादभिद्रोहः, अभिद्रोहाद् अनृतवचनम्, अनृतवचनाद् कामक्रोधमानद्वेषपारुष्याभिघात-भयतापशोकचिन्तोद्वेगादयः प्रवृत्ताः।। च० सं० विमानस्थाने – अ० 3
2. ऋ० सं० 10/71/5
3. निरुक्ते 1/2
4. अथर्व० सं० 11/3 (3), 52, 53

श्रुतिरुद्धृता तस्यां तु स्पष्टमेव तेषां (=लोकानां) प्रज्ञानाय यज्ञान् असृजत् इत्युक्तम्।

सन् 1990 तमे ख्रीष्टाब्दे नागप्रकाशकः, जवाहरनगर दिल्ली द्वारा प्रकाशिते शतपथब्राह्मणस्योपोद्घाते श्रीमता श्रीधरशर्मणा शतपथब्राह्मणोक्तकर्मणां प्रकृतिविकृतिविमर्शं कुर्वता यल्लिखितं तदत्रोपस्थाप्यते –

अथ शतपथोक्तकर्मजातसम्बन्धि विषयावगाहनं सुगमतया भवत्वेतदर्थं श्रौतकर्मणां प्रकृतिविकृतिभावविषये किञ्चिद्विमृश्यते। तथाहि –

कर्म्मणां प्रकृतीरनुक्रमिष्यामः। कर्मणां वैकृतानां कर्मणां विध्यादिविध्यंतवती प्रकृतिः, यत्र पुनर्विध्यादिमात्रमस्ति विध्यंतो नास्ति सा विकृतिः, इति '**गृह्यस्थालीपाकानां कर्म**[1]' इति सूत्रभाष्ये कर्कः। ताः प्रकृतीः क्रमेण कथयिष्यामः।

अथातः प्रकृतयः। अथेति मन्त्रब्राह्मणविवरणानन्तर्ये। अत इति हेत्वर्थे। अग्रे यज्ञानां वक्ष्यमाणतया तत्प्रकृतीनामावश्यकं कथनम्।।

(1) **पूर्णाहुतिराहुतीनाम्** – पूर्णाहुतिरिति कर्मणो नामधेयं तत्स्वरूपमग्न्याधेये आचार्येण प्रदर्शितं – 'निरूप्याज्यं गार्हपत्येऽधिश्रित्य स्रुक्स्रुवं च सम्मृज्योद्वास्योत्पूयावेक्ष्य गृहीत्वाऽन्वारब्ध एव ऽ सर्वत्र स्वाहेति[2]' एव ऽ सर्वत्रेति यत्राव्यक्ता जुहोति चोदना तत्राधिश्रयणादि प्रवर्तते। कुत एतत् जुहोति शब्दात् अव्यक्ततासामान्याच्चेति तत्रैव कर्कः। पूर्णाहुतिधर्माश्च अनुद्धताभ्यस्तमयाहुतौ विहिताः। तथा च श्रुतिः –'तदाहुर्यस्याहवनीयमनुद्धतमादित्योऽभ्यस्तमियात्किं तत्र कर्म का प्रायश्चित्तिः' इत्युपक्रम्य 'तमुपसमाधाय प्रतिपरेत्य गार्हपत्य आज्यमधिश्रित्योद्वास्योत्पूयावेक्ष्य चतुर्गृहीतमाज्यं गृहीत्वा

1. पा० गृ० सू० 1/1/1
2. का० श्रौ० सू० 4/10/5

समिधमुपसंगृह्य प्राङुदाद्रवत्यथाहवनीये समिधमभ्याधाय दक्षिणं जान्वाच्य जुहोति विश्वेभ्यो देवेभ्यः स्वाहेति[1]' इयं तु विहितधर्मका अग्न्याधेयोक्ता तु अविहितधर्मका, ततश्चोदनासारूप्येण ततो धर्मान् गृह्णाति। अत आचार्येण तदीया धर्मा इहोपदिष्टाः। तत्रान्वारंभणवरदाने न विहिते, अतस्तयोरनतिदेशः। वाग्यमोऽपि चैहेवेति, नातिदिश्यते इति '**तत्रैव वरं ददामीति वाग्विसर्जनम्**[2]' इति सूत्रभाष्ये कर्कः। इति पूर्णाहुतिस्वरूपम्। सा पूर्णाहुतिः अव्यक्तजुहोतिचोदना-नामाहुतीनां प्रकृतिर्बोध्या।

(2) **दर्शपूर्णमासाविष्टीनां दर्विहोमानाञ्च** - तथा च श्रौतसूत्रे '**दर्शपूर्णमासधर्मा इष्टिपशुषु सामर्थ्याद्दर्शनाच्चेति**[3]' '**दर्वीहोमाः पौर्णमासधर्मा जुहोत्यविशेषाज्जुहूदर्शनाच्चेति च**[4]' पौर्णमासशब्दश्च दर्शस्याप्युपलक्षणम्। दर्वीहोमानामपि अव्यक्तचोदनानां यजतीनामुपलक्षणम्। तथा चात्रैव सूत्रे कर्कः पौर्णमासशब्दश्च दर्शस्याप्युपलक्षणम्। पयः साधनकेषु हि द्रव्यसामान्यात्सान्नाय्यधर्मा इष्यन्ते। कुत एतत्, पौर्णमासधर्मा इति जुहोत्यविशेषात्। जुहोति यजत्योर्यतः अविशेषः। उभयत्र हि द्रव्यदेवतावत्वं, '**त्रैय्यम्बकान्निर्वपति रौद्रान्**' इति निर्वपतिशब्देनौषधमवगम्यते, सौर्यादिषु दृष्टत्वात्, तथाऽन्यत्र धानाभिर्जुहोति सक्तुभिर्जुहोति लाजैर्जुहोतीति द्रव्यविधानं, मान्त्रवार्णिक्यो देवताः तेनोभयत्र द्रव्यदैवतात्वात् यजतिजुहोत्योरविशेषः अधर्मकाश्च दर्वीहोमाः, धर्मापेक्षायां च

1. श० प० ब्रा० 12/4/4/6
2. का० श्रौ० सू० 4/10/6
3. का० श्रौ० सू० 4/3/2-3
4. का० श्रौ० सू० 6/10/17-18

सत्यां द्रव्यदेवतावत्वसामान्यात् पौर्णमासधर्मा इति युक्तरूपता, मारुतानि प्रकृत्य श्रूयते, 'कथमस्यैते पुरोऽनुवाक्यावन्तो याज्यावन्तो वषट्कृते स्रुचा हुता भवन्ति' इति प्रश्नपूर्वकमाह – '**एतेषां वै सप्तपदानां मारुतानां यानि त्रीणि प्रथमानि पदानि सा त्रिपदा गायत्री पुरोऽनुवाक्याऽथ यानि चत्वार्युत्तमानि सा चतुष्पदा त्रिष्टुब् याज्येदमेव कपुच्छलमयं दण्डः स्वाहाकारो वषट्कार एवमु हास्यैते पुरोऽनुवाक्यावन्तो याज्यावन्तो वषट्कृते स्रुचा हुता भवन्तीति**[1]' चयनप्रकरणे। श्रुत्यर्थः – एतेषां सप्तपदानां मारुतानामित्यत्र मारुतशब्देन तद्धोमसाधनभूताः शुक्रज्योतिश्चेत्यादयो मन्त्रा विवक्ष्यन्ते, ते च सप्तपदा भवन्ति 'अतश्च तेषां मन्त्राणां यानि त्रीणि प्रथमानि पदानि सन्ति तानि द्विपदा गायत्री, इयमेव पुरोऽनुवाक्या भवति, अथ यानि चत्वार्युपरितनानि सन्ति तानि चतुष्पदा त्रिष्टुप्, सैव याज्या भवति' इदमेवेति प्रसृतिरभिनयेन प्रदर्श्यते। कपुच्छलमिति स्रुङ्मुखमुच्यते। अयमिति बाहुदण्डः प्रदर्श्यते। एवं बाहुरेव स्रुग् इत्युक्तं भवति, स्वाहाकार एव वषट्कारो भवति। इत्थमुक्तप्रकारेण अस्याग्नेः यजमानस्य वा संबंधिन एते मारुताः पुरोऽनुवाक्यायाज्यावन्तो वषट्कृते स्रुचा हुता भवन्ति इदमेव कपुच्छलमयं दण्ड इति स्रुगनुग्रहः। एतेषां च पौर्णमासदृष्टानामनुग्रहं ब्रुवन् पौर्णमासधर्मित्वं दर्शयतीति कर्कः।

(3) **दर्शः पयोद्रव्याणाम्** – पयः साधनकेषु हि द्रव्यसामान्यात्सान्नाय्यधर्मा इष्यन्ते, इति, '**पौर्णमासधर्मा इष्टिपशुषु**[2]' इति सूत्रभाष्यस्थकर्कात्।

(4) **पशुश्चाग्नीषोमीयः पशूनामैन्द्राग्नसौर्यप्राजापत्यानाञ्च** – ज्योतिष्टोमान्तर्गत अग्नीषोमीयः पशुः ऐन्द्राग्नसौर्यप्राजापत्येति

---

1. श० प० ब्रा० 9/3/1/17
2. का० श्रौ० सू० 4/3/2

विकल्पितदैवतनिरूढपशोः तदितरेषां सौत्रामण्यादिसर्वश्रौतपशूनां च प्रकृतिः। प्रकारः समुच्चयार्थः। यत्तु दर्शपूर्णमासधर्मा इष्टिपशुष्विति सूत्रेण चास्य निरूढपशोः दर्शपूर्णमास-प्रकृतित्वमुक्तं, तत्तु निरूढपशोर्हविर्यज्ञत्वसामान्यात्। कुत एतत् निरूढपशुर्द्विविधः, हविर्यज्ञविधः सवविधश्चेति। तथा च श्रुतिः - **'हविर्यज्ञविधो वा अन्यः पशुबन्धः सवविधोऽन्यः सहैष हविर्यज्ञविधो यस्मिन् व्रतमुपनयति यस्मिन्नपः प्रणयति यस्मिन् पूर्णपात्रं निनयति यस्मिन् विष्णुक्रमान् क्रमयत्यथ हैष सवविधो यस्मिन्नेतानि न क्रियन्ते**[1]' इति। इत्येवं निरूढपशोर्द्वैविध्यम्, अतोऽस्य च प्राणिसाधनकत्वसामान्यात् अग्नीषोमीयविध्यन्त-ग्राहकत्वमिति कर्कोऽपि निरूढपशौ आद्यसूत्रविवरणात्प्रथमं उभयप्रकृतित्वं सिद्धान्तितवान्। अतः कर्कपादैर्दर्शपूर्णमासधर्मा इष्टिपशुष्विति सूत्रे इष्टिषु पशौ चेति द्रष्टव्यम् पश्वन्तरेषु हि अग्नीषोमीयधर्मप्राप्तिं वक्ष्यति अग्नीषोमीयदर्शनादिति।[2]

(5) **स्मार्तपशूनामपि अग्नीषोमीय एव प्रकृतिः** - तथा च श्रौतकल्पे 'अग्नीषोमीयात्पशुषु' इति सर्वत्र श्रौतस्मार्त-पशुषु अग्नीषोमीयप्रकृतिमुक्त्वा स्मार्तपशुषु शाखानियोजनं, वपां हुत्वा त्रीणि पंच सर्वाणि वाऽवद्यति न सर्वाण्येवेति सर्वाभावे शेषात्स्विष्टकृतः इत्याद्यपवादमाचार्यो वदति[3] यत्तु निरूढपशुबन्धमुररीकृत्य अग्नीषोमीयधर्मानुकथनं कृतमा-चार्येण तद्युक्तरूपम्। अग्नीषोमीयधर्माणां हि सौमिकैर्ध-र्मैरत्यन्तव्यतिषङ्गादिति कर्कः। अग्नीषोमीयः पशुः सर्वपशूनां प्रकृतिभूतोऽपि स्वयं सान्नाय्यविकृतिः, तत्रापि पयोविकृतिभूतः।

---

1. श० प० ब्रा० 11/7/2/1
2. का० श्रौ० सू० 6/10/14
3. का० श्रौ० सू० 6/10/29-32

(6) **सौत्य एकादशिनानाम्** – '**सौत्य अग्निष्टोमीयः सवनीयः पशुः एकादशिना वा विहृताः**[1]' इति द्वादशाहविहृतादीनां सर्वेषामेकादशिनानां पशूनां प्रकृतिः।

(7) **एकादशिनः पशुगणानाम्** – सूत्रत्रय्यामेकादशिन-शब्दोऽकारांतः पुमान्, एकादशिनेतिशब्देनाव्यवहृता अनेके यत्र पशवस्ते पशुगणाः, तेषामेकादशिनः पशुः प्रकृतिः। यथा वाजपेये सप्तदशप्राजापत्यपशुगणः। एवमितरेषां पशुगणानाम्।

(8) **वैश्वदेवं चातुर्मास्यानाम्** – तथा हाचार्यः '**वैश्वदेव-धर्माश्चातुर्मास्येषु वचनप्रवृत्तिभ्यामिति।**[2]'

(9) **सोमाऽवभृथोऽवभृथानाम्** – तथा हाचार्यः – '**सोमाच्चावभृथे सामप्रतिषेधात्**[3]' अवभृथ इति जातावेकवचनं, ततश्च वरुणप्रघाससौत्रामण्याद्यवभृथाः सर्वे सर्वेषामवभृथानां सौमिकोऽवभृथः प्रकृतिः।

(10) **प्रातः सवनं सवनानाम्** – '**सर्पणादिमाध्यन्दिनम्**'[4] '**समन्वारब्धनिष्क्रमादि करोत्यग्नीदग्नीनिति प्रैषात्**[5]' '**अत्र सर्पणमादित्यग्रहस्य प्राक् तृतीयसवनश्रुतेः**[6]' '**प्रातः सवनप्रभृत्यासंवादाच्छ्रुतेः शामित्रानुशासनप्रभृतीडान्तं कृत्वा पुरोडाशादि चेडाभक्षात्**[7]' इत्यादि, प्रातः सवनधर्माणामितरयोः सवनयोः समाम्नानात्, प्रातः सवनं प्रकृतिः। ऋतूनां भूयस्त्वापेक्षया सवनानामिति बहुवचनम्।

---

1. का० श्रौ० सू० 12/6/14
2. का० श्रौ० सू० 4/3/4
3. का० श्रौ० सू० 4/3/5
4. का० श्रौ० सू० 10/1/1
5. का० श्रौ० सू० 10/1/14
6. का० श्रौ० सू० 10/4/13
7. का० श्रौ० सू० 10/5/7

(11) **अंश्वदाभ्यौ ग्रहाणाम्** - द्वादशाहे विहितौ '**अपो निधायाऽंश्वदाभ्यग्रहणम्**[1]' '**बुभूषतोऽदाभ्यं गृह्णाति**[2]' इति सन्नियोगशिष्टौ एतत्संज्ञौ ग्रहौ, अंशुश्चादाभ्यश्चेति द्वन्द्वः। अनयोर्ग्रहणं सत्रादिषु विहितम्। तथा च द्वादशाहे सूत्रं - '**सत्र-सहस्त्र-सर्ववेदस-वाजपेय- राजसूय-विश्वजित्-सर्वपृष्ठेषु ग्रहणमवकाश्यश्चेत्**[3]' इति। एतौ अग्रिमग्रहाणां प्रकृतिः।

(12) **सुपर्णश्चितीनाम्** - श्रौतकल्पे षोडशसप्तदशाष्टादशेति अध्यायत्रिकोक्तः सुपर्णचित्यः गरुडाकृतिचित्योऽग्निः एकशतविधानां चित्याग्नीनां प्रकृतिः। तथा च तत्रैव - '**उत्तरेषु पुरुषोच्चयेनैवैकशतविधानात्**' '**यथाग्निवेदीष्टकाप्रमाणं**' '**अन्तः पात्यगार्हपत्ययोरिच्छन्निति**[4]' इति।

(13) **ज्योतिष्टोम एकाहानां द्वादशाहानाञ्च** - तथाऽऽहाचार्यः - '**ज्योतिष्टोमधर्मा एकाहद्वादशाहयोस्तद्गुणदर्शनात्**[5]' उत्पत्तिवाक्ये देवताऽनभिधानतया अव्यक्तचोदनाचोदितो ज्योतिष्टोमः अव्यक्तचोदनाचोदितोद्भिदादिवैकृतयागानां अव्यक्तत्वसामान्यात् प्रकृतिः। तत्रैतावान् विशेषः - एकाहेषु चत्वारो व्रात्यस्तोमाः षट् साद्यस्क्राः, चत्वारोऽग्निष्टुतश्च, तत्र प्रथमे व्रात्यस्तोमे, साद्यस्क्रे, अग्निष्टुति च ज्योतिष्टोमः प्रकृतिः। द्वितीयादित्रिषु व्रात्यस्तोमेषु प्रथमो व्रात्यस्तोमो प्रकृतिः। एवं द्वितीयादि साद्यस्क्रेषु प्रथमः साद्यस्क्रः प्रकृतिः। त्रिष्वग्निष्टुत्सु प्रथमोऽग्निष्टुत्प्रकृतिः। तथाऽऽहाचार्यः - '**प्रथमस्य**

1. का० श्रौ० सू० 12/1/6
2. का० श्रौ० सू० 12/5/15
3. का० श्रौ० सू० 12/5/13
4. का० श्रौ० सू० 16/8/20-22
5. का० श्रौ० सू० 12/1/1

**व्रात्यस्तोमसाद्यस्क्रेषु वचनात्**[1]' '**अग्निष्टुत्सु चैके**[2]' एके इति पूजार्थं, न तु विकल्पार्थम्। वचनादिति उच्यते अनेनेति वचनं नामातिदेशोऽयम्।

(14) **पूर्व उत्तरेषाम्** – अग्निष्टोमाः सप्त तद्यथा – (1) अग्निष्टोमः, (2) अत्यग्निष्टोमः, (3) उक्थ्यः, (4) षोडशी, (5) वाजपेयः, (6) अतिरात्रः, (7) आप्तोर्यामः। एषां मध्ये यः पूर्वः प्रथमः अग्निष्टोमः स उत्तरेषां षण्णां सोमानां प्रकृतिः। षडुत्तरे अग्निष्टोमविकाराः। तथाऽऽहाचार्यः – '**एष प्रथमः सोमः**[3]' '**षडुत्तरेऽत्यग्निष्टोमः उक्थ्यः षोडशी वाजपेयोऽतिरात्राऽऽप्तोर्यामः**[4]' इति एव प्रथमः सोम इति अग्निष्टोमस्य प्राथम्यात् उत्तरेषां षण्णां अग्निष्टोमाननुष्ठित्यनन्तरमनुष्ठानं, न ततः प्राक्। षडुत्तरे हि विकार प्रज्ञप्तिः, न तु क्रमबोधः। तेन षडुत्तरे षड् विकारा इत्यर्थः। तथा च तत्रैव कर्कः – उत्तरो हि विकारो भवति प्रकृत्यपेक्षया प्रकृतिश्च पूर्वेति। तत्रापि उत्तरेषां षण्णां मध्ये केषाञ्चित् क्रतुविकारत्वेऽपि संस्थाविकारत्वम्। उक्थ्यषोडश्यतिरात्रात्यग्निष्टोमानामग्निष्टोमविकारत्वम्। वाजपेयः षोडशिक्रतुपशूनां दर्शनात् षोडशिविकारः। आप्तोर्यामः अतिरात्रक्रतुतिरोह्न्यानां दर्शनात् अतिरात्रविकारः। अतः सोमविकृतित्वं संस्थाविकृतित्वञ्च। तेन स्वप्रकृत्यपेक्षया क्रतुत्वम्। ततश्च स्वातन्त्र्येणैषां क्रतुत्वेनानुष्ठानं क्रियते।

(15) **ज्योतिरतिरात्राणाम्** – अग्निष्टोमसंस्थः सौमिकदक्षिणो ज्योतिर्नामा द्वितीय एकाहः नवसप्तदशादिसर्व्वस्तोमान्तानां त्रयोदशानामहीनानामपि एकाहधर्मिणां अतिरात्राणां प्रकृतिः।

---

1. का० श्रौ० सू० 12/1/2
2. का० श्रौ० सू० 12/1/3
3. का० श्रौ० सू० 10/9/25
4. का० श्रौ० सू० 10/9/27

(16) **द्वादशाहः सत्राहीनानाम्** – तथा च श्रौतसूत्रं – '**द्वादशाहधर्मः सत्रेषु तद्गुणदर्शनात्**[1]' द्वादशरात्रादीनां शतोक्थ्यान्तानां संवत्सरावराणां सत्राणां द्वादशाहः प्रकृतिरिति।

'**अभिप्लवपूर्वं पुरस्ताद्विषुवत उपयन्ति पृष्ठ्यमुत्तरमिति**[2]' तथा '**पृष्ठ्यमुपरिष्टाद्विषुवतः पूर्व्वमुपर्यन्तीति चेति**[3]' पौर्वापर्यविधिपरे वाक्ये द्वादशाहिकपृष्ठ्यदर्शनादहीनानां च प्रकृतिः।

(17) **गवामयनं सांवत्सरिकादीनाम्** – गवामयनं संवत्सरसाध्यानां संवत्सरसत्रसाध्यानां महासत्राणां सारस्वतसत्राणां च प्रकृतिः, तथा च श्रौतसूत्रम् – '**संवत्सर प्रभृतीनि गवामयनप्रकृतीनि तद्गुणदर्शनादिति।**[4]'

वस्तुतो यज्ञानां विस्तारोऽग्निहोत्रादारभ्य सहस्रसंवत्सरसाध्ययज्ञपर्यन्तं वर्तते। शाखाब्राह्मणश्रौतसूत्रेष्वेषां सहस्रसंवत्सरसाध्यक्रतुपर्यन्तानां यज्ञानां विधिविधानमुपलभ्यते। उदाहरणार्थमिह कात्यायनश्रौतसूत्रे निर्दिष्टानां प्रमुखयज्ञानां निर्देशः क्रियते –

1. अग्न्याधानम् (अ० 4)
2. अग्निहोत्रम् (अ० 4)
3. दर्शपूर्णमासौ (अ० 2-3-4)
4. दाक्षायणयागः (अ० 4)
5. आग्रयणेष्टिः (अ० 4)
6. दर्विहोमः, क्रैडिनीयेष्टिः, आदित्येष्टिः, मित्रविन्देष्टिः (अ० 5)
7. चातुर्मास्यानि (अ० 5)

---

1. का० श्रौ० सू० 13/1/1
2. का० श्रौ० सू० 12/2/3/4
3. का० श्रौ० सू० 12/3/4
4. का० श्रौ० सू० 24/4/2

8. निरूढपशुबन्धः (अ० 6)
9. सोमयागः (अ० 7-11)
10. एकाहाः (अ० 12, 13)
11. द्वादशाहः (अ० 12)
12. सत्ररूपो द्वादशाहः (अ० 12)
13. गवामयनम् (अ० 13)
14. वाजपेयः (अ० 14)
15. राजसूयः (अ० 15)
16. अग्निचयनम् (अ० 16-17-18)
17. सौत्रामणिः (अ० 19)
18. अश्वमेधः (अ० 20)
19. पुरुषमेधः (अ० 21)
20. अभिचार-यागः (अ० 22)
21. अहीन-अतिरात्रः (अ० 23)
22. सत्राणि [द्वादशाहादारभ्य सहस्त्रसंवत्सरान्तानि] (अ० 24)
23. प्रवर्ग्यः (अ० 26)

अन्येषु श्रौतसूत्रेषु एतादृशानामेव न्यूनाधिकानां यागानां वर्णनमुपलभ्यते। श्रौतयागस्येतिहासस्यालोडनेनेदं ज्ञायते यद् सप्तहविर्यज्ञसंस्थाष्वग्न्याधान-नाम्नी संस्था प्रथमाऽस्ति। अस्याः संस्थायाः प्रमुखोऽर्थोऽयमस्ति अग्निपरिग्रहः। स्यार्ताग्न्याधानानन्तरमेवौपासनहोमः कर्तुं शक्यते। अद्यापि ये अग्निहोत्रं कुर्वन्ति ते श्रौताधानसंज्ञकसंस्थायाः सम्यक् परिपालनं कृत्वैवाग्निहोत्रं कुर्वन्ति। प्राचीनकाले दारकालादेवाग्नेरूपासना[1] प्रारभ्यते स्म। तदनन्तरं प्रथमपुत्रस्य मुखावलोकनानन्तरमेव श्रौताधानविधानेन श्रौताग्नेः परिग्रहः अग्निहोत्रहोमस्याचरणञ्चैषः नियमः प्रचलित आसीत्। अद्यापि स

1. 'आवसथ्यावधानं दारकाले, दायाद्यकाल एकेषाम्' पा० गृ० सू० 1/2/1-2

एव नियमः तदेव विधानं वर्तते। प्रमाणार्थमिह श्रौतवचनमुद्ध्रियते – **'जातपुत्रः कृष्णकेशः श्रौताग्निमादधीत'** इति।

श्रौताग्निपरिग्रहणानन्तरमेवाहिताग्निरूपेण द्विजानां प्रसिद्धिः भवितव्या, एषा प्रथा आसीत्। अत एवोक्तं यदग्न्याधानानन्तरमेकस्मिन्नेव वर्षे अग्निहोत्रीरूपेण यदि प्रसिद्धिर्न जाता कस्यचिदपि तर्हि एवं ज्ञातव्यं यदिदं कार्यमस्मभ्यं लाभप्रदं न भविष्यति। तेन तस्य कार्यस्य समाप्तिस्तत्रैव करणीयम्। एतदतिरिक्तमग्निपरिग्रहानन्तरं एकवर्षाभ्यन्तरे यदि धनस्य पुत्रस्य कलत्रस्य स्वेष्टबन्धोश्च वियोगो भवेत्तर्हि तेन परिगृहीतस्याग्नेर्विसर्जनं तदैव करणीयम्। तदनन्तरं पुनः विधिपूर्वकमग्निपरिग्रहं कृत्वा अग्रिमकार्यं सम्पादनीयम्, तस्मादेव श्रौतसूत्रकाराः पुनराधानस्य विधानं प्रस्तुतवन्तः।

अग्निहोत्रं यावत्केवलं यजमानस्यैकशाखानुसारं यज्ञीयकार्यं भवति अनन्तरं दर्शपौर्णमासादिष्टीनामवसरेऽन्यवेदानामपि समावेशः श्रौतक्रतुषु क्रियते। अस्मिन्नवसरे अग्निहोत्रियजमानाय ब्रह्माऽध्वर्युहोतृ-आग्नीध्रानां चतुर्णां ऋत्विजामावश्यकता भवति। आवश्यकतामिमां सम्पूर्तये एवान्यवेदानां गठबन्धनमावश्यकं भवति। यद्यपि यज्ञसंस्थाया इतिहासः शुष्कविधिना कठिननियमेन च पूर्णोऽस्ति, किन्तु तस्या परिधेः श्रद्धापूर्वकं सन्तरणे सति तस्मिन् इष्टिसिद्धिरपि दृश्यत एव। यथा चक्रव्यूहे सम्भ्रान्तः पुरुषः चक्रव्यूहनिर्मातारं स्मरति (दूषणार्थं स्मरति) किन्तु स एव पुरुषः तस्मात् चक्रव्यूहात् बहिरागत्य तस्य निर्मातुर्बुद्धेः प्रशंसां करोति। एवमेवास्याः यज्ञसंस्थायाः स्थितिर्वर्तते। तस्याः कठोरनियमं विधिञ्चावलोक्य यद्यपि तस्यां यज्ञसंस्थायां नीरसताया अनुभवो भवति तथापि एतादृशं कठिननियमेनाबद्धं यज्ञं श्रद्धापूर्वकं सम्पाद्य जनः प्रशंसनीयो भवत्येव नात्र काचित् विप्रतिपत्तिः। तथा चेष्टसिद्धिप्राप्तेः पूर्वाधिकारी अपि भवति।

मानवजातेः समाजस्य च हितसाधनाय संसारे यावन्ति साधनानि निर्मितानि सन्ति तेषु साधनेषु यज्ञसंस्था सदृशं न कमप्यन्यसाधनमिह विद्यते। हितकराणामनुष्ठानानां यावन्त्योपि विधय अद्यावधि

यावज्जगत्यवलोक्यते तेष्वग्निष्टोमः, महाव्रतम् सत्रानुष्ठानञ्च सर्वोत्कृष्टम्। वयं यज्ञेन किमपि विशिष्टं तथ्यं संसारस्य सम्मुखं स्थापयामः। विषयेऽस्मिन् श्रद्धाविश्वासयोरभावो भवतु नाम यत्खल्वावश्यकः, तथापि भारतभुवि उत्पन्नस्य उच्चात्युच्चस्य नास्तिकस्य मनसि यज्ञानुष्ठाने संलग्नं यजमानम्प्रति सामान्यतया आदरभावस्तु तिष्ठत्येव।

वैदिककालस्याध्यात्मिकाधिभौतिकाधिदैविकपरिस्थितिज्ञानाय यज्ञानां, यज्ञविधीनां, यज्ञनियमादीनां च ज्ञानमनिवार्यं भवति। एतज्ज्ञानं बिना वैदिककालस्य वास्तविकीं परिस्थितिं नावगन्तुं शक्यते। श्रौतयागविषयकं तथ्यमेतदवश्यमेव विज्ञापयति यत् एतज्ज्ञानाभावे एव जनाः प्रवदन्ति यद्ब्राह्मणाः समाजेषु स्वीयं वर्चस्वं स्थापयितुमेवेमं विषयमेतादृशं दुरूहं कृतवन्तः। वस्तुत अद्यतनीयः समाज, एतत्तथ्यमवगन्तुमनर्होऽस्ति तस्मादेव कारणात् समाजस्यानेके दुष्कृत्यप्रधानाः जनाः ब्राह्मणानां यज्ञकर्मणां विषये एवं दोषापवादमारोपयन्ति।

श्रौतयागेष्वार्त्विज्यमतिकठिनम्। यदि कश्चिज्जनः श्रौतयागेषु आर्त्विज्येच्छया सम्मिलितो भवितुमभिलषति तर्हि तस्मै वर्षपूर्वादेव तदर्थमभ्यासः करणीयो भवति। श्रौतयागेषु लघुप्रयोगः दर्शपौर्णमासयागो भवति, तदर्थमपि षाण्मासिकस्य पूर्वाभ्यासस्यापेक्षा भवति। अभ्यासं विना सफलं कर्मकाण्डं न साधयितुं शक्यते। यथा लोके नाटकस्य मञ्चनाय बहुदिनपूर्वादेवाभ्यासः कलाकारैः क्रियते एवमेवात्राप्यावगन्तव्यम्। **'अनभ्यासे विषं विद्या'** इति नीति सिद्धान्तानुसारमभ्यासस्य प्रामुख्यं तु वर्तत एव। एतद्वैज्ञानिकं रहस्यमविज्ञायैव पाश्चात्याः केचन भारतीयाश्चापि वैदिककर्मकाण्डस्योपेक्षां कुर्वन्तोऽनेके ग्रन्थाः विरचिताः, विरच्य च समाजे प्रचारितवन्तः यं ग्रन्थमधीत्य भारतीयानां मनसि एषः भ्रमः समुत्पन्नः यद् ब्राह्मणाः स्वोदरपूर्तये एव यज्ञानुष्ठानं कुर्वन्ति।

अनेन विधिना नान्यः कश्चिज्जीवेदन्यः तस्मात् अस्य कर्मकाण्डस्य प्रक्रियायां एतादृशं काठिण्यं ब्राह्मणैरेवोत्पादितमिति। अत एवास्य विषयस्य

वास्तविकता अद्यावधि यावदन्धकार एव तिष्ठति। वस्तुत उपर्युक्तविषयस्यावगाहनं कृत्वा यदि एतस्मिंन् विषये चिन्त्यते चेत् तदानीं किमपि अन्या एव परिस्थितिरूद्भवति।

यज्ञसंस्थायाः वास्तविकीं स्थितिं विज्ञापयितुं एतद्विषयं सर्वप्रथमं प्रक्षेपणीयम्भविष्यति यद्ब्राह्मणाः स्वीयं महत्वं वर्धनाय यज्ञनियमेषु विधिषु च काठिण्यमुद्बोधितवन्त इति। मनः सकासादेतत्तथ्यं पृथक्कृत्यैवैतस्मिन् विषये विचारः करणीयो भविष्यति। वस्तुतः यज्ञसंस्थासु त्रैवर्णिकाणामधिकारः शास्त्रसम्मत एवासीत्। तत्रापि **'यज्ञेन यज्ञमयजन्त'** इत्यादिभिर्वाक्यैः सर्वलोकोपकारित्वं किं वा उच्च – नीच–जातिव्यवस्थायाः निन्दित–प्रशंसनीय–परिवारवादस्य च विचारो न भवति। यथा सूर्यः चाण्डालस्य गृहेऽपि स्वीयं प्रकाशमनुयच्छति यथाऽन्यत्र, तद्वदेव यज्ञोऽपि समस्तस्य संसारस्य कल्याणाय क्रियते। तदुक्तमैतरेयब्राह्मणे – **'यज्ञोऽपि तस्यै जनतायै कल्प्यते'**[1] अर्थात् जनकल्याणायैव यज्ञानुष्ठानं क्रियते। ब्राह्मणोऽपि जनः, क्षत्रियोऽपि जनः, वैश्योऽपि जनः, शूद्रोऽपि जनः कस्मिंश्चिदपि वर्णे जन्म गृह्णीयात् स जन एव भवति। न क्वचिदप्येवमुक्तं यत् ब्राह्मणकल्याणाय क्षत्रियकल्याणायैव यज्ञो भवति। सर्वत्र एवमेवोक्तं यज्जगत्कल्याणाय विश्वशान्तये यज्ञोऽनुष्ठीयते। वैदिकमन्त्रेषु न कस्यचिद् वर्णविशेषस्य विषये किमपि विशिष्टं तथ्यमुक्तमस्ति। परमेतत्तु चिन्तनीयमेव यत् ब्राह्मण एव कठिनतपश्चर्यां कर्तुं सर्वदा समर्थोऽभवत्। न केनापि अन्येन तादृशमाचरणं विहितम्। क्षत्रियेष्वपि विश्वामित्रस्यैव नाम केवलं श्रूयते तादृशीं तपश्चर्यायाम् विषये। अतः सुनिश्चितमेतद्यद् यज्ञः समस्तचराचरप्राणिनां कल्याणायोपकाराय चानुष्ठीयतेति। वर्त्तमानयुगे केषाञ्चन यज्ञानामेवानुष्ठानं प्रचलितमस्ति शेषास्तु विरला एवावलोक्यन्ते। यथामति तेषां प्रचलितानामप्रचलितानां श्रौतयागानां तालिकाऽत्राधः प्रस्तूयते। यथा –

---

1. ऐ० ब्रा० 2/1

**प्रचलिताः श्रौतयागाः**

1. अग्निहोत्रहोमः
2. पौर्णमासयागः
3. चातुर्मास्ययागः
4. सौत्रामणीयागः
5. अग्निष्टोमयागः
6. उक्थ्ययागः
7. अतिरात्रयागः
8. आप्तोर्यामयागः
9. सर्वपृष्ठाप्तोर्यामयागः
10. साद्यस्क्रः
11. स्वर्गसत्रम्
12. पिण्डपितृयज्ञः
13. अग्निचयनयागः
14. सुपर्णचितिः
15. दर्शयागः
16. निरूढपशुबन्धः
17. कौकिलसौत्रामणीयागः
18. अत्यग्निष्टोमयागः
19. षोडशीयागः
20. वाजपेययागः
21. मित्रविन्दायागः
22. साग्निचित्सर्वपृष्ठाप्तोर्यामयागः
23. नक्षत्रसत्रम्
24. विश्वजिदतिरात्रः
25. श्येनचितिः

**अप्रचलिताः श्रौतयागाः**

1. दाक्षायणः
2. महाव्रतम्
3. द्विरात्रः
4. चतूरात्रः
5. गर्गत्रिरात्रः
6. पञ्चरात्रः
7. सप्तरात्रः
8. नवरात्रः
9. एकादशरात्रः
10. चतुर्दशरात्रः
11. सप्तदशरात्रः
12. चतुर्विंशतिरात्रः
13. द्वात्रिंशद्रात्रः
14. षट्त्रिंशद्रात्रः
15. संवत्सरसत्रम्
16. अश्वमेधः
17. ब्राह्मणसवः
18. ओदनसवः
19. अग्निष्टुत्
20. सूर्यष्टुत्
21. सर्वतोमुखः
22. पौण्डरीकः
23. द्वादशाहः
24. त्रिरात्रः
25. व्युष्टिद्विरात्रः

26. जामदग्न्यः
27. षड्रात्रः
28. अष्टरात्रः
29. दशरात्रः
30. त्रयोदशरात्रः
31. पञ्चदशरात्रः
32. विंशतिरात्रः
33. त्रिंशद्रात्रः
34. त्रयस्त्रिंशद्रात्रः
35. एकोनपञ्चाशद्रात्रः
36. गवामयनसत्रम्
37. राजसूयः
38. गोसवः
39. पञ्चशारदीयः
40. इन्द्रष्टुत्
41. विधनः
42. लोष्ठचितिः, समूह्यपुरीषचितिः।

उपर्युक्तान्येतानि प्रचलितान्यप्रचलितानि च श्रौतानुष्ठानानि सन्त्युल्लिखितानि। साम्प्रतमेषु केचनानुष्ठीयन्ते केचन स्मर्यन्ते चैव। तत्रापि समेषामपि यज्ञानां प्रामाणिकी पद्धतिरप्यद्यत्वे नोपलभ्यते तस्मादेतेषामनुष्ठानं पद्धतेरभावात् साक्षादेव न कर्तुं शक्यते। संहिता–ब्राह्मण–श्रौतसूत्रेषु यद्यपि सर्वेषां विषये चर्चा वर्तत एव। प्रकृतेऽस्मिन् निबन्धे प्रकृतियज्ञानां सविधिनिरूपणं करणीयमस्ति एतद्विचिन्त्य तावत्किञ्चिद्ब्रूमः

पूर्वं यदुक्तं सर्वेऽप्येते श्रौतयज्ञाः मूलरूपेण त्रिधा विभक्तास्सन्ति। ते च विभागाः होम- इष्टि - सोमसंज्ञका उक्ताः। तदनुसृत्यैवात्र तेषां विधयः प्रस्तूयन्ते। ते यथा –

1. समस्तानां होमानां प्रकृतिरग्निहोत्रम्।

2. समस्तानामिष्टीनां प्रकृतिर्दर्शपूर्णमासौ।
3. समस्तानां सोमयागानां प्रकृतिरग्निष्टोमः।

एवमुपक्रम्य प्रथमं होमानां प्रकृतिभूतमग्निहोत्रं निरूप्यते।

# 1. अग्निहोत्रम्

वेदोदितानि सर्वाण्यपि श्रौतकर्माणि कृतदारेणाहिताग्निानुष्ठेयानि इति शास्त्रसिद्धान्तः। आहिताग्निस्तु विधिवत् श्रुतिविहितमाधानं योऽनुतिष्ठति स एव भवति। अतस्तदेव पूर्वं निरूप्यते।

**अग्न्याधेयम्**

**'आधानं त्रिविधम् - होमपूर्वाधानम्, इष्टिपूर्वाधानम्, सोमपूर्वाधानञ्चेति।**[1]' तत्र, अग्निहोत्रारम्भं करिष्यन् ततः पूर्वं यदाधानं करोति तद्धोमपूर्वाधानम्। दर्शपूर्णमासेष्ट्यारम्भात् पूर्वं क्रियमाणमिष्टिपूर्वाधानम्। सोमयागारम्भात् पूर्वमनुष्ठीयमानं सोमपूर्वाधानम्।

**'वसन्ते ब्राह्मणोऽग्नीनादधीत'** इति श्रुत्युक्तत्वात् आधानस्य ब्राह्मणकर्तृकस्य वसन्तर्तुरेव कालो विहितस्तदर्थं कस्मिंश्चित् यथोदितनक्षत्रादियुते काले यथावदग्नीनाधाय साङ्गस्य आधानस्य परिसमाप्तिदिन एव काले सायमग्निहोत्रमारभेत। तद्दिनप्रभृति प्रतिदिनं सायं प्रातश्चाग्निहोत्रं जुह्वादासीत्। तदिदं होमपूर्वाधानम्।

तत्र आदावाधानार्थं यजमानेन सङ्कल्पं कृत्वा ऋत्विग्वरणे कृते, अध्वर्युः शमीवृक्षस्योपरि यः प्ररूढोऽश्वत्थवृक्षः तस्मादेकां शाखां छित्वा, तां द्विधा कृत्वा, अरणिद्वयं ताभ्यामेव सम्पाद्य, अरणी ते युगपदेव आधानदेशं प्रत्याहरेत्। पूर्वसम्पादिते वा ते तत्र आहरेत्। ते च चतुरङ्गुलोन्नते द्वादशाङ्गुलविस्तीर्णे षोडशाङ्गुलायते अनातपशुष्के भवतो बौधायनमतात्।[2]

---

1. यज्ञतत्त्वप्रकाशे प्रथमे पृष्ठे।
2. द्रष्टव्य बौ० श्रौ० सू० 2/6

26. जामदग्न्यः
27. षड्रात्रः
28. अष्टरात्रः
29. दशरात्रः
30. त्रयोदशरात्रः
31. पञ्चदशरात्रः
32. विंशतिरात्रः
33. त्रिंशद्रात्रः
34. त्रयस्त्रिंशद्रात्रः
35. एकोनपञ्चाशद्रात्रः
36. गवामयनसत्रम्
37. राजसूयः
38. गोसवः
39. पञ्चशारदीयः
40. इन्द्रष्टुत्
41. विधनः
42. लोष्ठचितिः, समूह्यपुरीषचितिः।

उपर्युक्तान्येतानि प्रचलितान्यप्रचलितानि च श्रौतानुष्ठानानि सन्त्युल्लिखितानि। साम्प्रतमेषु केचनानुष्ठीयन्ते केचन स्मर्यन्ते चैव। तत्रापि समेषामपि यज्ञानां प्रामाणिकी पद्धतिरप्यद्यत्वे नोपलभ्यते तस्मादेतेषामनुष्ठानं पद्धतेरभावात् साक्षादेव न कर्तुं शक्यते। संहिता–ब्राह्मण–श्रौतसूत्रेषु यद्यपि सर्वेषां विषये चर्चा वर्तत एव। प्रकृतेऽस्मिन् निबन्धे प्रकृतियज्ञानां सविधिनिरूपणं करणीयमस्ति एतद्विचिन्त्य तावत्किञ्चिद्रूमः

पूर्वं यदुक्तं सर्वेऽप्येते श्रौतयज्ञाः मूलरूपेण त्रिधा विभक्तास्सन्ति। ते च विभागाः होम– इष्टि – सोमसंज्ञका उक्ताः। तदनुसृत्यैवात्र तेषां विधयः प्रस्तूयन्ते। ते यथा –

1. समस्तानां होमानां प्रकृतिरग्निहोत्रम्।

2. समस्तानामिष्टीनां प्रकृतिर्दर्शपूर्णमासौ।
3. समस्तानां सोमयागानां प्रकृतिरग्निष्टोमः।

एवमुपक्रम्य प्रथमं होमानां प्रकृतिभूतमग्निहोत्रं निरूप्यते।

## 1. अग्निहोत्रम्

वेदोदितानि सर्वाण्यपि श्रौतकर्माणि कृतदारेणाहिताग्निानुष्ठेयानि इति शास्त्रसिद्धान्तः। आहिताग्निस्तु विधिवत् श्रुतिविहितमाधानं योऽनुतिष्ठति स एव भवति। अतस्तदेव पूर्वं निरूप्यते।

### अग्न्याधेयम्

**'आधानं त्रिविधम् - होमपूर्वाधानम्, इष्टिपूर्वाधानम्, सोम-पूर्वाधानञ्चेति।**[1]' तत्र, अग्निहोत्रारम्भं करिष्यन् ततः पूर्वं यदाधानं करोति तद्धोमपूर्वाधानम्। दर्शपूर्णमासेष्ट्यारम्भात् पूर्वं क्रियमाणमिष्टिपूर्वाधानम्। सोमयागारम्भात् पूर्वमनुष्ठीयमानं सोमपूर्वाधानम्।

**'वसन्ते ब्राह्मणोऽग्नीनादधीत'** इति श्रुत्युक्तत्त्वात् आधानस्य ब्राह्मणकर्तृकस्य वसन्तर्तुरेव कालो विहितस्तदर्थं कस्मिंश्चित् यथोदितनक्षत्रादियुते काले यथावदग्नीनाधाय साङ्गस्य आधानस्य परिसमाप्तिदिन एव काले सायमग्निहोत्रमारभेत। तद्दिनप्रभृति प्रतिदिनं सायं प्रातश्चाग्निहोत्रं जुह्वादासीत्। तदिदं होमपूर्वाधानम्।

तत्र आदावाधानार्थं यजमानेन सङ्कल्पं कृत्वा ऋत्विग्वरणे कृते, अध्वर्युः शमीवृक्षस्योपरि यः प्ररूढोऽश्वत्थवृक्षः तस्मादेकां शाखां छित्वा, तां द्विधा कृत्वा, अरणिद्वयं ताभ्यामेव सम्पाद्य, अरणी ते युगपदेव आधानदेशं प्रत्याहरेत्। पूर्वसम्पादिते वा ते तत्र आहरेत्। ते च चतुरङ्गुलोन्नते द्वादशाङ्गुलविस्तीर्णे षोडशाङ्गुलायते अनातपशुष्के भवतो बौधायनमतात्।[2]

---

1. यज्ञतत्त्वप्रकाशे प्रथमे पृष्ठे।
2. द्रष्टव्य बौ० श्रौ० सू० 2/6

चतुर्विंशत्यङ्गुले इति कात्यायनपक्षः। तयोरेका अधरारणिः, अपरोत्तरारणिरित्युच्यते।

तत आहवनीयादिषु कुण्डेषु क्षेपणायाष्टपार्थिवान् वानस्पत्यांश्च सम्भारान् तस्मात् तस्मात् स्थानात् वृक्षाच्चाहृत्य, एकस्मिन् पात्रे प्रज्ञातान् तान्निदध्यात्।[1]

तत आहवनीयाद्यग्नीनां गृहनिर्माणम्। तत्र गार्हपत्यस्य वेदेः पश्चिमतः पृथक् गृहम्। आहवनीयाग्नेः पृथक्। तयोरन्यतरस्मिन् दक्षिणाग्नेः स्थानम्। आहवनीयाग्नेः पुरतः सभ्याग्नेः। तस्य पुरतः आवसथ्यस्य। इदानीन्तनास्तु याज्ञिकाः स्थानाभावाद्यसौकर्येण एकस्मिन्नेव अपवरके त्रयाणां पञ्चानां वा अग्नीनां खररूपान् कुण्डान् निर्माय तत्र तान् स्थापयन्ति।

ततो यजमानः क्षौरकर्मादिकं कारयित्वा पत्नी चापि नखकृन्तनादिकं कारयित्वा स्नात्वा क्षौमवस्त्रं परिधाय, अध्वर्युश्च अपराह्णे यजमानस्यौपासनाग्नेरर्धं पृथक्कृत्य गार्हपत्याग्नेः पश्चान्निधाय, प्रज्ज्वाल्य, ब्रह्मौदनपाकार्थं तण्डुलान्निरूप्य,[2] जलपूर्णे महति पात्रे प्रक्षिप्य पचेत्।[3] पक्वमन्नमुद्वास्य, अग्नौ दर्व्या आहूय, अवशिष्टमोदनं चतुर्धा विभज्य चतुर्भ्यो अध्वर्यवादिभ्यो ऋत्विग्भ्यो दद्यात्। पात्रे च किञ्चिदवशेषयेत्।

यजमानस्तस्यां रात्रौ व्रतग्रहणं कृत्वा वीणावेणुवादनादिभिः जागरणं कुर्यात्। तमग्निमिन्धनादिप्रक्षेपेण सर्वां रात्रिं प्रज्ज्वाल्य रक्षेत्। ततः प्रातरूषः काल एव तस्मिन्नग्नावरणी पूर्वसम्भृते प्रतप्य, तमग्निं शमयित्वा, यजमानहस्तेऽरणी प्रयच्छेत्। यजमानश्चारणीं हस्ते प्रतिगृह्य, अभिमन्त्र्य यावन्मथनारम्भं स्वहस्त एव धारयन्नासीत। तत अध्वर्युर्गार्हपत्यायतनस्योद्धननावोक्षणादि कृत्वा, पूर्वस्थापिताः सिकता गृहीत्वा ताः समशो

1. अष्टसम्भाराः यथा (1) सिकता, (2) ऊषरभूमिगता मृत् ऊषा, (3) आखुकरीषम्, (4) वल्मीकवपा, (5) सूदः (अशोष्यस्य जलाशयस्य मृद्), (6) वराहविहतम्, (7) शर्कराः (क्षुद्रपाषाणाः), (8) हिरण्यञ्च।
2. ब्राह्मणानां ऋत्विजां भोजनाय यः पक्व ओदनः स ब्रह्मौदनः।
3. चतुश्शरावपरिमितान् जलपूर्णे महति पात्रे।

द्वेधा विभज्य, एकमर्धं पुनर्द्वेधा विभज्य एकं भागं गार्हपत्यायतने, एकं च दक्षिणाग्न्यायतने प्रक्षिपेत्। अवशिष्टमर्धं त्रेधा विभज्य, आहवनीय - सभ्यावसथ्यायतनेषु प्रक्षिपेत्। केचित् सभ्यावसथ्यौ न आदधते। अस्मिन् पक्षे तस्यार्धस्य आहवनीय एव निर्वपणं कार्यम्।

## गार्हपत्याधानम्

एवमुपर्युक्तप्रकारेणेतरानपि पार्थिवान् सम्भारान् विभज्य, तेषु तेष्वायतनेषु निधाय तदुपरि सप्त वानस्पत्यानपि सम्भारान् न्युप्य,[1] तदुपरि हिरण्यं निवपेत्। ततः पूर्वशमितस्य अग्नेः भस्म अपोह्य, तदुपरि अरणी निक्षिप्य तत्समीपे श्वेतमश्वमेकं बद्ध्वा अरणी मन्थेत्। ततोऽग्नावुत्पन्ने सति यजमानो वरमध्वर्यवे दद्यात्। यत्र तत्र सामान्यतो वरो देयत्वेन विहितस्तत्र सर्वत्र गौरेवाभिप्रेता। गामेकां दद्यादिति यावत्। गवाभावे तन्मूल्यं निष्कपरिमाणं सुवर्णं वा देयम्। ततोऽध्वर्युर्मथनजातमग्निं करीषकाष्ठशकलप्रक्षेपादिना वर्धयित्वा वेदेः पश्चिमभागावस्थिते गार्हपत्यार्थे कुण्डे पूर्वनिर्मिते स्थापयेत्। इदं गार्हपत्याधानम्। ततो ब्रह्मा सामगानं कुर्यात्, न वा।

## दक्षिणाग्न्याधानम्

ततः सूर्यस्य अर्धोदयसमये गार्हपत्यं प्रज्ज्वाल्य, तत्र अश्वत्थकाष्ठा-न्याधाय, प्रदीप्तानि तान्यंशतो गृहीत्वा, सिकताभिरुपसंगृह्य उपर्युद्धृत्य हस्तेन धारयन्नध्वर्युस्तिष्ठेत्।[2] तदा आग्नीध्रो लौकिकमग्निं यतः

---

1. वार्क्षाः सम्भाराः यथा - अश्वत्थकाष्ठम्, उदुम्बरकाष्ठम्, पलाशकाष्ठम्, शमीकाष्ठम्, विकङ्कत काष्ठम्, अशनिहतवृक्षशकलम्, पद्मपत्रम् च सप्त।
2. आहवनीयाधानार्थं प्रज्वलितात्, गार्हपत्याग्नेः कञ्चित् भागमादाय पात्रे कस्मिंश्चिन्निधाय साग्निं तत् पात्रं स्वहस्ते गृहीत्वा तिष्ठत्यध्वर्यौ आग्नीध्रो दक्षिणाग्निमादध्यादित्यापस्तम्बः। 5/13/8 श्रौ० सू० आवनीयमाधाय तत्समनन्तरमध्वर्युरेव दक्षिणाग्निमादध्यादिति कात्यायनः।

कुतश्चिदानीय, गार्हपत्याद्वा गृहीत्वा मथित्वा वा दक्षिणाग्न्यायतने सम्भाराणां पूर्वनिहितानामुपरि निदध्यात्। इदमेव दक्षिणाग्न्याधानम्। अत्राहवनीयस्योपर्युद्धरणकाले ब्रह्मा वामदेव्यं सामं गायेत्, न वा।

## आहवनीयाधानम्

ततोऽध्वर्युप्रभृतयः ऋत्विजः कञ्चन अश्वं पूर्वं चालयन्तः, आहवनीयदेशं प्रति प्राञ्चो गच्छेयुः। तेषां दक्षिणभागे ब्रह्मा रथचक्रं त्रिवारं परिवर्तयेत्। अश्व आहवनीयायतनस्य प्राग्भागे तिष्ठेत्। तेन प्रत्यङ्मुखेन आहवनीयसम्भारान् आक्रमयेत्। ततो ब्रह्मणि साम गायति सत्याहवनीयायतनस्य पुरस्तात् प्रत्यङ्मुखस्तिष्ठन्नेव अध्वर्युराहवनीयमादध्यात्। एवं त्रिष्वग्निष्वाहितेषु आज्यहोमेन काष्ठैश्चाग्नीन् वर्धयेयुः।

## सभ्यावसथ्याग्न्योराधानम्

ततो लौकिकाग्निना अरणिमथिताग्निना वा[1] सभ्याग्निमावसथ्याग्निञ्चादध्यात्। ततोऽश्वत्थवृक्षीयास्तिस्रस्तिस्रः समिधः शमीवृक्षीयाश्च तिस्रस्ता एकैकस्मिन् अग्नावादध्यात्। ततो मन्त्रवर्जमग्निहोत्रं जुहुयात्।

एवमुपर्युक्तप्रकारेण कृताधानः त्रैवर्णिकः आहिताग्निपदवाच्यो भवति। तस्यैव सपत्नीकस्य श्रौतकर्मस्वधिकारः। वेदेषु सहस्राणि श्रौतकर्माणि विहितानि, तेषु अग्निहोत्रमेव प्रथमपातीति तस्यैव स्वरूपं विव्रियते। तच्च त्रैवर्णिकेनावश्यकर्तव्येषु नित्यकर्मसु परिगणितं सूत्रकारैः। अत एव च यावज्जीवमनुष्ठेयम्। अस्य कर्मणः सायमुपक्रमः (आरम्भः), प्रातरपवर्गः (समाप्तिः)। एवञ्च सायं प्रातरिति कालद्वयानुष्ठानादेकं कर्म निष्पन्नं भवति। तत्र सायङ्काले यदा सूर्यरश्मयः भूभागं परित्यज्य वृक्षाग्र एव प्रकाशमाना दृश्यन्ते तदा सायंहोमाः, प्रातः काले प्राच्यां दिशि यदा रश्मय आविर्भूता भवन्ति तदा च प्रातर्होमा अनुष्ठेयाः।

---

1. का० श्रौ० सू० 4/9/18

## अग्निहोत्रे उदितानुदितहोमिभेदः

तत्र केचिदुदितहोमिनः केचिच्चानुदितहोमिनः। तेषु बह्वृचाः कातीयाः छन्दोगाश्चानुदितहोमिनः। कठास्तैत्तिरीयाः मैत्रायणीयाश्चोदितहोमिनः। सूर्योदयादनन्तरं यच्छाखिनोऽग्निहोत्रं कर्तव्यतया विहितं स उदितहोमी। ततः पूर्वं तत कुर्वाणा अनुदितहोमिनः। अग्निप्रणयनं परं सर्वेषामुदयास्तमययोः पूर्वमेव। उदयादस्तमयाच्च पूर्वमेव गार्हपत्यादग्निमुद्धृत्य कुण्डेषु स्थापयित्वा प्रज्ज्वलेत्। ततोऽनुदय उदये वा स्वसूत्रानुसारमग्निहोत्रमनुतिष्ठेत्।

## अनुष्ठानप्रकारः

सायमग्निहोत्रार्थं सङ्कल्प्य[1] उपवेषेण गार्हपत्यादग्निं ज्वलन्तमुद्धृत्य, तं दक्षिणाग्नेरायतने तूष्णीं स्थापयित्वा, पुनरपि गार्हपत्यादग्निमुद्धृत्य तं मन्त्रेण आहवनीये स्थापयेत्। ततो यजमान इध्मकाष्ठानि स्वयमाहृतानि त्रिष्वप्यग्निषु क्रमेण निदध्यात्। ततोऽग्नीन् गन्धपुष्पादिभिरलङ्कृत्य, उदगग्रैः प्रागग्रैश्च दर्भैः (कुशाभिः) परिस्तीर्य, या यजमानस्य अग्निहोत्री गौः[2] तां विहारस्य[3] दक्षिणत आनीय अवस्थाप्य सूर्यास्तादनन्तरं तां दुग्ध्वा[4] दुग्धं पयः श्रपणार्थायां कुम्भ्यां निनीय, आहवनीयगार्हपत्यदक्षिणाग्नीन् क्रमेण जलेन परिषिच्य, गार्हपत्यादारभ्याहवनीयपर्यन्तम् अविच्छिन्नामुदकधारां वेद्यां प्रस्नाव्य, गार्हपत्याग्रे कांश्चन अङ्गारान् पृथक्कृत्य तदायतनाद्बहिः वायव्यकोणे तान्निक्षिप्य, तदुपरि अग्निहोत्रार्थं पयः पूर्णां कुम्भीं निक्षिप्य, तत् पयः श्रपयेत्। यस्मिन् पात्रे दोहनं कृतं तत् पात्रं प्रक्षाल्य, तज्जलं

---

1. अत्रामुकमासे अमुकपक्षे अमुकतिथौ अमुकवासरे, अमुकगोत्र, अमुकशर्माऽहं मम सपत्नीकस्य आत्मसंस्कारार्थं श्री परमेश्वरप्रीत्यर्थं सायं प्रातरग्निहोत्रहोमं करिष्ये। तत्रामुकद्रव्येण (वा प्रातः) अग्निहोत्रहोमं करिष्ये।
2. यस्याः पयो दुग्ध्वा अग्निहोत्रं क्रियते सा अग्निहोत्री गौः।
3. विहारो यज्ञानुष्ठानस्थानम्।
4. का० श्रौ० सू० 4/14/1

पात्रस्थदुग्धमिश्रमन्यद्वा शुद्धजलं स्रुव[1] आनीय, तत कुम्भ्यां प्रतिषिच्य त्रिः पर्यग्नि कृत्वा[2] वर्त्मकरणेन[3] प्रागुद्वास्य, त्रिर्भूमौ तत् प्रतिष्ठाप्य, पूर्वं गार्हपत्यादुद्धृतानङ्गारान् पुनस्तस्मिन्नेव प्रतिक्षिप्य, स्रुवमग्निहोत्रहवणीं च गृहीत्वा ते आहवनीये प्रतितप्य, सम्मृश्य, कुम्भीतः पयो गृहीत्वा, अग्निहोत्रहवण्यां क्षिपेत्। एवं चतुर्वारं क्षेप्तव्यम्। तत् हविरुन्नयनमित्युच्यते। उन्नीतं तत् पयः गार्हपत्यस्य पश्चिमे भागे स्थापयित्वा गार्हपत्ये स्वं हस्तं प्रताप्य, तेन तत् पयः सम्मृश्य, प्रादेशमात्रीं (नवाङ्गुलिपरिमाणः प्रादेशः) पलाशसमिधमेकां, द्वे, तिस्रो वा अग्निहोत्रहवण्या (यया अग्निहोत्रं हूयते सा जुह्वाकारा अग्निहोत्रहवणी) उपरि धारयन् गार्हपत्यस्योपरिभागेन ता आहवनीयसमीपे नयन्, आहवनीयस्य पश्चिमे भागे सादयित्वा, अप उपस्पृश्य, ततस्ताः समिधः (एका, द्वे, तिस्रो वा यथापूर्वं गृहीताः) आहवनीय आधाय, अग्निहोत्रहवणीस्थं पय आहवनीये जुहुयात्। सा अग्निहोत्रस्य प्रथमा आहुतिः। सा अग्निदेवत्या।

ततः स्रुगग्रात् पयोलेपं हस्तेन गृहीत्वा भूमौ निमृज्य अग्निहोत्रहवणीं भूमौ निक्षिप्य, गार्हपत्यं समीक्ष्य, पुनस्तां गृहीत्वा द्वितीयामाहुतिं जुहुयात्। सा प्रजापतिदेवताका एवं प्रातरप्याहुतिद्वयं होतव्यम्। तत्र प्रथमा सूर्यदेवत्या। द्वितीया प्रजापतिदेवताका इमाश्चतस्र आहुतयः अग्निहोत्रे प्रधानभूताः। अमूषां चतसृणामाहुतीनां मध्ये सायंकालीनप्रथमाहुतेरग्निदेवत्यत्वात् तदादायैव सर्वासामाहुतीनामग्निहोत्रनामत्वं छत्रिन्यायेन (बहूनां मध्ये एकस्यापि तद्विशिष्टत्वे सति तदादाय सर्वेषु तत्सम्बद्धेषु तच्छब्दप्रयोगः छत्रिन्यायः)।[4] इदं च आपस्तम्बादियाजुर्वैदिकमतेन।[5]

---

1. वर्तुलपुष्करो द्रव्याकारः स्रुवः।
2. कुम्भ्या उपर्यङ्गारैः परितो भ्रामणं पर्यग्निकरणम्।
3. अग्निसमीपे उद्वासितां कुम्भीं भूमौ निक्षिप्य, तथैव प्राग्देशं प्रति कर्षेत्। तदाकर्षमार्गः कृष्णवर्णो भवति। स व्यापारो वर्त्मकरणमित्युच्यते।
4. पू० मी० 1/4/19
5. आप० श्रौ० सू० 6/13/1-9

## अग्न्युपस्थानं लेपभक्षश्च

एवमुक्तप्रकारेण होमान् हुत्वा, अग्नीन् परिषिच्य, आहवनीयस्य दक्षिणभागेऽवस्थाय, अग्नीनुपतिष्ठेत। ततो वेदिमध्येऽग्निहोत्रहवर्णीं निधाय लेपं होमावशिष्टं भक्षयित्वा, आचम्य, द्विः स्रुचं निर्लिह्य। निर्लेहनं नाम पात्रगतस्य पयसो जिह्वाग्रेण पात्रस्पृष्टेन चूषणम्। तच्च कलियुगे निषिद्धमिति नेदानीं याज्ञिकैरनुष्ठीयते, हस्तं प्रक्षाल्य, आचम्य, ततो जलेन तां पूरयित्वा तयैवाचम्य, अग्निहोत्रहवर्णीं दर्भैः संशोध्य प्रक्षालयेत्। ततः पुनस्तां पूरयित्वा तज्जलं चतसृष्वपि दिक्षु हस्तेन व्युत्सिञ्चेत् तस्यै तस्यै देवतायै (विभज्योर्ध्वसेचनं व्युत्सेचनम्)। तत्र सर्पाः सर्पाः पिपीलिकाः, सर्पेतरजनाः, सर्पदेवजनाश्च क्रमेण देवताः। पुनश्च तां पूरयित्वा आहवनीयस्य पश्चात् तदेकदेशं निनीय (निनयनं क्षारणम्), शेषं पत्न्या अञ्जलौ निनयेत्। पुनस्तां जलेन सप्तर्षिभ्य उदग्देशे तज्जलं निनयेत्। ततः प्रत्यावृत्य अग्नीन् प्रज्ज्वलयेत्। ततोऽग्नीन् पूर्ववत् परिषिच्य, अनाज्ञातादिमन्त्रत्रयं जपित्वा, अग्निहोत्रस्थाल्यां तृणमङ्क्त्वा, तदाहवनीये प्रहृत्य, अग्निहोत्रस्थालीं प्रक्षाल्य, हविरुन्नयनदेशे तज्जलं निनयेत्। ततो यजमानो वेद्यां हस्तं प्रसार्य, तस्मिन्नप आसिच्य ताः स्वशिरस्यानयेत्। एतदन्तमग्निहोत्राख्यं कर्मोच्यते।

## अग्निहोत्रे कर्ता

इदमग्निहोत्रं सायं प्रातः कालयोः यजमानः स्वयमेव जुहुयात्। यदि न शक्यते तर्हि पुत्रादिभिः ऋत्विजा वा कारयेत्। पर्वणि तु (पौर्णमास्याम् अमावास्यायाञ्च) यजमान एव जुहुयात् नान्यैर्होमः कारयेत्। तत्र नित्यद्रव्यं पयो, दधि, यवागूश्च। एतेषामेव फलार्थतयाप्यनुष्ठानम्। तत्र पशुकामः स्वर्गकामो वा पयसा जुहुयात्। इन्द्रियकामो दध्ना, यवाग्वा ग्रामकामः, ओदनेन अन्नकामः तण्डुलैरोजस्कामो बलकामो वा। ग्रामकामो घृतेन इति काम्यानि द्रव्याणि।

इदं चाग्निहोत्रं गृहस्थेनैव सभार्येण सता अवश्यमनुष्ठेयम्।

कस्यामप्यवस्थायामग्निहोत्ररहितेन न स्थातव्यं त्रैवर्णिकेन दीनो धनी वा सर्वोऽपीदमनुतिष्ठेत् यावज्जीवम्। सत्स्वप्यतिमहत्सु बहुवर्षबहुव्ययसाध्येषु क्रतुषु अग्निहोत्रस्य वेदेषु पुराणेषु तदनुयायिषु च ग्रन्थेषु यावती प्रशंसा दृश्यते सा नान्यस्य कस्यापि क्रतोः। अग्निहोत्रमननुष्ठाय नान्यः क्रतुरनुष्ठातुं शक्यते। तत्र विवाहानन्तरं जातपुत्रकृष्णकेशत्वोपलक्षिते वयसि वर्तमानेन त्रैवर्णिकेन पुरुषेण सपत्नीकेन अग्न्याधेयं कर्तव्यमित्युक्तं प्राक्। एवमाहितानां गार्हपत्यदक्षिणाग्न्याहवनीयरूपाणां त्रयाणामग्नीनां मध्ये गार्हपत्योऽ-ग्निरविच्छेदेन यावज्जीवं धार्यः। (अत्र धारणं नामगार्हपत्यकुण्डेऽन्तः करीषपिण्डं निक्षिप्य तदुपरि गार्हपत्याग्निं प्रज्ज्वलय्य, पिण्डे तं सङ्क्रमयेत्। तत्र सङ्क्रान्तोऽग्निर्यथा सर्वथा तिष्ठेत् तथा रक्षणमेव। न तु तस्य सर्वदा प्रज्ज्वालनम्। एवमेव लब्धधनस्य, ग्रामनेतुः राजन्यस्य च त्रयाणां पञ्चानां वा अग्नीनामजस्रक्षणम्। होमकाले तु कुण्डान्तः स्थान् तान् करीषपिण्डान् साग्नीन् बहिरुद्धृत्य, पुनस्तत्कुण्डानामन्तः करीषपिण्डान्तराणि निक्षिप्य, तांस्तुषैः भस्मना वा आच्छाद्य, तदुपरि पूर्वोद्धृतान् तांस्तानग्नीनवस्थाप्य प्रज्ज्वलय्य तत्र जुहुयादित्येव याज्ञिकसम्प्रदायः।) इतरावग्नी तत्तत्कर्मकाले गार्हपत्यादुद्धृत्य स्वस्वायतने स्थाप्येते। यदर्थमुद्धृतौ तौ तत्कर्मसमाप्त्यनन्तरं तथैव परित्यज्येते। तौ तत्रैव शान्तौ भवतः। पुनः कर्मकाले तौ नवीनतया गार्हपत्यात् प्रणीय स्वस्वकुण्डे स्थापयित्वा कर्मकरणम्। सायं प्रातश्च होमकाले, रात्रौ च यजमानस्तत्पत्नी वा, अग्न्यागारेऽवश्यं वर्तेत, नान्यत्र गच्छेत्। अन्यतरेण गृहेऽवश्यं स्थातव्यम्। द्वयोरपि बर्हिग्रामान्तरगमना-वश्यकतायां अरणावग्नीन् समारोप्य अग्निभिस्सहैव गच्छेताम्।

## अग्निसमारोपणम्

तत्र यजमानोऽग्नीनरण्योरात्मनि वा समारोप्य (समारोपणं नाम गार्हपत्यकुण्डगतस्य अग्नेररण्योरारोहणार्थं मन्त्रेण प्रार्थना। तथा आरूढत्वेन मनसा चिन्तनञ्च), पत्न्या अन्वारब्ध एव गच्छेन्मौनेन। गन्तव्यदेशं प्राप्य, पूर्वं समारोपितानग्नीन् मन्त्रेणोपावरोहयेत् (उपावरोहणं नाम – लौकिके

– अरणिमथिते वाऽग्नौ मन्त्रेण अवतारणं तथा चिन्तनञ्च।) तत्रात्मसमारोपणे गन्तव्यदेशप्राप्त्यनन्तरं लौकिकमग्निं शिष्टवैदिकगृहादाहृत्य तस्मिन्नात्मसमारोपितमग्निं मन्त्रेणोपावरोहयेत्। अरणिसमारोपणे तु गन्तव्यदेशावधि ते अरणी यजमान एव स्वहस्त आदाय गच्छेत्। गत्वा तत्र अरणी मथित्वा तत उत्पन्नेऽग्नौ उपावरोहणं कुर्यात्। गृह एव अग्निं परित्यज्य, पत्नीयजमानयोरुभयोरपि बहिर्गमनेऽग्निविनाशो भवेत्। (अग्निविनाशो नाम – अग्नि – निष्ठाहवनीयत्वाद्यदृष्टधर्मविनाशः। न तु स्वरूपनाशः। तत्स्वरूपस्य तथैव अवस्थितेः पुनस्तादृशादृष्टोत्पादनार्थमेव च पुनराधानानुष्ठानम्।) तदा पुनरग्निमत्त्वसिद्धये पुनराधानमेव कार्यम्। पुनराधानं तु आधानापेक्षया किञ्चित् विलक्षणं कर्म। तत्र प्रथमाधानोक्तानि कानिचन धर्माणि नानुष्ठातव्यानि। तावन्मात्रेणैवाग्निसिद्धिः।

**इत्यग्निहोत्रप्रकरणम्**

# 2. दर्शपूर्णमासौ

सर्वासामपीष्टीनां प्रकृतिर्दर्शपूर्णमासावित्युक्तं प्राक्। दर्शपूर्णमास्यानुष्ठानस्याधिकारिणो त एव भवन्ति ये खलु कृतदारपरिग्रहाः आधानासिद्धाग्नौ नित्यं सायम्प्रातरग्निहोत्रहोमं कुर्वन्तस्तिष्ठन्ति। अकृतदारस्य मृतपत्नीकस्य च नात्राधिकारः। प्रत्येकं (दर्शश्च पूर्णमासश्च) दिनद्वयानुष्ठेयमिदं कर्म। पौर्णमास्यां प्रातरारभ्य प्रतिपदि पूर्वाह्णे समापनीयम्। एवममावास्यायां प्रातरारभ्य तदनन्तरप्रतिपदि पूर्वाह्णे समापनीयम्। उत्पन्नश्रद्धः पुरुषो यस्मिन् कस्मिंश्चिद्वसन्ततौ विधिवदग्नीनाधाय, आधानदिन एव पवमानेष्टीरनुष्ठाय तद्दिन एव सायमग्निहोत्रमारभेत्। आरभ्य च प्रतिदिनं सायं प्रातश्चाग्निहोत्रं जुह्वत् समनन्तरमेव भाविन्यां पौर्णमास्यां मलमासशुक्रास्तादिदोषरहितायाम् अन्वारम्भणीयेष्ट्यनुष्ठानपूर्वकं दर्शपूर्णमासावारभेत। आरभ्य पूर्वं तस्मिन् पर्वणि पौर्णमासं यागमनुतिष्ठेत्, अनन्तरस्मिन् दर्शे दर्शयागम्। उभयत्रापि चत्वार ऋत्विजः–अध्वर्युः, ब्रह्मा, होता, आग्नीध्रश्च। एतेषामत्र समप्राधान्यमेव। न सोमयागवदुच्चनीचभावः।

पौर्णमास्यां त्रीणि प्रधानानि – अग्निदेवताकः पुरोडाशद्रव्यको यागः, प्रथमः। विष्णुप्रजापत्यग्नीषोमान्यतमदेवताकः उपांशुयाजाख्यो द्वितीयः। अग्नीषोमदेवताकः पुरोडाशद्रव्यको यागस्तृतीयः। अन्ये ये तत्प्रकरणपठिताः यागहोमादयस्ते सर्वे तदङ्गभूताः। प्रधानस्य फलोत्पादनयोग्यताजननार्थ-मेवाङ्गानामनुष्ठानम्। एवममावास्यायाम् प्रधानत्रयम्। आग्नेयः पुरोडाशयागः, ऐन्द्रो दधियागः, ऐन्द्र एव च पयोयाग इति। अत्रापि प्रयाजादयोऽङ्गभूता अनुष्ठीयन्ते। ते च यद्यपि एकैकस्याङ्गभूता इति त्रयाणां कृते त्रिरनुष्ठेयाः पूर्णिमायाम्, त्रिश्च दर्श इत्यापतति, तथाप्येककालानुष्ठीयमानानामनेकेषामपि प्रधानानामङ्गानि सकृदेवानुष्ठेयानीति पूर्वतन्त्रनिर्धारितं न्यायमनुसृत्य पूर्णिमायां त्रितयोद्देशेन सकृत् दर्शे च त्रितयोद्देशेन सकृदनुष्ठीयन्ते।

तेषु क्रियमाणेषु यागेषु केचन यागपदवाच्याः, केचन होमपदाभिधेयाश्चाहुतयो भवन्ति। तत्र ये यागास्ते तिष्ठतैव होतव्याः, ये च होमास्त उपविष्टेन होतव्याः। तदुक्तं कात्यायनेन स्वकीये श्रौतसूत्रे – '**तिष्ठद्धोमा वषट्कारेण प्रदाना याज्या पुरोऽनुवाक्यावन्तः यजतयः। उपविष्टद्धोमा स्वाहाकारेण प्रदानाः जुहोतयः।**[1]' अनेन सूत्रेण उपर्युक्तं कथनं सुसिद्धं भवति। अन्यानि चाङ्गानि यथासम्भवमनुष्ठेयानि। एवं यागश्चेत् वौषट् इति वषट्कारमुक्त्वा अग्नौः हविः, प्रक्षेप्तव्यम्। होमश्चेत् 'स्वाहा' कारमुक्त्वा अग्नौ हविः प्रक्षेप्तव्यम्। होमश्चेत् 'स्वाहा' कारमुक्त्वा तदिति विवेकः। तत्र यजति 'शब्देन विहितो यागः। जुहोतिशब्देन विहितो होम इति बोध्यम्।'

तौ पूर्णमासौ द्विविधौ – नित्यौ काम्यौ चेति। प्रतिदर्शं प्रतिपौर्णमासं च यावज्जीवं पुरुषेण अनुष्ठीयमानत्वात् अननुष्ठाने प्रत्यवायोत्पत्तिकथनाच्च नित्यत्वम्।[2] तत्फलमुद्दिश्य अनुष्ठानविधानाच्च काम्यत्वम्। तदुक्तं वैखानसेन – '**सर्वेभ्यः कामेभ्यो दर्शपूर्णमासौ**[3]' आपस्तम्बेनाऽपि काम्यत्वं प्रतिपादयता

1. का० श्रौ० सू० 1/2/6
2. आप० श्रौ० सू० 3/14/10
3. वै० श्रौ० सू० 14/1

प्रोक्तम् – '**स्वर्गकामो दर्शपूर्णमासौ**[1]' इति। तत्र नित्यौ यावत्पर्यन्तं जीवति पुरुषस्तावत्पर्यन्तमविच्छेदेन पर्वस्वनुष्ठेयौ। त्रिंशद्वावर्षपर्यन्तमविच्छेदेन दर्शपूर्णमासान् अनुष्ठाय ततः परित्यागः। दाक्षायणयाजिनस्तु पञ्चदशैव वर्षाण्यनुष्ठेयानि। वृद्धावस्थायां वा त्यागो नित्ययोरपि इत्यादयः पक्षा उक्ताः सूत्रग्रन्थेषु। काम्यौ च यदा फलेच्छा उदेति तदा विहितकाले सकृदनुष्ठेयौ। पुनस्तस्यैव फलस्य तज्जन्यफलान्तरस्य वा अपेक्षायां सत्यां पुनरनुष्ठानम्। तत्र पुरोडाशस्य साक्षात्प्रदेयभूतस्य प्रकृतिभूतं द्रव्यं ब्रीहयो यवा वा। ब्रीहीणां यवानाञ्च विकल्पः। परन्तु दर्शपूर्णमासयोरारम्भकाले ब्रीहयो यवा वा स्वेच्छया ग्राह्याः। अनन्तरं द्वितीयादि प्रयोगे प्रथमप्रयोगगृहीतेनैव द्रव्येण यावज्जीवमनुष्ठानं कार्यम्। तयोः दर्शपूर्णमासयोः न केवलं स्वर्गमात्रार्थत्वम् अभिलषितसर्वफलार्थत्वं च शास्त्रेणावबोध्यते।

**यागानुष्ठानकालः**

पर्वप्रतिपदोस्सन्धिः प्रधानानुष्ठानस्य मुख्यः कालः। स यदि कदाचिदपराह्णे रात्रौ वा आपतेत् तदा अनुष्ठानस्य निषेधात् द्वितीयदिन एव प्रातः प्रधानानुष्ठानम्। तदनुरोधेन तत्पूर्वदिन एव कर्मण आरम्भः। दर्शपूर्णमासावेव तदितरासाम् इष्टीनां प्रकृतिभूतौ सामान्यतः। पशुयागप्रकृति-भूताग्नीषोमीयपशुयागस्य च। विशेषास्तु द्रव्यदेवतादिसादृश्यादवगन्तव्यः। तद्यथा – यागीयं द्रव्यम्, तदीया देवता, तदीयः काल इत्यादीनां यत्र दव्यान्तरादिभिः सह विकल्प उक्तः, तत्र प्रथमानुष्ठाने वैकल्पिकद्रव्येषु यत्किञ्चिद् गृहीतव्यम्। तत्र स्वेच्छैव नियामिका। द्वितीयानुष्ठाने तु पूर्वप्रयोगगृहीतमेव ग्राह्यम् नान्यत्। अत्र अध्वर्युणा यागकाले पठनीया मन्त्राः यजुर्वेदे आम्नाताः। ते चोपांशु चातुस्स्वर्येण पठनीयाः। होत्रा पठनीया मन्त्रा ऋग्वेदीयाः। ते च याज्यापुरोऽनुवाक्याप्रैषादिरूपा ऐकस्वर्येणोच्चैश्च पठनीयाः। तदतिरिक्ताश्च केचित् जपादयो यथासम्भवमुपांशुस्वरादिना।

---

1. आप० श्रौ० सू० 3/14/9

प्रैषा आध्वर्यवा अत्युच्चैरेव, परसम्बोधनार्थत्वात् इति स्वरूपविवरणं दर्शपूर्णमासयोः।

**अथ दर्शपूर्णमासयोः पद्धतिः**

प्रबन्धविषयानुसारं देवयाज्ञिकपद्धतिमाधारीकृत्यैव विश्लेषणमभीष्टम्। तदनुसृत्यैदानीं देवयज्ञिकोक्तविधानानुसारं पद्धतिर्लिख्यते -

कृताधानस्याधानानन्तरं प्रथमपौर्णमास्यां मातृपूजापूर्वकमाभ्युदयिकं श्राद्धम् ततो मुख्यायामेव पौर्णमास्यां सद्योऽन्वारम्भणीयेष्टिः, तदनन्तरं पौर्णमासस्यारम्भः। 'समूहन्त्यग्न्यगारमुपलिम्पन्त्यन्यायतनालङ्कुर्वत' इत्यापस्तम्बसूत्रे विशेषः।

**पौर्णमासीदिनकृत्यम्**

तत्र पूर्वमाहवनीयखरे पञ्चभूसंस्काराः कर्तव्याः, तद्यथा-दर्भैः खरं प्राक्संस्थमुदक्संस्थं वा त्रिः परिसमूह्य, गोमयेनोदकेन च त्रिरुपलिप्य, स्फ्येन प्रागायता उदक्संस्थाः उदगायताः प्राक्संस्था वा तिस्रो रेखाः खरप्रमाणाः कृत्वा, अनामिकाङ्गुष्ठाभ्यां ताभ्यो रेखाभ्यः पांसूनुद्धृत्य, अद्भिस्त्रिरभ्युक्षेत्, एवमेव दक्षिणाग्नेः खरे पञ्चभूसंस्काराः कार्याः। ततो गार्हपत्यादाहवनीयस्योद्धरणम्, तत्र पौर्णमासेष्ट्यर्थं गार्हपत्यादाहवनीय-मुद्धरामीति मनसि सङ्कल्प्य गार्हपत्यात्कर्परेण ज्वलन्तमग्निं कर्परादिना आहवनीयखरे प्राञ्चं स्थापयेत्। ततः पौर्णमासेष्ट्यर्थं गार्हपत्याद्दक्षिणाग्नि-मुद्धरामीति संकल्प्य गार्हपत्यात्कर्परेणाग्निमादाय दक्षिणाग्नेः खरे स्थापयेत्। गार्हपत्यादग्निमुद्धृत्य खरान्तरे स्थापनमेवाग्निप्रणयनमित्युच्यते।

**ततोऽग्न्यन्वाधानम्**

अग्न्यन्वाधानं नाम अग्निषु काष्ठानां यज्ञियानां समन्त्रकमाधानम्। तत्र षट् समिधो हस्ते गृहीत्वा स्फ्यं सव्ये हस्ते धृत्वा ममाग्न इति मन्त्रेणाहवनीये एकां समिधमादधाति ततस्तूष्णीं द्वितीयां समिधमादधाति, एवमेव गार्हपत्ये दक्षिणाग्नौ च द्वे द्वे समिधावादधाति एकोऽयं पक्षः।

अथवा भूरित्येतावता मन्त्रेण प्रथमं गार्हपत्ये एकां समिधमादधाति द्विस्तूर्ष्णीं द्वितीयायाम्। ततो भुव इति दक्षिणाग्नावेकां तूर्ष्णीं द्वितीयायाम्, ततः स्वरित्याहवनीये एकां तूर्ष्णीं द्वितीयाम्, अयं द्वितीयः पक्षः।

अथवा तूष्णीमेव युगपत् समिद्द्वयं गार्हपत्ये, तत आहवनीये, ततो दक्षिणाग्नौ प्रक्षिपेदिति तृतीयः पक्षः।

प्रयोगकाले सर्वमन्त्रादौ 'ॐ कारोच्चारणं कार्यम्, एतच्चाग्न्यन्वाधान-पक्षेऽपि। यजमानस्य सपत्नीकस्य मांसमैथुनवर्जनसङ्कल्पः।'

केशश्मश्रुवपनं शिखां वर्जयित्वा। अशिखं वा सशिखं वेति विकल्पः। कर्कमते – वपनस्य विकल्पः। भर्तृयज्ञमते – वपनं नियमेन।

अपराह्णे पत्नीयजमानौ माषमांसलवणप्रातर्होष्यमाणद्रव्यव्यतिरिक्तं घृतसंयुक्तमल्पमश्नीतो न तृप्तिपर्यन्तम्। तदुक्तं कर्मप्रदीपे –

**'शाकं मांसं मसूरं च चणकं कोरदूषकान्।**
**माषान् मधुपरान्नं च वर्जयेदौपवस्तके।।'**

**तथा – लवणं मधुमांसं च क्षारान् श्वो येन हूयते।**
**उपवासे न भुञ्जीत नोरुरात्रौ न किञ्चनेति।।**

**तथा –तिलमुद्गाहते शैव्ये संस्यं गोधूमकोद्रवौ।**
**चीणकं देवधान्यं च सर्वशाकं तथैक्षवम्।।**

**सज्जीक्षारं यवक्षारं टङ्कणक्षारमेव च।**
**व्रतस्थो वर्जयेन्नित्यं सामुद्रं लवणं तथेति।।**[1]

अत एव सामुद्रविशेषणात्सैन्धवमानसादेरसामुद्रस्य न निषेध इति केचिदाहुः। परं स्मृतौ तस्य हविष्ट्वमुक्तम्। तद्यथा –

**'मुन्यन्नानि पयः सोमो मांसं यच्चानुपस्कृतम्।**
**अक्षारलवणञ्चैव प्रकृत्या हविरुच्यते।।**[2]**'**

अत्राक्षारलवणं सैन्धवमिति सर्वे निबन्धकाराः व्याख्यातवन्तः।

---

1. कर्मप्रदीप, 3/8/6
2. मनुस्मृतौ, 3/257

प्रैषा आध्वर्यवा अत्युच्चैरेव, परसम्बोधनार्थत्वात् इति स्वरूपविवरणं दर्शपूर्णमासयोः।

**अथ दर्शपूर्णमासयोः पद्धतिः**

प्रबन्धविषयानुसारं देवयाज्ञिकपद्धतिमाधारीकृत्यैव विश्लेषणमभीष्टम्। तदनुसृत्यैदानीं देवयज्ञिकोक्तविधानानुसारं पद्धतिर्लिख्यते –

कृताधानस्याधानानन्तरं प्रथमपौर्णमास्यां मातृपूजापूर्वकमाभ्युदयिकं श्राद्धम् ततो मुख्यायामेव पौर्णमास्यां सद्योऽन्वारम्भणीयेष्टिः, तदनन्तरं पौर्णमासस्यारम्भः। 'समूहन्त्यग्न्यगारमुपलिम्पन्त्यन्यायतनालङ्कुर्वत' इत्यापस्तम्बसूत्रे विशेषः।

**पौर्णमासीदिनकृत्यम्**

तत्र पूर्वमाहवनीयखरे पञ्चभूसंस्काराः कर्तव्याः, तद्यथा–दर्भैः खरं प्राक्संस्थमुदक्संस्थं वा त्रिः परिसमूह्य, गोमयेनोदकेन च त्रिरुपलिप्य, स्फ्येन प्रागायता उदक्संस्थाः उदगायताः प्राक्संस्था वा तिस्रो रेखाः खरप्रमाणाः कृत्वा, अनामिकाङ्गुष्ठाभ्यां ताभ्यो रेखाभ्यः पांसूनुद्धृत्य, अद्भिस्त्रिरभ्युक्षेत्, एवमेव दक्षिणाग्नेः खरे पञ्चभूसंस्काराः कार्याः। ततो गार्हपत्यादाहवनीयस्योद्धरणम्, तत्र पौर्णमासेष्ट्यर्थं गार्हपत्यादाहवनीय-मुद्धरामीति मनसि सङ्कल्प्य गार्हपत्यात्कर्परेण ज्वलन्तमग्निं कर्परादिना आहवनीयखरे प्राञ्चं स्थापयेत्। ततः पौर्णमासेष्ट्यर्थं गार्हपत्याद्दक्षिणाग्नि-मुद्धरामीति संकल्प्य गार्हपत्यात्कर्परेणाग्निमादाय दक्षिणाग्नेः खरे स्थापयेत्। गार्हपत्यादग्निमुद्धृत्य खरान्तरे स्थापनमेवाग्निप्रणयनमित्युच्यते।

**ततोऽग्न्यन्वाधानम्**

अग्न्यन्वाधानं नाम अग्निषु काष्ठानां यज्ञियानां समन्त्रकमाधानम्। तत्र षट् समिधो हस्ते गृहीत्वा स्फ्यं सव्ये हस्ते धृत्वा ममाग्न इति मन्त्रेणाहवनीये एकां समिधमादधाति ततस्तूष्णीं द्वितीयां समिधमादधाति, एवमेव गार्हपत्ये दक्षिणाग्नौ च द्वे द्वे समिधावादधाति एकोऽयं पक्षः।

अथवा भूरित्येतावता मन्त्रेण प्रथमं गार्हपत्ये एकां समिधमादधाति द्विस्तूष्णीं द्वितीयायाम्। ततो भुव इति दक्षिणाग्नावेकां तूष्णीं द्वितीयायाम्, ततः स्वरित्याहवनीये एकां तूष्णीं द्वितीयाम्, अयं द्वितीयः पक्षः।

अथवा तूष्णीमेव युगपत् समिद्द्वयं गार्हपत्ये, तत आहवनीये, ततो दक्षिणाग्नौ प्रक्षिपेदिति तृतीयः पक्षः।

प्रयोगकाले सर्वमन्त्रादौ 'ॐ कारोच्चारणं कार्यम्, एतच्चाग्न्यन्वाधान-पक्षेऽपि। यजमानस्य सपत्नीकस्य मांसमैथुनवर्जनसङ्कल्पः।'

केशश्मश्रुवपनं शिखां वर्जयित्वा। अशिखं वा सशिखं वेति विकल्पः। कर्कमते – वपनस्य विकल्पः। भर्तृयज्ञमते – वपनं नियमेन।

अपराह्णे पत्नीयजमानौ माषमांसलवणप्रातर्होष्यमाणद्रव्यव्यतिरिक्तं घृतसंयुक्तमल्पमश्नीतो न तृप्तिपर्यन्तम्। तदुक्तं कर्मप्रदीपे –

**'शाकं मांसं मसूरं च चणकं कोरदूषकान्।**
**माषान् मधुपरान्नं च वर्जयेदौपवस्तके।।'**

**तथा – लवणं मधुमांसं च क्षारान् श्वो येन हूयते।**
**उपवासे न भुञ्जीत नोरुरात्रौ न किञ्चनेति।।**

**तथा –तिलमुद्गाहते शैव्ये संस्यं गोधूमकोद्रवौ।**
**चीणकं देवधान्यं च सर्वशाकं तथैक्षवम्।।**

**सज्जीक्षारं यवक्षारं टङ्कणक्षारमेव च।**
**व्रतस्थो वर्जयेन्नित्यं सामुद्रं लवणं तथेति।।**[1]

अत एव सामुद्रविशेषणात्सैन्धवमानसादेरसामुद्रस्य न निषेध इति केचिदाहुः। परं स्मृतौ तस्य हविष्ट्वमुक्तम्। तद्यथा –

**'मुन्यन्नानि पयः सोमो मांसं यच्चानुपस्कृतम्।**
**अक्षारलवणञ्चैव प्रकृत्या हविरुच्यते।।**[2]**'**

अत्राक्षारलवणं सैन्धवमिति सर्वे निबन्धकाराः व्याख्यातवन्तः।

---

1. कर्मप्रदीप, 3/8/6
2. मनुस्मृतौ, 3/257

### व्रतग्रहणम्

व्रत्याशनानन्तरं यजमानः स्फ्यमादाय गार्हपत्यदक्षिणाग्न्योरन्तरालेन गत्वा आहवनीयस्य पश्चात्समीपे पूर्वाभिमुखस्तिष्ठन् आहवनीयं विलोकयन् उदकं दक्षिणहस्तेन स्पृष्ट्वा – '**अग्ने व्रतपते व्रतमिति**'[1] मन्त्रेण व्रतमुपैति सत्यवदनादिनियममङ्गीकरोति इत्यर्थः। अथवा '**इदमहमनृतात्सत्यमुपैमि**' इत्येन मन्त्रेण व्रतमुपैति।

अतः प्रभृति क्रियमाणकर्माङ्गभूतो यजमानस्य सत्यवदननियमः। रात्रौ तस्मिन्नेव विहारे स्वयमेवाग्निहोत्रहोमः। सायाशनेच्छायां सत्यां होमानन्तरमारण्यौषधीनां नीवारश्यामाककङ्ग्वादीनामशनं वा। आरण्यवृक्षाणामाम्रराजादनादीनां फलानि वा अश्नीयात् नाश्नीयाद्वा।

रात्रावाहवनीयागारे गार्हपत्यागारे वा पत्नी यजमानाभ्यां खरस्थाग्न्यपेक्षया अधो नीचं शयनं कर्तव्यम्। आस्तरणस्य न निषेधः। पर्यङ्कखट्वादीनामुपरि न शयीतेति। प्रातरपि तस्मिन्नेव विहारे स्वयमेवाग्निहोत्रहोमः।

### कृष्णप्रतिपद्दिनकृत्यम्

तत उदिते सूर्ये नैत्यकं कर्म कृत्वा कृताग्निहोत्रहोमः ब्रह्मवरणादिकं कर्म आरभेत्। ततः पूर्ववदासनान्युपकल्पयेत्। ब्रह्मवरणार्थं ब्रह्मयजमानयोर्द्वे आसने विहारस्योत्तरतो दर्भास्तृते स्थापनीये। आहवनीयस्य दक्षिणतो ब्रह्मोपवेशनार्थमेकं दर्भास्तृतं तथा गार्हपत्यस्योत्तरत एवमध्वर्योरुपवेशनार्थम्, आहवनीयस्योत्तरतो द्वितीयं च। एतदासनद्वयं प्रणीता प्रणयनार्थम्।

### ब्रह्मवरणम्

तत उदिते सूर्ये ब्रह्मवरणार्थं यजमानयोर्द्वे आसने विहारस्योत्तरतो दर्भैरास्तृते स्थापनीये। ब्रह्मोपवेशनार्थमाहवनीयस्य दक्षिणतः दर्भास्तृतमेकमासनम्। ब्रह्मासनतः पश्चिमे यजमानोपवेशनार्थं दर्भास्तृतं

1. शु० य० सं० 1/5

द्वितीयमासनम्। तथा अपां प्रणयनायाध्वर्योरुपवेशनार्थं गार्हपत्यस्योत्तरत एकम्। तदर्थमेव तस्यैव उपवेशनार्थमाहवनीयस्योत्तरतः, द्वितीयम्। एवं षडासनानि अवेधविद्धानि वारणादिकाष्ठमयानि कल्पनीयानि।

ततो ब्रह्मवरणम्। विहारस्योत्तरतः उदङ्मुखोपविष्टो यजमानः प्राङ्मुखोपविष्टं ब्रह्माणं साक्षतेन सहरिण्येन दक्षिणहस्तेन ब्रह्मणो दक्षिणं जान्वालभ्य **अमुकगोत्रामुकशर्मन् पौर्णमासेष्ट्याऽहं यक्ष्ये तत्र** ' **ॐ भूपते भुवनपते महतो भूतस्य पते ब्रह्माणं त्वा वृणीमहे**[1] ' इत्यनेन मन्त्रेण वृणीते।

ततो वृतो ब्रह्मा – " **ॐ अहं भूपतिरहं भुवनपतिरहं महतो भूतस्य पतिर्भूर्भुवः स्वर्देवसवितरेतन्त्वा वृणते बृहस्पतिं ब्रह्माणं तदहं मनसे प्रब्रवीमि मनो गायत्र्यै गायत्री त्रिष्टुभे जगत्यै जगत्यनुष्टुभेऽनुष्टुप् प्रजापतये प्रजापतिर्विश्वेभ्यो देवेभ्यो बृहस्पतिर्देवानां ब्रह्माऽहं मनुष्याणाम्**"[2] इति जपेत्।

ततो यजमानः " **ॐ वाचस्पते यज्ञं गोपाय**[3] " इत्येवं ब्रह्माणं प्रार्थयेत्। ततो ब्रह्मा ' **गोपायामि** ' इति वदेत्। ततः ब्रह्मा वरणस्थानादुत्थाय आहवनीयात्पूर्णमार्गेण वेदेर्दक्षिणतः स्थापितं ब्रह्मासनमुपगम्य आसनात् पश्चिमोत्तरे प्राङ्मुखः स्थित्वा ' **ॐ अहे दैधिषव्योदतस्तिष्ठान्यस्य सदने सीद योऽस्मात्पाकतरः**[4] ' इति मन्त्रेण ब्रह्मसदनमीक्षते।

ततो ब्रह्मासनादेकं तृणं गृहीत्वा ' **ॐ निरस्तः पाप्मा सह तेन यं द्विष्मः**[5] ' इति मन्त्रेण नैर्ऋत्यां दिशि निरस्य अप उपस्पृश्य ' **ॐ इदमहं बृहस्पतेः सदसि सीदामि प्रसूतो देवेन सवित्रा तदग्नये प्रब्रवीमि तद्वायवे तत्पृथिव्यै**[6] ' इति मन्त्रेण ब्रह्मसदने आहवनीयाभिमुखः उपविशेत्। ततः ब्रह्मासनतः पश्चिमे वेदिं स्पृशन् यजमानः पूर्वकल्पिते स्वासने उपविशेत्।

---

1. का० श्रौ० सू० 2/1/17
2. का० श्रौ० सू० 2/1/18
3. का० श्रौ० सू० 2/1/19
4. का० श्रौ० सू० 2/1/21
5. का० श्रौ० सू० 2/1/22
6. का० श्रौ० सू० 2/2/1

## अपां प्रणयनम् ( प्रणीता-प्रणयनम् )

तत अध्वर्युः गार्हपत्यस्योत्तरतः पूर्वकल्पिते आसने उपविश्य, वारणकाष्ठनिर्मितं चतुष्कोणचमसं सव्यहस्ते कृत्वा, दक्षिणहस्तस्थेनोदपात्रेण स्वयं तस्मिन्नुदकमासिच्य, दक्षिणहस्तेन तं गार्हपत्यस्योत्तरतो निधाय '**ॐ भूतस्त्वा भूत करिष्यामि**[1]' इति मन्त्रेण चमसमालभेत्। ततः '**ब्रह्मन्नपः प्रणेष्यामि**[2]' इति ब्रह्माणं पृच्छेत्। '**यजमानं वाचं यच्छ**[3]' इति यजमानं च प्रेषयेत्।

ततो ब्रह्मा '**ॐ प्रणय यज्ञं देवता वर्धय त्वं नाकस्य पृष्ठे यजमानोऽस्तु। सप्तऋषीणां सुकृतां यत्र लोकस्तत्रेमं यज्ञं यजमानं च धेहि**[4]' इत्यन्तमुपांशुपठित्वा '**ॐ प्रणय**' इत्युच्चैः अध्वर्योरनुज्ञां दद्यात्। यथाऽध्वर्युः शृणुयात्।

## परिस्तरणम्

ततोऽध्वर्युः चमसं गृहीत्वा आवहनीयादुत्तरस्यां दिशि पूर्वकल्पिते आसने प्राङ्मुखोपविश्य,बहिर्वेदि दर्भेषु प्रणीताचमसं '**ॐ कस्त्वा युनक्ति स त्वा युनक्ति कस्मै त्वा युनक्ति तस्मै त्वा युनक्ति**[5]' इति मन्त्रेण स्थापयेत्। तत आहवनीयस्य पुरस्तात् प्रथमम् उदगग्रैः कुशैः स्तरित्वा, ततो दक्षिणतः प्रागग्रैः स्तरित्वा, पश्चादुदगग्रैः स्तरित्वा, उत्तरतः प्रागग्रैः स्तृणुयात्। एवमेव गार्हपत्यस्य परिस्तरणं कृत्वा दक्षिणाग्नेः परिस्तरणं कार्यम्।

## पात्रासादनम्

परिस्तरणानन्तरं गार्हपत्योत्तरतः प्राकसंस्थानि उदगग्राणि पात्राणि द्विशः

---

1. का० श्रौ० सू० 2/3/1
2. का० श्रौ० सू० 2/3/2
3. का० श्रौ० सू० 2/3/2
4. का० श्रौ० सू० 2/8
5. शु० य० सं० 1/6

स्थापयेत्। तद्यथा – शूर्पमग्निहोत्रहवणीं चेत्येकं द्विकम्। स्फ्यश्च कपालानि चेति द्वितीयम्। शम्या च कृष्णाजिनञ्चेति तृतीयम्। उलूखलमुसलं चेति चतुर्थम्। दृषदुपलां चेति पञ्चमम्। एवं पञ्चयुग्मानि स्थापयित्वा अर्थवन्त्यन्यान्यपि द्विशः स्थापयेत्। तद्यथा – पात्री पवित्रच्छेदनानि त्रीणि कुशतरुणानि च, द्वे पवित्रसाग्रे अन्तर्गर्भे उपवेषश्च, आज्यस्थाली सोदकमुपसर्जनीपात्रञ्च, जुहूः उपभृच्च, ध्रुवा सन्नहनावच्छादनानि च, त्रयः परिधयः, विधृती, आज्यं पुरोडाशपात्र्यौ च, होतृषदनं कुशास्तीर्णं शृतावदानञ्च, ब्रीहियवान्यतररूपम् औषधं प्राशित्रहरणे च, अन्वाहार्यतण्डुलाः अन्तर्धानकटश्च, पूर्णपात्रं कर्मापवर्गार्थं समिद्‌द्वयं च, इध्मावर्हिषोरुपकल्पनं षडवत्तं चेति। एवं पात्राण्यासाद्य हविः सहितां स्फ्योपहितां प्रागग्रां पात्रीं गार्हपत्यस्य पश्चाद्‌भागे स्थापयेत्। एतेषां पात्राणामुत्तरदेशे, योक्त्रम्, मदन्ती, मेक्षणम्, वेदाग्राणि, अन्वाहार्यस्थाली, अश्मा, उपवेषः, पिष्टलेपपात्रम्, फलीकरणपात्रम्, इत्येतानि स्थापयेत्।[1]

## हविर्निर्वापः

पात्रासादनपूर्वकमध्वर्युरग्निहोत्रहवणीं शूर्पञ्च हस्ते गृहीत्वा ते आहवनीये प्रतितप्य, वेदेरुत्तरत आनीय पूर्वमेवावस्थापितस्य ब्रीहिभिः यवैर्वा पूर्णस्य शकटस्य समीपं गत्वा, शकटमारुह्य, धान्यस्योपरि प्रसारितमाच्छादनमपसार्य, धान्यगतं तृणादिकमपास्य, दक्षिणहस्तेन शकटस्थान् ब्रीहीन् यवान् वा मुष्टिना गृहीत्वा, यागीयतत्तदेवतानाम-

---

1. यजमानपत्न्याः कट्यां बन्धनाय मुञ्जतृणनिर्मिता रज्जुर्योक्त्रम्। तप्ता आपो मदन्त्यः। पिष्टानां जलेन सह मिश्रणायोपयोक्तव्यं काष्ठनिर्मितं पात्रं मेक्षणम्। वेदो दर्भमुष्टिविशेषः। ततः परिवासितानि तदग्राणि वेदाग्राणि। ऋत्विग्भ्यो दक्षिणारूपेण देय ओदनः अन्वाहार्यः। तत्पाकार्था स्थाली अन्वाहार्यस्थाली। पिष्टसंयवनकाले पात्र्यां संलग्नः पिष्टांशः पिष्टलेपः। तद्रक्षणार्थं पात्रं पिष्टलेपपात्रम्, द्वितीयाहननकाले निःसृताः सूक्ष्माः तण्डुलत्वचः फलीकरणानि। तदर्थं पात्रं फलीकरणपात्रम्।

निर्देशपूर्वकं तानग्निहोत्रहवण्यां निक्षिप्य, अग्निहोत्रहवणीतः शूर्पे प्रक्षिपेत्। एवं वारचतुष्टयं कर्तव्यम्।

तदिदं शकटस्थहविषः मुष्टिना पृथक् पात्रे करणं हविर्निर्वाप इत्युच्यते। एवमेकस्यै देवतायै हविर्निरूप्य पुनर्देवतान्तरार्थं तथैव निर्वपेत्। तत्र पौर्णमास्यां प्रथममग्नये निर्वापः, ततोऽग्नीषोमाभ्यामिति ध्येयम्। निर्वापकाले पात्रीतो बहिः पतितान् ब्रीह्यादीनभिमन्त्र्य हस्तगतं शूर्पं सद्धविष्कम् आवहनीयसमीपे स्थापयेत्। ततस्तान् संस्कृताभिः प्रोक्षणीसंज्ञकाभिरद्भिः त्रिः प्रोक्षेत्। प्रोक्षणकालेऽपि निर्वापवत् तत्तद्देवतानामनिर्दिशेत्। ततः पूर्वं स्थापितानि न्यञ्चि पात्राणि पर्यावृत्य, ऊर्ध्वमुखानि कृत्वा पवित्रयुक्तेन पाणिना तानि त्रिः प्रोक्षेत्।

**अवहननपेषणे**

प्रोक्षणानन्तरं कृष्णाजिनं गृहीत्वा, उत्करे त्रिवरवधूय, तत्रैव तदास्तीर्यं तदनुत्सृजन् तदुपर्युलूखलं प्रतिष्ठाप्य तत्र निरूप्तं हविरेकीकृत्य आवपेत्। ततो मुसलमादाय अवहननं कुर्वन्नध्वर्युः अवहनने साहाय्यार्थम्, अन्यं कञ्चन पुरुषं यजमानपत्नीं वा '**हविष्कृदेहि हविष्कृदेहि हविष्कृदेहि**[1]' इति मन्त्रेण त्रिवारमाहूय तेन तया वा साकमवहन्याद्धविः। अध्वर्यौ **हविष्कृदेही**त्येवमाह्वयति सति आग्नीध्रः '**ॐ कुक्कुटोऽसि मधुजिह्व इषमूर्जमावदत्वया वय ँ संघात ँ सङ्घातं जेष्म**[2]' इति मन्त्रेण शम्यया द्विर्दृषदं मन्त्रावृत्या समाहत्योपलां सकृन्मन्त्रेणानेनैव समाहन्यात्। अवहतांस्तण्डुलान् तुषेभ्यः फलीकुर्यात्। फलीकरणं नाम तुषविमोकार्थं सकृदवहतानां तण्डुलानामुपरिगतकणापाकरणाय पुनरवहननम्। तण्डुलानामुज्ज्वलीकरणायेदं द्वितीयमवहननम्। ततः कृष्णाजिनमास्तीर्य तदपुरि शम्यां निधाय, तदुपरि च दृषदमत्याधाय, तत्र सुप्रक्षालितान् तण्डुलान्

1. शु० य० सं० 1/15
2. शु० य० सं० 1/16

निक्षिप्य, उपलया तान् पिंष्यात्। पिष्टानि चूर्णानि कृष्णाजिने प्रस्कन्दयेत्। ततो हविः (पुरोडाश) श्रपणार्थं गार्हपत्यस्याहवनीयस्य वा पश्चिमदेशे कपालान्युपदधाति। तत्र तण्डुलपेषण- कपालोपधाने च युगपद् भवतः। उभयक्रिया कर्तृत्वस्य युगपदेकविरोधात्, अध्वर्युः प्राधान्यात्पेषणम्, अग्नीच्च कपालोपधानं करोति। आग्नेयस्य पुरोडाशस्याष्टौ। अग्नीषोमीय-स्यैकादशकपालानि। तदुपधानप्रकारश्च चित्ररूपेण दर्श्यते –

## कपालस्वरूपं देवता च

एककपालम्




द्विकपालम्



त्रिकपालम्




विष्णुः श०प०ब्रा० 5/2/4/1

चतुष्कपालम्




वरुणः बौ० श्रौ० सू० 23/4

पञ्चकपालम्




इन्द्रः मै०सं० 2/3/6

षष्ठकपालम्




पितृसोमवान् का०श्रौ०सू० 5/8/9

सप्तकपालम्




मरुत् श०प०ब्रा० 2/4/2/13
तै०सं० 3/4/10

अष्टाकपालम्




अग्निः श०प०ब्रा० 2/4/28

नवकपालम्




विष्णुः आप०श्रौ० सू० 10/30/12
बौ०श्रौ० सू० 23/18

दशकपालम्




वरुणः का०श्रौ०सू० 23/2/18

एकादशकपालम्




अग्नीषौमौ दे०प० पृ० 37

द्वादशकपालम्




ऐन्द्राग्नः दे०प० पृ० 81

त्रयोदशकपालम्




मरुत् का०श्रौ०सू० 25/4/35

पञ्चदशकपालम्




चन्द्रमसे प्रतिदिश्यायै तै०ब्रा० 3/1/6

# हविः श्रपणम्

एवमुक्तप्रकारेण (8+11=19) कपालान्युपधाय तदुपरि वेदाख्येन दर्भमुष्टिना अङ्गारानध्यूह्य पिष्टसंयवनार्थमपां सन्तापनं कृत्वा, प्रक्षालितायां पात्र्यां पिष्टान्यारोप्य संयौति (जलेन मिश्रयति)। संयुक्तञ्च पिण्डद्वयं कृत्वा एकमग्नये, एकमग्नीषोमाभ्याञ्च निर्दिश्य, तत्तदर्थं गार्हपत्यस्य आहवनीयस्य वा पश्चादुपहितानां कपालानामुपरि तं तं पिण्डं निधाय, उल्मुकैः पुरोडाशौ प्रतितप्य, ज्वलद्भिर्दर्भैरभितः प्रज्वलय्य, सुपक्वौ तौ कुर्वन् भस्मना आच्छादयेत्। तावेव पुरोडाशौ। ततस्संयवनोपयुक्तां पात्रीं प्रक्षाल्य, तज्जलं वेद्यां कृतासु तिसृषु रेखासु निनयेत्। तत्र एकतः, द्वितः, त्रित इति क्रमेण देवताः। अत्र पिष्टसंयवनानन्तरं पिण्डद्वयं निर्माय पात्र्येङ्गुलिप्रक्षालनं क्रियते। तदेव जलमाप्त्येभ्यो निनयेदिति सूत्रकाराः। प्रतिनिनयनं यजमानः त्यागवाक्यं वदेत्।

### अन्वाहार्यश्रपणम्

आप्त्योदकनिनयनानन्तरमध्वर्युः चतुर्ण्णामृत्विजां तृप्तिपर्यन्तं भोजनसमर्थं अन्वाहार्यं (दक्षिणार्थमोदनम्) दक्षिणाग्नावधिश्रयेत्।[1] जलं चात्र प्राणीतं लौकिकं वेति कर्काचार्याः। अन्वाहार्याधिश्रयणकाले पत्नी तत्रैवोपविशेत्।

### वेदिनिर्माणम्

ततोऽध्वर्युः स्फ्यमादाय, तेन वेदिनिर्माणार्थां भूमिं खात्वा, तत्रत्यं तृणादिकमपास्य, उत्करे क्षिप्त्वा, उत्करतः शुद्धान् पांसूनादाय, वेद्यामोप्य वेदिं निर्मायात्। तस्याः स्वरूपमिह सचित्रं प्रदर्श्यते –

अध्वर्युराहवनीयस्य पश्चाद्भागे प्रथमः द्वितीयः तृतीयः चतुर्थ इति, मध्ये प्रथमः द्वितीयः तृतीय इति; प्राग्भागे प्रथमः द्वितीय तृतीय इति, वेदिं

---

1. का० श्रौ० सू० 2/5/27

मिमीत। आहवनीयाग्निमभितः अंसौ मातव्यौ। पश्चाच्छ्रेणिं च कल्पयेत्। ततः पूर्वमासादित वेदितृणसहितं स्फ्यमादाय, सव्यहस्ते निधाय, दक्षिणेन हस्तेनालभ्य '**ॐ इन्द्रस्य बाहुरसि०**[1]' इति मन्त्रं सस्वरं जपेत्। स्तम्बयजुर्हरणादर्वाक् हस्मार्जनेन तीक्ष्णीकृतेन स्फ्येन पृथिव्याः आत्मनश्च स्पर्शो न कर्त्तव्यः। तत्तृणं वेद्यामुदगग्रं निधाय, तृणस्याधस्ताद्भुवि, तृणे एव वा स्फ्येन प्रहरेत्। प्रहरणेनोत्खातं पुरीषं हस्तेन गृहीत्वा प्रहरणदेशे प्रेक्ष्य, उत्करे प्रक्षिपेत्। पूर्वप्रहृतात् उत्तरस्यां तृणस्याधस्तात् तृणे वा स्फ्येन द्वितीयवारं प्रहरेत्। उदकोपस्पर्शः। ततः पूर्ववत्पुरीषादानवेदिप्रेक्षण-पुरीषप्रक्षेपणानि च कुर्यात्।

तत आग्नीध्रः स्फ्यं गृहीत्वा पाणिभ्यामुत्करमभिन्यस्यति। तत अध्वर्युः द्वितीयप्रहृतादुत्तरतः तृणस्याधस्तात् तृणे वा तृतीयवारं प्रहृत्य पुरीषादानवेदिप्रेक्षणपुरीषनिरसनानि पूर्ववत्कृत्वा तृतीयप्रहृतादुत्तरे तृणस्याधस्तात्तृणे वा तूष्णीं चतुर्थवारं प्रहृत्य तूष्णीमेव सतृणपुरीषादानम्, उत्खातप्रदेशप्रेक्षणम्, सतृणस्य पुरीषस्योत्करे प्रक्षेपणञ्च कुर्यात्।

**पूर्वपरिग्रहः**

ततोऽध्वर्युः ब्रह्मणाऽनुज्ञातो स्फ्येन दक्षिणतः वेदेः नैर्ऋत्यकोणादारभ्य आहवनीयखरपर्यन्तां रेखां कृत्वा, वेदेः पश्चिमपार्श्वे दक्षिणश्रोणिमारभ्य उत्तरश्रोणिपर्यन्तां रेखां कृत्वा, वेदेरुत्तरभागे उत्तरश्रोणिमारभ्य आहवनीयखरपर्यन्तां रेखां कुर्यात्। इदं परिग्रहणं च 'इयती वेदिः कर्तव्या' इति ज्ञापनार्थम्। एतद्विधानानुसारं निर्मिताया: वेद्याः स्वरूपं दर्शपौर्णमासयागविहारे एवं भवति तद्द्रष्टव्यम् -

1. विहारोऽयं 20 अरत्निर्दीर्घः 10 अरत्निविस्तृतश्च भवति।
2. गार्हपत्यखरः - 13 ½ अंगुलपरिमितेन प्रकालेन वृत्ताकारं निर्मीयते। अस्मिन् 12 × 4 अंगुलपरिमितायाः परिधिर्भवति।

---

1. शु० य० सं० 1/24

3. गार्हपत्याहवनीययोर्मध्ये पृष्ठ्या रेखा 6 अरत्निः भवति।
4. वेदिः यज्ञशालायां – मध्ये भवति। पश्चिमे दक्षिणोत्तरयोः 4 अरत्निः स्थूला भवति।
5. श्रोणी – दक्षिणोत्तरयोः, 12 अंगुलात्मिका भवति।
6. अंसौ – दक्षिणोत्तरयोः 11 ½ अंगुलात्मिका भवति।
7. आहवनीयखरः – 24 अंगुलात्मकः चतुरस्रः। परिधिः गार्हपत्यवत्।
8. संग्रहः – 19 अंगुलात्मकेन प्रकालेनार्धवृत्ताकारो भवति। दक्षिणोत्तरयोः द्वौ भवतः। दक्षिणसंग्रहः यजतिस्थानमित्युच्यते। तिष्ठद्धोमः। उत्तरसंग्रहश्च – जुहोतिस्थानमुच्यते। उपविष्टाहुतिः।
9. उत्करः – 2 अंगुलात्मकेन प्रकालेन वृत्ताकारः षडङ्गुलो गर्तः।
10. दक्षिणाग्निखरः – 19 अंगुलप्रकालेन निर्मितोऽयमर्धवृत्ताकारः। उत्तरे ज्या भवति। परिधिः गार्हपत्यवत्।
11. सभ्यखरः – गार्हपत्यवत्।
12. आवसथ्यः – स्मार्ताग्निखरः गार्हपत्यवत्।
13. ब्रह्मासनम्।
14. यजमानासनम्।
15. अध्वर्य्वासनम्।
16. होत्रासनम्।
17. आग्नीध्रासनम्।
18. पत्नी–आसनम्।
19. हविरासादनस्थलम्।
20. द्वाराणि – पूर्वे, दक्षिणे, पश्चिमे च 2 × 4 अरत्नि परिमिता भवति।

## दर्शपौर्णमासयागविहारः



## उत्तर–परिग्रहः

ततोऽध्वर्युः वेद्यां प्रागायताः उदक्संस्थास्तिस्त्रो रेखास्तूष्णीं स्फ्येन कृत्वा, अभ्रिमादाय प्रदक्षिणं सर्वतो वेदिं सांसांत्र्यङ्गुलां खनति। ततः स्फ्येन वेदेः दक्षिणपार्श्वे दक्षिणश्रोणिमारभ्याहवनीयखरपर्यंतं रेखां कृत्वा, पश्चिमपार्श्वे दक्षिणश्रोणिमारभ्याहवनीयखरपर्यन्तं रेखां कुर्यात्। ततः पुरस्तादारभ्य प्रतीची दिशं यावदनुमृज्यात्। प्राक्प्रवणता च वेदेः अत्रैव सम्पादनीया। ततः प्रोक्षणीर्गृहीत्वा वेदेरूपरिष्टात्समीपे धारयेत्। प्रोक्षणीषु धार्य्यमाणासु अग्नीत् स्फ्यमुद्यम्याध्वर्युं युगपत् सर्वकार्यार्थमध्येषयेत्। प्राक्स्तरणाद्वेदिं कश्चिदपि नावमृशेत्। शृतानि हवींषि च प्रधानयागानुष्ठानं यावत् न स्पृशेत्। ततोऽध्वर्युः प्रक्षालनार्थमुदकमासाद्य स्फ्यमुदगग्रमुत्करे क्षिपेत्। ततः स्फ्यं गृहीत्वा उत्करे पाणी प्रक्षाल्य प्रणीतायां पश्चाद्भागे उदगग्रं वा स्फ्यं निधाय, वेदिध्ये उदगग्रामग्निहोत्रहवणीमासाद्य, प्रणीतानां पश्चात्स्फ्योत्तरतः प्रागग्रमिध्ममासाद्य, इध्मस्योत्तरतः प्रागग्रं बर्हिरासादयेत्।।

## पात्रसम्मार्जनम्

ततः खादिरं स्रुवमादाय गार्हपत्ये प्रतप्य अप उपस्पृश्य अग्निसमीपात् प्राचीं गत्वा वेदाग्रैरन्तरतः मूलादारभ्याग्रपर्यन्तं प्राक्संस्थं सम्मृज्यात्। ततोऽग्निमुपगम्य पूर्ववत्प्रतप्य, अप उपस्पृश्य अग्नीधे समर्पयेत्। ततो जुहूमादाय प्राचीं गत्वा वेदाग्रैरन्तरतः मूलादारभ्याग्रपर्यन्तं सम्मृज्य, वेदमूलैः बहिः प्रदेशे जुहूपुष्करस्य (बुध्नादारभ्य) अधोभागादारभ्य मूलपर्यन्तं प्रत्यञ्चं समृज्य, अग्निसमीपं गत्वा पूर्ववत्प्रतप्य, अप उपस्पृश्य अग्नीधे समर्पयेत्। एवमेव उपभृतं ध्रुवां च समृज्य, प्रतप्य, अप उपस्पृश्य, अग्नीधे समर्पयेत्। ततस्तूष्णीं प्राशित्रहरणे शृतावदानं पुरोडाशपात्र्यौ इडापात्रीं च प्रत्येकं प्राङ् उत्क्रम्य, तूष्णीमन्तर्बहिश्च पूर्ववत्समृज्य, अग्निमुपगम्य, तूष्णीं प्रतप्य अप उपस्पृश्य, अग्नीधे समर्पयेत्। ततः सम्मार्जनानि उत्करे प्रक्षिपेद् नाहवनीये।

## योक्त्रबन्धनम्

तत आग्नीध्रः मुञ्जमयं त्रिवृत् योक्त्रमादाय, गार्हपत्यान्नैर्ऋत्यां दिशि

ईशानाभिमुखीमूर्ध्वजानुं पूर्वमेवोपविष्टां यजमानपत्नीं परिधानवस्त्राद् बहिः तेन योक्त्रेण प्रदक्षिणं 'अदित्यै रास्नासी'[1]ति मन्त्रेण वेष्टयित्वा, दक्षिणं पाशमुत्तरे शङ्कुस्थानीये प्रतिमुच्य, पुनर्वेष्टयित्वा योक्त्रस्यान्तरूर्ध्वमुद्गूहेत्।[2] ग्रन्थिं न कुर्यात्।

### आज्यावेक्षणम्

तत आज्यमुद्गुद्वास्य, पश्चादानीय, पत्न्याज्यमवेक्षस्व इति पत्नीमध्वर्युरध्येषयेत्। पत्नी चाज्यमवेक्षते।

### पवित्रीकरणम्

ततोऽग्नीत् पत्न्या अग्रतः आज्यं गृहीत्वा, प्रोक्षणीभ्यः पवित्रे आदाय आज्यमुत्पूय, स्फ्यं गृहीत्वा, आज्यलिप्ताभ्यामेव पवित्राभ्यां प्रोक्षणीः पूर्ववत् इध्मबर्हिषोः प्रोक्षणार्थमुत्पुनीयात्। अतस्तदभावे न भवति।

### यजमानाज्यावेक्षणं जुह्वादिषु घृतग्रहणञ्च

ततो यजमान आज्यमवेक्षेत। ततः सव्येन जुहूं वेदं च गृहीत्वा दक्षिणेन स्रुवमादाय तेनाज्यस्थाल्याः सकाशात्तूष्णीमाज्यमादाय जुह्वां सकृन्निनीय त्रिस्तूष्णीं निनयेत्। तत उपभृति सकृन्निनीय सप्तकृत्वस्तूष्णीं निनयेत्। उपभृति चतुर्गृहीताज्जुह्वाज्यादल्पमेव गृहीतं यथा स्यात्तथा अष्टकृत्वोऽपि निनयेत्। ततो ध्रुवायां सकृन्निनीय त्रिस्तूष्णीं निनयेत्। ततो वेदिमध्यादाज्य-स्थालीमादाय क्वचित्सुगुप्ते निदध्यात्।

### इध्मप्रोक्षणम्

तत इध्मं विस्रंस्य ब्रह्माणमामन्त्रयेत्। ततो ब्रह्मा 'प्रोक्ष' इत्युच्चैरध्वर्युमनुजानीयात्। लब्धानुज्ञः ताभिरद्भिः तं त्रिः प्रोक्ष्य

---

1. शु० य० सं० 1/30
2. विष्णोर्वेष्पोऽसीति मन्त्रेण। शु० य० सं० 1/30

अन्तर्वेद्यासादितान् दर्भानपि त्रिः प्रोक्ष्य वेदिं च त्रिः प्रोक्षेत्। प्रोक्षणीशेषं वेदेर्दक्षिणस्याः श्रोणेः उत्तरश्रोणिपर्यन्तं सन्ततधारया स्त्रावयेत्। तत्र पितरो देवता।

### वेदिस्तरणम्, पात्रासादनञ्च

ततो दर्भमुष्टीनां सहबद्धानां ग्रन्थिं विस्रंस्य ततः प्रस्तराख्यं प्रथमं मुष्टिमादाय तं यजमानाय प्रयच्छेत्। यजमानो ब्रह्मणे प्रयच्छेत्। ब्रह्मा प्रस्तरं धारयेत्। अथ वा यजमान एव धारयन्नासीत्। ततो दर्भैः वेदेः पश्चिमभागमारभ्य आहवनीयस्य पश्चिमभागं यावत् त्रिभिः पञ्चभिर्वा धातुभिः वेदिं स्तृणुयात्। यथा वेदेर्भूभागो न दृश्येत तथास्तरितव्यम्। ततोऽध्वर्युः ब्रह्मणो हस्तात् प्रस्तरमादाय प्रस्तरपाणिरेव सन् परिधीनाहवनीयस्य पश्चिम-दक्षिण-उत्तरभागेषु क्रमशः परिदध्यात्। तत आवहनीयमभिमन्त्र्य प्रज्वलय्य आघारसमिधौ गृहीत्वा समिद्धस्तः मध्यमपरिधिं स्पृष्ट्वा ते समिधौ अग्नेर्मध्ये ऊर्ध्वाग्रे स्थापयेत्। ततो वेदेरास्तीर्णबर्हिष उपरि तिरश्चीनावुत्तराग्रौ द्वौ दर्भौ (विधृतिसंज्ञकौ) निधाय तदुपरि प्रागग्रं प्रस्तरं विस्रंस्य स्तृणुयात्। तदुपरि च मन्त्रेण जुहूमुपभृतं ध्रुवां स्रुवमाज्यस्थालीञ्च सादयेत्। ततः सादितानि पात्राण्यभिमन्त्र्य पुरोडाशयोरुपर्यध्यूढानङ्गारानपोह्य तावभिमन्त्र्य आज्यस्थालीस्थमाज्यं स्रुवेण गृहीत्वा समन्त्रकमाग्नेयं पुरोडाशं तूष्णीं चाग्नीषोमीयमभिघार्य पात्र्यामुपस्तीर्य तत्र पुरोडाशौ स्थापयित्वा अभिघारयेत्। तच्च संस्कारत्वात् पुरोडाशद्वयेऽपि पृथक्कार्यम्। ततः ब्रीहिमयं समन्त्रकं यवमयश्चेत्तं तूष्णीं पुरोडाशद्वयं पात्र्यां स्थापयेत्। स्रुवेणाज्यस्पृष्टेन कपालानि प्रमृज्य तेनैव पुरोडाशावञ्जीत। ततस्तावभिमृश्य वेद्यन्तान् परिस्तीर्य होतुरूपवेशनार्थं वेदेर्वायव्यकोणे स्थानं परिकल्प्य सामिधेनीभ्यः प्रतिपद्येत।

### सामिधेनीकर्म

तत्र प्रथमं होतारं सम्प्रेष्य स्वोपवेशनार्थं कल्पिते आसने उपविष्टेन होत्रा सामिधेनीसंज्ञकानामृचां पाठे क्रियमाणे अध्वर्युराहवनीयपश्चिमदेशे प्राङ्मुखआसीन इध्मकाष्ठान्याहवनीये अभ्यादध्यात्। होत्रा पठ्यमानाया ऋचः अन्ते प्रणवोच्चारणकाल एव समिधामाधानं कर्तव्यम्। तत्र ब्राह्मणे

सामिधेनीसंज्ञका ऋच एकादशैव आम्नाताः। तासां प्रथमाया अन्तिमायाश्च त्रिस्त्रिरावृत्त्या पञ्चदशसंख्या सम्पादनीया। तत्र उपान्तिमामृचमन्तिमां वा होत्रा पठ्यमानां श्रुत्वा अध्वर्युः स्वहस्तस्थितासु समित्सु अनुयाजार्थमेकां समिधमवशेष्यावशिष्टानीध्मकाष्ठान्याहवनीये सहैवाभ्याधाय वेदेनाग्निं त्रिर्वीजयित्वा प्रज्वलय्य स्रुवेण ध्रुवातो आज्यमादाय वेदेनोपयम्य आसीन एवोत्तरपरिधिसन्धिमारभ्याक्ष्ण्या अविच्छिन्नामाज्यधारां स्रावयेत्। तत्र प्रजापतिर्देवता। तं च मनसैव ध्यायेत्। न वाचोच्चारयेत्। एवं यत्र तत्र प्रजापतेर्देवतात्वं तत्र मनसैव तस्य ध्यानम्। न वाचा तस्योच्चारणम्। ततोऽध्वर्युराज्यस्थाल्या आज्यं गृहीत्वा तेन ध्रुवां पूरयित्वा अग्नेः परिधीनाञ्च संमार्गकरणाय अग्नीधे प्रैषं दत्त्वा तेन तेषां संमार्गे स्फ्येन क्रियमाणे दक्षिणेन हस्तेन जुहूं सव्येनोपभृतं चादाय दक्षिणपादं पूर्वं कृत्वा वेदिमतिलङ्घ्य दक्षिणदेशमागत्याहवनीयस्य दक्षिणत उदङ्मुखस्तिष्ठन् दक्षिणपरिधिसन्धिमारभ्य ईशानदिक्पर्यन्तं सन्ततामाज्यधारां पूर्ववत् स्रावयेत्। अयं द्वितीय आघारः। अत्रेन्द्रो देवता।

**प्रयाजाः**

एवमाघारद्वयमनुष्ठाय जुहूमुपभृतं च परस्परमसंस्पर्शयन्नेव हस्ते धृत्वा यथागतं वेदेरुत्तरभागं प्रतिनिवर्त्य, जुह्वां ध्रुवां द्विस्त्रिर्वा समज्य, ध्रुवाया आज्यमादाय जुहूं, जुह्वा आज्यमादाय ध्रुवां चाभिघार्य ध्रुवां प्रत्यभिघार्य वेदिमध्ये ते स्थापयित्वोदग्गत्वा ब्रह्माणमामन्त्र्य प्रवरकथनाय आश्रावणं कुर्यात् – **आश्रावय** इति। तत आग्नीध्रेण '**अस्तु श्रौषट्**' इति प्रत्याश्राविते अध्वर्युर्होतुरार्षेयं ब्रूयात् – '**भार्गव वैतहव्य**' इत्यादि। ततो होत्रा यथावदनुष्ठीयमानेषु स्वकर्मसु '**घृतवतीमध्वर्यो: स्रुचमास्यस्व**' इति यदा मन्त्रैकदेशः पठ्यते तदा अध्वर्युर्जुहूपभृतावादाय वेदेर्दक्षिणदेशं गत्वा, आश्राव्य आग्नीध्रेण प्रत्याश्रावणे कृते प्रजायार्थं होतारं प्रति '**समिधो यज**' इत्यादि प्रैषं दद्यात्। तत्र पञ्चप्रयाजाः। प्रतिप्रयाजम् आश्रावण – प्रत्याश्रावण – प्रैषदान – याज्यापाठा भवन्ति। याज्याया अन्ते वषट्कार उक्ते आहवनीये होमा भवन्ति। तत्राश्रावणमध्वर्युकर्तृकम्। प्रत्याश्रावणमाग्नीध्रकर्तृकम्।

याज्यावषट्कारपाठो होतृकर्तृक इति विवेकः। '**आश्रावय**' इत्याश्रावणम्। '**अस्तु श्रौषट्**' इति प्रत्याश्रावणम्। '**यज**' इति प्रैषः। '**ये यजामहे**' इत्यारभ्य निर्दिष्टमन्त्रपाठो याज्यापाठः। '**वौषट्**' इति वषट्कारः। आश्रावणप्रत्याश्रावणे अध्वर्युणा आग्नीध्रेण च तिष्ठद्भ्यामेव कर्तव्ये। यजतिचोदितेषु स्थलेषु होमाश्च। एवं जुहूस्थेन आज्येन त्रीन् प्रयाजान् हुत्वा चतुर्थप्रजायार्थमौपभृत-स्याज्यार्धं जुह्वां समानीय तेन चतुर्थपञ्चमौ प्रयाजाविष्ट्वा जुह्वां किञ्चिदाज्यमवशेष्य तेन वेद्यामासादितौ पुरोडाशावभिघारयेत्। एवमेव सर्वत्र प्रयाजाज्यशेषेण यागीयप्रधानहवींष्यभिघारयेत्। ततः यथेतं प्रतिनिवृत्यायतने जुहूपभृतावासाद्य ध्रुवातः स्रुवेण आज्यमादाय तेन प्रस्तरमङ्क्त्वा आज्यभागार्थं होत्रे प्रैषं दत्वा तेन याज्यापुरोऽनुवाक्ययोरुक्तयोः सत्योः आहवनीयाग्नेरुत्तरार्धपूर्वार्धे अग्निदेवतायै पूर्वमाज्यभागं दक्षिणार्धपूर्वार्धे सोमदेवतायै अपरं च आज्यभागं जुहुयात्। तत्र स्रुवेण ध्रुवाया आज्यमादायैकां दोषनिर्घातार्थां व्रातपतीष्टिस्थानीयाम् आज्याहुतिमाहवनीये हुत्वा हस्तौ प्रक्षाल्य प्रधानयागाननुतिष्ठेत्।

## प्रधानयागानुष्ठानम्

तत्र आज्येन जुह्वामुपस्तीर्य आग्नेयस्य पुरोडाशस्य मध्यादङ्गुष्ठपर्वमात्रं तिर्यक्तया प्रथममवदाय ततः पूर्वार्धाद् अनूचीनतया द्वितीयवारमवदाय जुह्वां क्षिप्त्वोपर्यभिघार्य, वेदिगतं शिष्टं पुरोडाशं प्रत्यभिघार्य होत्रे प्रैषं दद्यात्। ततस्तेन पुरोऽनुवाक्यायामनूक्तायामध्वर्युर्वेदेर्दक्षिणदेशं गत्वा आश्रावणप्रत्या-श्रावणानन्तरं अग्निं यजे 'ति प्रैषं दत्वा होतुर्वषट्कारान्ते हविरग्नौ जुहुयात्। तत्र वषट्कारोच्चारणकाले जुहूगतमाज्यं पूर्वं किञ्चिदग्नौ स्रावयित्वा ततः पुरोडाशखण्डं जुह्वैवाग्नौ प्रक्षिप्य तदुपरि जुह्वामवशिष्टमाज्यमवश्च्योतयेत्। एवमेव सर्वत्र चरुपुरोडाशादिष्वाहुतिक्रमः। ततः प्रत्याक्रम्य ध्रुवायां वारचतुष्टयं स्रुवेण आज्यं गृहीत्वा जुहूमापूर्य वेदेर्दक्षिणभागे आहवनीयस्य दक्षिणत उदङ्मुखस्तिष्ठन् द्वितीयमुपांशुयाजनामकं यागमनुतिष्ठेत्। तत्र आज्यं द्रव्यम्। विष्ण्वादयो देवताः। तत्र याज्या पुरोऽनुवाक्ययोरूपांश्वेव पाठः।

पुनरुत्तरतो गत्वा जुहूमभिघार्याग्नीषोमीयपुरोडाशादाग्नेयपुरोडाशवदवदाय दक्षिणातिक्रम्याग्नीषोमदेवताकं प्रैषादिकं सर्वमनुष्ठाय पुरोडाशखण्ड-मग्नीषोमाभ्यां जुहुयात्। अत्र एतावन्तः प्रधानयागाः।

अत्र सर्वत्र यजमानोऽग्नौ तत्तद्धविषः प्रक्षेपसमये मनसा तत्तद्देवतायै तत्तद्द्रव्यं त्यजन् तदवबोधकं शब्दराशिं च 'अग्नय इदं न मम,' इदमग्नये न मम इत्यादिकं वा वाचोच्चारयेत्। ततोऽध्वर्युः प्रत्याक्रम्य वेदेरुत्तरतः उपविश्य स्रुवेण पार्वणं होमं जुहुयात् तत्र पूर्णमासी देवता। अनन्तरं तत्रैवोपविष्टः सन् नारिष्ठसंज्ञकान् होमान् स्रुवेणैव जुहुयात्।

## स्विष्टकृद्यागः

ततः स्विष्टकृद्यागः। तदर्थं जुह्वामुपस्तीर्य पूर्वहुतावशिष्टयोर्द्वयोः पुरोडाशयोरुत्तरार्धात् सकृत्सकृदवदाय होत्रे प्रैषं दत्वा अध्वर्युर्दक्षिणातिक्रम्य आश्रावणाद्यनन्तरमग्नये स्विष्टकृते जुहुयात्। होमोऽयमग्नावुत्तरार्धपूर्वार्धे कर्त्तव्यः। ततो यथेतं प्रत्याक्रम्य जुह्वामप आनीयान्तः परिधिं निनयेत्।

## इडाभक्षणादि

ततः प्राशित्रहरणपात्रमुपस्तीर्य हुतावशिष्टयोः पुरोडाशयोर्मस्तकम् अङ्क्त्वा तस्माद्यवमात्रं व्रीहिप्रमाणमात्रं वा भागमवदाय तं सपात्रं ब्रह्मणे प्रयच्छेत्। स तं हस्तद्वयेन परिगृह्य वेदिमध्ये आस्तरणतृणान्यपोह्य तत्र सादयित्वा सादितं तमभिवीक्ष्याङ्गुष्ठानामिकाभ्यामङ्गुलिभ्यां तं भागमादाय दन्तैरसंस्पर्शयन् भक्षयति। तत आचम्येन्द्रियाणि संमृशति। प्राशित्रपात्रं प्रक्षाल्य पराचीनं निनयति। तत इडापात्रमादायोपस्तीर्य सर्वेभ्यो हविर्भ्यो दक्षिणभागादिडामवदाय तां पात्रे निक्षिप्य द्विरभिघार्य होत्रे प्रयच्छेत्। ततो होतुर्दक्षिणत आसीनः साज्येन स्रुवाग्रेण होतुः तर्जन्यङ्गुलिपर्वणी अभ्यज्य प्रथमम् इडामादाय होतुर्हस्ते निक्षिपेत्। द्वितीयं होता स्वयमेवावद्य स्वहस्ते निक्षिपेत्। ततो लेपादिडापात्रस्थात्तदभिघार्य होत्रा इडोपह्वाने कृते पात्रस्थाया इडायाः किञ्चित्किञ्चिदवदाय होत्रे, ब्रह्मणे, अग्नीधे, यजमानाय च भागशो

दत्त्वा तैस्सहाध्वर्युरिडां भक्षयेत्। तत आचम्यान्तर्वेदिं मार्जयित्वा आग्नेयं पुरोडाशं गृहीत्वा तं वेद्यां दर्भेष्वासाद्य चतुर्धा विभज्य इदं ब्रह्मणः, इदं होतुः, इदमध्वर्योः, इदमग्नीध इति यजमानेन विभक्तव्यादेमे कृतेऽध्वर्युराग्नीध्रस्य भागं द्विरुपस्तरणेन द्विरवदानेन द्विरभिघारणेन च षडवत्तमाग्नीध्रहस्त एव संपादयेत्। ततः सर्वे ऋत्विजः स्वं स्वं भागं भक्षयेयुः।

**ऋत्विग्दक्षिणा अनूयाजाश्च**

तत्र ऋत्विग्दक्षिणार्थं दक्षिणाग्नौ पुरुषचतुष्टयभोजनपर्याप्तं ब्रीहितण्डुलैरोदनं पक्त्वोद्वास्य वेद्यामासाद्योत्तरभागे अवस्थितानृत्विजः अन्वाहार्याख्यं तमोदनं यथाभागं विभज्य दत्वा पुनस्तानुत्तरतः प्रैषपूर्वकं प्रहिणुयाद्यजमानः। ततो हविश्शेषानुद्वास्य अग्निपरिधिसंमार्गायाग्नीधे प्रैषं दत्वा अनूयाजार्थं ब्रह्माणमामन्त्रयेत। तेनानुज्ञातः अग्नीत् पूर्वमनूयाजार्थ-मवशेषितामेकां समिधमाहवनीय आधायाग्नीन् परिधींश्च सकृत् सकृत् संमृज्येध्मसन्नहनोपयुक्तां तृणमयीं रज्जुमद्भिः संमृज्याग्नौ प्रास्येत्। तत उपभृत्यनूयाजार्थं पूर्वमवशेषितमाज्यं जुह्वामानीय जुहूपभृतावादाय दक्षिणातिक्रम्योदङ्मुखः प्रयाजवत् प्रैषादिषु कृतेषु त्रीननूयाजान् वषट्कृते जुहुयात्। तत्र याज्याया आदौ 'ये यजामहे' इति न वक्तव्यम्। केवलं याज्यां पठित्वा तदन्ते वषट्कुर्यादिति विशेषः। ततः प्रत्याक्रम्य आयतने जुहूपभृतौ सादयित्वा ते व्यूहेत्। व्यूहनं विविधं सञ्चालनम्। ततः प्रस्तरमुपाधाय आज्यलिप्तेषु पात्रेषु तमञ्ज्यात्। तत्र जुह्वामग्रम्, उपभृतिमध्यं, ध्रुवायां मूलं च प्रस्तरस्याञ्ज्यात्। एवं त्रिरङ्क्त्वा ततस्तृणमेकमपादाय पृथङ्निक्षिप्य दक्षिणोत्तराभ्यां पाणिभ्यां प्रस्तरं गृहीत्वा प्रस्तरं मूलं जुह्वां प्रतिष्ठाप्य आश्रावणादिषु कृतेषु होतारं प्रति सूक्तवाकपठनाय प्रैषं दत्वा तेन सूक्तवाकानुवाके पठ्यमाने प्रस्तरमाहवनीये प्रहरेत्। प्रहरणं प्रक्षेपणम्। ततः पूर्वमुपातं तृणमग्नौ प्रक्षिप्य तन्निर्दिश्य शंयुवाकाय होत्रे प्रैषं दत्वा तेन तस्मिन्ननूच्यमाने आहवनीये परिधीन्

प्रहृत्य संस्रवहोमं कुर्यात्। अत्रैव ऋत्विजः पूर्वं तेभ्यो दत्तान् पुरोडाशादि हविश्शेषं भक्षयेयुः।

**पत्नीसंयाजः, पिष्टलेपाहुतिः, योक्त्रविमोकादिकञ्च**

तत अध्वर्युर्जुहूपभृत्स्रुवगतानाज्यलेपानुष्णेन वारिणा प्रक्षाल्य पात्राणि तान्यादाय गार्हपत्याग्नेः समीपं गच्छेत्। वेदं होता, स्फ्यमाज्यस्थाली-मुदककमण्डलुं चाध्वर्युः गृहीत्वा तत्रैव गच्छेताम्। ततो गार्हपत्यस्य पश्चिमदेशे दक्षिणतोऽध्वर्युरुत्तराभिमुखः उत्तरत आग्नीध्रो दक्षिणाभिमुखो मध्ये होता पूर्वाभिमुखश्चेत्येतं प्रकारेणोपविश्योच्चैरुपांशुस्वरेण वा आज्यद्रव्येण पत्नीसंयाजाख्यान् कांश्चन होमान् कुर्युः। तत्र प्रैषाश्रावणप्रत्याश्रावणेषु पूर्ववदेव कृतेषु अध्वर्युर्गार्हपत्यस्योत्तरार्धे जुहुयात्। तत्र सोमः, त्वष्टा, देवपत्न्यः, राका, सिनीवाली, कुहू, अग्निर्गृहपतिरिति देवताः। तत्र राकादीनां तिसृणां होमा नित्याः काम्याश्च। इतरेषां नित्या एव। तत्र सर्वत्रोद्देशत्यागो यजमानेन पत्न्या चेत्युभाभ्यां कर्त्तव्यः। एवं हुतानुमन्त्रणमपि। ततः पुरोडाशादौ कृतेडाह्वानभक्षणादिवदाज्येडायामपि सर्वं कुर्यात्। ततः स्रुवेण सम्पत्नीयहोमः। ततो दक्षिणाग्नाविध्म प्रवश्चनान्याधाय जुह्वां चतुर्गृहीतमाज्यं गृहीत्वा तत्र फलीकरणानोप्य तेन जुहुयात्। ततः पूर्वगृहीत आज्ये पिष्टलेपान् प्रक्षिप्य तेन होमचतुष्टयं कुर्यात्। ततो होतरि वेदं विस्रंस्य तदीयतृणैर्वा पश्चिमत आरभ्य प्राचीनं यावदाहवनीयं समग्रां स्तृण्वाने सति पत्नी स्वकटितः योक्त्रं विमुच्य स्वाञ्जलौ स्थापयेत्। तदा तस्या अञ्जलौ जुहूगतमुदकमध्वर्युरासिञ्चेत। सा तदुदकं भूमौ विस्राव्यार्द्रेण हस्तेन स्वमुखं विमृज्योत्तिष्ठेत्। एतावन्तं पत्नीकर्म।

**प्रायश्चित्ताहुतिः, समष्टियजुर्होमश्च**

होताऽपि स्तरणावशिष्टानि वेदितृणानि भूमौ निधाय आहवनीये स्रुवेण हुत्वा संस्थाजपाख्येन मन्त्रेणोपस्थाय निस्सरेत्। एतदन्तं होतुः कर्म। ततोऽध्वर्युराहवनीयसमीपं गत्वा जुह्वा स्रुवेण वा वह्वीः प्रायश्चित्ताहुतीर्जुहोति।

तदन्ते ध्रुवाया आज्यं गृहीत्वा समिष्टयजुसंज्ञकं होमत्रयं कुर्यात्। तन्मध्य एव वेद्यामास्तीर्णानि सर्वाणि बर्हिष्यादाय आहवनीये प्रक्षिपेत्। ततो वेदिमध्ये प्रणीता अप आसाद्योत्करे उपवेषं निरस्य कपालानि पुरोडाशश्रपणार्थमु-पहितानि पृथक्कृत्य संख्यायोद्वासयेत् एतावदाध्वर्यवं कर्म।

**याजमानम्**

यजमानस्तु यज्ञसंकल्पभृति ब्रह्मचर्यादीन् नियमान् धारयेत्। दक्षिणार्थं द्रव्यं प्रकल्पयेत्। प्रधानकर्मणः फलं यद्यङ्गेष्वपि फलेच्छा तर्हि यत्र तत्र यादृशं फलं निर्दिष्टं तस्य तस्य कामना, आत्मगामिफलबोधकमन्त्राणां पठनम्, सङ्कल्पात् पूर्वमेव क्षुरकर्म, सर्वेष्वपि कर्मसु द्रव्यत्यागयुतेषु तत्तद्देवताभ्यो मनसा तत्तद्द्रव्यस्य त्यागः, यत्र यजमानं वाचयति तेषां सर्वेषां मन्त्राणां पठनम्, यदा यदा अध्वर्य्वादिभिः प्रैषो दीयते तदनुरोधेनानुष्ठानम्, क्वचित् यज्ञियानां हविषां विध्यनुरोधेनाभिमर्शनम्, अनुमन्त्रणमन्त्राणां सर्वेषां पाठः, तत्तद्धविर्भक्षणम् इत्यादिकं कृत्वा अन्ते यज्ञविमोकं कुर्यात्। इष्टिश्चादौ अन्ते गोमतीजपं कुर्यात्। सं यज्ञपतिराशिषा इति मंत्र जपित्वा यज्ञं विसृजेत् इत्येतदन्तं याजमानम्।

**अथ दर्शयागे विशेषाः**

तत्र आग्नेयपुरोडाशयागः ऐन्द्रो दधिद्रव्यको यागः ऐन्द्र एव च पयोद्रव्यको याग इति यागत्रयमित्युक्तम्। तत्र दधि पयश्च वक्ष्यमाणेन विधिना पृथक् पृथक् सम्पाद्य यागकाले उभौ सम्मेल्य सकृदेव द्वयोर्यागः क्रियते। अत एव दधिपयसोर्मिलितयोः सान्नाय्यमिति संज्ञा याज्ञिकानाम्।[1] तद्द्रव्यको यागः सान्नाय्ययागः। तत्र आग्नेयो यागः पौर्णमास्यां यथा कृतः तथैव सः तदङ्गानि चामावास्यायामनुष्ठीयेरन्। आग्नेययागस्वरूपन्तु पौर्णमासप्रकरणे

1. सान्नाय्य हविषः प्रयोगः स एव यजमानः कर्तुमर्हति यः पूर्वं सोमयागं कृतवान् स्यात्। परं 'कामादितरः' (का० श्रौ० सू० 2/4/26) द्वारा असोमयाजिनां कृतेऽपि सान्नाय्ययागविधानं कृतमस्ति।

सम्यगुक्तं तत एवावगन्तव्यम्। सान्नाय्यसम्बन्धिनो ये विषयाः ते तदनुष्ठानप्रकारश्च परमत्र निरूप्यन्ते।

## वत्सापाकरणम्

अमावास्यायां प्रातः कृतस्नानसन्ध्यादिनित्यक्रियः प्रातरग्निहोत्रं हुत्वा तानग्नीन् परित्यज्य (कुण्डेभ्यो बहिर्निष्कास्य) पुनः गार्हपत्यात् तूष्णीमग्नीन् प्रणीय पौर्णमासवत् तेष्वन्वाधानं कृत्वा वत्सापाकरणार्थं शाखाहरणं कुर्यात्। तत्र विहारात् (यज्ञानुष्ठानस्थानात्) प्राचीं गत्वा शमीवृक्षस्य पलाशवृक्षस्य वा बहुपर्णां वह्ववान्तरशाखामाहृत्य[1] तया शाखया अध्वर्युः यजमानस्य षड्भिर्गोभिः सह षड्वत्सान् संसृज्य, तान् वत्सान् प्रत्येकं 'वायवस्थ' इति मन्त्रेण तया शाखया उपस्पृश्य गोभ्यो वियोजयेत्। षड्वत्सान् स्वमातृभ्यः पृथक्कृत्य गाः चारणाय गोचरप्रदेशं वनं वा प्रेषयेत्। तां च शाखामग्न्यागारे सुरक्षितामुपरि स्थापयेत्। ततो दर्भाहरणं कुर्यात्।[2] तत्प्रकारः पौर्णमासयागवत्।

## गोदोहनम्

ततः सायं यजमानस्य यवाग्वा स्वयमग्निहोत्रहोमः। तत अध्वर्युः त्रैवर्णिकं दोग्धारम् '**उपसृष्टां प्रब्रूतात्**'[3] इति प्रेषयति।

अग्निहोत्रावशिष्टां यवागूं दध्यातञ्चनार्थमवस्थापयेत्। ततोऽध्वर्युरग्नीन् परिस्तीर्य सान्नाय्यपात्राणि प्रक्षाल्य आहवनीयस्योत्तरतः आस्तृतेषु दर्भेषु तान्यधोमुखानि प्रयुज्य अग्निहोत्रहवण्यां जलमुत्पूय पात्राण्युपरिमुखानि कृत्वा, उत्पूतेन जलेन तानि प्रोक्ष्य दोहनकुम्भीं शाखापवित्रं पयः श्रपणकुम्भीमुपवेषं चाहवनीये निष्टप्य आहवनीयादङ्गारान् किञ्चिदिव बहिः कृत्वा तदुपरि श्रपणकुम्भीमधिश्रित्य तां परितः प्रताप्य तत्रैव

---

1. 'इषेत्वा' इति छिनत्ति, उर्जे त्वा इति अनुमार्ष्टि। शु० य० सं० 1/2
2. पवित्रमस्यां बध्नाति (का० श्रौ० सू० 4/2/15)
3. का० श्रौ० सू० 4/2/18

स्थापयित्वा वाग्यतः यथाविधि यजमानस्य तिस्रो गाः दुग्ध्वा तत् पयः कुम्भ्यां (श्रपणार्थायां) निनयेत्। ततो वाग्विसर्जनं कुर्वन् तिस्रः ततोऽप्यधिका वा (यद्यधिका गावो यजमानगृहे दोहनयोग्याः स्युः ताः मन्त्रं बिना) दुग्ध्वा तदपि दुग्धं प्रतप्तायां तस्यामेव कुम्भ्यां प्रक्षिप्य तत्पयः सुश्रृतं कुर्यादविष्यन्दन्। श्रृते पयसि कुम्भीं प्राग्देशे उदग्देशे वोद्वास्य किञ्चिदिवापगतौष्ण्यायां तस्यां लौकिकं दध्यासिच्यायस्पात्रेण दारुपात्रेण वा कुम्भ्याः मुखं पिधाय तामुपरि शिक्ये निदध्यात्। तदिदमातञ्चनमित्युच्यते। ततो यजमानः कटाद्यास्तृतायां भूमौ शयीत जागृयाद्वा एतावदमावास्यादिनकृत्यम्।

## शुक्लप्रतिपद्दिनकृत्यम्

श्वोभूते सूर्योदयात्प्रागेवोत्थाय कृतस्नानादिरध्वर्युः कर्मारभेत पूर्वदिनवद्वत्सापाकरणम्। पात्रसंसादनकाले दोहनोपयुक्तानि पात्राणि प्रयुञ्ज्यात्। पुरोडाशश्रपणाय कपालोपधानानन्तरं सायं दोहवत्प्रातर्दोहं कुर्यात्। हविः पर्यग्निकरणकाले सायं दोहस्य दध्नोऽपि पर्यग्निकरणम्। हविरभिमर्शनकाले दोहयोरप्यभिमर्शनम्। हविरासादनकाले पुरोडाशस्योत्तरतो दोहयोरासादनम्। अभिघारणकाले पुरोडाशाभिघारणानन्तरं दधिपयसोरभिघारणम्। प्रधानयागकाल आग्नेयेन पुरोडाशयागेनेष्ट्वा जुह्वामुपस्तीर्य सायं दोहाद्दध्नः स्रुवेण द्विरवदाय ततः प्रातर्दोहात्पयसः स्रुवेणैव जुह्वामेव दध्ना सहैव द्विरवदाय (एतद्वा विपरीतम्) उपर्यभिघार्य आश्रावणप्रत्याश्रावणादि इन्द्राय महेन्द्राय वा कृत्वा (सोमयाजिनः संवत्सरं यावदिन्द्रो देवता तत ऊर्ध्वं महेन्द्रो देवता) वषट्कारान्ते जुहुयात्। द्वयोर्द्रव्ययोर्दधिपयसोः संमिश्रितत्वात् सकृदेव होम उद्देशत्यागश्च।

ततः पार्वणहोमोऽमावास्या देवताकः। ततः स्विष्टकृद्यागकाले तदर्थं दधिपयसोरप्यवदानम्। सूक्तवाकमन्त्रपठनकाले 'अग्निरिदं हविरजुषत' इत्यनन्तरम् 'महेन्द्र इदं हविरजुषत' इति 'इन्द्र इदं हविरजुषत' इति वा होत्रा प्रयोक्तव्यम्। प्रस्तरस्याग्नौ प्रहरणकाले पलाशशाखया सह प्रहरणम्।

एतावन्त एवामावास्यायां विशेषाः। अन्यत्सर्वं पौर्णमासीवदनुष्ठेयमिति वेदितव्यम्।

**दर्शश्च पूर्णमासश्च यस्य रूपं परात्मनः।**
**तं वन्दे यज्ञतपसां भोक्तारमपराजितम्।।**

इति दर्शपूर्णमासौ।

## 3. अथाऽग्निष्टोमः

पूर्वं यदुक्तं होम-इष्टि सोमभेदेन यज्ञस्त्रिविधस्तत्र सर्वेषां होमानां प्रकृतिरग्निहोत्रम्, समस्तानामिष्टीनाम्प्रकृतिर्दर्शपूर्णमासौ, समस्तानां सोमानां प्रकृतिरग्निष्टोम इति। तदनुसृत्यात्र सोमयागानां प्रकृतिभूतस्याग्निष्टोमस्य चर्चा क्रियते।

'**सर्वकामोऽग्निष्टोमः**[1]' इत्यनेन वाक्येन समस्तकामनासिद्धये अग्निष्टोमो विधीयते। अग्निष्टोमशब्दोऽयं संस्थापरक एवावगन्तव्यः। यस्मिन् यागे सोमलतायाः रसस्याहुतिर्दीयते स सोमयाग इत्युच्यते। तस्य सोमयागस्य सप्तसंस्थाः प्रोक्ताः। तासु सप्तसोमसंस्थासु अग्निष्टोमसंज्ञिका प्रथमा सोमसंस्था विश्रुताऽस्ति।[2] संस्थानाम स्तोत्रपरको भवति। अन्ते यस्य स्तोत्रस्य पाठः गानं वा भवति तदाधारीकृत्यैव संस्थासंज्ञाऽवलम्बिता भवति। यज्ञायज्ञीयेन गानेन (स्तोत्रपाठेन) अस्याः संस्थायाः समाप्तित्वादेव अग्निष्टोमसंज्ञा ऋषिभिरुक्ता। उपर्युक्तेन स्तोत्रेणाग्निर्देवता स्तूयते। एतस्मादेव कारणात् सप्तसंस्थासु सर्वप्रथमम् अस्या एव संस्थाया अनुष्ठानं विहितमस्ति।

इदं तु पूर्वमेवोक्तं यदस्मिन् अनुष्ठाने सोमरसस्याहुतिर्दीयते तत्र सोमयागशब्दस्य प्रयोगो भवति। सोमो नाम लताविशेषः। तस्य कुट्टनं कृत्वा तद्रसमादाय ग्रहपात्रेण देवतायै हूयते। प्रसङ्गानुसारमत्र सोमलताविषये किञ्चिदुच्यते-

---

1. सत्या० श्रौ० सू० 7/1/1
2. स प्रथमः सोमानाम्, सत्या० श्रौ० सू० टीकायाम् 7/1
   एष प्रथमः सोमः का० श्रौ० सू० 10/9/25

## सोमलताया ( हविषः ) उत्पत्तिस्थानानि

सोमनाम्नी काचिल्लता विशिष्टा भवति। अद्यत्वे खल्वियमप्राप्या। प्राक्कालेऽपि कस्मिंश्चित्स्थानविशेष एवास्याः प्राप्तेरुल्लेखो मिलति। तदुक्तं वैद्यके –

हिमवत्यर्बुदे सह्ये महेन्द्रे मलये तथा।
श्रीपर्वते देवगिरौ गिरौ देवसहे तथा।। 1।।

परियात्रे च विन्ध्ये च देवसुन्दे ह्रदे तथा।
उत्तरेण वितस्तायाः प्रवृद्धाः ये महाधराः।। 2।।

पञ्चैतेषामधो मध्ये सिन्धुनामा महानदः।
हयवत् प्लवते तत्र चन्द्रमाः सोमसत्तमः।। 3।।
तस्योद्देशेषु चाप्यस्ति मुञ्जमानंशुमानपि।
काश्मीरेषु सरो दिव्यं नाम्ना क्षुद्रकमानसम्।। 4।।

गायत्रस्त्रैष्टुभः पाङ्क्तो जागतः शाक्करस्तथा।
अत्र सन्त्यपरे चापि सोमा सोमसमप्रभाः।। 5।।

## सोममहिमा सोमपानफलञ्च

ओषधीनां पतिं सोममुपयुज्य विचक्षणाः।
दशवर्षसहस्त्राणि नवां धारयते तनुम्।। 6।।

नाग्निर्न तोयं न विषं न शस्त्रं नास्त्रमेव च।
तस्यालमायुः क्षपणे समर्थाश्च भवन्ति हि।। 7।।

भद्राणां षष्टिवर्षाणां प्रसूतानामनेकधा।
कुञ्जराणां सहस्त्रस्य बलं समधिगच्छति।। 8।।

क्षीरोदं शक्रसदनमुत्तरांश्च कुरूनपि।
यत्रेच्छति स गन्तुं वा तत्राप्रतिहता गतिः।। 9।।

साङ्गोपाङ्गांश्च निखिलान् वेदान् विन्दति तत्त्वतः।
चरत्यमोघसंकल्पो देववच्चाखिलं जगत्।। 10।।
कन्दर्प इव रूपेण कान्त्या चन्द्र इवापरः।
प्रह्लाद इति भूतानां मनांसि स महाद्युतिः।। 11।।

सोमलतास्वरूपं तद्वृद्धिर्ह्रासश्च

श्यामलाम्ला च निष्पन्ना क्षीरिणी त्वचि मांसला।
श्लेष्मला वमनी वल्ली सोमाख्या छागभोजनम्।।12।।
सोमवल्ली महागुल्मा यज्ञश्रेष्ठा धनुर्लता।
सोमार्हा गुल्मवल्ली च यज्ञवल्ली द्विजप्रिया।।
सोमवल्ली कटुः शीता मधुरा पित्तदाहकृत्।। 13।।
कृष्णा विशोषशमनी पावनी यज्ञसाधनी।
सर्वेषामेव सोमानां पत्राणि दशपञ्च च।। 14।।
तानि शुक्ले च कृष्णे च जायन्ते निपतन्ति च।
एकैकं जायते पत्रं सोमस्याहरहस्तदा।। 15।।
शुक्लस्य पञ्चदश्यां तु भवेत् पञ्चदशच्छदः।
शीर्यते पत्रमेकैकं दिवसे दिवसे पुनः।। 16।।
कृष्णपक्षक्षये चापि लता भवति केवला।

द्रष्टव्यः – (सुश्रुतसंहिता, चिकित्साप्रकरणम्, अ० 29)

सम्प्रति सोमलताया अभावे तस्याः प्रतिनिधिस्वरूपा पूतिकानाम्नी वनस्पतेरूपयोगः क्रियते। इयमपि प्रायः सोमलता सदृशैव भवति। सोमाभावे पूतिकारसेनैवाहुतिर्दीयते। तदुक्तम् श्रौतसूत्रे–

'सोमाभावे पूतीकानभिषुणुयादित्यादिः प्रतिनिधिर्ग्राह्यः।'[1]

---

1. सत्या० श्रौ० सू० टीकायाम्, 7/1/1

तथा च –

**'यदि सोमं न विन्देयुः पूतीकानभिषुणुयुर्यदि न पूतीकानर्जुनानि।।[1]'**

### सोमयागाधिकारी

अग्निपरिग्रहणानन्तरं द्विजमात्रोऽग्निष्टोमयागानुष्ठानायाधिकारी भवति। प्रथमः पक्षस्तु – आहिताग्निर्यजमानः अग्निष्टोमयागारम्भात् प्राक् दर्शपौर्णमासौ, चातुर्मास्यम्, पशुबन्धप्रभृतीन् यागाननुतिष्ठेत्। तदनन्तरम् अग्निष्टोमयागस्यारम्भः कुर्यात्। तदुक्तं श्रौतसूत्रे –

**'दर्शपौर्णमासाभ्यामिष्ट्वा अन्येन यजेत[2]'**

द्वितीयः पक्षस्तु – अग्निष्टोमयागमनुष्ठाय दर्शपौर्णमासादीन् अनुष्ठेत्। तदुक्तं कात्यायनेन – **'सोमेन वोपक्लृप्तसोमः।[3]'** 'आहिताग्नीनां कृते अग्निष्टोमोऽपि दर्शपौर्णमासाविव नित्यमनुष्ठेयोऽस्ति। प्रतिवर्षमस्यानुष्ठानं विहितमुचितञ्चास्ति।

### दौर्ब्राह्मण्यनिरासः

नियमानुसारमग्निपरिग्रहानन्तरमेव सोमयागानुष्ठानं कर्तुं शक्यते तस्मात् प्रत्येकं ब्राह्मणम् अग्निपरिग्रहणं कर्त्तव्यमेव। अत एव सोमयागानुष्ठानकाले एतदावश्यकं भवति यत् सोमानुष्ठातुर्यजमानस्य पिता–पितामहाभ्यां सोमयागः कृतो न वेति ज्ञानं करणीयमेव। तदुक्तं देवयाज्ञिकेन –

**'यस्य यजमानस्य पित्रा पितामहेन वोभाभ्यां सोमयागः कृतो न भवति तस्य नैमित्तिको दौर्ब्राह्मण्यनिरासार्थमैन्द्राग्नः पशुर्भवति। स चारम्भात्पूर्वस्मिन्पर्वणि पुण्याहे वा कर्त्तव्यः।[4]'** ऐन्द्राग्नपशुयागः निरूढपशुबन्धयागवद्भवति।

---

1. तां॰ ब्रा॰ 9/5/3
2. का॰ श्रौ॰ सू॰ 7/1/1
3. का॰ श्रौ॰ सू॰ 7/1/2
4. दे॰ या॰ प॰ पृ॰ 232, यस्य वेदश्च वेदी च विच्छिद्येते त्रिपूरुषम्। स वै दुर्ब्राह्मणो नाम ब्रह्मवादिषु गर्हितः।। सत्या॰ श्रौ॰ सू॰ टी॰ 7/1 'ऐन्द्राग्नं पुनरुत्सृष्टमालभ्य द्विपुरुषा सोमपीथिनः' का॰ श्रौ॰ सू॰ 7/1/6

## अग्निष्टोमयागानुष्ठानस्य कालः

अग्निष्टोमयागानुष्ठानायोचितः कालः वसन्तो ऋतुरुक्तः। तद्यथा – **'वसन्तेऽग्निष्टोमः[1]' तेन वसन्ते वसन्ते यजेत[2]** इति श्रौतवचनमनुपालनीयम्। यागेऽस्मिन् आरम्भदिनम्, दीक्षादिवसः, सुत्यादिवसश्च त्रीणि दिनानि शुभानि भवितव्यानि। तदुक्तं कात्यायनेन – **'पुण्याहे दीक्षा, क्रयः, प्रसव, उत्थानम्। प्रक्रमोत्थाने विरोधे[3]'** इति। प्रायशः यागोऽयं शुक्लपक्षस्यैकादश्यामारभ्य पौर्णमास्यां समाप्यते। एवमुक्तप्रकारेण शुभमुर्हुत्तमवलोक्य यजमानः **'देशकालौ सङ्कीर्त्य अमुकगोत्रामुकप्रवरान्वितोऽमुकशर्मा सपत्नीकोऽहं करिष्यमाणाग्निष्टोमसंस्थज्योतिष्टोमोपयोगिप्राच्यादिदिक्साधनपूर्वकशालाय-तननिर्मातुं तदङ्गतया विहितानि स्वस्तिवाचनभूमिकूर्मानन्तवराहविश्वकर्म-पुरोहितदैवज्ञपूजनानि करिष्ये। तत्रादौ निर्विघ्नता सिध्यर्थं गणपतिगौरीपूजनञ्च करिष्ये।'** इति सङ्कल्प्य देवयजननिर्माणकार्यमारभेत्।

## यागपूर्वाङ्गानि

यदि यजमानजीवनकालस्य प्रथमोऽग्निष्टोमयागः स्याच्चेत् तर्हि पञ्चाङ्गनामनुष्ठानं कुर्यात्। देवयजनपार्श्वे भूमौ पूर्वाभिमुखोपविश्य संकल्प्य गणपतिपूजनं, स्वस्तिवाचनं, मातृकापूजनं वसोधारापूजनम्, आयुष्यमन्त्रजप, नान्दीश्राद्धश्च कुर्यात्। द्वितीयस्याग्निष्टोमयागस्यानुष्ठानं स्याच्चेत्तर्हि आभ्युदयिकश्राद्धस्य वैकल्पिकं विधानमस्ति।

## सोमयागे प्रथमदिनकृत्यम्

सोमयागमिममनुष्ठास्यन् सपत्नीको यजमानो वासन्त्याः पूर्णिमायाः पूर्वस्याम् अष्टम्यां (दीक्षाचतुष्टयपक्षे) नवम्याम् (दीक्षात्रयपक्षे) एकादश्याम्

---

1. का० श्रौ० सू० 7/1/5
2. सत्या० श्रौ० सू० 7/1/1
3. का० श्रौ० सू० 7/1/25-26

(एकदीक्षापक्षे) वा सोमयागसङ्कल्पं करिष्यमाणः ततः पूर्वं पर्याप्ते समये सोमप्रवाकं[1] वृत्वा तं तत्तदृत्विग्भ्यः प्रेषयेत्। स तानवाप्य 'अमुकशर्मणः सोमो भविष्यति, तत्र भवता आर्त्विज्यं कर्त्तव्यम्', 'हौत्रं कर्त्तव्यम्' इत्यादि कथयेत्। स च ऋत्विक् तत्र आर्त्विज्यं चिकीर्षन् आधानादिषु पूर्वानुष्ठितेषु कर्मसु 'अस्य के ऋत्विजः, के वा याजकाः। कच्चित् कल्याण्यो दक्षिणाः?' इति पृच्छेत्। समुचितमुत्तरं तस्मादवाप्य, स्वीकृत्य आर्त्विज्यकरणं यजमानगृहमागतेषु तेषु तान् यजमानो मधुपर्कदानेन यथावदर्चयित्वा ये यत्र कुशलाः तस्मिन् तस्मिन् कर्मणि तान् वृणुयात्। 'अध्वर्युं त्वां वृणे', 'होतारं त्वां वृणे' 'उद्गातारं त्वां वृणे' 'ब्रह्माणं त्वां वृणे' इत्यादि मन्त्रमुच्चारयन् प्रथमं दैवर्त्विग्वरणं कृत्वा मानुषर्त्विग्वरणं कुर्यात्। दैवर्त्विग्वरणे यजमानः 'अग्निर्मे होता, आदित्यो मे अध्वर्युः, चन्द्रमा मे ब्रह्मा, पर्जन्यो मे उद्गाता, आपो मे होत्राशंसिनः, रश्मयो मे चमसाध्वर्यवः। महर्त्विग्व्यतिरिक्ता ब्राह्मणाच्छंस्याद्या द्वादशर्त्विजो होत्राशंसिन इत्युच्यन्ते।[2]' इति मन्त्रमुच्चारयेत्। इति वरणप्रकारः। मधुपर्ककाले वस्त्रालङ्कारा-भरणादिभिः ते समर्चनीयाः। ते च चत्वारो गणाः। एकैकस्मिन् गणे चत्वारः, इत्याहत्य ते षोडशसंख्यका भवन्ति। यथा –

| **1. अध्वर्युगणः** | **2. ब्रह्मगणः** | **3. होतृगणः** | **4. उद्गातृगणः** |
|---|---|---|---|
| 1. अध्वर्युः। | 1. ब्रह्मा। | 1. होता। | 1. उद्गाता। |
| 2. प्रतिपस्थाता। | 2. ब्राह्मणाच्छंसी। | 2. मैत्रावरुणः। | 2. प्रस्तोता। |
| 3. नेष्टा। | 3. आग्नीध्रः। | 3. अच्छावाकः। | 3. प्रतिहर्ता। |
| 4. उन्नेता। | 4. पोता। | 4. ग्रावस्तुत्। | 4. सुब्रह्मण्यः। |

एतदतिरिक्तं सदस्यनामकमृत्विजं सप्तदशं कथयन्ति केचन सूत्रकाराः। एवमृत्विजो वृत्वा कर्मणो निर्विघ्नपरिसमाप्तये देवता उपस्थाय,

---

1. सोमयागं करिष्यता यजमानेन ऋत्विजां वरणार्थे तत्तत्समीपं यः प्रेष्यते स सोमप्रवाकः। सोमं प्रकर्षेण वक्ति ऋत्विग्भ्य इति।
2. का० श्रौ० सू० 7/1/7

गार्हपत्याग्निमरण्योः समारोप्य, तमग्निं शमयित्वा अरणी यज्ञसामग्रीश्च गृहीत्वा, गृहात् सोमयागार्थं पूर्वनिर्णीतं स्थानं सपत्नीको गत्वा, तत्र अरणी मथित्वा, पूर्वनिर्मिते गार्हपत्यायतने मथनोत्पन्नमग्निं प्रतिष्ठापयेत्। ततोऽध्वर्युराहवनीयं प्रणीय, तत्र संभारयजुस्संज्ञकान् (एक) चतुर्विंशतिसंख्याकान् होमान् हुत्वा, तमग्निं विसृज्य, पुनर्गार्हपत्यात् प्रणीय, सप्तहोतृसंज्ञकं होमं कृत्वा, तमप्युत्सृज्य, पुनः तत एवाहवनीयदक्षिणाग्नी विहृत्य तत्र दीक्षणीयेष्टिं कुर्यात्। तत्र एकादशकपालः पुरोडाशो द्रव्यम्। अग्नाविष्णू देवता पुरोडाशस्तु ब्रीहिपिष्टैरेव निष्पाद्यः। तां परिसमाप्य तत्र प्राचीनवंशसंज्ञिकां विमितसंज्ञिकां वा शालां निर्माय तस्योत्तरभागे बहिरावृतप्रदेशे यजमानः पत्नी च दीक्षा संस्काराय प्रवृत्तौ भवेताम्। तत्र प्रथमः अप्सुदीक्षा।

### अप्सुदीक्षा

शालायाः मध्ये गर्ते जलपूर्णकलशं स्थापयेत्। पूर्वाभिमुखो यजमानः उत्तरे च नापित उपविशेत्। अनन्तरं दक्षिणहस्तमारभ्य नखकर्तनं कारयित्वा, दक्षिणकर्णे दर्भं निधाय दर्भसहितं केशवपनं कारयेत् एवं वपनं कारयित्वा स्थावरास्वप्सु तीर्थे स्नात्वा अध्वर्युणा दत्ते दुकूले वस्त्रं परिदध्यात्।[1]

### पत्नीदीक्षा

प्रकृतिशालायाः पश्चिमे पत्नीशाला भवति। तस्यां प्रतिपस्थाता पत्न्याः दीक्षासंस्कारः कुर्यात्। केवलं नखकर्तनं कारयित्वा स्नानादिकं कुर्यात्।

### दीक्षणीयेष्टिः

प्रकृतिशालायां दीक्षणीयेष्टिमारभेत्। अग्नाविष्णू देवतयोरेकादशक-पालपुरोडाशः कारयेत्।[2] समिष्टयजुराहुतिपर्यन्त एव इष्टिः कुर्यात्।

---

1. 'आपो अस्मान्मातरः शुन्धयन्तु', 'दीक्षातपसोस्तनूरसि' शु० य० सं० 4/2
2. आग्नावैष्णव एकादशकपालः, का० श्रौ० सू० 7/2/23

एवमुक्तविधिषु मध्ये आचर्यमाणास्विष्टिषु अग्न्यन्वाधानम्, व्रतोपायनप्रभृति कार्याणि न भवितव्यानि। अध्वर्योः प्रैषं श्रुत्वा प्रधानयागकाले प्रस्तोता तार्क्ष्यसाम्नः गानं कुर्यात्।

## नवनीतदीक्षा

प्रकृतिशालायाः पूर्वस्यां दर्भमासाद्य यजमानः तद्दक्षिणे पत्नी च तिष्ठेत्। अध्वर्युर्यजमानाय प्रतिपस्थाता पत्न्यै च नवनीतं दद्यात्। उभावपि तं नवनीतमादाय स्वाङ्गानि नवनीतेनानुलिम्पतः। शिरसा आरभ्य पादपर्यन्तं अनुलोमक्रमेण नवनीतानुलेपनं कुर्याताम्। यत्र यजमानस्य हस्तं न गच्छेत् तस्मिन्नङ्गे अध्वर्युः नवनीतम् अनुलेपयेत्।[1]

## अञ्जनदीक्षा

अध्वर्युः प्रतिपस्थाता च क्रमशः यजमानस्य पत्न्याश्च अक्षिभ्यां शलाकया पूर्वदक्षिणे चक्षौ अनन्तरं वामचक्षौ अनक्ति।[2]

## यजमानपावनम्

अध्वर्युः हस्ते दर्भमुष्टिमादाय यजमानस्य पत्न्याश्च शरीरं दर्भमुष्टिना दक्षिणावर्तं सम्मार्जनं कुर्यात्।[3]

## मुष्टिबन्धनम्

अध्वर्युः प्रतिपस्थाता च यजमानपत्न्योर्मुष्टिबन्धनं कारयेत्। उभयोः हस्तयोः कनिष्ठिकातो यावदङ्गुष्ठमङ्गुलीर्मोटयेत्। ततो हस्तद्वयेऽपि कनिष्ठिकानामिके विसृजेत्। तत औद्ग्रभहवनं 'आकूत्यै प्रयुजेऽग्नये स्वाहा' प्रभृति मन्त्रैः आज्येन जुहुयात्।[4]

---

1. अथाग्रेण शालां तिष्ठन्नभ्यनक्ति, श० प० ब्रा० 3/1/3/7
2. स दक्षिणमेवाग्रावनक्ति, श० प० ब्रा० 3/1/3/14
3. अथैनं दर्भपवित्रेण पावयति, श० प० ब्रा० 3/1/3/25
4. दीक्षाया यजूंष्यौद्ग्रभणानि, श० प० ब्रा० 3/1/4/1

## कृष्णाजिनदीक्षा

ततोऽध्वर्युः यजमानाय कृष्णाजिनद्वयं दद्यात्। स तत् परिगृह्य, आहवनीयसमीपं गत्वा भूमौ तदास्तीर्य तदुपरि कटिप्रदेशेन आरुह्य, उपविश्य, मेखलां मुञ्जतृणनिर्मितामध्वर्युदत्तां कट्यां बद्ध्वा, कृष्णमृगस्य शृङ्गं शरीरकण्डूयनार्थम्, उदुम्बरवृक्षीयं स्वसमपरिप्रमाणमूर्ध्वतायां दण्डं च यजमानो गृहीत्वा धारयन्नासीत। यदा स्वाङ्गेषु क्वचित् कण्डूतिर्जायेत तदा कृष्णमृगश्रृंगेनैव कण्डूयेत न नखेन। एवं यजमानपत्न्याः शिरसि इषीकानिर्मितं जालं, कट्यां मुञ्जनिर्मितं योक्त्रं च बध्नीयात्। औदुम्बरपलाशादेः प्रादेशमात्रः शङ्कुः पत्न्याः आञ्चलमध्ये बध्नीयात्।[1]

## दीक्षितघोषणा

प्रतिपस्थाता प्रकृतिशालायाः पूर्वस्यां तिष्ठन् 'दीक्षितोऽयं ब्राह्मणः' इत्युच्चैस्त्रिवारमुक्त्वा देवेभ्यो मनुष्येभ्यश्चावेदयेत्- 'अदीक्षिष्ट अयं ब्राह्मणोऽमुकशर्मा अमुकस्य पुत्र इत्यादि। अत्र पितृपितामहप्रपितामहानां मातृपितामहीप्रपितामहीनां च नामांनि वक्तव्यानि। एवं त्रिरूपांशु त्रिरुच्चैश्चावेदने अध्वर्युणा कृते यजमानो वाङ्नियमनं कृत्वा रात्रौ नक्षत्रोदयपर्यन्तं तथैवासीत।

## यजमानपत्न्योर्नियमाः

नक्षत्रोदयानन्तरं व्रतकरणप्रैषेणैव। व्रतं कृणुत। वाचं विसृजन् अध्वर्युणा पयसि दत्ते तत् पिबेत्। पत्न्यपि चैवं कुर्यात्। एवमेव प्रतिदिनमहनि रात्रौ च पय एव पिबेतां यजमानः पत्नी च। यदि पयो न

---

१. देवयाज्ञिकपद्धतौ बहवो दीक्षापक्षा उक्ताः - तद्यथा एका दीक्षा, तिस्रो दीक्षा, चतस्रो द्वादश वा अपरिमिता वेति। दीक्षासु यूपच्छेदनं, दीक्षासु महावीरसम्भरणं, दीक्षासु वनीवाहनमित्येवमादि यद् दीक्षामध्ये विहितं कर्म तदेकदीक्षापक्षे प्रथमदिन एव। द्रष्टव्यः दे० या० प० पृ० 247

लभ्यते पयसैव वा प्राणधारणं दुष्करं मन्वाते तदा दधि, उदुम्बरफलानि, धानाः, सक्तूनि, ओदनमात्रं वा भुञ्जीयाताम्।[1]

ततो यज्ञोपयोगिद्रव्यार्जनाय याचकान् प्रेषयेत्। याञ्चेयं धनिकस्यापि नित्या। आगतानि द्रव्याणि तत्तन्मन्त्रेण गृह्णीयात्। एतावता प्रथमदिनकृत्यं समाप्यते। यजमानस्तस्यां रात्रौ जागरणं कुर्यात्। व्याकरणसंस्कृतैरेव शब्दैर्व्यवहरेत्, न लौकिकीं वाचं वदेत्। असच्छूद्रैर्न सम्भाषेत। नास्य नाम कश्चित् ब्रूयात्। सुत्यादिने दक्षिणादानात् पूर्वं न कृष्णविषाणं विसृजेत्। न दन्तान् दर्शयेत्। नोच्चैर्हसेत्। नानृतं वदेत्। न मांसमश्नीयात्। न स्त्रियमुपेयात्। नोपरि खट्वादौ शयीत। न सन्धयोः प्राग्वंशाद्बहिर्गच्छेत्। यावद्दीक्षमग्निहोत्रदर्शपूर्णमासादीनि श्रौतकर्माण्यपि नानुतिष्ठेत्। न अन्यस्मै किञ्चिद्दद्यात्। दीक्षाव्यञ्जकानि कृष्णाजिनादीनि सर्वदा धारयेत्।

**एतावत् प्रथमदिनकृत्यम्**

## द्वितीयदिनकृत्यम्

प्रथमेऽहनि यजमानं दीक्षासंस्कारानन्तरमत्र द्वितीयेऽस्मिन्नहनि आवश्यकं कर्म समाप्य प्रातरेव प्रायणीयेष्टिं कुर्यात्।

**प्रायणीयेष्टिः**

प्रायणीयेष्टौ पञ्चदेवताः भवन्ति- पथ्यास्वस्तिः, अग्निः, सोमः, सविता, अदितिश्च। तत्र पथ्यादीनां चतुर्णामाज्यं द्रव्यम्। अदितेरोदनः।

| देवता | हविर्द्रव्यम् |
|---|---|
| पथ्यास्वस्तिः | आज्यम् |
| अग्निः | आज्यम् |
| सोमः | आज्यम् |
| सविता | आज्यम् |
| अदितिः | चरुः (ओदनम्) |

1. पत्नीयजमानयोः पानार्थं पयः प्रदानमेव व्रतकरणमित्युच्यते। तत्र ब्राह्मणस्य पयः पानं, राजन्यस्य यवागू, वैश्यस्यामिक्षा।

अध्वर्युः पात्रासादनं कृत्वा आहवनीयेऽग्नौ तमोदनं पक्त्वा आहवनीय एव पूर्वादिषु चतसृष्वपि दिक्षु पथ्यादिभ्यः क्रमेण आज्यं हुत्वा मध्ये अदित्या ओदनं जुहुयात्। यस्मिन् पात्रे ओदनः पक्वः तत् पात्रमप्रक्षाल्यैव क्वचित् स्थापयेत्। तथैवोदयनीयेष्टिहविः पाकार्थं तदुपयुञ्जीत। शंय्वन्तमेवास्या इष्टेरनुष्ठानं विहितम्।[1] प्रधानयागसमये प्रवद्भार्गवसाम्नः गानं भवितव्यम्।[2]

## सोमक्रयणम्

ततः प्रतिप्रस्थाता शालायाः सोममादायोपरवदेशे उपरवाणां स्थाने रक्ते आनडुहे चर्मणि प्राग्ग्रीवे उत्तरलोम्नि निर्वपति। सोमविक्रयी तं सोमं पर्वशोऽवखण्डयति। स तु कुत्सितकर्मकारी त्रैवर्णिकः कश्चित् शूद्रो वा। ब्राह्मणश्च प्रायणीये व्याप्तत्वात् ब्रह्मपुरुषो ब्राह्मणाच्छंसी तत्र सन्निधौ दक्षिणत उपविशति। उपरवदेशस्य पुरस्तादेव, उदकुम्भश्च स्थाप्यते।

यजमानोऽध्वर्युः प्रतिप्रस्थाता, ब्रह्मा, यजमानपत्नी च सोमक्रयणीं गामादाय सोमक्रयणार्थं प्रस्थानं कुर्यात्। सा च सोमक्रयणी एकवर्णा वत्सतरी द्वाराद्दक्षिणस्यां तिष्ठति। कीदृशी – अलक्षिता अनङ्किता, अव्यङ्गा अनङ्गहीना, अप्रवीता ऋषभेणाभुक्ता, अबद्धैवारज्जुबद्धा, बभ्रूः पिङ्गला बभ्रुवर्णा पिङ्गाक्षी, तस्या अभावे अरुणाऽव्यक्तरागा, तदभावे रोहिणा, अश्येताक्षी, शरीरेण रक्ता अरक्ताक्षी एवं विधां सोमक्रयणीमध्वर्युर्यजमानौ सन्निधावागच्छतः।[1] तत्राऽध्वर्युस्तामभिमन्त्रयते चिदसीत्यादि पुनरेहीत्यन्तेन।

ततः प्रतिप्रस्थात्रादिना उदीचीं दिशं प्रति नीयमानां सोमक्रयणीम-ध्वर्युर्यजमानौ वस्व्यसीत्यनुगच्छतः। सोमक्रयण्या दक्षिणपूर्वपादस्य षट्पदान्यतिक्रम्य सप्तमं पर्युपविशन्ति। पर्युपवेशनं चैवं, दक्षिणतो

---

1. शंय्वन्तं भवति। का० श्रौ० सू० 7/5/20
2. प्रायणीयायां प्रवद्भार्गवम्। द्रा० श्रौ० सू० 2/2/22
3. का० श्रौ० सू० 7/6/12

ब्रह्मयजमानौ, पश्चादध्वर्युः, उत्तरतः प्रतिप्रस्थाता नेष्टा च, दक्षिणापरस्यां पत्नीति। ब्रह्मा च जूरसीत्यस्यां हिरण्यवत्यां आहुतायां सर्वेभ्यो दक्षिणत एव दक्षिणदिगाश्रित इत एवानुगच्छति क्रयं यावत्।

ततोऽध्वर्युः सप्तमे सोमक्रयणीपदे हिरण्यं निधाय यत्सूत्रं बद्धं वर्तते तत् परिस्तीर्य शालायां यच्चतुर्गृहीतमाज्यं गृहीतं हस्तधृतं तज्जुहोति आदित्यास्त्वेति। इदमदित्यै। इदमाज्यायेति वा।

ततः स्फ्येन तत् पदं त्रिः परिलिखति। ततः पदस्थाने उदकं निनीयाध्वर्युर्यजमानाय पदं समर्पयति। ततो यजमानः स्थालीस्थं पदं प्रतिगृह्णाति। ततोऽध्वर्युरात्मानं हृदयप्रदेशं संस्पृशति। उदकोपस्पर्शनम्।

ततो यजमानसकाशात्पदं हृत्वाऽध्वर्युः पत्न्यै समर्पयति। नेष्टा पत्नीं वाचयति 'तोतो राय' इति। अध्वर्युः सोमक्रयण्यां समीक्ष्यमाणां पत्नीं वाचयति। तत्पदं क्वचित्सुगुप्ते यत्नेन स्थापयित्वा रक्षणीयं यथा न याति। ततोऽध्वर्युर्हस्तौ प्रक्षाल्यानामिकायां हिरण्यं बध्नीते।

अध्वर्युणा प्रेषितो यजमानपुरुषो यदतिशयेन शोभनं वासो भवति तत्सोमबन्धनार्थं सोमपर्याणहनोष्णीषे च यथा सम्पन्ने आहरति। अध्वर्युर्यजमानौ सोमसमीपं गत्वा सोममालभ्य मिमीते।[1] तत उष्णीषेण बद्ध्वा तं सोमं सोमविक्रयिणे प्रयच्छति।

**सोमपणनम्**

ततोऽध्वर्युः पञ्चकृत्वः सोमं पणते,[2] कलाशफादिभिः पञ्चवारं सोमविक्रयिणः सकाशात् याचत इत्यर्थः।

अध्वर्युः '**सोमविक्रयिन् क्रय्यस्ते सोमो राजा** इति पृच्छति। **क्रय्य** इत्याह सोमविक्रयी।' तं वै ते क्रीणानि। क्रीणीहीत्याह विक्रयी। कलया ते क्रीणानीति। भूयो वा अतः सोमो राजाऽर्हतीति आह सोमविक्रयी।[3]

1. श० प० ब्रा० 3/2/5/9, 13, 17
2. स वै राजानं पणते, श० प० ब्रा० 3/2/6/1
3. का० श्रौ० सू० 7/8/2-7

एवमुक्तप्रकारेण क्रेतुः विक्रेतयोर्मध्ये परस्परं संवादेन सोमराज्ञः पणनं भवति। लोकेऽपि एषः व्यवहारः यत्र तत्र व्यापारकर्मस्ववलोक्यते। विक्रयी गौर्माहात्म्यं वर्णयति –'गौर्वै प्रतिधुक्, तस्यै श्रृतं, तस्यै शरस्तस्यै दधि, तस्यै मस्तु, तस्या आतञ्चनं, तस्यै नवनीतं, तस्यै घृतं, तस्या आमिक्षा, तस्यै वाजिनमिति।[1]' सोमविक्रयी पुनः 'भूय एवेत्यतः प्रभृति चतुरावर्त्तयति।[2]' अध्वर्युः क्रमशः एकैकेनान्ते पणते शफेन, पदा, कलया, अर्द्धेन, गवेति। सोमविक्रयी सोमो राजेत्युक्त्वा ततोऽधिकं धनं वाञ्छति। अन्ते चाध्वर्युः अजा, सुवर्ण, गौ प्रभृतीन् विक्रयिणे प्रदाय तस्मात् सोमं क्रीणाति। सोमविक्रयिणे प्रदत्तं मूल्यस्वरूपं हिरण्यं सहसाऽऽच्छिद्य = बलाद् गृहीत्वा सोमविक्रयिणं विचित्रेण वंशदण्डेन कुट्टयति न वा।

## सोमशकटारोहणम्

ततो यजमानः क्रीतं सोमं पोटलिकायां धृत्वा शिरसि पाणिमन्तर्द्धाय तस्य पाणेरूपरि सोमं कृत्वा शकटम्प्रति गच्छति। अध्वर्युरस्मिन् शकटे कृष्णाजिनं प्राग्ग्रीवमुत्तरलोमास्तृणाति। तस्मिन् कृष्णाजिने सोमं निदधाति। सुब्रह्मण्यः पलाशशाखयाऽनड्वाहौ गमनाय प्रेरयति। ब्रह्मा च प्राङतिक्रम्य पूर्वेण शकटं परिक्रम्यावरेण वा परिक्रम्य शकटस्य दक्षिणेषासन्निहित एवानुगच्छति शालायां सोमनिधानं यावत्।

ततोऽध्वर्युः शकटं पूर्वेण प्रदक्षिणं परीत्य पश्चाद्गत्वा अपालम्बं गृहीत्वा सोमाय क्रीतायानुब्रूहीति होतारं प्रेषयति। अपालम्बशब्देन पश्चादाबद्धा रज्जुरुच्यते यया अवतरेऽनः प्रवर्त्तमानं विधार्यत इति कर्कः।[3]

पश्चाद्भागे बद्धं लम्बायमानं काष्ठमेवापालम्बशब्देनोच्यते येनोर्ध्वप्रदेशमारोहतः शकटस्य स्तम्भनेन पर्यावर्तनं वार्यत इति हरिस्वामिनो याज्ञिकाश्च।[4]

---

1. का० श्रौ० सू० 7/8/8
2. का० श्रौ० सू० 7/8/9
3. का० श्रौ० सू० कर्कभाष्ये 7/9/13
4. दे० या० प० पृ० 259

सरलावृत्तिकारः काशीस्थः विधाधरगौडमहोदयः कथयति यत् –पश्चाद्भागे रज्जुरेकाबद्धा वर्तते। सा च यदा अनो निम्नप्रदेशेषु शीघ्रं गच्छति तदा तदनो धारयितुमुपयुज्यते।[1] तस्या अपालम्बनमिति नाम।

ततो दीक्षितः सोममन्वारभते प्रैषदानसमकालमेव। ततो होत्रध्वर्युयजमानादयः शकटमनुगच्छन्ति। प्रथमं प्राच्यां दिशि किञ्चिद् गत्वा प्रदक्षिणमावृत्य तथैव शकटं पुरस्कृत्य पश्चिमाभिमुखाः शालायां प्रतिगच्छन्ति। शालायां प्रतिगमने प्रारब्धेऽध्वर्युर्**भद्रो मेऽसीति** यजमानं वाचयति।[2] अध्वर्युः सुब्रह्मण्याह्वानं कुर्यात्। प्रेषितो यजमानः वाचयति। ततः शालायाः पुरस्तात्समीपे प्राङ्गीषमुदङ्ङीषं वाऽनः स्थापयित्वा वरुणस्योत्तम्भनमिति मन्त्रेणोपस्तभ्नाति।[3] शम्येचोद्बृहति। ततोऽध्वर्युप्रतिप्रस्थातृनेष्टुन्नेतारश्च चत्वार औदुम्बरीमासन्दीं नाभिदघ्नामरत्नि-मात्राङ्गीमाहरन्ति।[4] आहृत्यासन्दीं प्रकृतिशालायामाहवनीयस्य दक्षिणे स्थापयित्वा कृष्णाजिनमास्तृणाति। तदुपरि च सोमं राजानं शकटादानीय निदधाति।[5]

**अतिथ्येष्टिः**

शतपथब्राह्मणे सोमराज्ञः सम्बोधनमतिथिरित्यनेन शब्देन कृतमृषिभिः। यथा – '**अतिथिर्वा एष एतस्यागच्छति, यत्सोमः, क्रीतः एतदातिथ्यं करोति।**[6]' तथा च – '**शिरो वै यज्ञस्यातिथ्यम्**[7]' इति। संहितास्वपि

1. का० श्रौ० सू० स० वृ० 7/9/13
2. का० श्रौ० सू० 7/9/16
3. का० श्रौ० सू० 7/9/22
4. का० श्रौ० सू० 7/9/24
5. का० श्रौ० सू० 7/9/27
6. श० प० ब्रा० 3/3/2/2
7. श० प० ब्रा० 3/3/2/1

'**सोमोऽस्माकं ब्राह्मणाना ꣳ राजा**[1]' इति मन्त्रः पठ्यते। तस्मादस्माकं राजा सोम इति तु सुनिश्चित एव। तस्य राज्ञः आगमने सति आतिथ्यसत्काराय यत्किमप्याचर्यते तत आतिथ्येष्टिरित्युच्यते। तत्र विष्णुर्देवता। '**वैष्णवं नवकपालम्**[2]' इष्टिरियं शकटस्य दक्षिणमनहुहं मोचयित्वा क्रियते, सव्यमविमोच्यैव। हविष्कृदाह्वान काल एव द्वितीयस्यानडुहो विमोचनं शकटात्। तस्मादस्या इष्टेः कार्यकलापः त्वरितगत्या भवति। चतुरासनं, ब्रह्मोपवेशनं, प्रणीताप्रणयनं, आहवनीयस्यैव परिस्तरणम्। पात्रासादनम् –शूर्पाग्निहोत्रहवणी, स्फ्यः कपालानि नव, शम्या कृष्णाजिनम्, उलूखलमुसलम्, दृषदुपलम्, पात्रीधान्यम्, पवित्रच्छेदनानि पवित्रे, धृष्टिः, संयवनोदकम्, मदन्तीपात्रद्वयं मृण्मयम्, एकं यजमानस्य अपरं पत्न्याः, स्थाली आज्यञ्च, वेदश्च उदक् तृणमभ्रिः, एकोनविंशतिरिध्मकाष्ठानि, काष्मर्यमयाः परिधयः, आश्ववालः, प्रस्तर ऐक्षव्यौ विधृतीः, बर्हिश्चेति बर्हिश्चतुष्टयम्, स्रुवो जुहूः उपभृत् ध्रुवा, प्राशित्रहरणे, शृतावदानं, पात्री, इडापात्री, षडवत्तं च, पक्षे योक्त्रं, यूनकुशाः, मन्थनचतुष्टयं, पीठं कुशास्तीर्णं, व्रतपात्रं, हिरण्यं, द्वे समिधौ, सुब्रह्मण्यार्धपात्रञ्च।

तत्र वि[illegible]षः पञ्चकृत्वो ग्रहणम्। 'देवस्यत्वा सवितुः अग्नेस्तनूरसि विष्णवे त्वा' प्रथमं ग्रहणम्, 'सोमस्य तनूरसि विष्णवेत्वा' द्वितीयम् 'अतिथेरातिथ्यमसि विष्णवे त्वा' तृतीयम्, 'श्येनायत्वा सोमभृते विष्णवे त्वा' चतुर्थम्, 'अग्नये त्वा रायस्पोषदे विष्णवे त्वे'ति पञ्चमम्। ततो भूतायत्वेति शेषाभिमर्शनम्। ततः पवित्रच्छेदनादि, कण्डनादि वा कर्त्तव्यम्। ततः कपालोपधानम्, आज्यग्रहणम्, प्रजायानुयाजौ आज्यभागौ भवतः।'

इष्टिमध्येऽग्निमन्थनम्। प्रथमेडान्तं भवतीष्टिरियं शिरस्थानीयत्वात्। अस्यामिष्टौ अग्न्यन्वाधानम्, ब्रह्मवरणम्, व्रतोपायनम्, आरण्यभोजनम्,

1. शु० य० सं० 9/40
2. का० श्रौ० सू० 8/1/1

अन्वाहार्यदक्षिणा, इडाविधानं, अन्तर्धानकटः, पूर्णपात्रं, कर्मापवर्गकृत्य प्रभृतीनि कृत्यानि न भवन्ति तस्मात् खण्डेष्टिरियमुच्यते।

### तानूनप्त्रविधिः

श्रौतयागेषु महत्त्वपूर्णेयं विधिः। तदुक्तं पारस्करेण – '**स तानूनप्त्रिणी ब्रह्मचारिणि च त्रिरात्रम्**[1]' इति। कर्मण्यस्मिन् यजमानस्य व्रतग्रहणपात्रे आज्यं स्थाप्यते। '**यैः सह तानूनप्त्रमाज्यं स्पृष्टं तेभ्यः द्रोहोपकारः न कार्यः कदाचिदपि**[2]' '**दक्षिणस्यां वेदिश्रोणौ निदधायावमृशन्त्यृत्विजो यजमानाश्चानाधृष्टमिति**[3]' '**तानूनप्त्रशब्देन शपथमात्रमुपलक्ष्यते**[4]' इति। तस्मात् तत् पात्रं स्पृष्ट्वा ऋत्विजो यागं कुर्वन्तः परस्परमद्रोहेण सर्वात्मना यागसमाप्तये शपथग्रहणं कुर्वन्तीति। अनन्तरं आज्येऽस्मिन् अपराह्णे व्रतमिश्रणं कृत्वा यजमानाय दीयते।

### अवान्तरदीक्षा

यजमानः आहवनीयाग्नौ पत्नी च गार्हपत्याग्नौ समिधमाधाय मदन्तीरूपस्पृश्य गाढ़तरं मुष्टिमेखलं कुरुते। तदुक्तं कात्यायनेन – '**आहवनीये समिधमाधाय मदन्तीरूपस्पृश्य गाढतरं मुष्टिमेखलं कुरुते।**[5]' शतपथब्राह्मणेऽपि – '**अग्निस्तपो दीक्षा तदवान्तरदीक्षामुपैति सन्तरामङ्गुली रचते सन्तरां मेखलां पर्यस्तामेवैनामेतत्सतीं पर्यस्यते।**[6]' इति।

### सोमालम्भनम्

ब्रह्मोद्गातृहोत्रध्वर्य्वाग्नीध्रा यजमानषष्ठा अनामिकायां हिरण्यं बध्वाऽप

---

1. पा० गृ० सू० 2/11/8
2. दे० या० प० पृ० 263
3. का० श्रौ० सू० 8/1/20
4. ऐ० ब्रा० सा० भा० 4/7/24
5. का० श्रौ० सू० 8/2/4
6. श० प० ब्रा० 3/3/4/3

उपस्पृश्य मदन्तीरूपस्पृश्याऽऽहवनीयं पूर्वेण गत्वा सोममाप्याययन्ति। विस्रंस्यालम्भनमित्यर्थः। मदन्तीरुपस्पृश्य सोमालम्भने को हेतुरिति स्पष्टयता ऋषिणा शतपथब्राह्मण एवमुक्तम् – **'वज्रो वा आज्यं रेतः सोमो नेद्वज्रेणाज्येन रेतः सोमं हि न सोमेति तस्मान्मदन्तीरुपस्पृश्य राजानमप्याययन्ति।** इति।[1]'

**निह्नवविधिः**

सोमालम्भनविधेरनन्तरं निह्नवविधिराचर्यते। ऋत्विग्भिस्सहितो यजमानो हस्तप्रक्षालनं करोति। हस्तं प्रक्षाल्य वेद्यां स्थापितं प्रस्तरमुपरि समन्त्रकं उत्तानहस्ता दक्षिणोत्ताना वा पाणी निदधति ब्रह्मादिक्रमेण। अन्ते द्यावापृथिवीभ्यां नमस्करोति। तदुक्तं कात्यायनेन – **'प्रस्तरे निह्नुवत उत्तानहस्ता दक्षिणोत्ताना वा'**[2] इति।

**सुब्रह्मण्याह्वानम्**

अध्वर्युरातिथ्येष्टिं समाप्य शालायाः पूर्वस्यां तिष्ठन् सुब्रह्मण्याह्वानं कुर्यात्। 'सुब्रह्मण्ये सुब्रह्मण्यमाह्वय' इति प्रैषानुसारं अन्वारब्धे यजमाने पत्नीं च सुब्रह्मण्योमिति त्रिरुक्त्वा निगदं ब्रूयात्। सुब्रह्मण्येन मन्त्रपाठानन्तरं तस्मै सुब्रह्मण्यायोपहारस्वरूपं श्रीफलं दद्यात्।[3]

**प्रवर्ग्यविधिः**

प्रवर्ग्यः, घर्मः, महावीरश्चेत्येते सर्वेशब्दाः परस्परं पर्यायाः। प्रवर्ग्यसम्बन्धी विधानं प्रवर्ग्यविधिरित्युच्यते। श्रौतयागेषु विधिरियमत्यन्तमहत्वपूर्णा। प्रथमयागस्य अनुष्ठाने अस्यानुष्ठानं वर्ज्यमस्ति। तत्रापि श्रोत्रियाणां कृते विकल्पः। अवैदिकाः ब्राह्मणाः पत्नी च विधिमिमं द्रष्टुमनधिकृताः, तस्मात् विधेर्विधानारम्भात्पूर्वं शालाद्वाराणि पिहितानि

---

1. श० प० ब्रा० 3/3/4/11
2. का० श्रौ० सू० 8/2/8
3. ला० श्रौ० सू० 1/2/20

भवन्ति। तदुक्तं कात्यायनेन - **'पत्न्यदर्शनम्। अननूक्तिभिश्च'**, **'अपिहितद्वारे प्रवर्ग्याचरणम्**[1]**'** इति च।

ततो ब्रह्मयजमानहोत्रध्वर्युप्रतिप्रस्थातृप्रस्तोत्राग्नीध्रा **ऋचं वाचमित्यध्यायं** शान्त्यर्थं पठन्ति।[2] ततो गार्हपत्यस्य पुरस्तात् प्रागग्रानुदक्संस्थान् बहून् कुशानास्तीर्य तेषु कुशेषु दक्षिणत आरभ्योदक्संस्थानि घर्मपात्राणि द्वन्द्वमासादयति। तथाहि - उपयमनीं, महावीरं, परीशासौ, पिन्वने, रौहिणकपाले, रौहिणहवन्यौ, स्रुचावनुत्कीर्णौ, स्थूणामयूखं, धृष्टी, शतमाने, मुञ्जप्रलवान्, विकङ्कतशकलान् विंशतिप्रादेशमात्रान्, स्रुचं, मुञ्जवेदं, धवित्राणि, परिधींश्च, रज्जुसन्दानम्, आसन्दीं, कृष्णाजिनम्, अभ्रिः, सिकताः खरार्थाः, त्रिषु महत्सु शरावेषु पृथगासाद्यन्ते।

अर्थवच्च - अग्निहोत्रहवणी, वज्रः, पवित्रच्छेदनानि, पवित्रे, आज्यस्थाली, बह्वाज्यं, शूर्पं, पात्री, पिष्टं, संयवनोदकं, होतृषदनं, मौञ्जः, कूर्चः, उदुम्बरसमित्, कृष्णाजिने, इतरौ महावीरौ च, अभ्युपशये च। एतान्युपयमन्यादीनि पात्राण्यौदुम्बराणि भवन्ति। यत्किञ्चिद्रज्जुजातं तन्मुञ्जमयं त्रिगुणं च भवति।

ततोऽध्वर्युः पवित्रच्छेदनं कृत्वा, उत्पूय, प्रोक्ष्य, प्रोक्षणीः संस्कृत्योद्यम्योत्थाय ब्रह्मन्प्रचरिष्याम इति ब्रह्माणं प्रत्याह, होतरभिष्टुहीति होतारं, प्रस्तोतः सामानि गायेत इति प्रस्तोतारम्। ततो ब्रह्मणा प्रचरेत्यनुज्ञातोऽध्वर्युरुपविश्यैकमेव महावीरं त्रिवारं प्रोक्ष्य, पात्राणि प्रोक्ष्य, प्रतिप्रस्थात्रा शालायाः दक्षिणतः निखननं क्रियते। निखातं तत्रोपविष्टो होता पश्यति। दक्षिणतः स्थूणां गोबन्धनार्थं निखनति। स्थूणाया उत्तरतोऽजाबन्धनार्थं मयूखं निखनति।[3]

---

1. का० श्रौ० सू० 26/2/2-4
2. शु० य० सं० 36/1-24
3. का० श्रौ० सू० 26/2/29

ततः शालायामागत्य गार्हपत्यस्योत्तरतोऽरत्निमात्रमेकं खरं निर्माय, पञ्चभूसंस्कारान् कृत्वा एकशरावस्थाः सिकताः निवपति। तत आहवनीयस्योत्तरतो द्वितीयं खरं निर्माय, पञ्चभूसंस्कारान् कृत्वा द्वितीयशरावस्थाः सिकताः निवपति। तत आहवनीयस्य दक्षिणतो भित्तिसन्निधौ तृतीयमुच्छिष्टखरं एवमेव संस्कारद्वयं कृत्वा तृतीयशरावस्थाः सिकताः निवपति।[1]

तत आहवनीयं पूर्वेण घर्मासन्दीं पर्याहृत्याहंवनीयस्य दक्षिणतः सोमासन्द्या उत्तरतः प्राङीषामासादयति, आहवनीयसोमासन्द्योरन्तराले इत्यर्थः। सा चासन्दी स्कन्धमात्रदीर्घपादा अरत्निमात्राङ्गीबाल्वजरज्ज्वा व्यूता भवति।

ततस्तस्यामासन्द्यां कृष्णाजिनमास्तीर्य तस्मिन् कृष्णाजिने अभ्रिमुपशमयामितरौ महावीरौ च निदधाति। एतत्सर्वं वस्त्रादिना अवच्छादयेद्वा न वा। अध्वर्युः पात्रप्रोक्षणानन्तरमेव पूर्णाहुतिवदाज्यं संस्कृत्य होत्रा अञ्जन्तीत्युच्यमाने स्रुवेणाज्यमादाय देवस्त्वेति महावीरमनक्ति।

ततो रजतशतमानं गार्हपत्यस्योत्तरतो न्युप्ते खरेऽवगूहति सिकतामध्ये अधः प्रवेशयतीत्यर्थः। रक्तिकाशतेन शतमानम्।

ततः शुक्रं गायेति प्रस्तोतारं प्रेष्यति। पत्नी शिरः प्रोर्णुते[2] उष्णीषेणाक्षिसहितं वेष्टयति। अध्वर्युर्मुञ्जप्रलवान् द्विगुणानादीप्य प्रतिदिशं खरे करोति। तत आज्यं संस्कृत्य महावीरे निनीय तेषु तमाज्यपूर्णं महावीरं निदधाति। अध्वर्युर्महावीरं धृष्टिभ्यां भस्मना परिकीर्य्य षरिवेष्टयति। तत्र प्रथमं द्वौ शकलौ प्रागग्रौ परितो विक्षिप्तानामङ्गाराणामुपरि निधातव्यावेकं महावीरस्य दक्षिणतः द्वितीयमुत्तरतः। स्वाहा मरुद्भिः परिश्रीयस्वेति मन्त्रेण सहैव द्वौ निदधाति, तत एकादश तूष्णीं, तत्र द्वावुदगग्रौ एकं महावीरस्य पुरस्तात् अपरं पश्चात्, ततो द्वौ प्रागग्रौ पूर्ववत्, ततो द्वावुदगग्रौ पुनर्द्वौ प्रागग्रौ एवं द्वादशत्रयोदशदक्षिणतः प्रागग्रम्।

1. का० श्रौ० सू० 26/2/30-31
2. का० श्रौ० सू० 26/3/2

**ततः सुवर्णशतमानेन महावीरमपिदधाति।[1] रक्तिकाशतेन शतमानम्।**

ततश्चन्द्रं गायेति प्रैषः। प्रस्तोता च सामं प्रस्तौति। ततः कृष्णाजिन-खण्डैर्दण्डसंयुक्तै र्व्यजनाकारैस्त्रिभिः परितः परिकीर्णाङ्गारान् शकलासन्धुक्षितानुपवाजयति मध्विवतिमन्त्रेण। ततः उपवाजनानन्तरं त्रयाणां धवित्राणां मध्ये एकं धवित्रं प्रतिप्रस्थात्रे समर्पयति, द्वितीयमग्नीधे, तृतीयं स्वहस्त एव धारयति अध्वर्युः।[2]

ततश्चन्द्रसामसमाप्तौ छन्दोगवशात्पूर्वं घर्मस्य तन्वौ गायेति प्रैषः। ततोऽध्वर्युप्रतिप्रस्थात्राग्नीध्रा अङ्गारान्धवित्रैर्धून्वन्तो वाजयन्तस्त्रिरप्रदक्षिणं परियन्ति। तत उपस्पृश्य धवित्राण्यभ्यन्तरे कुर्वन्ति, स्वयं च पूर्वपूर्वापेक्षया बहिस्तिष्ठन्ति।

ततः पुनरप्यङ्गारान्वाजयन्तः प्रदक्षिणां त्रिः परियन्ति। नात्रापसव्यकरणम्, अविहितत्वात्, अप्रदक्षिणपरिगमनमात्रस्य श्रुतत्वात्।

ततः शालायां महावीरं प्राप्तायां सुवर्णशतमानं क्वचिन्निधाय सुगुप्ते देशे स्थापयित्वा स्रुवेणाज्येन महावीरं प्रतिप्रणवं परिषिञ्चेत्।

ततः प्रतिप्रस्थाता रौहिणौ करोति, तत्र स्फ्योपहितपात्रीकरणं, पात्रान्तरे प्रोक्षणीरुन्नीय शूर्पाग्निहोत्रहवण्योरादानं, प्रतपनं, बिलालम्भः पिष्टेक्षणम्, अपद्रव्यनिरसनं, तदभावे हविषोऽभिमर्शनमेव, पुनः पिष्टानाम् आलम्भनं, चतुर्मुष्टिकद्वयस्य ग्रहणं, शेषाभिमर्शनं, प्राङीक्षणम्, उत्थानम्, उत्तरतो गमनं, श्रपणस्य पश्चादासनं, प्रोक्षणीः स्रुचि कृत्वा ब्राह्मणं समीक्ष्य रौहिणयोः प्रोक्षणं, पत्न्या आवाहनम्, तत उपवेषमादायाङ्गाराणां प्राचः करणं, प्रथमकपालधर्मेण दक्षिणोत्तरयो रौहिणकपालयोरुपधानम् अभ्यूहनम्, उपसर्जन्यधिश्रयणं, ततः पिष्टानामीक्षणं, सपवित्रायां पात्र्यां संवापः, उपसर्जनीरुद्वास्य निनयनं, पवित्राभ्यां प्रतिग्रहणं, संयवनं, विभज्यालम्भनम्,

---

1. का० श्रौ० सू० 26/3/9
2. का० श्रौ० सू० 26/4/2, श० प० ब्रा० 14/1/3/30-31

अधिश्रयणं, प्रथनम्, अद्भिरभिमर्शनम्। एवं द्वितीयस्य। पात्र्यङ्गुलिप्रक्षालनं, पर्यग्निकरणं, श्रपणं आलम्भः, अभिवासनम्, अभितप्य पात्र्यङ्गुलिप्रक्षालनं, निनयनं,यजमानस्य त्यागः।

ततो होत्रा मन्त्रे[1] पठ्यमाने प्रतिप्रस्थाता आहवनीयं परितः उदुम्बरान् परिधीन् परिदधाति मध्यमदक्षिणोत्तरान् तूष्णीमेव।

तदेवाज्यादुपस्तारः, तत्रस्याभिघारः, उद्वासनं, प्राणदानं, कपालयो-रञ्जनम्, उद्वासनम्।

तत उत्थाय रौहिणहवन्यावादायाहवनीयाद्दक्षिणोत्तरावासादयति। एवमन्तं प्रतिप्रस्थातुस्तूष्णीं कर्म।

ततोऽध्वर्युरुपोत्तिष्ठन् **रुचितो घर्म**' इत्याह।[2] प्रागकृतं चेत् उत्तरं देववत्परिक्रमणं तर्ह्यत्र कर्त्तव्यम्।

ततो यजमानसहिताः षडृत्विजो '**गर्भो देवानाम्**[3]' इत्यादि '**नमस्ते अस्तु मामाहिꣳसीः**' इत्यन्तेन सार्द्धेन कण्डिकाषट्केन घर्ममुपतिष्ठन्ते। '**षडुपतिष्ठन्ते**' इति शतपथश्रुतौ। प्रस्तोतुरनुक्तत्वात् षड्ग्रहणं सयजमानाः सर्वर्त्विज उपतिष्ठन्ते इत्येवमपरे।

ततोऽध्वर्युः पत्न्याः शिरस उद्घाटनं करोति। ततः पत्नीं महावीरमीक्षमाणं '**त्वष्टृमन्त**' इत्यमुं मंत्रं वाचयति। ततः साम्नो निधने प्रस्तोत्रा गीयमाने 'अहः केतुनेति' मन्त्रेण दक्षिणरौहिणमाहवनीये जुहोति इदमह्ने इति त्यागः इदं घर्मायेति वा। '**अहः केतुना**' यजुषी घर्मदेवत्ये इत्युक्तत्वात्।

ततोऽध्वर्युर्देवस्यत्वेति मन्त्रेण रज्जुसन्दानं गृह्णाति। ततः पिन्वनमादत्ते। प्रतिप्रस्थाताऽपि तूष्णीं रज्जुसन्दानं पिन्वनं वाऽऽदत्ते।

---

1. 'इडा द्यावा पृथिवी पूर्ववित्तय', देवयाज्ञिकपद्धतौ, 268 तमे पृष्ठे।
2. यदि रुचितः स्याच्छ्रेयान्यजमानो भविष्यति, इति विद्यात्। श० प० ब्रा० 14/1/3/33
3. शु० य० सं० 37/14, का० श्रौ० सू० 26/4/11

ततोऽध्वर्युरपरेण गार्हपत्यं दोहनार्थं गच्छन् सन् '**इड एह्यदित एहि सरस्वत्येहि**[1]' इति गामाह्वयति। प्रतिप्रस्थाताऽप्यध्वर्युमनुगच्छति। ततो धेनुं गायेति प्रैषः।

ततो गोः समीपे गत्वा पाशेन प्रतिमुच्य, स्थूणायां बद्ध्वा, वत्समुत्सृज्य पिन्वने दोग्धि। यदाऽध्वर्युर्गां दोग्धि तदैव प्रतिप्रस्थाता अजां पिन्वनपात्रे दोग्धि। प्रतिप्रस्थातारं धेनुसामपाठाय प्रैषः।[2] दोहनविधिरनन्तरं पयः सामगानाय प्रैषः कुर्यात्।[3] अध्वर्युः प्रतिप्रस्थाता च परीशासेन घर्मपात्रं धृत्वा शालातः बहिर्निःसृत्य दूरे गत्वा[4] कस्मिंश्चिद् विपुले आसने महावीरं निधाय अजापयसा महावीरमवसिच्य शान्ते जाते गोः पयो मध्ये निनयति।[5]

अत्राध्वर्युः घर्मपात्रे पयो निनयनकाले अत्यन्तः साकांक्षो भवेत्। यत अत्युष्णे तप्ते आज्ये यदा पयो निनीयते तदा तस्मात् पात्रात् भयंकरज्वाला समुत्पद्यते। तदानीमर्ध्वयुणा क्रियमाणेनाल्पेनापि अनपेक्ष्येण महानग्निकाण्डो भवितुमर्हति। आरम्भे तप्ते आज्ये दशवारं यावत् पय निक्षेपणं यावज्ज्वालोत्पद्यते। क्रमशोऽनन्तरं ज्वाला निर्बला भवति।

अध्वर्युः पयो दोहनकाले पयोगानाय परीशासग्रहणकाले च वशिष्ठशफगानाय प्रैषः प्रस्तोतारं कुर्यात्। उपयमन्या घर्मपात्रे आज्यप्रक्षेपणं कुर्यात्। घर्मपात्रेणैव आहवनीयाग्नौ आहुतिर्दद्यात्। घर्मपात्रं उत्तरस्यां स्थिते खरे निदध्यात्। वैकङ्कतकाष्ठखण्डानि घर्मपात्रे निमज्य आहवनीये आज्याहुतिर्दद्यात् काष्ठञ्च प्रथमपरिधेः अधस्तात् उपगूहेत्।[6] एवं त्रिवारं कृत्वा चतुर्थमुदङ्ङीक्षमाणो दक्षिणतो बर्हिष्युपगूहति।[7] पञ्चमं षष्ठं च पूर्ववत्

---

1. का० श्रौ० सू० 26/5/, शु० य० सं० 3/27, 38/2
2. धेनुमुपसृजन्ति, द्रा० श्रौ० सू० 2/2/29
3. का० श्रौ० सू० 26/5/9
4. का० श्रौ० सू० 26/5/12, 14
5. का० श्रौ० सू० 26/5/16
6. श० प० ब्रा० 14/2/1/31
7. का० श्रौ० सू० 26/6/13

कृत्वा सप्तमं प्रतिप्रस्थात्रे प्रयच्छेत्। तं स उत्तरतः शालाया उदञ्चं निरस्यति।[1]

**घर्मप्राशनम्**

ततो घर्मपात्रस्थमाज्यं उपयमन्यामासिञ्चति।[2] आहवनीयस्योत्तरे स्थापितस्य रौहिणपुरोडाशस्याहुतिर्दद्यात्।[3] आहवनीयस्य पश्चिमे परिधौ स्थापितानि पञ्च शकलान्याहवनीये प्रक्षिपति।[4] ततो उपयमन्यां स्थापितो घर्म सर्वेभ्य ऋत्विजेभ्य प्रयच्छेत्।[5] ऋत्विग्यजमानाश्च उपहवपूर्वकं 'मधु हुत' मित्यनेन मन्त्रेण प्राशनं कुर्युः। उपयमनीमुच्छिष्टखरे प्रक्षाल्य स्थापयेत्। धेनवे तृणोदके प्रयच्छन्ति इति केचित्।[6] ततो घर्मपात्रमासन्द्यां निधायान्यान्यपि पात्राणि तूष्णीमासन्द्यां निदधाति। ततस्सर्वेषामृचं वाचमिति शान्तिकरणं द्वाराणामुद्घाटनञ्च।'

**उपसदिष्टिः**

पूर्वमेवोक्तं यत् प्रथमयागे प्रवर्ग्यानुष्ठानं न भवति। यदि प्रवर्ग्यानुष्ठानं कृतं स्याच्चेत् तर्हि प्रातः प्रवर्ग्यमनुष्ठाय तत उपसदनुष्ठेया। यदि वा प्रवर्ग्यं नानुष्ठितं स्थात्तथापि उपसदिष्टि करणीयमेव।[7] सा अपूर्वा काचिदिष्टिः। तत्राग्निः, सोमः, विष्णुश्चेति प्रधानदेवताः।[8] सर्वत्र आज्यं द्रव्यम्। प्रायेणोपांशुयाजवत् प्रयोगः। प्रणीतासंस्कारादारभ्यारम्भमाणेयमिष्टिः। पूर्ववत् सोमाप्यायनम् निह्नवः सुब्रह्मण्याह्वानञ्च कुर्यात्।[9] अग्नये अयः शयायै

1. का० श्रौ० सू० 26/6/14–15
2. का० श्रौ० सू० 26/6/16
3. रौहिणौ जुहोति श० प० ब्रा० 14/2/1/41
4. श० प० ब्रा० 14/2/1/42
5. वाजिनवद् भक्षयन्ति, का० श्रौ० सू० 26/6/19
6. का० श्रौ० सू० 26/6/24
7. का० श्रौ० सू० 8/2/14–15
8. का० श्रौ० सू० 8/2/30–31
9. का० श्रौ० सू० 8/2/32

आहुतित्वात् इष्टिरियमयःशयोपसदिष्टिरित्युच्यते।[1] एवं प्रातः प्रवर्ग्योपसदावनुष्ठाय, सुब्रह्मण्याह्वानं कृत्वा विरामः। ततोऽपराह्णेऽपराह्णिक्यौ प्रवर्ग्योपसदौ सुब्रह्मण्याह्वानञ्च। एवं दिनत्रयं (द्वितीयतृतीयचतुर्थदिवसेषु) सायंप्रातरनुष्ठेयम् द्वितीयोपसद् 'रजःशया' तृतीयोपसच्च 'हरिशया' इत्युच्यते। तेनाग्निष्टोमे षड्वारं प्रवर्ग्योपसदोरनुष्ठानं सिध्यति। ततोऽनस्तमिते वाग्यमनप्रैषः। अस्तमिते वाग्विसर्गप्रैषः, व्रतकरणप्रैषः, वाग्विसर्गः।

## व्रतप्रदानम्

अध्वर्युः गां दुग्ध्वा यजमानाय व्रतं प्रयच्छेत्। प्रथमायामुपसदि गौः त्रिस्तनं, द्वितीयायां द्विस्तनं, तृतीयायाञ्चैकस्तनं दुग्ध्वा यजमानाय पातुं प्रयच्छेत्।[2] एवमेव प्रतिप्रस्थाता पत्न्यै व्रतं दद्यात्। यजमानव्रतनिमित्तं गार्हपत्याग्नावध्वर्युः श्रपयित्वा कांस्यपात्रे पानार्थं प्रयच्छेत्। पत्नीनिमित्तं च प्रतिप्रस्थाता दक्षिणाग्नावधिश्रित्य अयः पात्रे (लौहपात्रे) पानार्थं प्रयच्छेत्। एवमेव यजमानाय यजमानपत्न्यै च व्रतप्रदाननिमित्तं सर्वत्रावगन्तव्यम्।

## तृतीयदिनम्

द्वितीयोपसद्दिने (दीक्षातस्तृतीयदिवसे) प्रातः कालीनं कृत्यं समाप्य वाग्विसर्गान्तं कृत्यमाचरेत्। व्रतप्रैषः व्रतप्रदानञ्च कुर्यात्। प्रातः प्रवर्ग्यमनुष्ठाय रजःशयोपसदिष्टिरनुतिष्ठेत्। एवं प्रवर्ग्योपसदावनुष्ठाय, महावेदेर्निर्माणं कर्त्तव्यम्। सा च प्राचीनवंशमण्डलात् पुरतः षट्पदानि परित्यज्य ततो निर्मातव्या। एकदीक्षापक्षे चतुर्थे दिने अग्नीषोमीयः पशुयागो भवति। तदेव दिनं औपवसथ्यदिवसमिच्युच्यते। 'औपवसथ्यात्पूर्वेऽहनि पौर्वाह्णिक्या प्रचर्य वेदिं मिमीते[3]' इति कात्यायनवचनात् वेदिमानकृत्यमारभेत्।

---

1. का० श्रौ० सू० 8/2/33
2. का० श्रौ० सू० 8/3/1-2
3. का० श्रौ० सू० 8/3/6

**वेदिमानम्**

सोमयागस्य महावेद्याः निर्माणकाले प्रक्रमपरिमाणं किञ्चिद्भिन्न-मवलोक्यते। पदद्वयस्यात्रैकः प्रक्रमः।

**उक्तमपि कात्यायनेन-**

**"आधाने पदिकं कुर्यात् द्विपदः सौमिको भवेत्।**
**अग्नौ च त्रिपदं कुर्यात् प्रक्रमं याज्ञिको बुधः।।"**

श्लोकशुल्वे-श्लोक 34

एवंविधप्रक्रमपरिमाणं काष्ठादिगृहीत्वा मध्यमशङ्कोरारभ्य दक्षिणस्यां दिशि पञ्चदशसु प्रक्रमेषु शङ्कुं निखनति सा वेदेर्दक्षिणा श्रोणिः। पुनस्तस्यां मध्यमशङ्कोरुत्तरस्यां दिशि पञ्चदशप्रक्रमान् प्रक्रम्य शङ्कुं निखनति सा वेदेरुत्तरा श्रोणिः।

पुनस्तस्मान्मध्यमशङ्कोः प्राच्यां षट्त्रिंशत्प्रक्रमान् प्रक्रम्य शङ्कुं निखनति तत् वेदेः पूर्वार्द्धः यूपावटस्थानञ्च। पुनस्तस्माच्छङ्कोर्द्दक्षिणस्यां दिशि द्वादशप्रक्रमान्प्रक्रम्य शङ्कुः 'स वेदेर्दक्षिणोंऽसः।' पुनरपि तस्मात्पूर्वार्द्धशङ्कोरुत्तरतो द्वादशसु प्रक्रमेषु शङ्कुः स वेदेरुत्तरोंऽसः। एवं वेदिं मित्वा श्रोणिमारभ्य दक्षिणपार्श्वं दक्षिणांसान्तं यावत् स्फ्येन रेखा कार्या। एवमुत्तरश्रोणिमारभ्योत्तरांसपर्यन्तं च। 'सर्वतः स्फ्येन परितनोति मध्ये पृष्ठ्या' इति सूत्रान्तरे।

**अत्र वेदिसाधनोपायभूतः श्लोकः**

**'पञ्चदशमथैकविंशं त्रिकमपरं परतस्त्रिकञ्चापि।**
**द्वादशसु पाश उत्तमः सोमे रज्जुप्रसारणमेतत्।।**[1]' इति।

प्राचीनवंशशालायाः पूर्वद्वारमध्यात् त्रीन्प्रक्रमान्द्विपदान्प्राच्यां प्रक्रम्य

---

1. देवयाज्ञिकपद्धतौ 275 तमे पृष्ठे

शङ्कुनिखननम्। तस्य शङ्कोरन्तःपान्त्यसंज्ञेति कर्कादयः। तस्य शालाशङ्कोरन्तरालदेशस्यान्तःपान्त्यसंज्ञेति हरिस्वामिनः।

अर्थाद्वेदिरियं षट्त्रिंशद्धस्तपरिमिता लम्बायमाना। पूर्वस्यां चतुर्विंशतिहस्तपरिमिता दीर्घा पश्चिमायाञ्च त्रिंशद्धस्तपरिमिता दीर्घा भवति। वेदिनिमित्तं चित्रमग्रिमे पृष्ठे द्रष्टव्यम्।

**अपराह्ने द्विस्तनं व्रतकरणञ्च**

सायं पुनः पूर्वदिवससदृशमेव प्रवर्ग्यानुष्ठानं रजःशयोपसदिष्टिश्च कुर्यात्। तदनन्तरं प्रवर्ग्योत्सादनं कुर्यात्।

## अग्निष्टोमयागविहारपरिचयः

1. पत्नीशाला – 5 × 5 × 5 अरत्निः, पूर्वद्वारम् 2 × 4 अरत्निः
2. दीक्षाशाला 5 × 5× 5 अरत्निः, पूर्वद्वारम् 2 × 4 अरत्निः
3. मध्ये गर्तः – 18 × 18 × 18 अंगुलम्
4. प्रकृतिविहारः दर्शपौर्णमासविहारवत्
5. प्रवृञ्जनीयखरः 18 × 18 × 4 अंगुलम्
6. उद्वासनीयखरः 18 × 18 × 4 अंगुलम्
7. उच्छिष्टखरः 18 × 18 × 4 अंगुलम्
8. सोमासन्दी नाभिपर्यन्तोन्नता
9. घर्मासन्दी
10. पूर्वस्यां, दक्षिणस्यां, पश्चिमायाञ्च द्वाराणि 2 × 4 अरत्निः
11. महावेदिः
12. पश्चिमायां दक्षिणोत्तरौ– 30 अरत्निः
13. पूर्वस्यां दक्षिणोत्तरौ– 24 अरत्निः
14. मध्य–पूर्व–पश्चिमश्च – 36 अरत्निः
15. पश्चिमायां दक्षिणोत्तरश्रोणिद्वयम् – 15 अरत्निः
16. पूर्वस्यां दक्षिणोत्तरांसद्वयम् – 12 अरत्निः

17. पृष्ठ्या, पश्चिमतः पूर्वस्यां गम्यमाना मध्यरेखा
18. सदोमण्डपम् 18 × 9 अरत्निः, पूर्वपश्चिमयोः द्वारम्
19. औदुम्बरी अन्तः पान्त्यात् षट्प्रक्रमपूर्वं ततश्च दक्षिणम् 4½ अरत्निः दक्षिणम्।
20. मैत्रावरुणधिष्ण्या 18 × 18 × 4 अंगुलम्
21. होतृधिष्ण्या 18 × 18 × 4 अंगुलम्
22. ब्राह्मणाच्छंसिधिष्ण्या 18 × 18 × 4 अंगुलम्
23. पोतृधिष्ण्या – 18 × 18 × 4 अंगुलम्
24. नेष्टृधिष्ण्या – 18 × 18 × 4 अंगुलम्
25. अच्छावाक्धिष्ण्या – 18 × 18 × 4 अंगुलम्
26. मार्जालीयाशाला – 5 × 5 × 5 अरत्निः (उत्तरस्यां द्वारम्)
27. मार्जालीयधिष्ण्या – 18 × 18 × 4 अंगुलम्
28. आग्नीध्रीयाशाला – 5 × 5 × 5 अरत्निः (दक्षिणे पूर्वे च द्वारम्)
29. आग्नीध्रीया धिष्ण्या 18 × 18 × 4 अंगुलम्
30. हविर्द्धानमण्डपम् 10 × 10 अरत्निः (पूर्वपश्चिमयोर्द्वारम्)
31. उपरवः 24 × 24 अंगुलम् (सोमाभिषवस्थानम्)
32. दक्षिणशकटस्थानम्
33. उत्तरशकटस्थानम्
34. ग्रहासादनखरः 36 × 36 अंगुलम्
35. उत्तरवेदिः 5 × 5 × 1 अरत्निः
36. नाभिः 10 × 10 × 1 अंगुलम्
37. यूपः 5 अरत्निः
38. ब्रह्मासनम्
39. यजमानासनम्
40. उत्करः 4 अंगुल परकालेन निर्मितो वृत्ताकारो गर्तः (द्वादशाङ्गुलगर्तः)

## अग्निष्टोमयागविहारः



41. चात्वालः 32 × 32 × 4 अंगुलम्

42. शामित्रशाला अर्थपरिमाणम्। दक्षिणस्यां द्वारम्

43. उखा अर्थपरिमाणम्। दक्षिणस्यां द्वारम्

44. ऊबध्यः। अर्थपरिमाणम्

अस्मिन् देवयजने बाह्यभागे चतुर्षु दिक्षु द्वाराणि भवन्ति।

## चतुर्थदिनकृत्यम्

अपररात्रे यथोक्तं व्रतकरणम् तदर्थं व्रतकरणप्रैषः, एकस्तनं व्रतदुघे धुक्ष्वेति प्रैषः दुग्ध्वा पूर्वोक्तविधानानुसारं यजमानस्य व्रतं गार्हपत्ये पत्न्या व्रतं दक्षिणाग्नौ चाधिश्रयेत्। ततः प्रातःकालीनः प्रवर्ग्यः, तत्राहः केतुनेति रौहिणहोमः।[1] इदं सूर्यायेत्यग्निहोत्रावृता होमे त्यागः।

तत उपसत् – तत्र या ते अग्ने हरिशयेत्युपसदाहुतिः,[2] इदमग्नये हरिशयायै तन्वै। तदर्द्धव्रतप्रदानं पत्नीयजमानाभ्याम्। ततस्तदानीमेव द्वितीयः प्रवर्ग्यः – तत्र 'रात्रिः केतुनेति रौहिणहोमः। तत उपसदिष्टिः तत्र हरिशयेत्युपसदाहुतिः। ततः प्रवर्ग्यकरणपक्षे उपसत्समासान्ते प्रवर्ग्योत्सादनं भवति।

## घर्मोत्सादनम्

प्रवर्ग्यविधानानन्तरं घर्मोपयोगिपात्राणां विसर्जनं घर्मोत्सादनमुच्यते। दर्भमुष्टित्रयस्यैकत्र बन्धनेन एका शलाका भवति। तादृश्यः तिस्रः शलाकाः भवन्त्यत्र। तासु शलाकास्वाग्नीध्र एकामादायाहवनीये प्रदीप्याहवनीयस्योपरि मुखमात्रे धारयति।[3] अध्वर्युस्तिष्ठन् स्रुचि चतुर्गृहीतस्य तृतीयांशं **'या ते घर्मदिव्या शुगिति[4]'** मन्त्रेण जुहोति। तत्पश्चात् द्वितीयां

---

1. शु० य० सं० 37/21
2. शु० य० सं० 5/8
3. श० प० ब्रा० 14/2/2/2
4. शु० य० सं० 38/18

शलाकामादायाहवनीये प्रदीप्य नाभिदध्ने धारयति।[1] ततोऽध्वर्युस्तिष्ठन्नेव **'याते घर्मान्तरिक्षे[2]'** इति मन्त्रेण **'जानुदध्ने धारयति[3]'** अध्वर्युराग्नीध्रश्चा-तृतीयां शलाकामादायाहवनीये प्रास्योपविश्य चतुर्गृहीतशेषं **'याते घर्म पृथिव्याम्'**[4] इत्यनेन मन्त्रेण जुहोति।

ततः पत्नीं पुरस्कृत्य सर्वे शालायाः पूर्वद्वारेण बहिर्निष्क्रामन्ति। ततोऽन्तःपान्त्ये आगत्य सामगायेति प्रस्तोतारं प्रेष्यति। सर्वे निधनं पठन्ति। ततः सामसमाप्तौ सर्वं सम्भारमादायोत्तरवेदिं प्रति सर्वे गच्छन्ति। सहानीतानि सर्वाण्यपि पात्राणि यथाक्रममुत्तरवेद्यामासादयन्ति।

उत्तरवेद्यां मध्ये प्रवृञ्जनीयस्य महावीरस्य नाभेः पुरस्तान्नाभिसंलग्नस्यैव निधानं,[5] ततः पूर्वं द्वितीयं महावीरं निदधाति, ततः पूर्वं तृतीयम्। चतुः स्रक्तिरिति मन्त्रेण। तृतीयमहावीरात्पूर्वं तूष्णीमुपशयां निदधाति। परीशासावभितो निदधात्येकं दक्षिणतः द्वितीयमुत्तरतः। ततो बहिः प्रदेशे अभितो रौहिणहवन्यौ स्रुचौ अवकृष्टे निदधाति।

रौहिणहवण्यामुत्तरतोऽभ्रिं निदधाति। दक्षिणरौहिणहवन्यां दक्षिणतो घर्मासन्दीं निदधाति। अभ्रेरुत्तरतः कृष्णाजिनं, सर्वतो धवित्राणि एकमासन्द्यां दक्षिणतः, द्वितीयं पश्चात्, तृतीयं कृष्णाजिनस्योत्तरतः अन्यानि शेषपात्राणि यथाविधिस्थापनीयानि। ततो गर्तवन्ति पात्राणि दुग्धेन पूरयति।[6] तानि च सप्तमहावीरस्त्रयं पिन्वने उपयमनी स्रुचश्चेति। तत्रासेचनवतां पूरणं कुर्वता अर्द्धं भूयो वा पयोऽवशेषणीयं तस्य स्थापनं कार्यम्, अपराह्णे यजमानाय व्रतमिश्रस्य दानार्थम्।

ततो 'वार्षाहरं' साम गायेति प्रैषः।[7] प्रस्तोतुस्तस्य गानम्।

1. श० प० ब्रा० 14/2/2/5
2. शु० य० सं० 38/18
3. दे० या० प० पृ० 277
4. शु० य० सं० 38/18
5. श० प० ब्रा० 14/2/2/16
5. श० प० ब्रा० 14/2/2/23
7. श० प० ब्रा० 14/2/2/26

ततोऽध्वर्युरुदपात्रं गृहीत्वा उत्तरवेदिमीशानकोणादारभ्य त्रिवारं परिषिञ्चति तत्र सकृन्मन्त्रेण द्विस्तूष्णीम्। तत इष्टाहोत्रियं साम गायेति प्रैषः, तद्गानम्।[1]

ततः सर्वेषां ब्रह्मादीनां पत्नीयजमानयोश्च क्रमेण चात्वाले मार्जनं '**सुमित्रियान आप**'[2] इति मन्त्रेण। पत्न्या अपि मन्त्रपाठः।

ततो यजमान उद्वयमित्यनेन मन्त्रेणैशानीं दिशं प्रति गच्छति। पश्चादवलोकनमकुर्वन्तः शालां प्रत्यागच्छन्ति सर्वे। ततो यजमान '**एधोऽसीति**[3]' मन्त्रेण समिधं हस्तेनादत्ते।

ततः **समिदसीति** मन्त्रेणाहवनीये तां समिधमादधाति। पत्नी च तूष्णीं गार्हपत्ये समिधमादधाति। ततो यजमानः स्वस्थान उपविश्य प्रवृञ्जनीयौ सुवर्णरजतशतमानौ ब्रह्मणे ददाति,[4] घर्मदुघामध्वर्यवे ददाति,[5] यजमानव्रतदुघां होत्रे ददाति,[6] पत्नीव्रतदुघामुद्गातृभ्यो ददाति।[7] ततोऽग्नीधेऽजां ददाति।[8]

### अग्निप्रणयनम्

प्रकृतिशालायाः आहवनीयसकाशाद्बाहुमात्रं समिधं प्रज्ज्वाल्य मृण्मये पात्रे स्थापयेत्। प्रकृतिशालाया उत्तरवेद्यामग्निप्रणयनं कुर्यात्।[9] अध्वर्युरग्निसहितं मृत्पात्रं स्वहस्ते आदायोत्तरवेदिं प्रति गच्छेत्। ब्रह्मा, यजमानः, होता, आग्नीध्रश्च अध्वर्योरनुगमनं कुर्यात्। होता ऋग्वेदस्य, अध्वर्युर्यजुर्वेदस्य, उद्गाता च सामगानं कुर्यात्। प्रतिप्रस्थाता आहवनीयादुत्तरवेदिं यावत् स्फ्येन रेखां कुर्यात्। अध्वर्युरुत्तरवेद्यां गत्वा

1. वे० गा० 4/12
2. शु० य० सं० 35/12
3. शु० य० सं० 20/23
4. श० प० ब्रा० 14/2/2/32
5. श० प० ब्रा० 14/2/2/33
6. श० प० ब्रा० 14/2/2/34
7. श० प० ब्रा० 14/2/2/35
8. दे० या० पा० पृ० 279
9. का० श्रौ० सू० 8/3/19

प्रतिप्रस्थातारमग्निपात्रं दद्यात्। स्वयमुत्तरवेद्याः प्रोक्षणादिसंस्कारः कुर्यात्। मध्ये सुवर्णं स्थाप्याज्याहुतिं दद्यात्। गुग्गुल, सुगन्धितेजनं, मेषस्य शिरसः केशाश्चोत्तरवेद्यां निधाय अग्निं स्थापयेत्।

## शकटस्थापनम्

शकटे हविर्द्रव्याणि स्थाप्यन्ते तस्माच्छकटं हविर्धानमिच्युच्यते। अत्र द्वे शकटे भवतः। तयोरेकः दीर्घः। तच्चोत्तरवेद्याः पश्चिमे हविर्धानमण्डपे पृष्ठ्यामुभयतः। दक्षिणोत्तरयोः। पूर्वाग्रं क्रमशोऽध्वर्युर्दीर्घशकटं दक्षिणे प्रतिप्रस्थाता चापरमुत्तरे स्थापयति।[1] दक्षिणशकटस्याधः सोमाभिषवो भवति। उत्तरशकटे च जलपात्राणि स्थाप्यन्ते। शकटाभ्यामुपरि मण्डपमाच्छादनार्थं तृणादीनि आदाय नयन्ति। ततः हविर्धानमण्डपनिर्माणं, तस्य विहारस्याच्छादनं (छायार्थम्) कुर्वन्ति। अद्यत्वे मण्डपं पूर्वत एव निर्मितं भवति। समयानुसारं संस्कारमात्रमेव भवति। शकटानयनकाले पत्नी तयोः धुर्योः आज्यमनक्ति। तेन गमनकाले शकटात् ध्वनिर्निर्गच्छति, शकटस्य गतिरपि सामान्या भवति।

## हविर्धानमण्डपनिर्माणम्

हविः स्थापननिमित्तं हविर्धानमण्डपस्य निर्माणं क्रियते।[2] इदं दशहस्तपरिमितं चतुरस्त्रं भवितव्यम्। अस्य पूर्वपश्चिमयोर्द्वारद्वयं भवेत्।[3] एतदर्थं प्रथमामाग्नेये, द्वितीयामैशान्यां स्थूणाद्वयं निखनति। ततः नैर्ऋतवायव्ययोर्द्वे स्थूणे निखनति। द्वारयोर्मध्ये पृष्ठ्या कार्या।

उपरि मध्यवलः प्रागग्रः कार्यः। अन्येऽपि लोकसिद्धा वंशवलकादयः प्रागग्रा वा उदगग्रा वा यथासंभवं कार्याः। रज्जुवृक्षत्वक्तृणादिना परस्परं बन्धनीयाश्च। एवं हविर्द्धानं काष्ठैर्यावन्निष्पाद्यते तावन्निष्पाद्य तत

1. का० श्रौ० सू० 8/3/19
2. श० प० ब्रा० 3/4/3/2
3. श० प० ब्रा० 3/4/3/8

उपरितश्छादयति।[1] पूर्वमेकं छदिरुदगग्रं हविर्धानस्योपरि मध्ये निधाय पुरस्ताद्रराट्यां ललाटपट्टिकां पूर्वद्वारस्योपर्यवलगयति बध्नाति।

मण्डपेऽस्मिन् सोमाभिषवो भवति। एतत्कर्म अन्ये (बहिस्थाः) जनाः न पश्येयुस्तदर्थं हविर्द्धानं परित उपरिष्टाच्च प्रच्छाद्य काष्ठसूच्या सम्यक्तया परिसीव्यति। एवं परिपूर्णं हविर्द्धानं निष्पाद्य '**वैष्णवमसि विष्णवे त्वा**' इत्येतावता मन्त्रेण तदभिमृशति। अत ऊर्ध्वं रागप्राप्तमन्त्रादेर्भक्षणं, हविःशेषस्य सोमादेर्भक्षणं च हविर्द्धानमध्ये न कर्त्तव्यम्। हविर्धानमध्ये सोमे अप्सु च प्रवेशितेषु अद्वारेण प्रेक्षमाणं प्रति 'मा प्रेक्षथा' इति ब्रूयात्।[2] सदसि चैवं स्तोत्रशस्त्रकाले।

## उपरवनिर्माणम्

दक्षिणस्य हविर्द्धानस्य यत्प्रउगं तस्याधो भूमौ उपरवान् खनति। तत्र च हविर्द्धानं मध्यापच्छेदेन चतुर्द्धा विभज्य दक्षिणपूर्वचतुष्कमध्ये प्रादेशद्वय-परिमाणं चतुरस्रं साधयित्वा तस्य कोणेषूपरवान् परस्परं प्रादेशमात्रान्त-रान्परिलिखति। दक्षिणपूर्वादारभ्य प्रदक्षिणमुपरवं कोणविदिशासु षट्त्रिंशदङ्गुलं गम्भीरं गर्तं खनेत्।[3] अत्र त्रयः पक्षाः। केषामपि ग्रहणेनान्तिमो गर्त ऐशान्यामेव भविष्यतीति निष्कर्षः।

### पक्षत्रयाणाम् अत्र चित्रैः प्रदर्शनं क्रियते




1. का० श्रौ० सू० 8/3/20
2. का० श्रौ० सू० 8/4/24, श० प० ब्रा० 3/4/5/23
3. श० प० ब्रा० 3/4/4/3-8

तृतीय:पक्ष:




एषामुपरवाणां पारस्परिक: योजनक्रमस्तादृशो भवेत् येन परस्परं सम्मुखमुपविश्य द्वयोर्गर्तयोर्व्यक्तिद्वयस्य हस्तत्यागे सति द्वयोः हस्तं परस्परमेकेनापरेण हस्तेन सम्मिलितः स्यात्। एतस्य लक्ष्यस्य सिद्धिरधः प्रदर्शितेन चित्रेण भवति –

उपरव:



### हस्तसम्मर्शनम्

उपरवं निष्पाद्याध्वर्युः गर्तेषु हस्तौ प्रवेश्य अवलोकयेत् यत् उपरवान्तः हस्तसम्मेलनं भवति न वेति।[1] अनन्तरं एकस्मिन् गर्तेऽध्वर्युरपरस्मिन् यजमानः हस्तं प्रदाय हस्तं सम्मेलयेत्। तदा यजमानोऽध्वर्युं पृच्छेद्यदत्र किमस्ति? अध्वर्युश्च कल्याणमस्तीति ब्रूयात्। यजमानो वदेत् – तन्म[2]

1. का० श्रौ० सू० 8/5/12, शु० य० सं० 5/24
2. श० प० ब्रा० 3/14/4/17

इति। अध्वर्युः गर्तस्य प्रोक्षणं कृत्वा तत्र दर्भं स्थापयेत्।[1] ततः प्रादेशमात्रे विस्तृते अरत्निमात्रदीर्घे द्वे वारणकाष्ठे आदाय गर्तमुपदधाति। मध्ये द्वयङ्गुलान्तरे मृत्तिकामासाद्य समानं कुर्यात्। तदुपरि लोहितानडुहश्चर्मं प्रसारयेत्।[2] चर्ममुपरि सोमलताकुट्टनार्थं पाषाणखण्डमवस्थापयेत्।[3] इतः पूर्वस्यां पञ्चचत्वारिंशदङ्गुलपरिमितं स्थानं विहाय खरः करोति।[4] खरोऽयं अरत्निमात्रः चतुरस्रः चतुरङ्गुलोन्नतश्च भवेत्, तत्रैव ग्रहपात्राण्यासादयिष्यन्ते।

**औदुम्बरीस्थापनम्**

अन्तः पात्यात् षट्प्रक्रमान् प्राच्यां पृष्ठ्याया उपरि गत्वा ततो दक्षिणस्यां दिशि महान्तं सप्तमं पदं प्रक्रम्यौदुम्बरीमुदुम्बरवृक्षजातां सकर्णां सदसो मध्यस्थूणां निखनति। सदसो दक्षिणार्द्धस्य मध्ये औदुम्बरी भवति। औदुम्बरीपंचमांशसंमितं खननम्।[5] अवटस्य पुरस्तात्प्रागग्राया औदुम्बर्या निधानम्। तस्या उपरि कुशमुष्टिनिधानम्। ततोऽद्भिः प्रोक्षणं दिवे त्वा, अन्तरिक्षाय त्वा, पृथिव्यै त्वेति अग्र-मध्य-मूलेषु क्रमशः उदगग्रबर्हिषामवटे स्तरणम्। ततो मूलपञ्चमभागमवटमध्ये प्रवेशयत्यध्वर्युः। पांसुभिरवट-पूरणम्। अद्भिरुपसिच्यालभ्य, '**ध्रुवोऽसि ध्रुवोऽयमिति**' वाचयति। तत आज्यसंस्कारः, स्रुवसम्मार्गः, औदुम्बर्याः परिस्तरणम्, ततः स्रुवेणाज्यं गृहीत्वौदुम्बर्या अग्रे कर्णयोरन्तराले जुहोति भूमिपर्यन्तं स्रावयतीति।[6]

मनुः - अन्तराले कर्णौ हिरण्यं निधाय घृतेन जुहोति आमूलादव-स्रावयती'ति।

---

1. का० श्रौ० सू० 8/5/19-22, शु० य० सं० 5/25
2. का० श्रौ० सू० 8/5/23
3. का० श्रौ० सू० 8/5/24
4. का० श्रौ० सू० 8/5/25
5. श० प० ब्रा० 3/4/5, 4-7, 15-19
6. शु० य० सं० 5/28

## सदोमण्डपनिर्माणम्

शतपथब्राह्मणानुसारं 'उदीचीनवंशं सदो भवति।' तच्च उदगायत-मष्टादशारत्निदीर्घं नवारत्नितिर्यक् भवति। सदसः साधनश्लोकः -

**नवके लक्षणं कुर्यात् त्रीणि कुर्यात्त्रिषु त्रिषु।**
**उत्तमो नवकः पाशः सदसो मानमुच्यते।।[1] इति**

मध्यबल उदग्वंशः कार्यः। पूर्वस्यामपरस्याञ्च द्वारे हविर्द्धानवत्। कोणेषु स्थूणानिखननम्। लोकत एव बलकवंशनिधानबन्धनादि तत्सर्वं कृत्वा नवभिश्छदिभिरुपर्याच्छादनं कुर्यात्।[2]

छर्दींषि सदसो दीर्घप्रमाणतृतीयभागेन दीर्घाणि विस्तारतृतीयेन च विस्तृतानि भवन्ति। तानि च त्रीणि पूर्वापराण्युदगग्राणि सदसो दक्षिणभागे, एवमेव त्रीणि मध्यमभागे, त्रीण्युत्तरभागे च। शाखान्तरे यज्ञविशेषे छदिषां संख्याविशेष उक्तः।

ततः षड्भिः परिवारकैः सदसः परिवारणम्। ततो हविर्द्धानवच्चतस्रो द्वार्यः परिवारकप्रोतैः सह परिषीव्यति। ततो निष्पन्नं सदमभिमृशति।

## आग्नीध्रीयानिष्पादनम्

हविर्द्धानञ्च दशारत्निदीर्घं, तस्य पूर्वो विभागः पञ्चारत्निः, अपरोऽपि पञ्चारत्निः। अतस्तं पञ्चारत्निपरिमितमपरभागमुत्तरेण पञ्चारत्निप्रमाणमेव समचतुरस्रं दक्षिणपूर्वद्वारमाग्नीध्रं साधयेत्।[3] इदमेव चाग्नीध्रस्य स्थानम्। तदाग्नीध्रमर्द्धं वेदिमध्ये, अर्द्धं बहिर्वेदि। अथवा बहुवेदिमध्ये अल्पं बहिः। अथवा सर्वमपि वेदिमध्ये एव कर्त्तव्यम्। एवमाग्नीध्रं परिपूर्णं तूष्णीमेव निष्पाद्यालभते।

---

1. दे० या० प० पृ० 288
2. श० प० ब्रा० 3/4/5/22
3. दे० या० प०, पृ० 289

## धिष्ण्यानिर्माणम्

आग्नीध्रस्य मध्ये आग्नीध्रीयं धिष्ण्यमष्टादशाङ्गुलं समचतुरस्त्रं कुर्यात्।[1] तत्र उदङ्मुखः पञ्चभूसंस्कारान् कृत्वा यजमानेऽन्वारब्धे स्फ्येन चात्वालादाहृतं पुरीषं संस्कृतायां भूमौ निवपति। ततस्तेन चतुरस्रमष्टाङ्गुलं धिष्ण्यं भवेत्। ततो सिकताः प्रकिरति। ततः सदसि षड्धिष्ण्यान्निवपति। तत्र धिष्ण्यस्थानं तद्विधायकः श्लोकः –

**'सदो मध्यमरेखायां तत्रोदीचीं निरामया।**
**तस्याः प्राञ्चं पदं त्यक्त्वा ततो धिष्ण्यानि कारयेत्।।' इति।**[2]

तत्र पूर्वद्वारमपरेण पृष्ठ्याया उत्तरतः संलग्नमेव होतृधिष्ण्यम्, औदुम्बर्या आग्नेय्यां मैत्रावरुणधिष्ण्यम्, होतृधिष्ण्यमुत्तरेण ब्राह्मणाच्छंसिधिष्ण्यम्, तदुत्तरेण नेष्टृधिष्ण्यम्, तदुत्तरेण पोतृधिष्ण्यम्, तस्योत्तरतोऽच्छावाक्धिष्ण्यम्। सर्वेषां धिष्ण्यानामष्टादशाङ्गुलप्रमाणम्, अन्तरालं चाष्टादशांगुलं भवति।

एवं सर्वेषां धिष्ण्यानां स्थानानि साधयित्वा क्रमेण निर्वापं कुर्यात्। एवं सदसि षण्णां धिष्ण्यानां निवापं कृत्वा आग्नीध्रीयधिष्ण्याद्दक्षिणां संप्रति आर्जवेन वेद्यन्तं वेदिमध्ये मार्जालीयधिष्ण्यं साधयेत्।

## मार्जालीया-मण्डपनिर्माणम्

हविर्धानमण्डपस्योत्तरे यादृशी आग्नीध्रीयाशाला निर्मिता तादृश्येव तत्परिमाणयुक्ता हविर्द्धानमण्डपस्य दक्षिणे मार्जालीया शाला निर्मीयते।[3] अस्यां शालायामुत्तरे द्वारमेकं भवितव्यम्। मार्जालीयायामस्यामपि पूर्ववदेकं धिष्ण्यं निर्मातव्यम्। यज्ञपात्रे एव शिष्टं हविः शेषं भुक्त्वा तेषां पात्राणां प्रक्षालनमस्यामेव शालायां भवति। एवमुक्तप्रकारेण, आग्नीध्रीयाशालायामेकं धिष्ण्यं, सदोमण्डपे षड्धिष्ण्यं, मार्जालीयाशालायाञ्चैकं धिष्ण्यं भवति। आहत्य सर्वं अष्टसंख्यकानि धिष्ण्यानि भवन्ति।

---

1. दे० या० प० पृ० 289
2. दे० या० पृ० पृ० 289
3. का० श्रौ० सू० 8/6/20

## निर्मितप्रदेशानां निरीक्षणम्

उपर्युक्तेन विधिना मण्डपं धिष्ण्यं च निर्माय सदोमण्डपस्य पूर्वद्वाराद्बहिरध्वर्युस्तिष्ठेत्। आहवनीयं, बहिष्पवमानदेशं, चात्वालं, शामित्रशालां, औदुम्बरीं, ब्रह्मासनं, शालाद्वार्यप्राजहित- प्रभृतीनि स्थानानि समन्त्रकमवलोकयति।[1]

## अग्नीषोमीया यागविधिः

यागोऽयं पशुयागनाम्ना व्यवह्रियते याज्ञिकैः। एतद्यागनिमित्तं प्रकृतिशालायाः आहवनीये क्रियमाणं विधानमुत्तरवेद्यां तथा च गार्हपत्ये क्रियमाणं प्रकृतिशालाया आहवनीये क्रियते। तस्मादत्र प्रकृतिशालाया आहवनीयं, शालाद्वार्यं, गार्हपत्यञ्च प्राजहितमित्युच्यते। सालाद्वार्यस्य पश्चादुत्तरतो वा पात्रासादनम् -

अग्निहोत्रहवणी, वज्रः, शम्या, दृषदुपलं, पवित्रच्छेदनानि पवित्रे, स्थाली आज्यं च, वेदश्च अभ्रिः, इध्मचतुष्टयं, आतिथ्यासम्बन्धि बर्हिः, वेदिमध्यादुद्धृत्य सन्नहनेन बद्ध्वा उपकल्प्यते। शकटं बर्हिश्च, स्रुवः, स्रुक्पञ्चकं, पान्नेजनीसप्तकं, यूपाष्टकं, उखापञ्चकं, मन्थनचतुष्टयं, प्राशित्र-हरणे, पात्री, षडवत्तं, योक्त्रं, यूनकुशाः, कुशास्तृतपीठम्। अन्तर्धानकटः, सर्वाणि सोमपात्राणि च ग्रावाणोऽप्यधिषवणादानीयोपकल्प्यन्ते।

ततो वाग्यतः पवित्रे छेदयित्वा प्रोक्षणीः संस्कृत्य पात्राणि प्रोक्ष्यासंचरे निदधाति। कुक्कुटहननं, आज्यनिर्वापः, वेदबन्धः। ततोऽभ्रिमादाय महावेदेः खननं, उत्तरपरिग्रहः, अन्तःपात्यसंलग्नवेदिपश्चिमान्ते अनुमार्जनम्। मदन्तीजलेन समस्तपात्राणां प्रोक्षणम्। अपराह्णे बर्हिप्रोक्षणकाले शकटस्थितानि बर्हींषि प्रोक्षेत्। उत्तरवेदिं, खरं, उपरवं, धिष्ण्याञ्च विहाय

---

1. 'सदोद्वारं पूर्वेण तिष्ठन्ननुदिशत्याहवनीयबहिष्पवमानदेशचात्वालशामित्रौदुम्बरी-ब्रह्मासनशालाद्वार्यप्राजहितान्' का० श्रौ० सू० 8/6/21 'सम्राडसि०' शु० य० सं० 5/32

समस्तयागभूमौ बर्हिष्यासादयेत्।[1] प्रवर्ग्योत्सादनसमयात् सुरक्षितं दुग्धं व्रतदुग्धे मिश्रीकृत्य यजमानाय दद्यात्। शाखाछेदनं वत्सापाकरणञ्च कुर्यात्।

ततो यजमान उत्सङ्गे सोमं निधाय शालाद्वार्यमपरेणोपविशति।[2] अध्वर्युश्च सोमक्रयण्या गोः पादधूलिं चतुर्धा विभज्यैकं भागमाहवनीय प्रणयनकाले उपयमनीषु प्रक्षिपेत्, द्वितीयेन भागेनाक्षधुरामञ्जनं कुर्यात्, तृतीयं भागमाग्नीध्रीयस्योपयमनीषु प्रक्षिपेत्, चतुर्थभागमत्रावसरे शालाद्वार्यमपरेण परिकिरेदिति।[3]

ततोऽन्तःपात्यदेशे आज्योत्पवनं, प्रोक्षण्युत्पवनं, आज्यावेक्षणं, ईक्षणान्ते नानाज्यकरणम्। ततः पृषदाज्यसंयोजनं, पशुवदाज्यग्रहणं, आज्यानां धारणं, यजमानस्य पुत्रपौत्रभ्रात्रादयश्चापिव्रता अविभक्तधना, यजमान-मन्वारभन्ते[4] तेषां सयजमानानामेकेन वाससाऽऽच्छादनं, इतस्ततश्चरत्स्वपि-व्रतेष्वन्वारम्भस्यानादरः।

**वैसर्जनहवनम्**

अध्वर्युः स्रुचौ संस्कृतमाज्यमादाय शलाद्वार्ये समन्त्रकाहुतिर्दद्यात्।[5] यजमानश्च '**इदं सोमाय न मम**' त्यागः कुर्यात्। अध्वर्युः 'अग्नये प्रह्रियमाणायानुब्रू३हि' इति प्रैषः कुर्यात्। अध्वर्युरग्निम्, यजमानः सोमम्, शेषा ऋत्विजो सोमकुट्टनार्थं पाषाणं, द्रोणकलशादिकञ्चादायोत्तरवेदिम्प्रति गच्छन्ति।

**अग्नीध्रीयायां हवनम्**

उत्तरवेद्याम्प्रति गच्छन्नध्वर्युः मध्यवर्ती आग्नीध्रीयाया उत्तरतो गच्छेत्।

1. का० श्रौ० सू० 8/6/27
2. का० श्रौ० सू० 8/6/29
3. का० श्रौ० सू० 8/6/30
4. का० श्रौ० सू० 8/6/34-35
5. त्वं सोम तनूकृद्भ्यः शु० य० सं० 5/35

आग्नीध्रीयायां पूर्वद्वारात्प्रविश्य स्रुचा समन्त्रकाहुतिर्जुहोति।[1] आज्यं सोमं च विहाय सहानीताः सर्वा सामग्र्यः उतरवेद्यामुत्तरभागे स्थापयेत्। अध्वर्युरुत्तरवेद्याः निरीक्षणात्पूर्वमेव समिदाधानं कृत्वा तत्र जुहोति।[2]

## शकटे सोमस्थापनम्

हविर्द्धानमण्डपे दक्षिणशकटे कृष्णाजिनमास्तृणुयात्।[3] कृष्णाजिनमास्तीर्य तत्र सोमं निदधाति।[4] ततो यजमानः स्थापितं सोममुपस्थापयेत्।

## अङ्गुलिविसर्जनम्

हविर्द्धानमण्डपाद्बहिरागत्य यजमान आहवनीये समिधमादधाति। मदन्त्याः जलेन हस्तं प्रक्षाल्य पूर्वत आवेष्टिता अंगुलीः समन्त्रकं विसृजेत। एवमेव यजमानपत्न्यपि गार्हपत्ये समिदाधानं कृत्वा अंगुलीर्विसृजेत्।[5]

## व्रतविसर्जनम्

अंगुलिविसर्जनानन्तरं यजमानः पत्नी च दीक्षाविधानकाले यद्व्रतग्रहणमकुर्वंस्तस्याप्यत्र विसर्जनं करोति। व्रतविसर्गानन्तरं दीक्षितस्य नामोच्चारणं भवितुमर्हति। दीक्षितः अन्नग्रहणमपि कुर्तुमर्हति। न केवलं पयो व्रत एवापितु हविः शेषस्यापि भक्षणं करोति। किन्तु नाद्यत्वे अपितु परेद्युः सवनीयपुरोडाशस्य भक्षणं कुर्यात्।[6]

---

1. अयन्नो अग्निर्वरिवस्कृणोतु शु० य० सं० 5/37
2. उरुविष्णो० शु० य० सं० 5/38
3. श० प० ब्रा० 3/5/2/18, का० श्रौ० सू० 8/7/16
4. शु० य० सं० 5/39
5. का० श्रौ० सू० 8/7/18, शु० य० सं० 5/40
6. का० श्रौ० सू० 8/7/21–23

## यूपसम्पादनम्

अध्वर्युर्यूपसंस्कारात्पूर्वमाहवनीये जुहोति। **'यज्ञो वै विष्णुर्यज्ञेनैवैतद्यूपमच्छैति तस्माद्वैष्णव्यर्चा जुहोति।**[1]**'** उत्तरवेद्याः पूर्वस्यां यूपस्थापनार्थं यूपस्य पञ्चमांशं यावद्गम्भीरं खातं खनति। गर्ते जलेन प्रोक्ष्य दर्भमास्तृणाति। हवनशेषमाज्यं यूपे अभ्यनक्ति। चषाले आज्यमनुलिप्य यूपे योजयति। यूपच्छेदनकालात् सुरक्षितं यूपशकलं गर्ते स्थापयेत्। यूपं स्थापयेत्।[2] गर्ते पुरीषम्प्रदाय मैत्रावरुणदण्डेन भूमिं समं कुर्यात्। यूपे त्रिवृतं रज्जुं परिव्ययति।[3] यूपशकलमस्यामवगूहयति।[4] शास्त्रसम्मतं शुभलक्षणसंयुक्तं छागमानीय यूपस्य पूर्वस्यामुपस्थापयेत्।[5] अरणीभ्यां अग्निमन्थनं कृत्वोत्तरवेद्यां स्थापयेत्।[6]

## पशूपाकरणम्

पशुशृंगे रज्जुं बद्ध्वा यूपे बध्नाति।[7] पशुं प्रोक्ष्य प्रोक्षणीस्थं जलं पाययेत्। पशुहृदि प्रोक्षणीजलं सिञ्चति।[8] उत्तरवेद्याः पश्चिमे उपविश्य होतारमाह्वयेत्। इध्मप्रैषात् प्रयाजयागपर्यन्तं कृत्यं समापयेत्। दशमं

---

1. श० प० ब्रा० 3/5/3/2
2. यूपलक्षणम् – चातुर्वर्ण्यं प्रवक्ष्यामि वृक्षाणां पशुभिः सह।
   वृक्षाच्छेदेन विज्ञेया वर्णेन पशवस्तथा।।1।।
   श्वेतस्तु ब्रह्मणो ज्ञेयः पिङ्गलः क्षत्रियः स्मृतः।
   वैश्यस्तु धूम्रवर्णः स्यात् कृष्णं शूद्रं विनिर्दिशेत्।। यू० ल० 1-26
3. का० श्रौ० सू० 6/3/13
4. का० श्रौ० सू० 6/3/15
5. छा० ल० 1/18
6. का० श्रौ० सू० 6/3/22
7. द्विगुणरशनया द्विव्यामया कौश्या पाशं कृत्वान्तरा शृङ्गमभिदक्षिणं बध्नाति यूपे। का० श्रौ० सू० 6/3/24-25
8. का० श्रौ० सू० 6/3/27-29

प्रयाजानन्तरं प्रैषं दत्वा प्रतिप्रस्थात्रा शस्त्रमाहरेत्। ततस्तेन हृतमसिमादाय स्वयं च स्वरूमादाय तावुभौ जुह्वग्रेऽक्त्वा घृतेनाक्ताविति पशोर्ललाटे स्वर्वसिभ्यामुपस्पृशति।[1] अध्वर्युः शमित्रेऽसिं प्रयच्छेत्। आग्नीध्रः मृण्मये पात्रेऽग्निं (आहवनीयादुल्मुकं) गृहीत्वा पश्वाज्यशामित्रदेशयूप-चात्वालाहवनीयान्परितस्त्रिः पर्येति।

## शामित्रशालागमनम्

आग्नीध्रः हस्तस्थितमग्निम् आहवनीये त्यक्त्वा पुनराहवनीयात् अग्निं गृह्येत्। तद्गृहीत्वा स पशोरग्रतो याति। शमिता च पशुं रज्जुबद्धं पशुमादाय आग्नीध्रमनुगच्छति। वपाश्रपणीभ्यां पशुमन्वारभन् प्रतिप्रस्थाता गच्छेत्। प्रतिप्रस्थातामध्वर्युः अन्वारभते अध्वर्युं यजमानोऽन्वारभते। एवमेकैकस्माननुगच्छन्तस्सर्वे शामित्रशालां गच्छन्ति।[2]

शामित्रशालागमनात्प्राक् अध्वर्युः वेदिसकाशात् दर्भद्वयमुत्थाप्य अध्रिगुसंज्ञकः प्रैषः कुर्यात्।[3] प्रैषानुसारं होता अध्रिगुसंज्ञकः पाठः कुर्यात्।[4] ततोऽध्वर्युः शामित्रशालायां पशुसंज्ञपनस्थाने दर्भं स्थापयेत्। तत्र शमिता एव तिष्ठेत् अन्ये सर्वे बहिर्गच्छन्ति। बहिरागत्य ते देवयजने उपविशन्ति। संज्ञपनकार्यमिदं शमिता एकलः सन्नेव कुर्यात्। न कश्चित् पश्येत्। तदानीमध्वर्युः देवतानिमित्तकपरिपशव्याहुतिः दद्यात्।

## संज्ञपनप्रकारः

शामित्रशालायामध्वर्युना अवस्थापितं दर्भमुपरि पशुं प्राक्शिरसं

---

1. दे० या० प० पृ० 215, शु० य० सं० 6/11
2. का० श्रौ० सू० 6/5/5–8
3. का० श्रौ० सू० 6/5/9
4. शांखायन श्रौतसूत्रे – दैव्याः शमितार उत च मनुष्या आरभध्वमुपनयत मेध्या दुर आशासाना मेधपतिभ्यामेधम्।। 1।। त आरभ्य दशममन्त्रपर्यन्ताः अध्रिगुसंज्ञकमन्त्रा उक्ताः। शां० श्रौ० सू० 5/17/1–10

प्रत्यक्शिरसं वोदक्पादं पातयित्वा मुखग्रहणेन श्वासरोधं कृत्वा मारयति। ग्रीवामोटनेन वा तथा मारयेत् यथा मार्यमाणः शब्दं न करोति।[1] तदनन्तरं शास्त्रोक्तविधिना शमिता संज्ञपनकृत्यं सम्पादयेत्।

संज्ञपनानन्तरं शमिता कार्यसम्पादनस्य सूचनामध्वर्यवे दद्यात्। ततः प्रतिप्रस्थाता पान्नेजनहस्तां पत्नीं गार्हपत्यस्य समीपात् पशुं प्रति नयन्नमस्त आतानेति वाचयति। ततः पत्नी पशुसमीपे उदङ्मुखी उपविश्य पशोः प्राणानद्भिः शोधयति। वाचंत इति मुखम्। प्राणं त इति नासिके। चक्षुष्ट इति चक्षुषी। श्रोत्रन्त इति कर्णौ। नाभिं त इति नाभिं। मेढ्रन्त इति शिश्नम्। पायुं त इत्यपानम्। सर्वाङ्गान्येकत्र कृत्वा चारित्रांस्त इति प्रोक्षति।

ततः पान्नेजनशेषेणाध्वर्युर्यजमानौ पशोरङ्गान्युषिञ्चतः।[2] ततः पशुमुत्तानं कृत्वाऽध्वर्युर्नाभेरग्रे आत्ततृणमध्ये यदेकमवशिष्टं तदत्र प्रागग्रं निदधाति ओषध इति।[3] ततो दर्भसहितं पशोस्त्वक् तूर्ष्णीं छित्वा तृणाग्रं रुधिरेणानक्ति। अक्त्वा च तत्तृणं उत्करे प्रक्षिपति **'रक्षसां भाग'** इत्यनेन मन्त्रेण।[4] ततोऽध्वर्युः पशोरुदराद्वपामुत्खिद्य वपाश्रपण्यां प्रसार्य प्रतिप्रस्थात्रे प्रयच्छेत्।

अध्वर्युः स्रुवेणाज्यं गृहीत्वा वपाया उपरि अभिघारयति। जुह्वायां सुवर्णखण्डमवस्थाप्य तदुपरि वपां स्थापयित्वा पुनस्तदुपरि हिरण्यशकलमवधाय आश्रावण-प्रत्याश्रावणपूर्वकं मैत्रावरुणं प्रेष्यति। मैत्रावरुणश्च होतारं प्रेष्यति।[5] होत्रा वषट्कृते समिद्धे जुहोति इदमिन्द्राग्नीभ्याम्। वपायागानन्तरं वपाश्रपणीमाहवनीयाग्नावस्थापयेत्। ततो

1. दे० या० प० पृ० 216
2. दे० या० प० पृ० 218
3. का० श्रौ० सू० 6/6/7
4. शु० य० सं० 6/16
5. शां० श्रौ० सू० 5/18/7, 'होता यक्षदग्नीषोमौ छागस्य वपाया मेदसो जुषेतां हविर्होतर्यज होतायक्षदग्नीषोमाविति प्रैषः।'

ब्रह्मादिक्रमेण सर्वे यजमानाः। सपत्नीकाश्चात्वाले **इदमाप** इत्यनेन मन्त्रेण मार्जयन्ते।[1]

## वसतीवरीग्रहणम्

अग्नीषोमीय-वपामार्जनानन्तरं वसतीवरीग्रहणविधिराचर्यते। यज्ञकार्यनिमित्तं पर्याप्तजलं यत्र स्थाप्यते तत्पात्रं वसतीवरी'त्युच्यते। अनस्तमित एव नद्यादिस्थाः स्यन्दमाना अपो गत्वा अप्सु जुहोति।[2] आहुत्यनन्तरं कलशेन ताः स्यन्दमाना अपो गृह्णीयात्। सन्निकटे यदि चेन्नदी न स्यात्तर्हि मणिकाद् गृह्णीयात्। तदभावे सोमयाजिनो गृहात् मणिकाद्वा जलमानयेत्। तदपि न स्यात्तदा उल्कुषीं दीपिकां लौकिकाग्नौ प्रज्ज्वाल्य तां ग्रहणकाले कलशस्योपरि धारयन्स्यन्दमानानां वसतीवरीर्गृह्णीयात्। वसतीवरीं गृहीत्वा एकधनां पान्नेजनीञ्च तेनैव जलेन पूरयेत्।

सर्वाण्यपि पात्राणि देवयजने नयेत् शालाद्वार्यस्य पश्चिमस्यां स्थापयेच्च। अध्वर्युः सुब्रह्मण्यं सुब्रह्मण्याह्वानाय प्रैषः दद्यात्। प्रैषानुसारं सुब्रह्मण्यः यजमानस्य पूर्वजानां प्रजानां च नामोच्चारणपूर्वकं सस्वरं सामं गायेत। 'अमुकशर्मा यजते' अमुकशर्मणः पुत्रो यजते अमुक-अमुक शर्मणः पौत्रः, नप्तः, पिता, पितामहो, प्रपितामहो, यजते एवमेव मातृपक्षस्यापि नामोच्चारः कुर्वन् सामं पठेत्। स्त्रीणां नामग्रहणे यदि मृता स्यात्तर्हि देविदायाः, जीविता स्याच्चेत् दायाः 'इत्युच्चारणं कुर्यात्। श्वः सुत्यामित्यादि ब्रुवन् (उद्घोषयन्) सामगानं समापयेत्।[3]'

## पशुपुरोडाशनिर्वापः

यागेऽस्मिन् अग्नीषोमपशोः कृत्यं प्रारम्भादेव प्रचलति। अतः

---

1. शु० य० सं० 6/17, का० श्रौ० सू० 6/7/27
2. का० श्रौ० सू० 9/4/3, शु० य० सं० 6/27
3. ला० श्रौ० सू० 1/3/18-20

तन्निमित्तकमेकादशकपालपुरोडाशमनुनिर्वपति। वैकल्पिकमैन्द्राग्नपशुस्थिते सति पुरोडाशद्वयं निर्मातव्यम्।[1]

### अङ्गनिष्कासनम्

शामित्रशालायां पशोः शरीराद्यागनिमित्तानि निम्नाङ्कितान्यङ्गानि शमिता निष्कासयेत्। अङ्गानां निष्कासनमखण्डमेव भवेत् तस्मात् सावधानतया एतत् कर्म सम्पादयेत्। (देवयाज्ञिकपद्धत्यनुसारम्) (पृ० 221–222)

1. वपा–'मेदस्तु वपा वसा' इत्यमरः (उदरस्था श्वेतवर्णा तन्त्री'ति)
2. हृदयम् – आम्रफलसदृशम् मांसम्।
3. जिह्वा – 'रसज्ञा रसना जिह्वा' इत्यमरः।
4. क्रोडः – वक्षस्थलम्, 'न ना क्रोडं भुजान्तरम्। उरो वत्सं च वक्षश्च', इत्यमरः।
5. सव्यसक्थिपूर्वनडकम् – सव्यबाहोः प्रथमा नलिका अंससन्निकृष्टा।

6, 7. पार्श्वे वाम – दक्षिणत्रयोदशास्थिसम्बद्धे।

8. यकृत् – दक्षिणपार्श्वस्थं पित्ताधारस्वरूपम्। कालखण्डयकृती तु समे इमे, इत्यमरः।

9, 10. वृक्कौ – पक्वाम्रफलतुल्यौ कुक्षौ वर्त्तमानौ गोलकौ महदाम्रतुल्यौ। (गुर्देति)

11. गुदः – गुदन्त्वपानं पायुर्ना, इत्यमरः। (मलप्रवहणम्)
12. दक्षिणश्रोणिः – पश्चात्पादस्योपरि वर्तमानो मांसलः प्रदेशः। कटिः श्रोणिः ककुद्मती इत्यमरः।

उपर्युक्तेषु द्वादशाङ्गेषु वपां विहायान्येषामेकादशाङ्गानामवदानं जुह्वां स्थाप्यते। एतदर्थमिमान्यङ्गानि जौह्वाङ्गानि अप्युच्यन्ते। प्रधानयागोपयोगीन्येतान्येवाङ्गानि भवन्ति।

---

1. श० प० ब्रा० 3/6/4/1

## औपभृताङ्गानि

1. दक्षिणसक्थिपूर्वनडकम् – दक्षिणांससन्निकटा प्रथमनलिका।
2. गुदतृतीयाणिष्ठम् –गुदस्य सूक्ष्मः तृतीयो भागः।
3. सव्याश्रोणिः – वामकटिः पश्चात् पादस्योपरि मांसलः प्रदेशः।

एषामङ्गानामवदानं उपभृति स्थाप्यते। स्विष्टकृद्यागे एषामुपयोगो भवति। उपभृति स्थापनत्वात् औपभृताङ्गानीत्युच्यन्ते।

## अन्यावदानाङ्गानि

1. वर्षिष्ठः – गुदः स्थूलभागः (उपयद्ढोमे अस्योपयोगः)
2. वनिष्ठुः – स्थूलान्त्रम्। अपानरन्ध्रात् संयुक्तमिदमङ्गमाग्नीध्रे दीयते।
3. जाघनी – जघनप्रदेशभवा जाघनी (पुच्छकाण्डम्) पत्नीसंयाजे उपयुज्यते।
4. क्लोमः – फुफ्फुसः (गलनाडिका) हृदयसमीपस्थो मांसपिण्डविशेषः क्लोमा। ब्रह्मणे दीयते।
5. प्लीहा – प्लीहं शुक्तिकाकारं मांसम्। यजमानाय दीयते।
6. अध्यूध्नी – अध्यूध्नी शतपुटः (नलिका विशेषः) होत्रे दीयते।
7. पुरीतत् – हृदयावरकं मांसम्। अध्वर्यवे दीयते।

पशुबन्धयागे उपर्युक्तान्यङ्गानि क्लोम–प्लीहा– अध्यूध्नी, पुरीतत् च पशुशरीरादवदानविकल्पानि। अग्नीषोमीय यागे एषां ग्रहणं निषिद्धं वर्तते।[1] एवं यत्र यावन्तो पशवः सन्तु तेषामङ्गनिष्कासनस्यैतदेव क्रमोऽवगन्तव्यः। अङ्गावदानकृत्यानन्तरं शेषांशं ऊबध्ये त्यक्तव्यम्। तदनन्तरं रक्तमपि रक्षसां निमित्तं ऊबध्ये त्यजेत्।[2] हृदयं शूले वेधयित्वा शामित्राग्नौ श्रपयेत्। उखायां जलं प्रपूर्य अग्नौ स्थापयेत्। तत्राङ्गानि प्रदाय अधिश्रयेत्।

---

1. का० श्रौ० सू० क० भा० 6/7/11
2. रक्षसां भागोऽसि। शु० य० सं० 6/16

## शामित्रानुशासनम्

अध्वर्युः शमितामनुशास्ति –'त्रिः प्रच्यावयतात्, त्रिः प्रच्युतस्य हृदयमुत्तमं कुर्यात्। यत् त्वा पृच्छात् शृतं हविः शमिता ३ रिति शृतमित्येव ब्रूयान्न शृतं भगवो न शृतं हीति।[1]' अनन्तरं अध्वर्युः शमितां पृच्छेत्, शमित्रा शृतमित्युक्ते सति तद्देवानामिति ब्रूयात्। अनन्तरं पृषदाज्येना-ध्वर्युरङ्गमुपरि अभिघारयेत्। वंशपात्रे अङ्गानि आहृत्य स्थापयेत्। अङ्गान्युपर्यभिघारयेत्। अङ्गपात्राणि तत आनयित्वा वेद्यामासादयेत्। प्रतिप्रस्थाता अङ्गावदानं कुर्वन् मैत्रावरुणाय प्रैषः दद्यात्।

## अङ्गावदानविभागः

प्रतिप्रस्थाता अङ्गान्यवदायाध्वर्यवे दद्यात्। अध्वर्युश्चाङ्गानि यथाविधि पात्रेष्ववस्थापयेत्। अवदानं सुवर्णखण्डेन सम्पुटितं कुर्यात्।

## अङ्गावदानविधिः

पूर्वमेवोक्तं यदङ्गावदानमत्यन्तसावधानतया कर्त्तव्यम्। तत्रापि जौहवं औपभृतं चाङ्गं पृथक् पृथक् पात्रे स्थापयेत्। केषाञ्चिदङ्गानां सम्मर्शनमेव। हृदयादीनां जौहवानां प्रत्येकं मध्यात्पूर्वार्धाच्च द्विर्द्विरवदायाध्वर्योर्हस्ते समर्पयति। अध्वर्युर्जुह्वामवदधाति। शेषमिडापात्र्याम्।[2] जुह्वामवदाय तत उपभृति दक्षिणसक्थिगुदतृतीयसव्यश्रोणीनां द्विर्द्विरवदानम्।[3]

## अग्नीषोमीयः प्रधानयागः

अध्वर्युः पुरोऽनुवाक्या 'इन्द्राग्निभ्यां, अग्नीषोमाभ्यां छागस्य हविषोऽनुब्रूहि[4]' इति प्रैषः दद्यात्। यजतिस्थानं गत्वा याज्यायै प्रैषः दद्यात्।

1. श० प० ब्रा० 3/6/4/3–4
2. का० श्रौ० सू० 6/8/12
3. दे० या० प० पृ० 224
4. का० श्रौ० सू० 6/8/13

जुहोतिस्थानात् प्रतिप्रस्थाता वसाहोमः कुर्यात् '**वसैकदेशं जुहोति।**[1]' याज्या पाठसमाप्त्यनन्तरं पृषदाज्येन प्रधानयागः कुर्यात्।[2] उपभृति धृतमवदानं जुह्वाम् आदाय स्विष्टकृद्याग: कुर्यात्। वसाशेषेण दिग्व्याघारः। सम्मर्शनञ्च। इडाविधिं सम्पाद्य जाघन्येन पत्नीसंयाजः कुर्यात्।[3] यागसम्बन्धिशेषविधिं समापयेत्।

## सुत्यानिमित्तकं पूर्वदिनकृत्यम्

अध्वर्युः 'व्युत्क्रामत' इत्युच्चारयन् सर्वान् देवयजनाद्बहिर्गन्तुं प्रेष्येत्। प्रैषानुसारं सर्वे देवयजनाद्बहिरागच्छन्ति। अनन्तरं शालाद्वार्येण पश्चिमायां पूर्वाभिमुखी पत्नी उपविशेत्। उत्तरवेद्या पश्चिमे उत्सङ्गे सोमं कृत्वा यजमान उपविशेत्। अध्वर्युः यथाविहितेन मार्गेण वसतीवरीमानीय उत्तरवेद्याः दक्षिणश्रौणौ निदध्यात्। तत आदाय पत्नी सम्मुखे अवस्थापयेत्। पत्नी तामालभेत्। अनन्तरं तत उत्थाप्य उत्तरवेद्या उत्तरश्रोण्यामवस्थापयेत्। ततः पुनः आग्नीध्रीयायां स्थापयेत्। तिष्ठेत् चासन्द्यां आग्नीध्रीयशालायां स्थापयेत्।[4] तस्यां रात्रौ यजमानस्तत्रैव तिष्ठेत् तां रात्रिं सोमं रक्षति दीक्षितः।[5] सुब्रह्मण्याह्वानप्रैषः दोहनविधिश्च कुर्यात्। अद्यारभ्य परेद्युः अध्वर्युं यागकर्मनिमित्तमधिकं परिश्रमं करणीयम्भविष्यति, तदर्थं यजमानः शमनार्थं गृहं, मलापकर्षणसमर्थं स्नपनं, चन्दनालङ्करणदन्तधावनञ्च अध्वर्यवे दद्यात्।[6]

## पञ्चमदिनकृत्यम्

अग्निष्टोमयागस्याद्य पञ्चमः दिवसः। दिवसोऽयं सुत्यादिवसनाम्ना

1. का० श्रौ० सू० 6/8/16
2. का० श्रौ० सू० 6/8/18
3. दे० या० प० पृ० 224-225
4. का० श्रौ० सू० 8/9/22
5. का० श्रौ० सू० 8/9/23
6. का० श्रौ० सू० 8/9/26

ज्ञायते विद्वद्भिः। अग्निष्टोम अद्यत्वे भूयमानेषु कृत्येषु अन्यतम मन्यते याज्ञिकैः।

### ऋत्विक्प्रबोधनम्

अपरात्र ऋत्विजः प्रबोधयन्ति यजमानभृत्याः।[1] तदनुसारं ऋत्विजो प्रातरूत्थाय प्रातःकृत्यं सम्पाद्य शीघ्रमेव यज्ञशालामागच्छन्ति। अध्वर्युर्यागविधेरारम्भः करोति। शालाद्वार्यदक्षिणे सविधि ब्रह्मा तस्य सन्निधौ यजमानश्चोपविशेत्। अध्वर्युः पात्रासादनं कृत्वा उत्तरेवर्दीं, शालाद्वार्यं, दक्षिणाग्निञ्च परितः परिस्तरणं स्थापयेत्। आग्नीध्रीया मण्डपे प्रोक्षणीसंस्कारः आज्यसंस्कारश्च कुर्यात्। सोमाभिषवसामग्रीमादाय उत्तरवेदीत उत्तरस्यां स्थापयेत्। जुहू, उपभृत्, ध्रुवा, आज्यं, पृषदाज्यञ्च उत्तरवेद्याः पश्चिमे आसादयेत्।

### यज्ञसारथिसामगानम्

अध्वर्युर्यदाऽज्यप्रणयनं कुर्वन् तिष्ठेत्तदानीं प्रस्तोता आग्नीध्रमण्डपे अग्नेः पश्चिमे पूर्वाभिमुख उपविशेत्। उपविश्य च यज्ञसारथिसंज्ञकसाम्नः गानं कुर्यात्।[2]

### अभिषवणनिमित्तं सोमस्थापनम्

सोमाभिषवार्थं समस्ताः सामग्र्यः हविर्द्धानशकटस्येषामध्यात् अभिषवफलके आदध्यात्। कुट्टनार्थं पाषाणस्य स्थूलभागौ यथा परस्परं सम्मुखौ भवेताम्, तथा फलके स्थापयेत्। सोमार्द्धान्न्यूनांश ईषामध्यात् फलके निनयेत्। यजमानः सोममुपस्थापयेत्। तेनैव मार्गेण हिरण्यं, परिप्लवा, दशापवित्रं, निग्राभ्यां सम्भरण्याद्याः सामग्र्यश्च अधोभागे नयेत।

---

1. का० श्रौ० सू० 9/1/1
2. ला० श्रौ० सू० 1/6/40, सुत्यायां यज्ञसारथ्यहरहः।

## लोकद्वारी सामगानम्

शालाद्वार्यात् पश्चिमे पूर्वाभिमुखः यजमान उपविश्य यथाविहितं लोकद्वारवासवसाम्नः गानं कुर्यात्।[1]

## विश्वरूपा सामगानम्

यजमानः उद्गातारं विश्वरूपसंज्ञकसामगानार्थं प्रार्थनां कुर्यात्। उद्गाता च तस्य प्रत्याख्यानं कुर्यात्।[2] पुनः यजमानः प्रार्थयेत्। यजमानस्य प्रार्थनां श्रुत्वा विश्वरूपं सामं गायेत्।[3]

## प्रातरनुवाकः

विश्वरूपं सामसमाप्त्यनन्तरमध्वर्युर्होतारमाह्वयेत्। हविर्द्धानस्य पूर्वद्वारि पृष्ठ्यात उत्तरस्यां होतृषदनं स्थापयेत्। पक्षिणां शब्दात्पूर्वमेव प्रातरनुवाकस्य उपाकरणं कुर्यात्। एतदर्थं होतारं प्रेष्येत्।

'होता मन्त्रजपानन्तरं दक्षिणेन बाहुनावृत्याग्नीध्रीये अग्नौ भूर्भुवः स्वरित्येवमादिकैर्मन्त्रैः स्वाहाकारान्तैः षडाहुतीः स्रुवेण हुत्वा ततः सव्यावृद्धविर्धानयोः पूर्वस्यां द्वार्युपविशेत्।[4]' इति शांखायनश्रौतसूत्रानुसारं आग्नीध्रीयाग्नौ हुत्वा हविर्धानमण्डपस्य पूर्वस्यां द्वार्युपविशेत् होता। 'मध्यमया वाचा प्रातरनुवाकमन्वाह'[5] अर्थान्मध्यमस्वरेण ऋग्वेदस्य विहितमन्त्राणां पाठः कुर्यात्। होतुर्मन्त्रारम्भे सत्यध्वर्युरुत्करमुपगत्वा सुब्रह्मण्यां प्रेषयति।[6] तदनन्तरं होतुस्समीपमुपविश्य प्रातरनुवाकमन्त्राणां श्रवणं कुर्यात्।

---

1. प्रातः सवनारम्भे विनियोग इत्युक्त्वा प्रारभेत्।
2. ला० श्रौ० सू० 1/8/5-6
3. युजे वाचं शतपदोम्०।
4. शां० श्रौ० सू० भा० 6/3/9
5. शां० श्रौ० सू० 6/3/9-11
6. का० श्रौ० सू० 9/1/12

## सवनीयनिर्वापः

आग्नीध्रः शालाद्वार्यतः पश्चिमायां दिशि पात्रासादनं कुर्यात्। 'इन्द्रायैकादशकपालं निर्वपति, हरिभ्यां धानाः, पूष्णे करम्भः, सरस्वत्यै दधि, मित्रावरूणाभ्यां पयस्याम् निर्वपेत्।'[1] इति।

## पात्रयोजनम्

यदा होता प्रातः सवननिमित्तं प्रातरनुवाकमन्त्रान् पठति तदैवोन्नेता ग्रहपात्राणामासादनं कुर्यात्। हविर्द्धानमण्डपे उपरवात् पूर्वस्यां यत् खरो निर्मितोऽस्ति तदुपर्येव निम्नक्रमेण सर्वेषां पात्राणामासादनं कर्त्तव्यम्।[2]

### पात्रासादनक्रमः

| | | |
|---|---|---|
| ईशान | पूर्व | आग्नेय |
| | अन्तर्यामपात्रम् उपांशुपात्रम् मन्थिपात्रम् शुक्रपात्रम्<br>ऐन्द्रवायवपात्रम्<br>मैत्रावरुणपात्रम् | |
| उत्तर | आश्विनपात्रम् प्र० ऋतुपात्रम् अ० ऋतुपात्रम्<br>आदित्यपात्रम् उक्थ्यपात्रम्<br>आदित्यस्थाली आग्रयणस्थाली उक्थ्यस्थाली<br>परिप्लवापात्रम् | दक्षिण |
| वायव्य | पश्चिम | नैर्ऋत्य |

दक्षिणहविर्धानशकटस्याधः द्रोणकलशं स्थापयेत्।[3] मेषस्योर्णानिर्मितं दशापवित्रं सोमरसशोधनार्थं शकटस्येषामुपरिष्टाद्द्रोणकलशोपरि अधस्तनं संलग्नं कुर्यात्। अनेनैवोर्णा सोमरसस्य शोधनं करिष्यते'ति।

---

1. का० श्रौ० सू० 9/1/15
2. का० श्रौ० सू० 9/2/2-15
3. का० श्रौ० सू० 9/2/16

**उत्तरशकटे पात्रासादनम्**

पूर्वेणोपस्तम्भनमुत्तरं ध्रुवस्थालीमन्तर्हिते[1] इत्यनेन श्रौतवचनेन शकटात् पूर्वस्यां ध्रुवस्थालीं स्थापयेत्। शकटे पूर्वस्यां पूतभृत्संज्ञकं पात्रं स्थापयेत्।

पूतभृत्पात्रात् पश्चिमायां विस्तीर्णमुखं महाकलशं आधवनीसंज्ञं सादयाति।[2] शकटात् पूर्वस्यां दशचमसपात्राणि पूर्वाग्राणि स्थापयेत्। शकटात् पश्चिमायां एकधनसंज्ञकं जलकलशं (आपञ्चदशभ्यः) स्थापयेत्।[3] होत्रा 'अभूदुषा' मन्त्रपाठानन्तरमध्वर्युराहवनीये जुहोति।[4] वसतीवर्याः जलं होतृचमसे निनीय यजमानाय दद्यात्। अत्र होतुर्चमसो यो यजमानाय प्रदत्तः स निग्राभ्या इत्युच्यते। सर्वे सोमाभिषवार्थं स्वे- स्वे स्थाने उपविशन्ति।[5]

**सोमाभिषवणकाले उपवेशनक्रमः**




अध्वर्युरनामिकायां स्वर्णबन्धनं कुर्यात् (पवित्रं धारयेद्वा) यजमानः हस्ताभ्यां निग्राभ्यामादाय हृदि धारयेत्। उपांशुसवनो नाम ग्रावा पञ्चमः[6]

1. का० श्रौ० सू० 9/2/18
2. दे० या० प० पृ० 306
3. का० श्रौ० सू० 9/2/22
4. का० श्रौ० सू० 9/3/1, ऋ० सं० 5/75/9
5. का० श्रौ० सू० 9/4/2
6. ला० श्रौ० सू० 1/10/13

उपांशुसवने पञ्चवारं सोमं मिमीते।[1] सोममालभेत्। क्षुल्लकाभिषवनिमित्तं मुष्टिमात्रं सोमं पृथक्कृत्वा पात्रान्तरे स्थापयति।[2] निग्राभ्यायाः जलमपि पृथक् एव स्थापयेत्। प्रतिप्रस्थाता सोमस्य षट्खण्डानि आदाय अङ्गुल्यन्तरेषु द्वौ द्वौ कुरुते।[3] एवं कृत्वा अगुलीर्मध्ये त्रिषु पर्वस्थानेषु स्थापयेत्। तृतीयसवननिमित्तं सोमं पृथक्कृत्य निदधाति।[4]

**महाभिषवः**

मध्ये स्थापितं सोममुपरि निग्राभ्यायाः जलं सिञ्चेत। सोमकुट्टनसमयेऽभिचार इष्टः स्याच्चेत् शत्रोः ध्यानं कुर्वन् सोमकुट्टनं कुर्यात्। शत्रोरभावे तृणभावनया कुट्टयेत् सोमकुट्टनं 'माभेर्मासंविक्था ऊर्जं धत्स्व धिषणे[5]' इति मन्त्रेण रसनिष्पीडनयोग्यं यावत्सोमं सम्यक्तया कुट्टयेत्।

**क्षुल्लकाभिषवः**

क्षुल्लकाभिषवार्थं पूर्वत एव पृथक्स्थापितं सोममभिषवणस्थाने स्थापयेत्। सम्प्रति अध्वर्युरेकलः सन्नेव कुट्टनं कुर्यात्।[6] अध्वर्युः निग्राभ्यायाः जलं सोमे निनयेत्। कुट्टनकाले पूर्ववत्तृणस्य ध्यानं (स्मरणं) कुर्यात्। प्रतिप्रस्थाता दक्षिणहस्ते ग्रहपात्रं वामहस्तेन च पात्रमुपरिष्टाद्भागे अंशुं गृह्णीयात्। प्रतिप्रस्थातुर्हस्तस्य ग्रहपात्रमुखस्योपरि पवित्रं (ऊर्णा निर्मितं) निधाय तदुपरि सोमं निष्पीडयेत् येन सोमरसः पवित्रेण पवित्रं भूत्वा ग्रहपात्रे आगच्छेदिति।

**सोमरसस्याहुतिः**

ग्रहपात्रं पवित्रेण प्रोञ्छयित्वा यजमानः स्वहस्तस्थं निग्राभ्यापात्रम्

1. का० श्रौ० सू० 9/4/7
2. दे० या० प० पृ० 310
3. का० श्रौ० सू० 9/4/9
4. दे० या० प० पृ० 310
5. शु० य० सं० 6/35
6. दे० या० प० पृ० 311

अन्येषां हस्ते दद्यात्। अध्वर्युश्च हविर्द्धानमण्डपाद्बहिरुत्तरवेदीपार्श्वे गच्छेत्। यजमानोऽध्वर्युमन्वारभेत्। यजमानोऽध्वर्युणा वरं याचेत।[1] ग्रहयागममुं यथाशीघ्रं समापनार्थं अध्वर्युं प्रार्थयेत्। अध्वर्युरुपांशुग्रहणे सोमस्याहुतिर्दद्यात्।[2] तृतीयसवनार्थं ग्रहशेषमाग्रयणस्थाल्यां त्यजेत्। ग्रहपात्रं यथास्थानं स्थापयेत्। उपांशुसवनं ग्रहपात्रसन्निधाववस्थापयेत्। एतत् सर्वं कृत्यं सूर्योदयात् पूर्वमेव समापनीयम्।[3] क्षुल्लकाभिषवोऽत्र समाप्यते। यजमानः पत्नी च आवश्यकतानुसारं इदानीं लघुशङ्कादिकृत्यैर्निर्वृत्य तिष्ठेत्।

**महाभिषवशेषविधिः**

अधिषवणफलके चत्वारि पात्राणि[4] स्थापयेत्। तदुपरि ऋजीषं स्थाप्य, उद्गाता, प्रस्तोता, प्रतिहर्ता च ऋजीषमुपरि द्रोणकलशं स्थापयेत्।[5] द्रोणकलशस्योपरिष्टाद् सोमरसं सुन्वने दशापवित्रं धारयन् तिष्ठेत्। पवित्रमध्ये सुवर्णं स्थाप्य तदुपरि निग्राभ्यापात्रमाधाय धारयन् तिष्ठेत्। उन्नेता निग्राभ्यायां सोमं त्यजेत्। दशापवित्रैस्सुन्वन्तैस्सोमरसैरध्वर्युः ग्रहपात्राणि प्रपूरयेत्। स्थालीपात्रमपि पूरयेत्। अन्ते अर्धं द्रोणकलशं पूरयेत्।[6]

**निष्क्रमणम्**

समन्वारब्धा अध्वर्य्वादयो हविर्धानान्निष्क्रामन्ति।[7] हविर्धानमण्ड-पाद्बहिर्गमनं निष्क्रमणमित्युच्यते। एतन्निष्क्रमणं विशिष्टं खलु। अग्रे अध्वर्युः तत्पश्चात् प्रतिप्रस्थाता, प्रस्तोता, उद्गाता, प्रतिहर्ता, यजमानाश्च क्रमशो

---

1. का० श्रौ० सू० 9/4/32
2. स्वाङ्कृतोऽसि शु० य० सं० 7/6
3. दे० या० प० पृ० 314
4. पात्राणि पाषाणखण्डानि
5. का० श्रौ० सू० 9/5/12
6. कौ० श्रौ० सू० 9/6/24
7. दे० या० प० पृ० 318

बहिरागच्छन्ति। यथा मृगमन्वेषयन् कश्चिद् व्याधः नम्रीभूय वने भ्रमति एवमेव सर्वे एकमपरं संस्पृशन् नम्रीभूय गच्छन्ति। वामहस्तेन स्वीयं दक्षिणहस्तेन स्वाग्रे गच्छन्तं पुरुषस्य कच्छं गृह्णन्तः सर्वे नम्रीभूत्वा चात्वालमुपगच्छन्ति।

**विप्रुड्ढोमः**

आहवनीयसमीपं गत्वा क्रमशः सर्वे ऋत्विग्यजमानाः 'विप्रुषां होमं जुह्वति[1]' एकैकं स्रुवमाज्यं आहवनीयाग्नौ जुह्वति। सोमनिष्पवनादिकर्मसु कदाचिद् भूमौ पतनं तु भवत्येव प्रमादतोऽपि तस्य दोषस्य प्रायश्चित्तस्वरूपमिदं (होमं) क्रियते।

**वहिष्पवमानम्**

सदोमण्डपाद्बहिर्भागे चर्यमाणत्वादिदं कर्म वहिष्पवमानमित्युच्यते। चात्वालसन्निधौ पश्चिमाभिमुखः, प्रस्तोता, उदङ्मुखश्चोद्गाता उपविशेत्, उभयोस्सन्निधौ प्रतिहर्ता उपविशेत्। उभयोर्दृष्टिः द्यावापृथिव्योः सन्धौ भवेत्। एषामेव सन्निधौ अध्वर्युः प्रतिप्रस्थाता, यजमानश्च पश्चिमाभिमुख उपविशेत्। अध्वर्युः 'पवमानोपाकरणं प्रस्तोत्रे तृणे प्रयच्छन्[2]' इति कात्यायनवचनात् अध्वर्युहस्ताद्दर्भद्वयमादाय '**ब्रह्मन्स्तोष्यामः प्रशास्तः**' इति ब्रुवन् उद्गात्रे प्रयच्छेत्। प्रस्तोता बहिष्पवमानसामं गायेत्।[3]

स्तोत्रपाठानन्तरमध्वर्युराग्नीध्रं – '**अग्नीदग्नीन्विहर, बर्हिस्तृणीहि, पुरोडाशानलङ्कुरु,**' इति प्रेष्येत्। ततः परं – '**प्रतिप्रस्थातः पशूनेहि[4]**' इति प्रतिप्रस्थातारं प्रेष्येत्। प्रैषानुसारं आग्नीध्रः आग्नीध्रीयाशालातोऽग्निमादाय क्रमशः सप्तसु धिष्ण्यासु स्थापयेत् पञ्चबिलापात्र्यां हविर्द्रव्यञ्च निम्नक्रमेण स्थापयेत्।

---

1. का० श्रौ० सू० 9/6/28
2. का० श्रौ० सू० 9/6/34
3. ला० श्रौ० सू० 1/12/7
4. का० श्रौ० सू० 9/7/4

**पञ्चबिलापात्र्यां हविर्द्रव्यस्थापनक्रमः**

| | | पूर्वः | | |
|---|---|---|---|---|
| | | धानाः | | |
| उत्तरः | पयस्या | पुरोडाशः | करम्भः | दक्षिणः |
| | | दधिः | | |
| | | पश्चिमः | | |

प्रतिप्रस्थाता सवनीयपशुमादाय यूपस्य पूर्वस्यां उपस्थापयेत्। अध्वर्युर्ग्रहपात्राणि यजमानं प्रदर्श्य मन्त्रवाचनं कारयेत्।[1] 'ध्रुवपात्रस्य रक्षणनिमित्तं कस्मैचित् सबलक्षत्रिययुवानं नियोजयेत्।[2]' अध्वर्युरग्निनिमित्तं पशुं नियोजयेत्।[3] पशुं प्रोक्ष्य होतारं वृणुयात्।[4] अनन्तरं प्रतिप्रस्थाता, मैत्रावरुणः, ब्राह्मणाच्छंसी, पोता, नेष्टा, आग्नीध्रस्य च वरणं भवेत्। वरणानन्तरं वृताः सर्वे ऋत्विजो आहवनीयाग्नौ जुह्वन्ति।[5] समस्तदेवयजनप्रदेशमवलोकयन्ति च।

**सवनीयपुरोडाशयागः**

आग्नीध्रः सवनीयं पुरोडाशमुत्तरवेद्याःसन्निकटमासादयेत्। पञ्चबिलापात्रीमपि तत्रैव स्थापयित्वोत्करे वाजिनं स्थापयेत्। अध्वर्युः सशेषं पुरोडाशस्यावदानमादाय यजेत्।[6] इडापात्र्यां सशेषं हविर्द्रव्यं स्थाप्य होतारं प्रयच्छेत्। शेषं हविर्द्रव्यं सुरक्षितं स्थापयेत्।

---

1. प्राणाय मे वर्चोदा वर्चसे० शु० य० सं० 7/27
2. दे० या० प० पृ० 321
3. परिव्ययणादि करोति का० श्रौ० सू० 9/8/1
4. होतृवरणान्तं पशुवत्, दे० या० प० पृ० 321
5. का० श्रौ० सू० 9/8/15
6. पुरोडाशैश्चरति। का० श्रौ० सू० 9/9/2

**गमनागमनमार्गम्**

अध्वर्युः हविर्धानमण्डपात्सदोमण्डपे गमनकाले हविर्धानमुत्तरं कुर्वन् पूर्वद्वारेण सदोमण्डपे गच्छेत्।[1] ग्रहपात्रग्रहणकाले यदा सदोमण्डपाद्धविर्धानमण्डपम्प्रति गमनं स्यात् तदा सदोमण्डपस्य पश्चिमद्वारेण गमनागमनं कर्तव्यम्।

**ग्रहप्रचारः**

अध्वर्युः हविर्धानात् सदोमण्डपे गच्छेत्। ऐन्द्रवायव पात्रेणाहवनीयं यजेत्।[2] प्रतिप्रस्थाता चादित्यग्रहपात्रेण अनुवषट्कारकाले जुहुयात्। अध्वर्युः ग्रहपात्रं होत्रे दद्यात्। एवमेव मैत्रावरुणः मैत्रावरुणपात्रेण आश्विनपात्रेण च यागं कृत्वा होत्रे प्रयच्छेत्।[3] उन्नेता चमसपात्राणि उत्तरवेद्याः पश्चिमायां सादयित्वा तत्र सोमं पूरयेत्।

**शुक्रामन्थिग्रहप्रचारः**

अध्वर्युर्यूपशकलद्वयं प्रोक्ष्य एकं स्वयम् अपरं च प्रतिप्रस्थात्रे दद्यात्। एवमेवोभौ एकैकमप्रोक्षितं शकलं गृह्येत्। अध्वर्युः शुक्रग्रहपात्रं प्रतिप्रस्थाता च मन्थिग्रहपात्रं गृह्येत्।[4] उभावपि यूपेन संलग्नो भूत्वा पश्चिमाभिमुखौ तिष्ठेताम्। अध्वर्युः यूपस्य दक्षिणे, प्रतिप्रस्थाता च यूपस्योत्तरे स्थित्वा सहैव कार्यं कुर्याताम्। प्रोक्षितेन शकलेन स्वं-स्वं पात्रम् आच्छादयेताम्। अप्रोक्षितेन शकलेन ग्रहपात्राणि मार्जयेत्।[5] उभावपि स्वीयां दक्षिणारत्निं अपरेषां दक्षिणारत्निना मेलयेत्।[6] अध्वर्युरुत्तरवेद्याः दक्षिणश्रोण्यां

---

1. दे० या० पृ० 325
2. श० प० ब्रा० 4/1/3/1
3. श० प० ब्रा० 4/1/5/8
4. का० श्रौ० सू० 9/10/1-2
5. श० प० ब्रा० 4/1/6/31
6. श० प० ब्रा० 4/1/6/15

प्रतिप्रस्थाता च वामश्रोण्यां ग्रहपात्रं स्थापयेत्। अप्रौक्षितं यूपशकलं निरस्य उत्करे प्रक्षिपति।[1] प्रोक्षितं यूपशकलमाहवनीये प्रास्यति।[2]

**चमसपात्रेण यागः**

चमसाध्वर्यवः एकैकं चमसपात्रमादायोत्तरवेदी सन्निधौ पूर्वाभिमुखास्तिष्ठन्तु।[3] आश्रावणप्रत्याश्रावणानन्तरं वषट्कारान्ते क्रमशोऽध्वर्युः, प्रतिप्रस्थाता, चमसाध्वर्युश्चान्ते जुह्वति। एवमेव द्वितीयामाहुतिं जुह्वति। तदनन्तरं द्विदैवत्यं चमसं भक्षयति।[4] पुरोडाशमात्रामैन्द्रवायवे प्रास्यति, पयस्यां मैत्रावरुण आश्विने धानाः।[5] पात्राणि उत्तरहविर्धानपार्श्वे स्थापयति। चमसाध्वर्युरिडापात्रीं मुखं यावदुत्थापयति। होता अवान्तरेडां भक्षयति। सर्वे शुक्रामन्थिपात्रात् सोमं पिबन्ति।

**नाराशंसचमसः**

अध्वर्युर्होता प्रशास्ता च परस्परमनुमतिं प्राप्य प्रशास्तादीनां पञ्चचमसस्य सोमं पिबन्ति।[6] एवमेवान्येषां चतुर्ण्णां चमसाना सोमं पिबन्ति। पञ्चचमसानां नामानि - प्रशास्तृ, ब्राह्मणाच्छंसी, पोता, नेष्टा, आग्नीध्रचमसश्च। तत उन्नेता पञ्चसु चमसपात्रेषु सोममाप्याययेत्। चमसाध्वर्युरेतानि चमसपात्राणि दक्षिणहविर्धानपार्श्वे स्थापयेत्। वैश्वदेवग्रहहोमपर्यन्तम् एषां चमसानां संज्ञा नाराशंस इति भवति।

---

1. श० प० ब्रा० 4/1/6/20
2. श० प० ब्रा० 4/1/6/21
3. श० प० ब्रा० 4/1/6/31
4. का० श्रौ० सू० 9/11/11
5. का० श्रौ० सू० 9/11/23
6. दे० या० प० पृ० 331

### अच्छावाक् चमसः

अध्वर्युरिडापात्रीसकाशात् पुरोडाशखण्डमादायाच्छावाकं यच्छन् तस्मै ब्रूयात् - अच्छावाक्! वदस्व यत्ते वाद्यम्[1] इति। अच्छावाकेन मन्त्रपाठे सत्यध्वर्युरुपर्युक्तेन चमसेन यागः कुर्यात्। उभौ सविधि सोमं पिबेताम्। अत आरभ्यास्य चमसस्य गणना आग्नीध्रचमसात् पूर्वमेव भविष्यति।

### इडाभक्षणम्

ब्रह्मा, होता, अध्वर्युः, आग्नीध्रः, मैत्रावरुणश्च आग्नीध्रीयाशालायां इडाभक्षणं कुर्वन्ति।[2] आग्नीध्रः पूर्वं स्वीयस्य षडवत्तभागस्य प्राशनं कुर्यात्। यजमानः पञ्चबिलापात्र्याः शेषहविर्द्रव्यस्य भक्षणं कुर्यात्। पत्नीशालायां स्मार्ताग्नौ पक्वमोदनं पक्वान्नं (मालपूआ) यजमानपत्नी भक्षेत्।[3] अध्वर्युर्यागस्य शेषविधिं समापयेत्।[4]

### ऋतुग्रहयागः

अच्छावाक् यदा सदोमण्डपे उपविशेत्तदाऽध्वर्युप्रतिप्रस्थातारौ द्वादशऋतुग्रहैस्सोमरसेन यागः कुर्याताम्। ऋतुग्रहस्य सोमरसस्याहुतिः सशेषाशेषौ च दद्याताम्। अत्र सशेषपक्षे लाघवः अशेषपक्षे च गौरव इत्यस्ति। स्तोत्र - शस्त्रग्रहाणां संख्या समाना एव। अग्निष्टोमे एषा संख्या द्वादश एवास्ति। तदुक्तं शतपथश्रुतौ - **'द्वादश वै मासाः संवत्सरस्य तस्मात् द्वादशगृह्णीयात्।[5]'** अशेषयागपक्षे 'प्रतिप्रस्थाताध्वर्युर्होतारं च पृष्ट्वा भक्षयति[6]'

---

1. का० श्रौ० सू० 9/12/10
2. दे० या० प० पृ० 334
3. का० श्रौ० सू० 9/12/17
4. तत उत्तरवेदेः पश्चाच्चमसस्य मार्जनम्, दे० या० प० पृ० 334
5. श० प० ब्रा० 4/2/5/5
6. दे० या० प० पृ० 337

इति नियमः। वपाशेषयागपक्षे तु – 'सर्वेषामसर्वहुतत्वपक्षे विशेष उच्यते – तत्र पूर्वमध्वर्युः सर्वान् होत्रादीन्निमित्तोत्पत्तिक्रमेण पृष्ट्वा तैरनुज्ञातो भक्षयति। निमित्तोत्पत्तिक्रमश्च पूर्वं होमकर्तुः पश्चाद्वषट्कर्तुः। प्रथमं होत्रा सहाध्वर्युः। ततः पोत्रा सह प्रतिप्रस्थाता। ततः पात्रमुखं विपर्यस्य। पुनः पात्रमुखं विपर्यस्य।[1]' इति।

द्वादश ऋतुग्रहपात्रभक्षणप्रकारस्त्वेवमुक्तम् देवयाज्ञिकेन –

**'होतुर्विंशतिराह्वाने पोतुर्नेष्टुर्द्विरुत्तरा।**
**त्रिरुत्तरा चतुर्ण्णान्तु शेषे त्वष्टादशस्मृताः।।[2]'**

### ऋतुग्रहयागकाले गमनागमनम्

अध्वर्युराहवनीये ऋतुग्रहयागं कृत्वा यदा हविर्द्धानमण्डपे प्रविशेत् तदा प्रतिप्रस्थाता आहवनीयम्प्रति गच्छेत्। एवमेव यदा प्रतिप्रस्थाता हविर्धानम्प्रत्यागच्छेत् तदा अध्वर्युराहवनीयम्प्रति गच्छेत्। गमनागमने प्रतिप्रस्थाता अध्वर्योरुत्तरे पात्रं च दक्षिणे भवेत्।[3]

### शस्त्रपाठः

होत्रा 'शोंशाव' इत्युक्त्वाह्वाने सत्यध्वर्युस्तस्य सम्मुख उपविशेत्। होताशस्त्रपाठः कुर्यात्।[4] 'अभिहुतः शोंशावेत्यावृत्योथामो दैवेति प्रतिगृणाति प्रणवावसानयोः। ओमिति वा। शस्त्रान्ते नित्यम्।[5]' 'गृह्णाति ह वा एतद्धोता यच्छंसति। तस्मा एतद् गृणते प्रत्येवाध्वर्युरागृणाति तस्मात्प्रतिगरो नाम।[6]' एषः प्रतिगरः होतुरुत्साहवर्धनार्थं क्रियते।

---

1. दे० या० प० पृ० 337
2. दे० या० प० पृ० 338
3. का० श्रौ० सू० 9/13/9
4. श० प० ब्रा० 4/2/6/3
5. का० श्रौ० सू० 9/13/29-31
6. श० प० ब्रा० 4/2/6/1

**ऐन्द्राग्नग्रहयागः**

अध्वर्युराहवनीये ऐन्द्राग्नग्रहयागः कुर्यात्।[1] ब्रह्मयजमानौ यागकाले उत्तरवेद्याः दक्षिण उपविशेताम्। भक्षणार्थं सदोमण्डपे गच्छेताम्।

**चमसकम्पनम्**

ग्रहयागानन्तरं चमसाध्वर्युः हस्ते चमसपात्रमादधानः हस्तं लम्बयेत् कम्पयेच्च चमसपात्राणि।[2] सदोमण्डपे सर्वे सोमरसमश्नन्ति। सर्वे स्वैः चमसैः सोमस्य भक्षणं कुर्वन्ति। चमसाध्वर्युः चमसपात्राणि अध्वर्युश्च ग्रहपात्राणि मार्जालीयायां प्रक्षाल्य हविर्धानं यथास्थाने स्थापयन्ति।

**वैश्वदेवग्रहयागः**

शतपथश्रुतेः –'अथ यद्वैश्वदेवं ग्रहं गृह्णाति। विश्वेभ्यो ह्येनं देवेभ्यो गृह्णाति।[3]' इत्युक्त्वाऽध्वर्युर्वैश्वदेवग्रहपात्रमुत्थापयेत्। तत्र सोमरसमादाय यथास्थानमासादयेत्। द्वाभ्यां दर्भाभ्यां वैश्वदेवग्रहं स्पृश्य स्तोत्रोपाकरणं कुर्यात्। स्तोत्रशस्त्रपाठानन्तरं प्रातः सवनमिव पञ्चबिलापात्र्यां स्थाप्यमानं पुरोडाशं धानांश्च निर्मापयेत्। उखायां श्रपणार्थं पश्वङ्गस्थापनं यावत्कर्म आचरेत्। वैश्वदेवशस्त्रानन्तरं अध्वर्युः वैश्वदेवग्रहेण चमसाध्वर्युश्च चमसेन यागः कुर्यात्। चमसानि कम्पयेत्। सदोमण्डपे चमसैस्सोमपानं कुर्वन्तु। मार्जालीयामण्डपे चमसानि प्रक्षाल्य यथास्थानमासादयेत्। तदनन्तरं उक्थ्यविग्रहत्रयमनुष्ठेत्। 'उक्थ्यं विगृह्णाति।[4]'

प्रथम उक्थ्यविग्रहः, द्वितीय उकथ्यविग्रहः तृतीय उक्थ्यविग्रहश्च आचरेत्। 'ततः प्रतिप्रस्थातोक्थ्यपात्रमादाय यागविधानं करोति।

---

1. का० श्रौ० सू० 9/13/33
2. का० श्रौ० सू० 9/13/35
3. श० प० ब्रा० 4/2/25, 27
4. का० श्रौ० सू० 9/14/8

अच्छावाकः शंसति।[1] 'प्रातः सवने पठ्यमाननानि साम्नः चत्वारि स्तोत्राणि।[2]

## माध्यन्दिनसवनम्

यजमानः आग्नीध्रीयातः पश्चिमायां उत्तराभिमुख उपविश्य सामं गायेत्।[3] यजमानसहिताः ऋत्विजो सर्पणात् धिष्ण्याभिमन्त्रणं यावत् विधानं कुर्यात्।[4] अध्वर्युर्यजमानाय होतृचमसं दद्यात्। अभिषवणनिमित्तं सर्वे अधिषवणस्थाने उपविशन्तु। सोमस्योष्णीषः ग्रावस्तुते दद्यात्।[5] इहा ३ इहा ३ इत्युच्चारयन्तः सोमाभिषवं कुर्वन्तु। प्रथमे पर्याये त्रैमात्रिक 'इहा ३। इहा ३' द्वितीये पर्याये द्विमात्रिक 'इहा २। इहा २' तृतीय पर्याये चैकमात्रिकं 'इहा १। इहा १' उच्चरन्तु।

कुट्टितं सरसं सोमं सम्भरण्यां आप्याय्याधवनीयां त्यजन्तु। तत्रैव प्रक्षाल्य पुनरधिषवणफलके स्थापयन्तु। एतत् त्रिपर्यायस्यैकं अभिषवणम्। एवमेव द्वितीयं तृतीयं चाभिषवणं कुर्वन्तु। मध्यमपर्याये 'वृहद् वृहद्' मन्त्रस्य पाठः कुर्यात्।[6] पूर्ववदभिषवणफलके द्रोणकलशं स्थापयेत्।[7] यजमानः स्वहस्तयोः होतृचमसं निधाय तिष्ठेत्। उन्नेता होतृचमसे (यजमानहस्तस्थिते) सोमरसं त्यजेत्। यजमानः होतृचमसेन द्रोणकलशे तद्रसं त्यजेत्। निनीयमानया सोमधारया अध्वर्युः ग्रहपात्रं पूरयेत्। प्रातः सवनवत् शुक्रपात्रं पूरयेत्। एवमेव अन्यान्यपि पात्राणि पूरयेत्। पूर्ववत् कच्छं गृह्णन् देवयजनात् निष्क्रामन्ति।[8]

---

1. दे० या० प० पृ० 342
2. (1) अग्न आयाहि वीतयो३म् (2) अग्न आयाहि वीतय इत्याग्नेयं होतुराज्यम् (3) तं त्वा समिद्भिरंगिरो३म् (4) स नः पृथुश्रवायियो३म्। तां० ब्रा० 11/2/3
3. लोकद्वारीसामगानम्, दे० या० प० पृ० 345
4. दे० या० प० पृ० 345
5. का० श्रौ० सू० 10/1/2
6. दे० या० प० पृ० 346
7. दे० या० प० पृ० 346
8. का० श्रौ० सू० 10/1/15

## माध्यन्दिनं पवमानम्

अध्वर्युः सदोमण्डपे उपविश्ययोद्गात्रे तृणद्वयं प्रयच्छन् पवमानोपाकरणं कुर्यात्।[1] उद्गाता च माध्यन्दिनसवने पठ्यमानैर्मन्त्रैस्सामगानं कुर्यात्।[2] प्रातः सवनवदध्वर्युराग्नीध्रं प्रतिप्रस्थातारं च प्रेष्येत्। आग्नीध्रः प्रतिप्रस्थाता च प्रैषानुसारं कार्यं कुर्याताम्। अध्वर्युः चमसपात्रैः सोमरसस्याहुतिर्दद्यात्। होत्रे इडापात्रीप्रदानपर्यन्तस्य विधानं समापयेत्। अध्वर्युप्रतिप्रस्थातारौ होतृचमसस्य रसं पिबेताम्। अध्वर्युः पञ्चबिलापात्र्यां स्थापितस्य सवनीयद्रव्यस्य यागः कुर्यात्। सदोमण्डपे होतृधिष्ण्यासन्निकटे इडापात्रीं स्थापयेत्। अध्वर्युप्रतिप्रस्थातारौ पूर्ववत् प्रोक्षितानि अप्रोक्षितानि च शकलान्यादाय शुक्रामन्थिप्रचारः कुर्याताम्। अध्वर्युर्होतारं स्वमभिलषितं कथनाय प्रार्थनां कुर्यात्। होता च मंत्रं पठित्वा दधिघर्मयागः कुर्यात् इति वदेत्।[3] अध्वर्युः द्वयोराज्यभागयोः यागः कुर्यात्। अग्निदेवतानिमित्तेन पुरोडाशेन यागः कुर्यात्।[4] निर्गुणं स्विष्टकृतं यजेत्।[5] यजमानसहिताः ऋत्विजो इडाभक्षणं कुर्वन्ति।

## याजमानकृत्यम्

यजमानेन मरुत्वतीयानुवाचनं यावत्स्वकरणीयं विधानमाचरणीयम्। ऋत्विजं पश्येत्, आग्नीध्रीयायामुपविश्य दक्षिणासङ्कल्पं कुर्यात्।[6] पत्नी

---

1. का० श्रौ० सू० 10/1/16
2. ऊहगानम्, 1/1/1-4
3. का० श्रौ० सू० 10/1/22
4. का० श्रौ० सू० 10/1/25
5. निर्गुणस्विष्टकृद्यागे अग्नयेऽनुब्रूहि अग्निं यज इत्येव वक्तव्यम्।।
6. दे० या० प० पृ० 361, का० श्रौ० सू० 10/2/35
   (अस्याग्निष्टोमसंस्थस्य ज्योतिष्टोमस्य समृध्यर्थं हिरण्यं शतं गा वासोऽश्वं दक्षिणा ब्रह्मादिभ्य ऋत्विग्भ्यो यथाशास्त्रविभागेनाहं सम्प्रददे) दे० भा० पा० 361 पृ० पत्नी च ददाति – का० श्रौ० सू० 10/2/35

चापि '**मयापि दत्ता**' इत्युच्चारयेत्। ब्रह्मणे, उद्गात्रे, होत्रे, अध्वर्यवे च द्वादश-द्वादश गाः, ब्राह्मणाच्छंसिने, प्रस्तोत्रे, मैत्रावरुणाय, प्रतिप्रस्थात्रे च षड्-षड् गाः, पोत्रे, प्रतिहर्त्रे, अच्छावाकाय, नेष्ट्रे च, चतस्रः चतस्रः गाः, आग्नीध्राय, सुब्रह्मण्याय, ग्रावस्तुते, उन्नेत्रे च तिस्रो तिस्रो गाः प्रयच्छेत्। गोऽतिरिक्तं सुवर्णप्रभृतीनि दक्षिणादानवस्तून्यपि सङ्कल्पानुसारं उपर्युक्तेन अनुपातेन दद्यात्। ऋत्विजः यजमानप्रदत्तदक्षिणां 'अग्नये त्वा इति मन्त्रेण हिरण्यं, रुद्राय त्वा' इति मन्त्रेण गां, समन्त्रकं प्रतिगृह्णन्ति।[1]

सङ्कल्पानुसारं षोडशर्त्विजेभ्य एव दक्षिणां दातव्यम्। यथासम्पन्नं हिरण्यमुद्गातृभ्यः प्रसर्पकेभ्यश्चमसाध्वर्युभ्योऽन्येभ्योऽपि देवयजनमागतेभ्यो ब्राह्मणेभ्योऽहं सम्प्रददे' इति सङ्कल्पूर्वकं दातव्यम्।[2]

### शस्त्रस्तोत्रपाठः

मरुत्वतीययागानन्तरमध्वर्युः सदोमण्डपे होतुस्सम्मुखे उपविशेत्। होता च मध्यमेन स्वरेण शस्त्रपाठः अध्वर्युश्च प्रतिगरः कुर्यात्। उद्गातृगणाः स्तोत्रपाठं कुर्युः।

### सवनीयनिर्वापः

सवनीयनिर्वापार्थं प्रैषः कुर्यादध्वर्युः। आग्नीध्रः प्रैषानुसारं कार्यं कुर्यात्। पञ्चबिलापात्र्यां स्थापनीयं हविर्द्रव्यं पूर्ववन्निर्मापयेत्। एकादशकपाले इन्द्रस्य एककपाले च वरुणस्य पुरोडाशः कुर्यात्। प्रातः सवनवत् उक्थविग्रहत्रयं प्रचारयेत्।

### प्रसर्पणम्

प्रशास्त्रा '**सर्पत**' इत्युक्ते सति सर्वे देवयजनाद्बहिर्गच्छन्तु। आवश्यकतानुसारमावश्यकेन दैहिकेन विधिना निवृत्तं शुचिर्भूत्वा च पुनर्देवयजने आगच्छन्तु।

1. शां० श्रौ० सू० 7/18/1-2
2. दे० या० प० पृ० 353

### अध्वर्युकर्तृकप्रैषः

स्तोत्रसमाप्त्यनन्तरमध्वर्युराग्नीध्रं प्रतिप्रस्थातारञ्च प्रेष्येत्।[1] प्रतिप्रस्थाता धिष्ण्यायामुपरि अग्निं स्थापयेत्। वेद्यां बर्हिरासादयेत् पुरोडाशञ्च भस्मरहितं कुर्यात्। प्रतिप्रस्थाता शामित्रानुशासनं कुर्यात्।[2] अध्वर्युरुखायां शृतान्यङ्गान्युपर्यभिघारयेत्। 'अग्नीषोमीययागवत्' अग्निदेवतानिमित्तं पश्वङ्गैः यागः कुर्यात्। सवनीयपुरोडाशस्य यागः कुर्यात्। चमसपात्रेण सोमरसस्य यागः कुर्यात्। सदोमण्डपे होतारमिडापात्रीं दद्यात्। होता अवान्तरेडायाः प्राशनं कुर्यात्। चमसेन च सोमभक्षणं कुर्यात्।

### पिण्डदानम्

यजमानसहिताः षोडशर्त्विजः पुरोडाशात्किञ्चित्किञ्चिदंशं निष्काष्य हविर्धानमण्डपे स्व-स्व चमससन्निधौ गच्छन्तु। यजमानस्य पितृनिमित्तं पिण्डदानं कुर्वन्तु च। तदुक्तं कात्यायनेन - '**प्रागिडाभक्षाद्धविर्धाने यथास्वं चमसेषूपास्यन्ति पुरोडाशमात्रा अनूदकाः पिण्डपितृयज्ञवद्दानप्रभृति प्रागवघ्राणात्।**[3]' येषां ऋत्विजां चमसं नास्ति ते स्वगणस्य चमससन्निधौ पिण्डदानं कुर्युः। ब्रह्मा, होता, अध्वर्युः, प्रशास्ता, आग्नीध्राश्च इडाभक्षणं कृत्वा यागशेषविधिं समापयन्तु च।

हविर्धानमण्डपे गत्वोपांशुपात्रे अन्तर्यामपात्रे वा सोमरसेन सावित्रग्रहणं कुर्यात्।[4] खरे यथास्थानमासादयेच्च।

### तृतीयसवनम्

अध्वर्युः '**एहि यजमानः**' इति ब्रुवन् यजमानं पूर्वद्वारेण हविर्धानमण्डपमानयेत्। ऋत्विजोऽपि तत्रोपस्थिताः स्युः। आदित्यस्थालीत

1. दे० या० प० पृ० 361
2. दे० या० प० पृ० 361
3. का० श्रौ० सू० 10/5/11
4. श० प० ब्रा० 4/3/3/1

आदित्यपात्रे सोमरसमादाय यजेत्। तृतीयसवनसमारम्भस्य सर्पणविधि-माचरेत्। अन्वारम्भणं कुर्वन्तः देवयजनाद्बहिर्गच्छन्तु।

**स्तोत्रोपाकरणम्**

अध्वर्युरुद्गात्रे तृणद्वयं प्रयच्छन् पवमानोपाकरणं कुर्यात्। उद्गाता च आर्भवपवमानसंज्ञकस्तोत्रपाठः कुर्यात्।[1]

तत अध्वर्युः सोमरसेन सावित्रं महावैश्वदेवं च ग्रहं गृह्णाति।[2] द्विदैवत्यपात्रं प्रक्षाल्य मार्जालीयाशालायां स्थापयेत्। वैश्वदेवग्रहयागं कृत्वा चमसभक्षणं कुर्यात्, ग्रहशेषभक्षणञ्च। चमसपात्राणि वेद्याः पश्चिमायाम् आसादयेत्। सौम्येन चरुणा यजेत्।[3] सौम्यचरौ लौकिकमाज्यमासिच्य सदोमण्डपे स्थापयेत्।

**धिष्ण्याहुतिः**

अध्वर्युराग्नीध्रीयाशालायाः धिष्ण्यामुपरि आज्येन आहुतिम्प्रदाय शेषेणाज्येन इतरधिष्ण्यासु जुहुयात्।[4] पात्नीव्रतसंज्ञकाहुतिर्दद्यात्। अध्वर्योः प्रैषानुसारं आग्नीध्रः पात्नीव्रतपात्रमादाय सदोमण्डपे गत्वा नेष्टुरूपस्थमासीद।[5] उन्नेता चमसपात्रेषु सोममाप्याययेत्। अध्वर्युर्दर्भद्वयं प्रस्तोतारं प्रयच्छन् अग्निष्टोमयागे अन्ते गेयं यज्ञायज्ञियस्तोत्रमुपाकरोति।[6]

नेष्टा पत्नीं सदोमण्डपे आनयेत्। पत्नी च उद्गातारं ईक्षेत्।[7] स्तोत्रस्य निधनपाठकाले पत्नी पान्नेजनीपात्रस्थं जलं दक्षिणोरुकमासिञ्चति।[8]

---

1. ऊ० गा० 1/2, 11, 8, 10, 9 इत्यादिः।
2. श० प० ब्रा० 4/3/3/10
3. का० श्रौ० सू० 10/6/13, श० प० ब्रा० 4/3/4/1
4. श० प० ब्रा० 4/3/4/7
5. का० श्रौ० सू० 10/6/20, 23
6. का० श्रौ० सू० 10/7/1, ऊ० गा० 1/14
7. का० श्रौ० सू० 10/7/5
8. का० श्रौ० सू० 10/7/4

स्तोत्रपाठानन्तरं पत्नी पत्नीशालायां गच्छेत्। अध्वर्युः होतुः सम्मुखमुपविश्य शस्त्रस्य प्रतिगरः कुर्यात्। अध्वर्युः चमसाध्वर्युश्च चमसपात्रैः सोमरसं जुहुयात्।[1] चमसभक्षणं कुर्यात्। चमसपात्राणि मार्जालीयाशालायां प्रक्षाल्य चात्वालस्य पश्चिमायामासादयेत्। स्रुग्व्यूहनं यावत्कर्म समापयेत्। प्रस्तरं जुहुयात्। यजमानः त्यागः कुर्यात्। त्यागमन्त्रः – **'इदमग्नये वनस्पतये, इन्द्राय वसुमते, रुद्रवत आदित्यवते ऋभुमते। विभुवते वाजवते। बृहस्पतिमते विश्वदेव्यावते देवेभ्य आज्यपेभ्योऽग्नये होत्राय वाजिभ्यो न मम।**[2]'

**द्रोणकलशेन यागः**

द्रोणकलशे प्रागग्रं दर्भद्वयं स्थापयेत्। तत्र धानाः दद्यात्। उत्तरवेद्यां द्रोणकलशात् सोममिश्रितायाः धानाया आहुतिर्दद्यात्।[3] उन्नेता होता च। हविः शेषस्य भक्षणं कुर्यात्। द्रोणकलशमुत्तरवेद्याः पश्चिमायामासादयेत्। यजमानसहिताः षोडशर्त्विजो द्रोणकलशात् तिस्रस्तिस्रो धानाः गृह्णीयात्। अवघ्रायोत्तरवेद्यां त्यजेत्।[4] यजमानसहिताः षोडशर्त्विजो चात्वालस्य पश्चिमायामासादितेषु चमसपात्रेषु जलं प्रपूरयन्तु। चमसेषु दर्भं स्थाप्य स्पृशन्तु। सर्वे आग्नीध्रीयायां दधिभक्षणं कुर्युः।[5]

**पत्नीसंयाजः**

अध्वर्युः जाघनीमादाय यूपस्य उत्तरवेद्याश्च मध्यात् तथा च पत्नीशालायाः पश्चिमात् शालाद्वार्यसन्निधौ गच्छेत्। जाघन्येन पशुवत्

---

1. दे० या० प० पृ० 369
2. दे० भा० प० पृ० 369
3. का० श्रौ० सू० 10/8/1
4. दे० या० प० पृ० 370
5. का० श्रौ० सू० 10/8/10

पत्नीसंयाजः कुर्यात्।[1] दक्षिणाग्नौ जुहुयात्। समिष्टयजुसंज्ञकाहुतिर्दद्यात्।[2]

**अवभृथभागः**

आसन्दीमौदुम्बरीञ्च चात्वालसन्निधौ आहरेत्।[3] चमस-द्रोणकलशप्रभृतीनि पात्राण्यपि सोमलिप्तानि तत्रैव स्थापयेत्। अध्वर्युर्यजमानात् कृष्णविषाणं मेखलाञ्चादाय, प्रतिप्रस्थाता च पत्नीसकाशात् शंकुं मेखलां चादाय चात्वाले प्रास्यति।[4] अध्वर्युः प्रस्तोत्रे सामगायेति प्रेष्येत्।[5] प्रस्तोता सामं गायेत्।[6] सर्वे सामगानस्य निधनं गायन्ति। सोमलिप्तानि समस्तपात्राणि, ऋजीषकलशं, वारुणपुरोडाशं, आसन्दीम्, आज्यम्, औदुम्बरीं, हवनपात्राणि, परिधानवस्त्राणि चादाय नद्यां गच्छन्ति। देवयजन-नद्योश्च मध्यमार्गे सामं गायन्ति। नद्यां गत्वा पुनः सामगानं कुर्युः। अध्वर्युः यजमानस्य भुजां धृत्वा नद्यामवतारयेत्। तस्मिन् जले अवभृथयागः कुर्यात्।[7] ऋजीषकलशं जले प्लावयेत्।[8] कलशस्योपस्थानं कुर्यात्। यजमानदीक्षायाः कृष्णाजिनं जले निमज्य यजमानपुत्राय दद्यात्। यजमानप्रभृतयो ऋत्विजः स्नानं कुर्वन्तु। मन्त्रपाठं कुर्वन्तः देवयजनम्प्रति गच्छेयुः। देवयजनं गत्वा यजमानः आहवनीये पत्नी च शालाद्वार्ये समिदाधानं कुर्यात्। यजमानः कृष्णाजिनमङ्के कृत्वा पत्नीशालायां उपविशेत्।[9] अध्वर्युरग्निदेवतानिमित्तमाहवनीये जुहोति। यजमानः कृष्णाजिनं सुरक्षितं स्थापयेत्।

---

1. का० श्रौ० सू० 10/8/11
2. का० श० प० ब्रा० 4/3/6/3
3. श्रौ० सू० 10/8/13-14
4. दे० या० प० पृ० 371
5. श० प० ब्रा० 4/4/1/6
6. वे० गा० 12/40
7. श० प० ब्रा० 4/4/1/1
8. का० श्रौ० सू० 10/9/1
9. का० श्रौ० सू० 10/9/9

## उदयनीयेष्टिः

इष्टिरियं पत्नीशालायां कर्तव्या। प्रायणीयेष्ट्यां यस्यां चरुस्थाल्यां चरुं कृतं स्यात् तामेव चरुस्थालीमस्यामिष्टावपि स्थापनीयम्। आज्यभागानन्तरम् अग्नये, सोमाय, सवित्रे, पथ्यास्वस्तये, देवेभ्यश्च आज्येन जुहोति। तदैव चरुणा अदितियागः कुर्यात्।[1] शेषयागविधिं समापयेत्। अस्यामिष्टौ प्रस्तोत्रा उद्वदभार्गवसंज्ञकं सामगानं भवितव्यम्।

## अनूबन्ध्यायागः

यागेऽस्मिन् मित्रावरुणनिमित्तमवत्सा गोरालभनं विहितमस्ति।[2] कलियुगे इदं कर्म वर्ज्यमस्ति अतस्तत्स्थानीयाजामालभेत्। पाशुकविधिना अस्यानुष्ठानं कर्त्तव्यम्।

## उदवसानीयेष्टिः

'अथोदवसानीययेष्ट्या यजते[3]' अग्निं समारोपयेत्। मन्थनं कृत्वा पुनः स्थापयेत्। पुनराधानसदृशं पञ्चकपालेषु आग्नेयपुरोडाशं कृत्वा यजेत्।[4] यागेऽस्मिन् हिरण्यं दक्षिणानड्वान्वा।[5] प्रस्तोता यथासमयं सामं गायेत्।[6]

## ब्राह्मणभोजनम्

'अस्याग्निष्टोमस्य समृद्धये यथासम्पन्नेन भोजनपर्याप्तेनान्नेन सहस्रं ब्राह्मणानहं तर्पयामि[7]' इति सङ्कल्पयेत्। माङ्गलिकविधिं सम्पादयेत्।

---

1. श० प० ब्रा० 10/4/2/1
2. श० प० ब्रा० 4/4/2/5
3. श० प० ब्रा० 4/4/2/13
4. का० श्रौ० सू० 10/9/18
5. का० श्रौ० सू० 10/9/19
6. ऊह गानम्, 6/1/8, ला० श्रौ० सू० 1/6/49
7. दे० या० प० पृ० 379

अग्निमुद्धृत्य सायंकालीनमग्निहोत्रं स्वयं यजेत्।[1] प्रातः कालीनं अपरेद्युः कुर्यात्। अग्निष्टोमारम्भः सन्ध्या, तर्पणं, वैश्वदेवप्रभृतीनि कर्माणि यानि खलु वर्ज्यान्यासन् तानि पुनरारभेत्।[2] अग्निं प्रदीप्तावस्थायां त्यक्त्वा देवयजनात् निवासस्थानं प्रति गच्छेत्।[3]

**इति अग्निष्टोमयागः सम्पन्नः**

1. का० श्रौ० सू० 10/9/21
2. दे० या० प० पृ० 379
3. का० श्रौ० सू० 10/9/26

# अथ पशुयागपद्धतिः

एतत्तु पूर्वमेवोक्तं यच्छ्रौतयज्ञाः प्रकारद्वयेन त्रिविधा भवन्ति। तत्र होम-इष्टि-सोमरूपः प्रथमः प्रकारः, इष्टि-पशु-सोमरूपश्च द्वितीयः प्रकारः। तत्रापि प्रकृतियागपद्धतिलेखनक्रमे होम-इष्टि-सोमप्रकारमाश्रित्य वर्णनं प्रस्तुतम्। तदनुसारं अग्निहोत्रस्य होमानां प्रकृतित्वेन, दर्शपूर्णमासस्य इष्टीनां प्रकृतित्वेन अग्निष्टोमस्य च सोमानां प्रकृतित्वेन प्रतिपादनं कृतम्। साम्प्रतं द्वितीयं प्रकारमाश्रित्य इष्टि-पशुसोमेषु इष्टीनां प्रकृतिरूपस्य दर्शपूर्णमासस्य वर्णनं, सोमयागानां प्रकृतिभूतस्याग्निष्टोमस्य च वर्णनं पूर्वमेवोक्तम्। अधुना समस्तानां पशुयागानां प्रकृतिरूपस्य वर्णनं क्रियते। तत्र सर्वेषां पशुयागानां प्रकृतिभूतः अग्नीषोमीयः पशुयागोऽस्ति। यतः श्रुतौ अग्नीषोमीयस्य पशोः सन्निधावेव सर्वेषां पशुधर्माणामुपदेशात् '**यत्र समग्राङ्गोपदेशः सा प्रकृतिः**[1]' इति न्यायेन सर्वपशुगणप्रकृतित्वमग्नीषोमीयस्यैव। अतः निरूढपशुबन्धस्यापि स एव प्रकृतिः। एवञ्च तत्रस्था एव धर्मा अत्र निरूढपशुबन्धमुररीकृत्य निरूप्यन्ते। अत एव 'अग्नीषोमीयस्य पशोस्तन्त्रं प्रक्रमयति, तस्य निरूढपशुवत्कल्पः' इत्युक्तमापस्तम्बेन।

अग्नीषोमीयविकृतित्वादेव चात्र अन्वारम्भणीयाऽपि न भवति। तस्या आरम्भनिमित्तकत्वेनाग्नीषोमीयपशोः सोमाङ्गत्वेन पृथगारम्भत्वाभावात्। अग्नीषोमीयायास्तदङ्गत्वमेव नास्तीति कृत्वा विकृतौ निरूढपशुबन्धे अनङ्गायास्तस्या अतिदेशसम्भवात्। एतत् सर्वं मनसि निधाय प्रकृतमभिधत्ते।

## निरूढपशुबन्धस्य पद्धतिः

कस्यापि यागानुष्ठानस्य पद्धतिर्लेखनात् पूर्वमिदं विचार्यते यत् अस्य यागस्यानुष्ठानकालः कः? इत्यस्मिन् विषये श्रीमता कात्यायनेन सूत्रं विहितम्

1. मीमांसान्यायप्रकाशे 52 तमे पृष्ठे।

–'**पशिवज्या संवत्सरे संवत्सरे प्रावृषि।**[1]' अत्र संवत्सर इति पदस्य द्विरुक्तिः वीप्सार्थे विद्यते। तेन यावज्जीवकर्तव्यता नित्यकर्तव्यता च प्राप्यते। तेन प्रतिवर्षं यावज्जीवं वर्षर्तौ अमायां पौर्णमास्यां वा पशुना यागः कार्य इति सूत्रार्थः। अमावास्यादिकालेन सह विकल्पेन कालान्तरमाह – '**आवृत्तिमुखयोर्वा**[2]' इति।

सूत्रोक्तः आवृत्तिशब्दः अयनपरिवृतेर्बोधकः। तच्चायनं द्विविधं दक्षिणायनमुत्तरायणञ्चेति तयोरयनयोर्मुखे=प्रथमौ दिवसौ। तयोरावृत्ति-मुखयोः। अत्र सूत्रे मुखयोरिति द्विवचनश्रवणेऽपि न उभयत्रानुष्ठानम्। संवत्सरे इति एकस्मिन् संवत्सरे सकृदुनष्ठानस्यैव विधानात्। अतः सङ्क्रान्तिदिनयोरन्यतरत्र यागः कार्यः। अथवा दक्षिणायनसङ्क्रान्तिदिने उत्तरायणसङ्क्रान्तिदिने वा प्रतिवर्षं यावज्जीवं पशुना यजेत।

स चेन्द्राग्नीदेवतो वा सूर्यदेवतो वा प्रजापतिदेवतो वा प्रतिवर्षे वर्षास्वृतौ श्रावणादिचतुर्णां पर्वणां मध्ये अन्यतरस्मिन् भवति। अथवा दक्षिणायनदिने उत्तरायणदिने। अस्मिन्पक्षे एकस्मिन् वर्षे पशुद्वयं भवति।

सोऽयं यागः कुत्र कर्त्तव्यः? इत्यस्मिन् विषये प्रोक्तं कात्यायनेन – '**गृहेषु**[3]' इति। अर्थात्पशुयागो गृहेषु कार्यः। अग्नीषोमीयस्य देवयजनागारे अनुष्ठानात् अत्रापि स एव देशोऽतिदेशेन प्राप्नुयात् इति शंकां निवर्तयितुमिदं सूत्रम्। एवञ्च सूत्रस्यास्य देवयजननिवृत्तावेव तात्पर्यम्, न तु गृहे एव अनुष्ठानमित्यत्रापि।

तत्राग्निसमारोपस्याग्निसंस्कारकत्वेनाग्नेश्चाङ्गप्रधानार्थत्वेन ज्योतिष्टोमप्रकरणे पठितस्यास्य पश्वङ्गताया अपि सत्वेन निरूढपश्वादावपि अतिदेशेन समारोपः प्राप्यत एव अतश्चोत्तरवेदिः सम्भाराश्च प्रवर्तन्त एव।

कार्यारम्भः तत्र प्रथमप्रयोगे मातृकापूजापूर्वकमाभ्युदयिकं कृत्वा

---

1. का० श्रौ० सू० 6/1/1
2. का० श्रौ० सू० 6/1/2
3. का० श्रौ० सू० 6/1/3, यमेतमाहवनीयात्प्राञ्चं प्रणयन्ति स प्रहृतः। प्रहार्येऽग्नौ पशुबन्धेन यजेत। श० प० ब्रा० 11/4/12/1

अन्वारम्भणीया च। पशोः सान्नाय्यविकारत्वादनुदिते प्रारम्भः। तत्र पूर्वम् ऋत्विग्वरणम्। पशुदक्षिणेन वा धेनुदक्षिणेन वा वरदक्षिणेन वा। गोत्र शर्मन् ऐन्द्राग्नेन निरूढपशुना सौर्येण वा प्राजापत्येनेति वा दक्षिणा-देवता - विकल्पाः। पक्षत्रयाणां प्रयोगे विकल्पः। ब्रह्माहोताऽध्वर्युः मैत्रावरुणः प्रतिप्रस्थाता आग्नीध्रश्चैतेषां षण्णामृत्विजां क्रमेण वरणम्। ततस्तान् यथासम्भवमर्चयेत्।

ततोऽध्वर्युः पञ्चभूः संस्कारपूर्वकमाहवनीयदक्षिणाग्न्योरूद्धरणं करोति। तत्र निरूढपश्वर्थं गार्हपत्यादिति प्रयोगः। अग्न्यन्वाधानम्। चतुरासनम् ब्रह्मवरणम्। '**ऐन्द्राग्नेन निरूढपशुनाऽहं यक्ष्ये**' तत्र भूपत इति व्रतग्रहणम्।

ततो यूपाहुत्यर्थमाज्यसंस्कारः, निरूप्याज्यं गार्हपत्येऽधिश्रयति पूर्वं दर्भेण स्रुवस्य सम्मार्गः। ततो जुह्वाः सम्मार्गः। उद्वासनम्। साग्राभ्यां दर्भाभ्यामाज्यस्योत्पवनम्। आज्यस्यावेक्षणम्। जुह्वां चतुर्गृहीतं गृहीत्वा समिधमादायाहवनीयं प्रति गत्वा समीपे उपविश्याहवनीयं परिस्तीर्योत्थाय प्रागग्रामुदगग्रां वा समिधमाधायोपविश्योरु विष्णो इतिमन्त्रेण जुहोति। इदं विष्णवे। अथवा स्रुवेणैव जुहोति, न स्रुचा। तस्मिन् पक्षे स्रुवस्यैव सम्मार्गः।

ततः स्थालीस्थमाज्यशेषमादाय स्रुक्स्रुवञ्चादाय तक्ष्णा सूत्रधारेण संहितो यूपं प्रतिगच्छति। ब्रह्मयजमानौ दक्षिणत उपविशेताम्। ब्रह्मणा तूष्णीमासनसंस्कारः। अर्थाद्यूपच्छेदनायारण्यं गत्वा यूपीयं वृक्षमभिमृशेत्। प्रसङ्गानुसारमत्र यूपलक्षणमुच्यते -'**पालाशं बहुलपर्णमशुष्का-ग्रमूर्ध्वशकलशाखं मध्याग्रोपनतमव्रणम्।।**[1]' एवं विधस्य यूपस्य पश्चात्प्राङ्मुख उपविश्य यूपमभिमृश्य मन्त्रमिमं जपति - '**अत्यन्याँ २ अगानान्यानि**'**ति**।[2] अथवा पश्चात्प्राङ्मुखस्तिष्ठन्यूपमभियन्त्रयेत् अत्यन्यानित्येव मन्त्रेण। ततो यूपच्छेदनप्रदेशं साज्येन स्रुवेणोपस्पृशति 'विष्णवेत्वेति।' छेदनप्रदेशं सर्वतोऽङ्क्यतीत्यर्थः।

---

1. का० श्रौ० सू० 6/1/8
2. शु० य० सं० 5/42

## यूपस्य वृक्षविशेषः

अत्र प्रश्नः समुदेति यत् कीदृशं यूपम्? तदाह कात्यायनः – 'पालाशं बहुलपर्णमशुष्काग्रमूर्ध्वशकलशाखं मध्याग्रोपनतमव्रणम्' इति। अर्थात् पलाशनाम्नः वृक्षस्य विकारः अवयवो वा पालाशस्तम्। बहुलानि पर्णाणि यस्य तम्। अशुष्कम् आर्द्रमग्रं यस्य तम्। ऊर्ध्वाः शकला वेष्टनत्वचः = शाखाः प्ररोहाश्च यस्य तम्। मध्ये अग्रे च वक्रस्तम्। नास्ति व्रणं = ग्रन्थिर्यस्य तम्। एतद्गुणविशिष्टस्य पलाशवृक्षस्याभावे खदिरादिवृक्षीयान् यूपान् कुर्यात्। तदाह कात्यायनः –

'**अभावे खादिर-बिल्व- रौहितकात्।।**[1]' इति। अर्थात् पलाशयूपस्याभावे खदिरानाम्, खदिराभावे बिल्वानां रोहितकानाञ्च सोमे एव प्रवृत्तिः। अत्र तु पलाशखदिरयोरन्यतरस्यैव। तत्रापि पूर्वाभावे परस्यैव। निरूढपशुबन्धे एव पूर्वेषामभावे परेषां प्राप्तावाह – 'खदिराभावे सोम इतरेषाम्।' इति[2] तेन सोमे खदिरस्यालाभे बैल्वान् रौहितकान्वा कुर्वीत। छेदनस्थाने घृताक्तेन स्रुवेण यूपवृक्षमुपस्पृश्य यूपच्छेदनं कुर्यात्।

## प्रहृत्य यूपच्छेदनम्

तत 'ओषध' इति मन्त्रेण कुशतरुणमन्तर्धाय 'स्वधित' इत्यनेन मन्त्रेण परशुनाऽन्तर्हितस्य तृणस्योपरि छेदनाय स्रुवेणाङ्कितप्रदेशे प्रहरति। यूपे छिद्यमाने यः प्रथमः शकलः परापतति तं यूपावटमध्ये प्रक्षेपणार्थं क्वचित्सुगुप्ते देशे स्थापयेत्। स्वरवे शुक्रामन्थिग्रहप्रचाराय चान्यानपि शकलान् स्थापयेत्। अग्रे यूपावटमध्ये प्रक्षेपार्थं तथाविधं यूपस्य छेदनं कर्त्तव्यं यथाऽवशिष्टः स्थाणुरनसो गच्छतोऽक्षं न स्तभ्नाति।

ततश्छिन्नप्रायं यूपं हस्तेन प्रेरयित्वा प्राच्यामुदीच्यां वा पातयेत्, न दक्षिणस्यां दिशि। ततो '**द्यां मा लेखी**[3]' रिति मन्त्रेण पतन्तं

1. का० श्रौ० सू० 6/1/9
2. का० श्रौ० सू० 6/1/10
3. शु० य० सं० 5/43

यूपमध्वर्युरभिमन्त्रयते। ततः तूष्णीं पर्णशाखादिपातनेन यूपशोधनम्। ततः स्थाणुं परिस्तीर्य जुह्वा सकृद्गृहीतमाज्यं गृहीत्वा '**अतस्त्वमि'ति**[1] मन्त्रेण स्थाणौ जुहोति। इदं वनस्पतये। तत्राज्यं स्रुवं च यूपाहुत्यां संस्कृतमेव। आज्यं न पुनः संस्करणीयम्। यूपाहुत्यां स्रुवेण होमपक्षे जुह्वा अत्र संमार्गः कर्त्तव्यः।

ततो मूलाद्यूपं चतुररत्निप्रमाणं त्र्यरत्निप्रमाणं पञ्चारत्निप्रमाणं वा मित्वा अवशिष्टमग्रं छिन्द्यात्। अतः पुनश्छेदनं न कार्यम्। ततो यूपं मूले पञ्चमांशं त्यक्त्वा तक्षा यूपं तक्षणेनाष्टकोणं करोति।[2]

ततोऽवशिष्टतो यूपाग्राच्चषालं पृथमात्रमष्टकोणं मध्यसंगृहीतमूर्ध्वखातं कृत्वा यूपस्याग्रे तथा प्रमुञ्चति यथा चषालादूर्ध्वं द्व्यङ्गुलं त्र्यङ्गुलं वा यूपस्याग्रं परिशिष्यते। ततो यूपस्य मूलात्प्रादेशमात्रः खड्गाकारः स्वरूः कार्यः। एतदष्टास्त्रीकरणादि सर्वं तक्ष्णा कर्त्तव्यम्।

ततः पश्चादागत्य पुनराज्यं संस्कृत्य पञ्चगृहीतं गृहीत्वा परिस्तीर्य समिधमाधायाहवनीये '**द्यौष्पृष्ठमि'ति**[1] मन्त्रं मनसोच्चार्य जुहोति। इदं वाचस्पतये इति। अर्थात् वेदिकरणात्प्राक् पञ्चगृहीतमाज्यं गृहीत्वा द्यौष्पृष्ठमितीयं षड्ढोतारं मन्त्रं मनसा उच्चार्य एकामाहुतिं जुहुयात्। अथवा तेनैव पञ्चगृहीतेन विभज्य पञ्चाहुतीर्जुहुयात्। अयं होमो निरूढपशावेव, तत्प्रकरणे पाठात्, नाग्नीषोमीये इति। एवं होमं कृत्वा ततो वेदिं कुर्यात्।

## वेदिनिर्माणम्

ततो ब्रह्मयजमानौ उत्तरवेदेर्दक्षिणतो बहिर्वेदि उपविशतः। ततो यजमान वाचं यच्छेति प्रैषः। ततः श्रपणस्य पश्चादुत्तरतो वा षण्णां पात्राणामासादनम्। अग्निहोत्रहवणी स्फ्यः पवित्रच्छेदनानि पवित्रे, अन्तर्धानतृणं द्वात्रिंशदङ्गुला शम्या वारणीच। ततो वाग्यतः पवित्रे छित्वा प्रोक्षणीः संस्कृत्य वज्रान्तर्द्धानतृणशम्यानां प्रोक्षणं करोति।

---

1. देवयाज्ञिकपद्धतौ, पृ० 207
2. अष्टाश्रिं करोत्युपरवर्जम्। का श्रौ० सू० 6/1/26
3. का० श्रौ० सू० 6/1/33

ततो गार्हपत्यस्याग्रे प्रोक्षणीनां निधानम्। ततः स्फ्यादानादि। चतुररत्निः पश्चात्तिर्यक्। षडरत्निर्मध्ये प्राची। त्र्यरत्निः पुरस्तात्तिर्यक्। तेषां त्रयाणां मध्ये शङ्कुः। ततो वेदिं दक्षिणत उत्तरतः स्वमध्यसंगृहीतां कृत्वा अग्निमभितोऽसौ कुर्यात्। अत्र वेदिसाधनोपायभूतः श्लोकः –

**'नवारत्निमिता रज्जुर्लक्षिता षट्स्वतः परम्।**
**अर्द्धेऽर्द्धे त्रिषु पाशः स्यात्पशुवेदेः प्रसाधनम्।।**[1]'

प्रकारान्तरञ्च – **'द्व्यरत्नौ लक्षणं कुर्यादर्द्धे सार्द्धेऽन्तरे तथा।**
**अर्द्धेऽरत्नौ ततः सार्द्धे वेदिः सा पाशुकी मता।।**[2]'

अत्र संग्रहसाधनादि दर्शपूर्णमासवेदिवत्। एवं वेदिं मित्वा वेदिपरि-समूहनम्। उत्करकरणम्। सतृणवज्रादानादि सतृणपुरीषस्योत्करप्रक्षेपान्ते पूर्वपरिग्रहः। वेद्यां त्रिरुल्लेखनम्। हरणप्रैषः। हरणं सम्मर्शनम्। सम्मर्शनानन्तरमध्वर्युः शम्यां स्फ्यं चादायोत्करस्य पुरस्तादन्तराले गमनागमनार्थं सञ्चरमार्गं परित्यज्य वेद्यन्ते चात्वालं मिमीते। तत्र पूर्वं पश्चादुदगग्रां शम्यां निधाय स्फ्येनान्तर्लिखति '**तप्तायनी**' त्यनेन मन्त्रेण।[3]' ततः शम्यान्तरालमुक्त्वा पुरस्तादुदगग्रां शम्यां निधाय '**वित्तायनी**' त्यनेन मन्त्रेण[4] स्फ्येनान्तर्लिखति। ततो दक्षिणतो वेदिसंलग्नां प्राचीनां शम्यां निधाय स्फ्येनान्तर्लेखां करोति '**अवतान्मा नाथितात्**'[5] तत उत्तरतः प्रागग्रां शम्यां निधाय स्फ्येनान्तर्लिखति '**अवतान्मा व्यथितादिति**' मन्त्रेण। एवं शम्याप्रमाणं चतुष्कोणं चात्वालं परिलिख्य यजमानेऽन्वारब्धे विदेदग्निरिति चात्वाले स्फ्येन प्रहरति। प्रहरणानन्तरमेव विसर्गः। ततः प्रहारेणोत्खातं पुरीषं हस्तेन स्फ्येन वाऽग्ने अङ्गिर इति वेदेः पूर्वार्द्धं प्रतिहत्य पूर्वार्द्धे निखातशङ्कुसन्निधाने

1. दे० या० प० पृ० 207
2. दे० या० प० पृ० 207
3. शु० य० सं० 5/9
4. शु० य० सं० 5/9
5. शु० य० सं० 5/9
6. शु० य० सं० 5/9

वेदिमध्ये तत्पुरीषं '**योऽस्यामिति**[1]' मन्त्रेण निवपति। अग्नीत्तं निहितं पुरीषमुत्करवदभिन्यस्यति। एवमेव प्रहरणाभिन्यासान्तं वारद्वयं कर्त्तव्यम्। पुरीषनिर्वापे मन्त्रविशेषः। '**यो द्वितीयस्यामिति**[5]' द्वितीयपुरीषनिर्वापे, '**यस्तृतीयस्यामि**'**ति**[2] तृतीयपुरीषनिर्वापे।

ततः स्फ्येनाभ्र्यां वा चात्वालं खात्वोत्तरवेदिनिष्पत्तिपर्याप्तं पुरीषमनुत्वेति हृत्वा तेन पुरीषेणोत्तरवेदिं निष्पादयति '**सिꣳह्यसि**' इति मन्त्रेण '**कल्पस्वे**'त्यन्तेन[3] द्वात्रिंशदङ्गुलशम्याप्रमाणं चतुरस्रं पूर्वार्द्धशङ्कोः पश्चात्पदमात्रमधिकं वा परिशिष्य, ततः प्रत्यगुपदेशा' त्पदमात्रे भूयसि वा द्वात्रिंशदङ्गुलामुत्तरवेदिं चतुः स्रक्तिं कुर्यात्' इति कठसूत्रे दर्शनात्। 'अपरेण यूपावटं सञ्चरमवशिष्योत्तरवेदिं निर्वपेदि' त्यापस्तम्बः।

तत उत्तरवेदिमध्ये नाभिं प्रादेशमात्रीं चतुरस्रां करोति। ततः '**सिꣳह्यसी**'ति '**शुन्धस्वे**[4]' त्यन्तेनोत्तरवेदिमद्भिः प्रोक्षति। ततः **सि ꣳ ह्यसी**'ति "**शुम्भस्वे**"[5]ति सिकताः प्रकिरति। तत उदुम्बरशाखाभिः प्लक्षशाखाभिर्वा उत्तरवेदिं छादयति। दर्भैश्छादयति वा न वस्त्रैः।

**निरूढपशुबन्धयागविहारविवरणम्**

1. गार्हपत्यः दर्शपूर्णमासविहारवत्
2. सभ्यः दर्शपूर्णमासविहारवत्
3. आवसथ्यः दर्शपूर्णमासविहारवत्
4. दक्षिणाग्निः दर्शपूर्णमासविहारवत्
5. वेदिः चातुर्मास्यवत्

---

1. शु० य० सं० 5/9
2. शु० य० सं० 5/9
3. शु० य० सं० 5/10
4. शु० य० सं० 5/10
5. शु० य० सं० 5/10

## अथनिरूढपशुबन्धयागविहारः

6. उत्तरवेदिः चातुर्मास्यवत्
7. उत्करः चातुर्मास्यवत्
8. चात्वालः चातुर्मास्यवत्
9. ऊबध्यः अर्थपरिमाणम्
10. शामित्रशाला
11. यूपः
12. ब्रह्मासनम्
13. यजमानासनम्
14. होतृ–आसनम्
15. अध्वर्यु–आसनम्
16. आग्नीध्रासनम्
17. मैत्रावरुणासनम्
18. पत्नी–आसनम्

ततो अष्टाविंशतिकाष्ठस्येध्मस्य त्रियूनबद्धस्याहवनीयेऽधिश्रयणम्। उपयमनीनां चोपकल्पनम्। कर्परे सिकता वा मृत्तिका वा उपयमन्य इत्युच्यन्ते। ताश्च प्रदीप्तस्येध्मस्योर्ध्वमुद्यम्य तस्याधस्तात् कर्परादिस्थाः ध्रियन्ते तापनिवारणार्थम्। आज्यसंस्कारः। जुह्वां पञ्चगृहीतग्रहणम्, देवदारुपरिधीनामुपकल्पनम्।

ततः पञ्चगृहीतमाज्यमुद्यम्य क्वचित्पात्रे स्थिताः लौकिकाः प्रोक्षणीश्चोद्यम्य प्रदीप्तमिध्मं चोद्यम्योपयमनीभिरद्भिः कर्परस्थाभिरधस्ताद् वारयित्वाऽध्वर्युरग्नये प्रह्रियमाणायानुब्रूहीति वदति। तत एकस्फ्ययाऽ–नूदेहीति प्रतिप्रस्थातारं प्रेष्यति। **'होत्रा' 'प्रदेवं देव्ये'**[1] त्यस्यामृचि त्रिरुक्तायां सत्याम् अग्निमुत्तरवेदिं प्रति हरति वेदेरुत्तरमार्गेण, कठसूत्रात्। ततः प्रतिप्रस्थाताऽऽहवनीयादारभ्य वेदिमध्ये स्फ्येन लेखां करोति उत्तरवेदिं यावत् दक्षिणश्रोणिं यावद्वा।

---

1. दे० या० प० पृ० 209

ततोऽध्वर्युरग्निमन्यस्मै प्रदाय प्रोक्षणीरादायोत्तरवेदेर्दक्षिणतो वेदिमध्ये उदङ्मुखस्तिष्ठन् प्रतिदिशमुत्तरवेदिं प्रोक्षति हस्तेनैव लौकिकप्रोक्षणीभिः।। इन्द्रघोष इति पुरस्तात्। प्रचेता इति पश्चात्। मनोजवास्त्वा इति दक्षिणतः। विश्वकर्मेत्युत्तरतः। 'इदमहमिति उत्तरवेदेर्दक्षिणांससंलग्नं प्रोक्षणीशेषं बहिर्वेदि भूमौ निनयति। अभिचरन्निदमहं तप्तं वारमुमभिनिः सृजामि इत्येवं विधेन मन्त्रेण[1] प्रोक्षणीशेषं निनयति। अमुमित्यस्थाने शत्रोर्द्वितीयान्त-नामग्रहणम्। अभिचारपक्षे एवोदकस्पर्शनं नान्यत्र।'

तत उत्तरत उपविश्य नाभ्याः श्रोण्यंसेषु पञ्चगृहीतं जुहोति अध्वर्युः हिरण्यं यत्र क्वचन स्थितं पश्यन् नाभिं परिस्तीर्य सिꣳह्यसि स्वाहेत्यादिभिः पञ्चभिर्मन्त्रैः प्रतिमन्त्रम्। तत्र क्रमः। पूर्वं दक्षिणेंऽसे सिꣳह्यसि स्वाहेति। इद ꣳ सिꣳह्यौ। सिꣳह्यस्यादित्यवनिः स्वाहेति उत्तरश्रोण्याम्। इदं सिꣳह्यौ आदित्यवन्यै। सिꣳह्यसि ब्रह्मवनिः क्षत्रवनिः स्वाहेति दक्षिणश्रोण्याम्। सिꣳह्यौ ब्रह्मवन्यै क्षत्रवन्यै। सिꣳह्यसि सुप्रजावनी रायस्पोषवनिः स्वाहेति उत्तरेंऽसे जुहोति। सिꣳह्यौ सुप्रजावन्यै रायस्पोषवन्यै।[2]

ततो मध्ये जुहोति सिꣳह्यस्यावह देवान्यजमानायेति। इदं सिꣳह्यै। ततो भूतेभ्यस्त्वेति होमार्थं नीचीकृतां स्रुचमूर्ध्वां करोति। ततो देवदारूवृक्षोत्थैः प्रादेशमात्रैः त्रिभिः परिधीभिः नाभिं परिदधाति ध्रुवोऽसि पृथिवीमिति मध्यमं पश्चादुदगग्रम्। ध्रुवक्षिदसीति दक्षिणं प्रागग्रम्। अच्युतक्षिदसीति उत्तरं प्रागग्रम्।[3]

ततोऽग्नेः पुरीषमसीति नाभ्यामुपरि गुग्गुलुरोहितजं पुष्पं मेषशिरो रोमाणि च सहैव निदधाति। शीर्षलोम्नामभावेऽन्यानि मेषशरीरसम्बन्धि-रोमाणि गृहीत्वा निधेयानि। तेषु सम्भारेषु उपरीध्माग्निं दधाति। तस्याग्नेरुत्तरतः उत्तरवेदेरुपर्येवाग्निसमीपे उपयमनीरूपनिवपति।[4]

1. दे० या० प० पृ० 209, शु० य० सं० 5/11
2. दे० या० प० पृ० 209, शु० य० सं० 5/12
3. शु० य० सं० 5/12, दे० या० प० 209, पृ०
4. शु० य० सं० 5/13, दे० या० प०, पृ० 209

### परिस्तरणं, पात्रासादनम्, उत्तरपरिग्रहादीनाञ्च विधानम्।

ततो द्विरासनम्। प्रणीताप्रणयनम्। अकृतं चेत्ततः प्राग्व्रतग्रहणम्। मध्यमवर्जं परिस्तरणम्। पात्रासादनम्। तत्र स्फ्याग्निहोत्रहवणी, पवित्राणि च सन्त्येव। शम्या, दृषदुपलम्, आज्यस्थाली, आज्यं च, वेदश्च दक्षिणार्थः पशुर्धेनुर्वरो वा। अभ्रिः इध्मचतुष्टयं स्रुवः, स्रुक्पञ्चकम्, प्राशित्रहरणे। पान्नेजनीसप्तकम्। यूपाष्टकम्। उखापञ्चकम्। मन्थनचतुष्टयम्। इडापात्री, षडवत्तम्। अन्तर्धानकटः पूर्णपात्रम्। तत्र इध्मचतुष्टयम्। विंशतिरिध्म-काष्ठानि। अरत्निमात्र्यौ वपाश्रपण्यौ काष्मर्यौ। तयोरेका विशाखा अविशाखा द्वितीया। अरत्निमात्रं वारणं हृदयशूलम्। प्लक्षशाखाश्चेति। बर्हिश्चतुष्टयम्। काष्मर्यमयास्त्रयः परिधयः, काशमयः प्रस्तरः। काशमूलमये विधृत्यौ अरत्निमात्रे। बर्हिश्चेति। स्रुक्पञ्चके। जुहूद्वयम्। उपभृद्द्वयं ध्रुवाश्चेति।

पान्नेजनीसप्तके कलशः आपः षड्ढिरण्यशकलानि। पृषदाज्यार्थं दधि। उपाकरणतृणं, मैत्रावरुणदण्डः। तस्य वेष्टनम्। यूपाष्टकः - यूपः, चषालम्, प्रथमशकलम्, यूपवेष्टनम्, आपः, यवाः, कुशमुष्टिः, यूपाञ्जनार्थमाज्यञ्चेति। उक्तपञ्चके उखा, असिः, स्वरूः, रशने (एका द्विव्यामा, द्विगुणा, अपरा त्रिव्यामा त्रिगुणा चेति)। मन्थनचतुष्टये - द्वेअरणी, द्वे दर्भतृणे, शकलञ्चेति।

पूर्वसंस्कृता एव प्रोक्षणीरादाय दैव्यायेति पात्रप्रोक्षणम्। असञ्चरे प्रोक्षणीनिधानम्। कुक्कुटाहननम्। आज्यनिर्वापवेदबन्धौ यजमान एव करोति। आज्याधिश्रयणमग्नीध एव। अध्वर्योः पर्यग्निकरणम्। उदकोपस्पर्शनम्। ततो वेदिखननम्। उत्तरपरिग्रहः। दक्षिणतः पुरीषोद्वहनम्। अनुमार्जनम्। अग्नीधः प्रोक्षणीधारणम्। ततः स्फ्योद्यमनम् अध्वर्योः प्रोक्षणीप्रैषः स्फ्योदक्प्रहारः। पाण्योः प्रक्षालनम्। अपरेण प्रणीताः स्फ्यासादनम्।

अग्नीद्वेदिमध्ये प्रोक्षणीरासाद्य प्रणीतानां पश्चात् प्रागग्रमिध्ममासाद्य तस्योत्तरतो बर्हिः प्रागग्रमेवासादयति। ततः पात्रसम्मार्गः। पूर्वस्रुवस्य। ततः स्रुवधर्मैश्चासिसंमार्गः। तैरेव मन्त्रैः प्रथमं प्रतपनम्। संमार्गः। प्रतपनमिति। ततो जुह्वाः। तूष्णीं वसाहोमहवण्याः। तत उपभृतः। ततः पृषदाज्योपभृत

उपभृद्वत्। ततो ध्रुवायाः। तूष्णीं प्राशित्रहरणयोः। संमार्जनानां पशुपुरोडाशार्थ-पात्र्यादिसंमार्गार्थञ्च रक्षणं नोपासनम्।

ततः पत्नीसन्नहनम्। आज्योद्वासनम्। पत्न्याज्यावेक्षणम्। वेदिमध्ये आसादनम्। आज्योत्पवनम्। आज्यावेक्षणम्। ईक्षणान्ते वेद्यां पात्र्यां स्थाल्यन्तरे दध्यासिच्य तत्र स्थालीस्थमाज्यं निनयेत्। दधन्याज्यमानीयेत्याप-स्तम्बवचनात्। ततः पृषदाज्यसंयोजनम्।

ततो जुह्वामुपभृदिव चतुर्गृहीतं गृहीत्वा पृषदाज्योपभृति ज्योतिरसीति पञ्चगृहीतं पृषदाज्यं गृह्णीयात्। मन्त्रस्तु सकृत्त्रिर्वा।

ततो ध्रुवायां चतुर्गृहीतग्रहणम्। इध्मं विस्त्रंस्यान्यत्परिध्यादित्रिकं पराकृत्य केवलस्येध्मस्य प्रोक्षणम्। बर्हिः प्रतिगृह्य वेद्यामासाद्य तस्य प्रोक्षणम्। अशेषो मूलावसेकः। बर्हिर्विस्त्रंसनम्। आश्वबालप्रस्तरस्य ग्रहणम्। ब्रह्मणे समर्पणम्। सन्नहनविस्त्रंसनम्। दक्षिणवेदिश्रोणौ निधानम्। प्रन्यैरवच्छादनम्। वेदिस्तरणम्। त्रिवृत्पञ्चवृत्सप्तवृद्वा। ततः प्लक्षशाखास्तरणं दक्षिणभागे तूष्णीमेव।

ततः समित्प्रस्तरादानम्। आहवनीयकल्पनम्। उल्मुकोदूहनम्। काष्मर्यपरिधिनिधानादि। ऐक्षव्यविधृत्योः स्तरणम्। आश्वबालप्रस्तर-स्तरणम्। अभिन्यासः। पूर्वं तूष्णीमसेरासादनम् ततो जुह्वाः। ततो वज्रोपग्रहेण तूष्णीं वसाहोमहवन्याः। तत उपभृतः।

ततः पृषदाज्योपभृतो '**घृताच्यस्युपभृदित्य**'[1] नेनैवासादनम्। ततो ध्रुवायाः। ततः आज्यस्थाल्याः। ततः पृषदाज्यस्थाल्याः। ततः आज्यस्थालीस्थमाज्यमालभ्यासादनक्रमेण जुह्वादिस्थमाज्यमालभते। तत आत्मालम्भः उदकालम्भश्च।

**यूपसम्पादनम्**

ततो वेदेः पूर्वभागे गत्वा '**देवस्य त्वे**'[2] त्यभ्रिं गृहीत्वा '**इदमहमि**'[3]ति

1. शु० य० सं० 2/6
2. शु० य० सं० 6/1
3. शु० य० सं० 6/1

यूपावटं परिलिखति। आहवनीयस्य पुरस्ताद्वेदिमध्येऽर्द्धमर्द्धं बहिर्वेदि। यूपपञ्चमांशप्रमाणं निम्नमवटं खनति। उदकोपस्पर्शः। प्राच्यां पांसूद्वापः।

तदग्रेण यूपं प्राञ्चं निदधाति। ततोऽप्सु **यवोसी**[1]ति मन्त्रेण यवानावपति। ततो दिवे त्वा प्रोक्षामीति यूपस्याग्रं प्रोक्षति। अन्तरिक्षाय त्वा प्रोक्षामीति यूपस्य मध्यं, पृथिव्यै त्वा प्रोक्षामीति यूपस्य मूलम्।

प्रोक्षणीशेषं सर्वं यूपावटे निनयति '**शुन्धन्तामि**'[2]ति। उदकालम्भः। **पितृषदनमसी**ति प्रागग्राण्युदगग्राणि बर्हींष्यवटे प्रक्षिपति। उदकालम्भः। **ततोऽग्रेणीरसी**[3]ति प्रथमशकलमवटे प्रक्षिपति। तत आज्यस्थाल्याः स्रुवेणाज्यं गृहीत्वाऽवटं परिस्तीर्यावटमध्ये तूष्णीं जुहोति। इदं प्रजापतये।

तत उत्थाय पुरस्तात्परिक्रम्य यूपस्य दक्षिणत उदङ्मुख उपविश्याध्वर्युर्यजमानो वा लौकिकेनाज्येन यूपमनक्ति।

ततो यूपायाज्यमानायानुब्रूहीति होतारं प्रेष्यति। ततो वेदं सव्येन गृहीत्वा '**देवस्त्वेति**[4]' मन्त्रेणोपरदेशवर्जितं सर्वं यूपमनक्ति सर्वतः। ततश्चषालमन्तर्बहिश्चानेनैव मन्त्रेणानक्ति। मन्त्रावृत्तिः।

ततोऽक्तं चषालं यूपस्याग्रे प्रतिमुञ्चति **सुपिप्पलाभ्य**[5] इति। ततो यूपस्याग्निष्ठादेशं सोपरं पुनरनक्ति '**देवस्त्वेति।**[6]' ततः परिव्ययणदेशे यूपं सर्वतो गृहीत्वा अध्वर्युः परिव्ययणपर्यन्तं न विमुञ्चेत्। तत उच्छ्रीयमाणायानुब्रूहीति होतारं प्रेष्यति।

ततो '**द्यामग्रेणेति**[7]' यूपमूर्ध्वं करोति। '**या त**[8]' इति यूपावटमध्ये यूपमूलं प्रक्षिपति।

---

1. शु० य० सं० 6/1
2. शु० य० सं० 6/1
3. शु० य० सं० 6/2
4. शु० य० सं० 6/2
5. शु० य० सं० 6/2
6. शु० य० सं० 6/2
7. शु० य० सं० 6/2
8. शु० य० सं० 6/3

यः पुनरक्तोऽग्निष्ठादेशः स आहवनीयाभिमुखः कार्यः। ततः सव्येन हस्तेन यूपं गृहीत्वा दक्षिणेनावटं पांसुभिः पूरयति '**ब्रह्मवनि त्वे**'[1]ति। ततो मैत्रावरुणदण्डेनावटं सर्वतस्त्रिः पर्यूषति '**ब्रह्म दृꣳहेति**[2]' सकृन्मन्त्रः। द्विस्तूष्णीम्। ततः समं भूमिं कृत्वा तत्रोदकमासिञ्चति। ततो यूपमन्वारभस्वेति प्रैषः।

ततो यूपं कृतान्वारम्भं यजमानं '**विष्णोः कर्माणीति**[3]' वाचयति। सखेति ब्रूहीत्येवम्। ततो यजमानो विष्णोः कर्माणीति मन्त्रं स्वरेण पठति। ततश्चषालं विलोकयन्तं यजमानं **तद्विष्णोरिति**[4] वाचयति। चक्षुराततमिति ब्रूहीत्येवम्। ततो यजमानस्तद्विष्णोरिति मन्त्रं सस्वरेण पठति।

## कौश्या रशनया यूपस्य त्रिवृत्परिव्ययणम्

ततः परिवीयमाणायानुब्रूहीति होतारं प्रेष्यति। ततस्त्रिगुणया त्रिव्यामया दर्भमय्या रशनया मध्यमभागे यूपं त्रिगुणं परिव्ययति '**परिवीरसी**'[5]ति मन्त्रेण। ततो रशनां यूपे बध्वा अन्योन्यरशनाप्रान्तौ संसृज्यान्यतरस्यां सिचि (ग्रंथिः) अन्यतरस्यामन्तं प्रवेशयति। अग्रमध्ये मूलं, मूलमध्ये वाऽग्रमिति। ततोऽग्निष्ठादेशमुत्तरेण रशनायूपान्तराले मध्ये मुखं स्वरूमवगूहति **दिवः सूनुरसी**'[6] ति। '**तत उपावीरसी**'ति[7] पान्नेजनीमध्ये आसादितं तृणमादाय तेन तृणेनोपदेवानिति छागं पशुं स्पृशति आलभते। ततोऽग्निमन्थनम्। '**तत्राग्नेर्जनित्रमसी**'**ति**[8] शकलादानम्। तत्तूष्णीं वेद्यामुदगग्रं निदधाति। ततो '**बृषणौ स्थ**'[9] इति शकलस्योपरि कुशतरुणे प्रागग्रे निदधाति।

---

1. शु० य० सं० 6/3
2. शु० य० सं० 6/3
3. शु० य० सं० 6/4
4. शु० य० सं० 6/5
5. शु० य० सं० 6/6
6. शु० य० सं० 6/6
7. शु० य० सं० 6/7
8. शु० य० सं० 5/2
9. शु० य० सं० 5/2

**पशोरुपस्पर्शनम्**

तत '**उर्वश्यसी**'[1] त्यधरारणिमुदगग्रां तयोस्तृणयोरुपरि निदधाति। तत '**आयुरसीति**[2]' प्रमन्थाग्रेणाज्यं स्पृष्ट्वा अधरारणिं तीर्थस्योपरि निदधाति। ततः केनचिद्यन्त्रं धारयित्वा अग्नये मथ्यमानायानुब्रूहीति होतारं संबोध्य '**गायत्रेण त्वे**'**ति**[3] प्रतिमन्त्रं प्रदक्षिणां त्रिर्मन्थति।

ततः प्रदक्षिणाप्रदक्षिणमग्निजन्मपर्यन्तं मन्थति। अग्नौ जाते जातायानुब्रूहीति होतारं प्रेषयति। तत '**आयम्**[4]' इति होत्रोच्यमानेऽरणी हस्ते कृत्वा प्रह्रियमाणायेति होतारं प्रेष्यति। ततो '**भवतन्नः**[5]' इति मथितमग्निमाहवनीये प्रक्षिप्य समिधमाधाय स्थाल्याः स्रुवेणाज्यं गृहीत्वा प्रक्षिप्तस्याग्नेरुपरि '**अग्नावग्निरि**[6]' ति जुहोति। इदमग्निभ्याम्। उपाकरणमन्थनयोः संयुक्तयोर्विकल्पः।

ततो द्विगुणरशनया द्विव्यामया दर्भमय्या रशनया नागपाशं कृत्वा पशोर्दक्षिणश्रृंगसम्मुखं पाशं प्रमुच्य श्रृंगयोर्मध्ये बध्नाति '**ऋतस्य त्वे**'[7]ति। एवं मस्तके पशुं बद्ध्वा '**देवस्य त्वे**'ति यूपे बध्नाति। तत्रेन्द्राग्निभ्यां जुष्टं नियुनज्मीति ऐन्द्राग्नपशुपक्षे। '**सूर्याय जुष्टमि**'ति सौर्यपक्षे। एवं सर्वत्र ज्ञेयम्।

ततः '**प्रजापतये जुष्टमिति**'[8] प्राजापत्यपक्षे। ततो ब्रह्मन् हविः प्रोक्षिष्यामीति प्रैषः। ततो ब्रह्मा-प्रोक्ष यज्ञमिति पठित्वा '**ॐ प्रोक्ष**' इत्यनुज्ञातोऽनुजानाति। ततो '**अद्भ्यस्त्वौषधीभ्य**'[9] इति संस्कृताभिः

---

1. शु० य० सं० 5/2
2. शु० य० सं० 5/2
3. शु० य० सं० 5/2
4. शु० य० सं० 3/6
5. शु० य० सं० 5/3
6. शु० य० सं० 5/4
7. शु० य० सं० 6/8
8. शु० य० सं० 6/9
9. शु० य० सं० 6/9

प्रोक्षणीभिः पशुं प्रोक्षति। इन्द्राग्निभ्यां त्वा जुष्टं प्रोक्षामीति। ततो '**ऽपां पेरुरि**'ति[1] प्रोक्षणीभिः पशोर्मुखे उद्‌गृह्णाति। तत '**आपो देवी**[2]' रिति पशुमधस्तादुदरनाभिदेशे उत्प्रोक्षति।

### पशुसमञ्जनम्

ततोऽकृतश्चेदत्र व्रतग्रहणं कर्त्तव्यम्। ततो होतृषदनकरणम्। '**एहि होतरि**'ति होतुरामन्त्रणम्। अग्नये समिध्यमानायेति प्रैषः। सन्तन्वन्निति प्रैषः। इदमहं सप्तदशेन वज्रेणेत्यवबाधनम्। प्रतिप्रणवमिध्माधानम्। एकस्याः परिशेषणम्। आहवनीयोपवाजनम्। पूर्वाघारः। सम्प्रैषोऽग्नि-संमार्गः। अञ्जलिकरणम्। उत्तराघारमाघार्य स्रुचौ असंस्पर्शयन्नेव पशुसमीपम् आगत्योपविश्य जुह्वा '**सन्ते प्राण**[3]' इति पशुललाटे समनक्ति। ततः समङ्क्तानीति दक्षिणोत्तरांसयोरनक्ति। उभयत्र मन्त्रावृत्तिः।

### मैत्रावरुणाय दण्डदानम्

ततः '**संयज्ञपतिरि**[4]'ति दक्षिणोत्तरश्रोण्योरनक्ति मन्त्रावृत्तिः। ततः स्रुक् समीपे प्रत्यागत्य संज्योतिषेति ध्रुवासमञ्जनम्। होतृवरणम्। पुनराश्राव्याग्निर्ह दैवीनामिति यजमानवरणं तन्व इत्यन्तेन। ततोऽध्वर्युस्तत्रैवोपविश्य **मित्रावरुणयोस्त्वे**'ति मन्त्रेण मैत्रावरुणायौदुम्बरं दण्डं यजमानमुखमात्रं समर्पयति।

### प्रयाजानुयाजाश्च

ततः संसृष्टौ उपविशतः। ततोऽग्निर्होतेति उक्ते स्रुचावादायाति-क्रम्याश्राव्याह समिधः प्रेष्येति मैत्रावरुणं प्रति प्रैषः। एकादशप्रयाजाः।

---

1. शु० य० सं० 6/10
2. शु० य० सं० 6/10
3. शु० य० सं० 6/10
4. शु० य० सं० 6/10

द्वितीयप्रभृतिप्रेष्य प्रेष्येति प्रैषः। चतुर्थसप्तमदशमेषु समानयनम्। तत्र चतुर्षु प्राकृतास्त्यागा अनुमन्त्रणानि च। पञ्चमे इदं द्वार्भ्यः पञ्च मम न तस्येत्यनुमन्त्रणम्, एतदेवानुमन्त्रणं सर्वेषाम्। षष्ठे इदमुषासानक्ताभ्याम्। सप्तमे इदं दैव्याभ्यां होतृभ्याम्। अष्टमे इदं तिसृभ्यो देवीभ्यः। नवमे इदं त्वष्ट्रे। दशमे इदं वनस्पतये पञ्च मम।

इत्थं दशप्रयाजानिष्ट्वा शासहस्तं शमितारं प्रत्याह शासमाहरेति। शासः असिः कट्टारिका उभयपार्श्वे तीक्ष्णा सामर्थ्यात्। न खड्ग इति हरिस्वामी। ततस्तेन हृतमसिमादाय स्वयं च स्वरूमादाय तावुभौ जुह्वग्रेऽक्त्वा '**घृतेनाक्तावि**ति[1]' पशोर्ललाटे स्वर्वसिभ्यामुपस्पृशति। ततः स्वरूं रशनायूपान्तरालेऽवगुह्य शमित्रेऽसिं प्रयच्छन्नेषा ते प्रज्ञाताऽश्रिरस्त्विति शमितारं ब्रवीति।

ततः स्रुचौ सादयित्वा चात्वालस्योत्तरतः शमित्रार्थं पञ्चभूसंस्कारान् कृत्वा पुनरुल्लेखनमेवाधिकं करोति।

## पर्यग्निकरणं पशुविशसनञ्च

ततः पर्यग्नयेऽनुब्रूहीति मैत्रावरुणं प्रेष्यति। ततोऽग्नीदाहवनीयात् उल्मुकं गृहीत्वा पश्वाज्यशामित्रदेशयूपचात्वालाहवनीयान्परितस्त्रिः पर्येति। तत उल्मुकं प्राश्य त्रिरेव प्रतिपर्येति। अन्ते इतरथावृत्तिः। ततः शमिता पशुं स्तम्बे बध्वा चात्वालोत्करावन्तरेण नयति। अग्नीत्तमेवोल्मुकमादाय पशोरग्रतो याति। प्रतिप्रस्थाता वपाश्रपणीभ्यां पशुमन्वारभते। अध्वर्युः प्रतिप्रस्थातारमन्वारभते अध्वर्युं यजमानोऽन्वारभते।

ततोऽध्वर्युः स्तृताया एव वेदेस्तृणे आदाय आश्राव्योपप्रेष्य होतर्हव्या देवेभ्य इति मैत्रावरुणं प्रत्याह। ततो रेवति यजमान इति यजमानं वाचयति। अध्वर्युः शामित्रं नातिक्रामति। ततोऽग्नीदधस्तादग्निमादाय शामित्रे स्थापयति। मथित्वैके।

---

1. शु० य० सं० 6/11

ततः शमित्रस्य पश्चात् उत्करे गृहीतयोर्वेदितृणयोर्मध्यादेकं तृणं प्रागग्रमुपास्यति '**वर्षो वर्षीयसी**'[1]ति। ततः शमिता तस्य तृणस्योपरि पशुं प्राक्शिरसं प्रत्यक्शिरसं वा उदक्पादं पातयित्वा मुखग्रहणेन श्वासरोधं कृत्वा मारयति। ग्रीवामोटनेन वा तथा मारयेत् यथा मार्यमाणः शब्दं न करोति।

ततोऽध्वर्युः प्रतिप्रस्थाताऽग्नीच्चाहवनीयमभ्यावृत्योपविशति। ततो अध्वर्युः संज्ञपयान्वगन्निति शमितारं प्रत्याह। ततो वसाहोमहवन्यां सकृद्गृहीतमाज्यं गृहीत्वा समित्पूर्वकमाहवनीये जुहोति '**स्वाहा देवेभ्य**[2]' इति। इदं देवेभ्यः। ततो मृते पशौ शमिता संज्ञप्तः पशुरिति प्राह।

ततोऽध्वर्युः शेतां नु मुहुर्तमिति ब्रूयात्। पुनर्वसाहोमहवन्यामेव स्थाल्याः सकृदाज्यं गृहीत्वा समिधं बिनैव देवेभ्यः स्वाहेति जुहोति। इदं देवेभ्यः। अनयोराहुत्योः परिपशव्ये इति संज्ञा। अनयोरत्र विकल्पेन होमः। ततो वपाश्रपणीभ्यां पशुबन्धनोपयुक्तां द्विगुणरशनां चात्वाले प्रक्षिपति '**माहिर्भूरि**[3]' ति। ततः प्रतिप्रस्थातः पत्नीमुदानयेति प्रैषः।

### पशवङ्गशोधनम्

पादौ निर्ज्येतेऽनेनेति पान्नेजनः। प्रतिप्रस्थाता तां पान्नेजनहस्तां पत्नीं गार्हपत्यस्य समीपात् पशुं प्रति नयन् '**नमस्त' आतान**[4]' इति वाचयति। ततः पत्नी पशुसमीपे उदङ्मुखी उपविश्य पशोः प्राणानद्भिः शोधयति। '**वाचं त**' इति मुखम्। '**प्राणं त**' इति नासिके मन्त्रावृत्तिः। '**चक्षुस्त**' इत्यक्षिणी मन्त्रावृत्तिः। '**श्रोत्रं त**' इति कर्णौ मन्त्रावृत्तिः। '**नाभिं त**' इति नाभिम्। '**मेढ्रं त**' इति शिश्नम्। '**पायुं त**' इत्यपानम्। सर्वाणि अङ्गानि एकत्र कृत्वा '**चरित्रांस्त**'[5] इति प्रोक्षणम्।

---

1. शु० य० सं० 6/11
2. शु० य० सं० 6/11
3. तत्रैव 6/12
4. शु० य० सं० 6/12
5. शु० य० सं० 6/14

ततः पान्नेजनशेषेणाध्वर्युर्यजमानौ सह पशोरङ्गान्यनुषिञ्चतः। '**मनस्त**' इति पशोर्मस्तकम्। '**वाक्त**' इति जिह्वाम्। '**प्राणस्त**'इति नासिके मन्त्रावृत्तिः। '**चक्षुस्त**' इति चक्षुषी मन्त्रावृत्तिः। '**श्रोत्रन्त**' इति कर्णौ मन्त्रावृत्तिः। '**यत्ते क्रूरमि**'ति सर्वाङ्गानि। '**शमहोभ्य**' इति पशोः पुच्छदेशे सर्वं निनयतः।[1]

## वपोत्खेदनम, वेष्टनम्, छेदनम्, श्रपणम्, अभिघारणञ्च

ततः पशुमुत्तानं कृत्वाऽऽध्वर्युर्नाभेरग्रे आत्ततृणमध्ये यदेकमवशिष्टं तदत्र प्रागग्रं निदधाति '**ओषधं**' इति। ततः '**स्वधित**[2]' इति प्रज्ञातया द्वयोर्धारयोर्मध्ये इयमक्तेति कृतचिह्नया घृताक्तया असिधारया अभिनिधानं कृत्वा तूष्णीं छित्वा तृणाग्रं सव्ये पाणौ कृत्वा दक्षिणेन पाणिना मूलं द्विगुणीकृत्योभयतो रुधिरेणानक्ति रक्षसां भाग'[3] इति। निरस्त इत्युत्करे तृणं प्रक्षिपति। उदकोपस्पर्शः।

ततो यजमान इदमहमिति मन्त्रान्ते तस्य तृणस्योपरि तिष्ठति। ततोऽध्वर्युः पशोरुदराद्वपामुत्खिद्य '**द्यौस्थः पृथिवी स्थ**'[4] इत्यूहितेन मन्त्रेण वपाश्रपण्यावादाय यजमाने वपाश्रपण्यामन्वारब्धे तया वपया वपाश्रपण्यावाच्छादयति घृतेनेति। ततो वपां छित्वा प्रतिप्रस्थात्रे प्रयच्छति।

ततः प्रतिप्रस्थाता वपां चात्वाले प्रक्षाल्य शामित्रे प्रतप्य चात्वालोत्करा-वन्तरेणाहवनीयसमीपे आगत्योत्तरतस्तिष्ठति। अग्नीच्छामित्रादेवोल्मुकं गृहीत्वा चात्वालोत्करावन्तरेणागत्याहवनीये प्रास्यति। ततोऽध्वर्युरपि चात्वालोत्करावन्तरेणागत्य सव्यहस्ते कृतं तृणाग्रमाहवनीये प्रक्षिपति '**वायो वेरि**[5]' ति मन्त्रेण। ततः प्रतिप्रस्थातोत्तरतस्तिष्ठन्नाहवनीये वपां प्रतप्यान्तरा

---

1. शु० य० सं० 6/15
2. शु० य० सं० 6/15
3. शु० य० सं० 6/16
4. दे० या० प० 2/8
5. शु० य० सं० 6/16

यूपाग्नी हृत्वा परीत्योत्तरवेदेर्दक्षिणत आसीनो वपामाहवनीयस्योपरि धारयित्वा श्रपयति।

ततोऽध्वर्युः स्रुवेणाज्यं गृहीत्वा वपाया उपरि जुहोति '**अग्निराज्यस्ये**'ति।[1] इदमग्नय इति त्यागः। ततोऽध्वर्युरेव स्तोकेभ्योऽनुब्रूहीति मैत्रावरुणं प्रेष्यति। स्तोकानुवाचने समाप्ते शृतायां वपायां शृता प्रचरेति प्रतिप्रस्थाताऽध्वर्युं प्रत्याह। ततोऽध्वर्युर्वपायां तत्रस्थाभिघारं करोति।

ततः प्रतिप्रस्थाताऽन्तरा यूपाग्नी वपां प्रत्याहृत्याहवनीयादुत्तरतो निदधाति। ततोऽध्वर्यु**र्यस्ते प्राण** इति इन्द्राग्नी गच्छेति प्राणदानं करोति। ततो वपां '**प्रियेण धाम्ने**'[2] त्यासाद्य '**ध्रुवा असदन्नि**[3]' त्यालभते। आपस्तम्बसूत्रे - वपां दक्षिणत एव नीत्वा दक्षिणवेदिश्रोण्यां बर्हिषि प्लक्षशाखायां वपाया आसादनमुक्तम्। कठसूत्रे तदुदगग्रेषु दर्भेषु। ततो होता पुनः स्रुगादापने पठिते अध्वर्युर्जुहूपभृतावादायातिक्रम्याश्राव्याह स्वाहा कृतिभ्यः प्रेष्येति उत्तमप्रयाजं प्रेष्यति। इदं स्वाहा कृतिभ्यः। पञ्चममेत्यनुमन्त्रणम्। प्रत्येत्य प्रयाजशेषेण पूर्वं ध्रुवामभिघारयति तत आज्यस्थालीं ततो वपां ततः पृषदाज्यस्थालीम् ततः पृषदाज्योपभृतम्।

तत आज्यभागौ प्रेष्य प्रैषौ अग्नयेऽनुब्रूहीति मैत्रावरुणं प्रेष्यति। अग्नये प्रेष्यति च। इदमग्नये। सोमायानुब्रूहि। सोमाय प्रेष्य। इदं सोमाय।

ततो जुह्वामुपस्तीर्य हिरण्यशकलमवधाय वपामवद्यन्मैत्रावरुणं प्रत्याह। इन्द्राग्निभ्यां छागस्य वपायै मेदसोऽनुब्रूहीति। वपां स्रुच्यवधाय पुनरुपरि हिरण्यशकलमवधायोपरिष्टात्सकृदभिघार्योत्थायातिक्रम्याश्राव्येन्द्राग्निभ्यां छागस्य वपां मेदः प्रेष्येति मैत्रावरुणं प्रत्याह। होत्रा वषट्कृते समिद्धे जुहोति इदमिन्द्राग्निभ्याम्। जुहोति इदमिन्द्राग्निभ्याम्।

ततो वपाश्रपण्योर्मध्ये विशाखां प्रत्यगग्रां कृत्वा उत्तरतस्तिष्ठन्नाहवनीये

1. शु० य० सं० 6/16
2. शु० य० सं० 2/6
3. शु० य० सं० 2/6

प्रक्षिपति स्वाहाकृते '**ऊर्ध्वंनभसमि**[1]' ति मन्त्रेण। ततः स्रुचौ स्वस्थाने आसादयति। ततो ब्रह्मादिक्रमेण सर्वे यजमानाः सपत्नीकाश्चात्वाले मार्जयन्ते इदमाप इत्यनेन वचनात् पत्न्या अपि मन्त्रः, क्वचित्तूष्णीमिति यत्नात्। हिरण्यशकलस्यात्यन्ताभावे द्विर्द्विरुपस्ताराभिघारौ कार्यौ इत्याश्वलायनब्राह्मणे।

**पशुपुरोडाशनिर्वापः**

तत्र पूर्वं यजमान वाचं यच्छेति प्रैषः। पात्रासादनं शूर्पं कपालानि द्वादशसौर्ये, प्राजापत्यपक्षेऽष्टौ, कृष्णाजिनम्, उलूखलमुसलम्, पात्रीधान्यं, धृष्टिः, संयवनोदकम्, शृतावदानम्, पुराडाशपात्री, कर्मापवर्गा समिद्वा। ततः पात्रान्तरे प्रोक्षणीरुन्नीय शूर्पाग्निहोत्रहवण्योरादानादि ग्रहणं सादनान्तम्। इन्द्राग्निभ्यां जुष्टम्। पात्रान्तरे स्थिताः प्रोक्षणीः स्रुचि निनीय ब्रह्माणं पृष्ट्वा इन्द्राग्निभ्यां त्वां जुष्टम् इति हविः प्रोक्ष्य पात्राणि प्रोक्षति। निःशेषकरणम्।

ततः कृष्णाजिनादानाद्याप्त्योदकनिनयनान्तम्। कुक्कुटाहननवेद-बन्धाज्यनिर्वाप तदधिश्रयणानामभावः। ततः शृतावदानपुरोडाशपात्र्योः सम्मार्गः। सम्मार्जनतृणापासनं च। ततः पुरोडाशविभस्मीकरणाद्या-लम्भनान्तम्। प्राणदाने इन्द्राग्नी गच्छेति विशेषः। '**एत ॐ होतृमैत्रावरुणावि**' त्यामन्त्रणम्। शांख्यायनसूत्रात्।

ततो जुहूपभृतावादाय जुह्वामुपभृति चोपस्तीर्य पुरोडाशमवद्यन्मैत्रावरुणं प्रत्याह। इन्द्राग्निभ्यां पुरोडाशस्यानुब्रूहीति। ततो द्विरवदायोपरि सकृदभिघार्य अवदानयोः प्रत्यभिघारः। उत्थायातिक्रम्याश्राव्य मैत्रावरुणं प्रेष्यति। इन्द्राग्निभ्यां पुरोडाशं प्रेष्येति। इदमिन्द्राग्निभ्याम्। तत उपभृति यदवत्तं तज्जुह्वां समानीयाग्नयेऽनुब्रूहीति। अग्नये प्रेष्येति मैत्रावरुणं प्रेष्य वषट्कृते उत्तरतो जुहोति। इदमग्नये। एवं निर्गुणः स्विष्टकृद्यागः कर्तव्यः। उदकोपस्पर्शनम्। एत्य स्रुचोरासादनम्। नात्र सञ्चराभ्युक्षणम्। चतुर्धाकरणभागवर्जम्। सौर्यप्राजापत्यपक्षे भागपरिहरणान्तं सौर्यम्। मैत्रावरुणोऽप्यत्रेडां भक्षयति।

---

1. शु० य० सं० 6/16

ततो दक्षिणादानम्। तत्र पशुरसीति वा वरोऽसीति वाऽऽलम्भने विशेष **'ऊर्गसीत्यस्य'** स्थाने। अस्य पशोः समृद्ध्यर्थं पशुं दक्षिणां धेनुवरं वा ब्रह्मणे होत्रेऽध्वर्यवे मैत्रावरुणाय प्रतिप्रस्थात्रेऽग्नीधे च समविभागेनाहं सम्प्रददे। ब्रह्मन्यस्ते भाग इत्यादि। ब्राह्मणा अयं पशुः प्रतिगृह्णीत।

ततोऽनक्तयाऽसिधारया पशुविकर्तनं शमितुरेव नाध्वर्योः। हृदयादिमां-सान्यवखण्डयन् स्वधितिना पशुशरीराद् ग्रहणम्। हृदयमाम्रफलाकारं मांसम्। जिह्वा प्रसिद्धा। क्रोडं वक्षभुजयोरन्तरालमित्यर्थः। सव्यसस्थिपूर्वनडकमिति सव्यबाहोः पूर्वनडकं प्रथमा नलिका अंससन्निकृष्टा। पार्श्वे वामदक्षिणे त्रयोदशास्थिसम्बद्धे। कृष्णकालेयं पित्ताधाररूपं यकृत्। वृक्कौ पक्वाम्रफल-तुल्यौ कुक्षौ वर्तमानौ गोलकौ महदाम्रफलतुल्यौ। गुदमामांशशकलं रज्जुसदृशम्। दक्षिणा श्रोणिः दक्षिणस्य पश्चात्पादस्योपरि वर्तमानो मांसलः प्रदेशः कटिशब्दवाच्यः। एतान्येकादश–जौहवानि=जुहूसम्बन्धीनि प्रधानयागसाधनानीत्यर्थः। ततो दक्षिणसस्थिपूर्वनडकं दक्षिणबाहोः प्रथमा नलिका। गुदतृतीयाणिष्ठं गुदस्य सूक्ष्मः तृतीयो भागः। सव्या श्रोणिः सव्यस्य पश्चात्पादस्योपरि मांसलः प्रदेशः कटिशब्दवाच्यः। एतानि त्रीण्युपभृत्सम्बन्धीनि स्विष्टकृद्यागसाधनानि। गुदस्य वर्षिष्ठो भाग उपयड्ढोमार्थः। गुदस्य विभाग इदानीं न कार्यः। जुह्वामवदानकाले त्रिधा विभाज्यते। ततो वनिष्ठुः स्थूलान्त्रम्। जाघनी पशोः पुच्छम्। क्लोमं गलनाडिका। प्लीहं शुक्तिकाकारं मांसम्। अध्यूध्नी शतपुटः। पुरीततं हृदयस्य प्रच्छादकं मांसम्। एतानि क्लोमादीनि विकल्पेन गृह्णाति।

यदि पशुः कृशो भवति तदा यदवशिष्टमुदरमेदो वपाग्रहणकाले स्त्यानघृतसदृशं श्वेतं मांसं तद् गुदे आन्त्रमध्येऽवगूहेत। एवं हृदयादीनां ग्रहणं कर्तव्यम्। ततः शामित्रस्य पश्चादुत्करादुत्तरतो गर्तं खातयित्वा तस्मिन् गर्तमध्ये पशोः पुरीषं तूष्णीमवधाय तस्योपरि **'रक्षसां भाग[1]'** इति लोहितं प्रक्षिपति। इदं रक्षोभ्य इति त्यागः। उदकोपस्पर्शः।

---

1. शु० य० सं० 6/16

ततो '**द्यौरसी**[1]' ति शूलमादाय यजमानेऽन्वारब्धे शूले हृदयं प्रतृद्यानन्वारब्धः शामित्रे श्रपयति। शामित्रेऽग्नौ ताप्यमानेनैव। ततो **द्यौरसी**त्युखामादाय '**मातरिश्वन**[2]' इति शामित्रेऽग्नौ अधिश्रयति। ततो यजमानेनान्वारब्धायामुखायां हृदयादीनि मांसानि क्रमेण प्रक्षिपति। ततोऽन्वारब्धे उदकं प्रक्षिपति।

**शमित्रानुशासनम्**

ततः शमितारं शास्ति = शिक्षयति।'त्रिः प्रच्यावयतात्, त्रिः प्रच्युतस्य हृदयमुत्तमं कुरुताद्यत्वा पृच्छाच्छृतठ हविः शमिता ३ इति, श्रृतमित्येव ब्रूयान्न श्रृतं भगवो न श्रृतठ हीति।[3]' ततस्त्रिः प्रच्युते पशोस्त्रिरुत्कलिते शमिता हृदयं शूलान्निष्काश्योखोपरि स्थापयित्वा शूलमध्वर्यवे प्रयच्छति। अध्वर्युः शूलं भूमेर्व्यतिरिक्ते प्रदेशे स्थापयति।

ततो मांसेषु श्रृतेषु अध्वर्युर्जुह्वां पञ्चगृहीतशेषं पृषदाज्यं हृदयाभिघारण-योग्यं गृहीत्वा चात्वालोत्करावन्तरेण निष्क्रम्य पृच्छति। श्रृतठँ हविः शमितारिति त्रिरभिक्रम्य श्रृतमिति प्रोक्ते शमित्रा तद्देवानामित्युपांश्वध्वर्युराह।

ततः पुनः शमितारं प्रति निष्क्रम्य तथैव पृच्छति। पुनः श्रृतमिति प्रत्युक्ते तद् देवानामिति उपांशूक्तः पुनरपि शमितारमभिक्रम्य तथैव पृच्छति। श्रृतमिति प्रत्युक्ते तद्देवानामित्युपांशु अध्वर्युराह।

ततस्तेन पृषदाज्येनाध्वर्युः सर्वमांसानामुपरि स्थापितं हृदयं '**सं ते मन**[4]' इत्यभिघार्य तेनैव पृषदाज्येनावशिष्टेन सर्वं पशववदानान्युखास्थितान्य-भिघारयति। अथवा हृदयव्यतिरिक्तं सर्वमाज्यस्थाल्याः स्रुवेणाज्यं गृहीत्वा तेनाभिघारयति। उभयमप्येतत्समूलमत इच्छयाऽनुष्ठानम्। तत

1. शु० य० सं० 1/2
2. शु० य० सं० 1/2
3. का० श्रौ० सू० 6/8/1
4. शु० य० सं० 6/18

उखामुद्गुद्वास्य मांसानि निष्काश्य वंशपात्र्यादौ क्वचिद्विपुले पात्रे उदक्संस्थानि स्थापयति हृदयादिक्रमेण।

ततो वसां निष्काश्य पात्रान्तरे कृत्वा स्थापयति। ततः स्थाल्याज्येन हृदयादीनामेकादशसंख्यानां प्रत्येकं प्राणदानम्, '**इन्द्राग्नी गच्छेति**[1]' मन्त्रेण। वसायास्तूष्णीम्। ततः पशुमांसानि असिं चादाय चात्वालोत्करावन्तरेण गत्वा यूपाग्न्योरन्तरालेन मांसानि हृत्वा स्वयं सह हविष्कत्त्वात्तथैव गत्वा स्रुग्भ्यो दक्षिणप्रदेशे वेद्यां बर्हिषि हृदयादीनि प्रत्येकं '**प्रियेण धाम्नेति**[2]' सादयति। जाघनीं च मन्त्रेण।

ततो वसायास्तूष्णीं सादनम्। ततो जौहवानामेव प्रत्येकं जाघन्याश्च '**ध्रुवा असदन्**[3]' इत्यालम्भनम्। वसायास्तूष्णीम्। अङ्गभागावदानानां बर्हिषि स्थापनमात्रमेव नासदनालम्भौ। नात्मालम्भः कृतत्वात्।

ततो जुह्वामुपभृति वसाहोमहवन्यां प्राशित्रहरणे इडापात्र्यां चोपस्तीर्य जुह्वामुपभृति च हिरण्यावधानम्। ततो मनोतायै हविषोऽवदीयमानस्यानु- ब्रूहीति प्रैषो मैत्रावरुणम्प्रति।

ततः प्रतिप्रस्थाता स्तृतानां प्लक्षशाखानामुपरि मांसान्यवखण्डयति। हृदयादीनां जौहवानां प्रत्येकं मध्यात्पूर्वार्द्धाच्च द्विर्द्विरवदायाध्वर्योर्हस्ते समर्पयति। अध्वर्युर्जुह्वामवदधाति। गुदस्यावदानकाले विषमस्त्रेधा विभागः कर्तव्यः। प्रथमः स्थूलो महान् भागः। उपयद्धोमार्थः। द्वितीयो मध्यमो नातिस्थूलो नातिकृशः। स जुह्वां द्विधा कृत्वाऽवदेयः। तृतीयः स्थूलोऽपि अणिष्ठोऽतिकृशः। अङ्गेषु स्विष्टकृदवदानेषु स्थाप्यः।

एवं जुह्वामवदाय तत उपभृति दक्षिणसक्थिगुदतृतीयसव्यश्रोणीनां द्विर्द्विरवदानम्। गुदतृतीययोर्निःशेषयोरेवावदानम्। जुहूपभृतोः क्रमेण हिरण्यशकलावधानम्। ततो जुह्वां सकृदभिघारः। उपभृत्यपि सकृदेवाभिघारः। पञ्चावत्तिनां सर्वावदानेभ्यस्त्रिस्त्रिरवदानम्।

1. दे० या० प० पृ० 224
2. शु० य० सं० 2/6
3. शु० य० सं० 2/6

मध्यात्पूर्वार्द्धात्पश्चाच्च त्रिर्जमदग्नीनां पश्चात्तृतीयमिति वचनात् उपस्तरणवृद्ध्या अभिघारणवृद्ध्या वा पञ्चावत्तत्वं सम्पादनीयमिति शास्त्रदीपिकायाम्।

ततो **'रेडसी'ति**[1] वसाहोमहवन्यां यथाकथञ्चिद्वसां गृहीत्वा उपरि द्विरभिघार्य पार्श्वेनासिना वा वसां घृतञ्च मिश्रयति प्रयुतमिति। ततो जौहवेभ्यो हृदयादिभ्यः प्राशित्रावदानम्। तत्रस्थाभिघारः। ततो वसाशेषमिडा-पात्र्यामासिच्य तत्र हृदयं जिह्वां क्रोडं यकृत् वृक्कौ एतानि समग्राण्येव प्रक्षिपति। **'तद् हृदयं प्रास्यती**[2]' त्येवं समग्राणामेव प्राशनश्रवणात् वनिष्ठोरुपलक्षणार्थत्वात्। शाखान्तराच्चेच्छेषाण्यवदानान्यपि सर्वाणीडापात्र्यां निधेयानि। वनिष्ठुव्यतिरिक्तानां द्विर्दिरवदानं वा कार्यं शाखान्तरेण। इडामवद्यतीति श्रवणात्। उपरिष्टात् द्विरभिघारः।

ततो जाघनीं पत्नीसंयाजार्थं गुदत उपयद्धोमार्थं क्वचित् सुगुप्ते देशे निधाय **'ऐन्द्रः प्राण**[3]' इति अवशिष्टानि मांसानि अवमृशति अनपघ्नन्। त्वगादिपशुशरीरं तदभिमृशति इति हरिस्वामिनः। एषैव मांसानां प्रतिपत्तिः।

ततस्तत्रोपविष्ट एवेन्द्राग्निभ्यां छागस्य हविषोऽनुब्रूहीति मैत्रावरुणं प्रेष्यति। तत उत्थायातिक्रम्याश्राव्येन्द्राग्निभ्यां छागस्य हविः प्रेष्येति मैत्रावरुणं प्रेष्यति।

**वसाहोमः**

ततो याज्याया अर्द्धर्चान्ते प्रतिप्रस्थातोत्तरत उपविश्य वसैकदेशं जुहोति **'घृतं घृतपावान**[4]' इति मन्त्रेण। इदमन्तरिक्षाय। ततोऽध्वर्युर्जुह्वा-वषट्कृते जुह्ववदानानि जुहोति, इदमिन्द्राग्निभ्याम्।

ततः प्रदक्षिणमावृत्य जुह्वा पृषदाज्यस्थाल्याः पृषदाज्यं गृह्णन्

1. शु० य० सं० 6/18
2. दे० प० पृ० 225
3. शु० य० सं० 6/20
4. शु० य० सं० 6/19

वनस्पतयेऽनुब्रूहीति मैत्रावरुणं प्रेष्यति। इतरथावृत्तिः। आश्राव्य वनस्पतये प्रेष्येति मैत्रावरुणं प्रेष्यति। इदं वनस्पतय इत्युक्ते उत्तरतो जुहोति। वनस्पतिः स्विष्टकृद्विकार इति मध्यमस्वरेण प्रैषाद्युच्चारणम्।

तत उपभृतोऽवदानानि जुह्वामानयमानोऽग्नये स्विष्टकृतेऽनुब्रूहीति मैत्रावरुणं प्रेष्यति। तत आश्राव्याग्नये स्विष्टकृते प्रेष्यति। इदमग्नये स्विष्टकृते। उत्तरार्द्धे होमः। उदकस्पर्शः। ततः स्रुचौ सव्ये कृत्वोपविश्य उत्तरतो वसाहोमहवन्या वसाशेषेण दिशो व्याघारयति दिशः स्वाहा, अग्नेः पूर्वभागे, इदं दिग्भ्यः। प्रदिशः स्वाहा, दक्षिणतः, उत्तरतः, इदं विदिग्भ्यः। उद्दिशः स्वाहा, मध्ये, इदमुद्दिग्भ्यः। दिग्भ्यः स्वाहा, पुनः पूर्वार्द्धे, सर्वस्य वसाशेषस्य होमः।[1] ततः प्रत्यागत्य स्वस्थाने स्रुचोः सादनम्।

### पशुसम्मर्शनम् इडाभक्षणञ्च

यत्र वा '**ऐन्द्रः प्राण**[2]' इति पशुसम्मर्शनम्। सञ्चराभ्युक्षणम्। प्राशित्रसमर्पणम्। उदकोपस्पर्शनम्। इडासमर्पणम्। दक्षिणातिक्रमणम्। इडां प्रतिगृह्य पर्वाञ्जनम्। अवान्तरेडाऽवदानम्। पुनरिडासमर्पणम्। भागसमर्पणं यजमानः करोति। क्लोमं ब्रह्मणे, अध्यूध्नीं होत्रे, पुरीततमध्वर्यवे, वनिष्ठुमग्नीधे, प्लीहं यजमानायाध्वर्युः समर्पयति। तत इडाभक्षः। क्लोमादीनां च यथास्वम्। मैत्रावरुणप्रतिप्रस्थातारौ इडां भक्षयतः। ततः सर्वेषां ब्रह्मादिक्रमेण मार्जनम्। पवित्रप्रतिपत्तिः।

तत उल्मुके समस्यानुयाजार्थं परिशेषितमिध्मकाष्ठमादाय अग्नीदौपयजानङ्गारानाहरेत्यग्नीधं प्रेष्यति। तत उपयष्टरूपसीदेति प्रतिप्रस्थातारम्, ततो ब्रह्मन् प्रस्थास्यामीति ब्रह्माणम्, ततः समिधमाधायाग्निमग्नीत् सम्मृड्ढि इत्यग्नीधम्। ततोऽग्नीत् पूर्वं शामित्राद् बहून् अङ्गारान् ज्वलत आहृत्योत्तरस्यां वेदिश्रोण्यां परिसमूहनादिसंस्कृतायां निवपति।

---

1. शु० य० सं० 6/19
2. शु० य० सं० 6/20

**उपयद्धोमः**

ततः समिधमाधायाग्निं संमार्ष्टि। प्रतिप्रस्थाता गुदमादाय श्रोणिसमीपे उपयद्धोमार्थमुपविशति। ततोऽनुयाजेषु हूयमानेषु गुदखण्डमेकादशधा छित्वा छित्वा प्रतिवषट्कारमेकैकं हस्तेन जुहोति '**समुद्रं गच्छेति**[1]' प्रतिमन्त्रम्। तेषामनुयाजत्यागानन्तरं त्यागाः। इदं समुद्राय। इदमन्तरिक्षाय। इदं देवाय सवित्रे। इदं मित्रावरुणाभ्याम्। इदमहोरात्राभ्याम्। इदं छन्दोभ्यः। इदं द्यावापृथिवीभ्याम्। इदं यज्ञाय। इदं सोमाय। इदं दिव्याय नभसे। इदमग्नये वैश्वानराय। ततो '**मनो म**[2]' इति मुखं विमृष्टे उपस्पृशतीत्यर्थः।

**एकादशानुयाजाः**

अध्वर्युः पृषदाज्योपभृतः पृषदाज्यं समानीय जुहूपृषदाज्योपभृतावादायातिक्रम्याश्राव्य देवेभ्यः प्रेष्येति मैत्रावरुणं प्रेष्यति। एकादशानुयाजाः। चतुर्थसप्तमदशमेषु समानयनम्। प्रथमेऽनुयाजे इदं देवाय बर्हिषे। द्वितीये इदं देवीभ्यो द्वार्भ्यः। तृतीये इदं देवीभ्यामुषासानक्ताभ्याम्। चतुर्थे इदं देवीभ्यां जोष्ट्रीभ्याम्। पञ्चमे इदं देवीभ्यामूर्जाहुतीभ्याम्। षष्ठे इदं देवीभ्यां दैव्याभ्यां होतृभ्याम्। सप्तमे इदं देवीभ्यस्तिसृभ्यस्तिसृभ्यो देवीभ्यः। अष्टमे इदं देवाय नराशंसाय। नवमे इदं देवाय वनस्पतये। दशमे इदं देवाय बर्हिषे। एकादशे इदं देवायाग्नये स्विष्टकृते।

प्रथमस्य वह्नेः पूर्वभागे होमः। द्विप्रभृतीनां नराशंसपर्यन्तानामेकस्मिन् स्थाने मध्ये होमः। ततस्त्रयाणामेकत्र पश्चाद्भागे होमः। तत उपस्पृश्योत्तरत उपविश्य समानीय देवेभ्यः स्वाहेति प्राचीमाहुतिं जुहोति।

यूपोत्पाटनम्। ततो '**दिवं ते धूम**[3]' इति जुह्वा स्वरूं जुहोति। इदं स्वरवे इति त्यागः। ततः स्रुचावासाद्याज्योपभृत उपरि पृषदाज्योपभृतं निधाय

---

1. शु० य० सं० 6/21
2. शु० य० सं० 6/21
3. शु० य० सं० 6/21

वसाहोमहवनीं जुह्वोरुपरि निधाय च व्यूहयति। '**इन्द्राग्न्योर्वनस्पते-रुज्जितिमि**[1]' ति जुह्वाः। "**इन्द्राग्नी वनस्पतिस्तमपनुदन्वि**"[2] ति उपभृतः। ततो जुह्वावुपभृतौ चाभ्युक्ष्य परिध्यञ्जनम्। 'सूक्तवाकाय सूक्ता प्रैष्ये'ति मैत्रावरुणं प्रति सूक्तवाकप्रैषः।

ततः प्रस्तरादानादि धुरिनिधानान्ते विशेषः। प्रस्तरमध्यस्योप-भृद्द्वयाञ्जनं, सर्वाभिः स्रुग्भिः संस्रवहोमः।'**घृताचीस्थोधुर्यौ पात सुम्नास्थ सुम्ने माधत्ते**'[3] त्यूहः। ततो वेद्यालम्भः।

**पत्नीसंयाजः**

ततो वज्रं होता, स्रुगसी अध्वर्युः, जाघनीमग्नीदादाय पत्नीसंयाजार्थं गार्हपत्यं गच्छन्ति। तत्र सोमयागे त्वष्टृयागे च जाघन्या उपरिभागादेव चतुश्चतुरवदेयम्। तृतीययागे उत्तानाया जाघन्या अन्तः प्रदेशाच्चतुरवदेयम्। इडाऽपि तत एवावदेया। पुनर्जाघनीं पर्यावर्त्य अधोमुखीं तत्रोपरिभागादेव गृहपतियागार्थं षडवत्तार्थं चावदेयम्। पत्नीसंयाजेषु नोपस्ताराभिघारौ। जाघन्या एवावदानचतुष्टयस्य प्रतियागं ग्रहणम्। पशोः पुच्छेन पत्नीसंयाजान् कुर्यादिति कर्कः।

तत उत्तानाया इडां पञ्चावत्तां कृत्वा समर्प्य प्रतिगृह्य पञ्चावत्तामेवावान्तरेडां समर्पयेत्। नात्र पर्वाञ्जनम् इडाज्यत एव तस्य विधानात्, इडायाञ्चाज्याभावात्। अन्वारम्भः। भक्षः। मार्जनम्। नादब्धाहुतिः। न शंयोर्वाकः। अदब्धाहुत्य-भावेऽपि शंयोर्वाको भवतीति याज्ञिकाः। सव्येनावृत्य दक्षिणाग्निहोमः। तत्रेदमिन्द्राग्निभ्यामिति तृतीयस्य त्यागः। ततो वेदयोक्त्रविमोकः। आवेदेः स्तरणम्।

**समिष्टयजुहोमः**

त्रीणि समिष्टयजूंषि ध्रौवाज्येन ध्रुवयैव विग्राहं जुहोति। '**देवागातु**

1. शु० य० सं० 2/15
2. शु० य० सं० 2/15
3. शु० य० सं० 2/19

**विद**[1]' इति प्रथमम्, इदं वाताय। '**यज्ञ यज्ञम्**[2]' इति द्वितीयम्, इदं यज्ञाय। '**एष ते यज्ञो यज्ञपत**[3]' इति तृतीयम्, इदं यज्ञपतये। अथवा '**यां आवह**[4]' इत्यादिभिः त्रीणि समिष्टयजूंषि जुहोति। अत्र इदमग्नय इति द्वौ त्यागौ। तृतीयः प्रकृतिवत्। ततो बर्हिर्होमः।

## हृदयशूलमुद्गूहनम्

'**बर्हिर्हुत्वाऽपो गच्छन्ति हृदयशूलमादाय**[5]' इति कात्यायनवचनात् बर्हिर्होमानन्तरं हृदयशूलमादाय तडागादिस्थमुदकं प्रति सर्वे ऋत्विजः, पत्नी, यजमानश्च गच्छन्ति। तत्र गत्वाऽध्वर्युरभ्यवेत्यापः प्रविश्य शुष्कार्द्रसन्धौ '**शुगसि तमि**[6]' ति मन्त्रेण मुञ्चेत्यन्तेन हृदशूलमुपगूहति भूमौ प्रवेशयतीत्यर्थः। ततः सर्वे '**सुमित्रिया न**[7]' इत्यभिमन्त्रयन्ते उपस्पृशन्ति वा। तडागादिगमने ग्लानिश्चेत् यूपात्पूर्वदेशे उदपात्रं निनीय तत्र शुष्कार्द्रसन्धौ शूलमुपगूहेत्। तासामेवापामभिमन्त्रणमुपस्पर्शनं वा।

ततो यजमानः प्रत्यागत्य तीर्थेन गत्वा देवानां **समिदसीति** आहवनीये समिधमादधाति। पत्नी च गार्हपत्ये तूष्णीं समिधमादधाति। ततः प्रणीता विमोकः। राक्षसभागः। पूर्णपात्रनिनयनाद्याहवनीयोपस्थानान्तरम्। अत्र वा शूलदानादि समिदाधानान्तः शूलावभृथः।

तत उत्तरवेदेः पश्चात् स्थित्वा व्रतं विसृजेत्। ततो ब्रह्मयजमानौ मध्यमाहवनीयसमीप उपविशतः। ततोऽध्वर्युराज्यं संस्कृत्य चतुर्गृहीतं गृहीत्वा समिधमादाय गत्वा मध्यमाहवनीयं परिस्तीर्य समिधमाधाय**योरु विष्णविति** जुहोति इदं विष्णवे।

---

1. शु० य० सं० 2/21
2. शु० य० सं० 8/22
3. शु० य० सं० 8/22
4. शु० य० सं० 8/19
5. का० श्रौ० सू० 6/10/1
6. का० श्रौ० सू० 6/10/3
7. शु० य० सं० 6/22

ततो यजमानोऽध्वर्यवे यस्य दाने शक्तिर्भवति तद् द्रव्यमिच्छाप्रमाणं ददाति। अस्याहुतेः समृद्ध्यर्थमिदं द्रव्यं दक्षिणामध्वर्यो तुभ्यमहं सम्प्रददे। नित्यधारणपक्षे मध्यमाहवनीयदक्षिणाग्न्योर्धारणम्। इतरो लौकिकः। अथवा मध्यमाहवनीयं समारोप्य निर्मथ्य तत्रैतामाहुतिं जुहुयात्। होमान्ते स लौकिकः।

ततः प्राजापत्यपक्षे सौर्यपक्षे च ब्रह्मयजमानयोर्भागप्राशनम्। ततो ब्राह्मणतर्पणप्रैषः। एकस्य तर्पणम्। ततो ब्रह्मा **नमः कृताये**ति होमसमिदाधानोपस्थानानामन्यतमं करोति। ततो जलमध्ये सुप्रोक्षितादि कृत्वा शतब्राह्मणभोजनसङ्कल्पं यजमानः करोति। अस्य निरूढपशोः समृद्ध्यर्थं यथासम्पन्नेनान्नेन तृप्तिपर्यन्तेन भोजनपर्याप्तेन शतं ब्राह्मणानहं भोजयामीति।

सौर्यपशुपक्षे – पशुपुरोडाशोऽष्टाकपालः प्राजापत्यपशुपक्षे च। प्राजापत्य उपांशु। अन्यत्प्रैषादिकमूलम्। ऐन्द्राग्नादीनामादिविकल्प इति केचित्। नेत्यपरे।

## पशुयागविषये म० म० समीक्षाचक्रवर्ति पं० मधुसूदन ओझामहोदयानां विचाराः

पशुरिति पशुबन्ध इति च तुल्यो व्यवहारः। स चतुर्धा – निरूढ-पशुबन्धः, अग्नीषोमीयपशुबन्धः, सौत्रामणीपशुबन्धः, चयनपशुबन्धश्चेति। प्रकारान्तरेण पशुबन्धो द्वेधा – हविर्यज्ञविधः, सवविधश्च। तत्र यस्मिन् व्रतमुपैति, अपः प्रणयति, पूर्णपात्रं निनयति, विष्णुक्रमान् क्रमति, यत्र वाज्यभागौ भवतः स हविर्यज्ञविधः। स निरूढपशुबन्धः। अथ यत्रैतानि न क्रियन्ते स सवविधः। सोऽग्नीषोमीयः, स सौत्रामणीपशुः। अथ पुनः प्रकारान्तरेण स पशुबन्धो द्वेधा। पुरुषार्थः क्रत्वर्थश्च। तत्राद्यः स्वतन्त्रो विधीयते निरूढपशुबन्धो नाम। होता, अध्वर्युः, उद्गाता, ब्रह्मा, प्रतिप्रस्थाता, प्रशास्ता चेति षडत्र ऋत्विजो भवन्ति। प्राकृतवेदिवत् पाशुकवेदिश्च। यूपसम्पादनञ्च। पशुरत्र छाग एव जातदन्तः स्यादव्यङ्गः। अथ

शृङ्गाश्छिन्नकर्णोऽन्धो भग्नदन्तो वामनश्छिन्नपुच्छः शिपिविष्टौ वधिरः कच्छनियुक्त एकखुरश्च पशुरत्र प्रतिषिद्धः। बर्हिषि प्रतीचीनशिरसमुदीचीन-पादं पशुं शाययित्वा शमितारः संज्ञपयन्ति। पशोर्मारणं संज्ञपनम्। संज्ञप्यमानं यजमानादयो नावेक्षन्ते। ततो वपोत्खेदनम्। सर्वोदरव्यापी पोलिकाकारोऽतिश्वेतो वपा। शामित्रशालायां शामित्रेऽग्नौ पशुकुम्भ्यां पशुपाकः। वपा, पशुपुरोडाशः हवींषि। पश्वङ्गयागः। वनस्पतियागः। उपयाजः। पशुकाग्नेयेष्टिः। पाशुकाग्नावैष्णवेष्टिः। प्रयाजाः। अनुयाजाः। इत्येवमादीन्यत्र कर्म्माणि भवन्ति। सोऽयं सद्यस्कालपशुप्रकारः। तस्य चोत्तरायणं शुक्लपक्षो देवनक्षत्रं रेवती वाऽमावास्या यजनीयदिनं वाऽनुष्ठानकालः। दर्शपौर्णमासयामकालो यजनीयदिनमुच्यते। अथोक्तं मानव श्रौतसूत्रे –'**षट्सु षट्सु मासेषु पशुना यजेत, संवत्सरे संवत्सरे वा।। नैनमनीजानं संवत्सरोऽतीयात्। यद्यतीयान्न मांसमश्नीयादापशुबन्धात्।**' इति सद्यस्कालो निरूढपशुबन्धः।

अथ क्रत्वर्थः पशुबन्धस्त्रेधा–एकपशुश्च, त्रिपशुश्च, पञ्चपशुश्चेति। तत्रैकपशुरग्नीषोमीयः पशुबन्धोऽग्निष्टोमाङ्गम्। ऐन्द्रपशु-त्रिपशु-वायोधस-पशुभिः क्रियमाणायां सौत्रामण्यां त्रिपशुः क्रियते। सौत्रामणीपशुबन्धः। पञ्चपशुस्त्वग्निचित्याधर्मः। स चयनपशुबन्धः। अन्येष्वपि यज्ञेषु इष्टिवत् पशवोऽङ्गानि भवन्ति ते तत्र तत्रापेक्ष्याः। इति यज्ञमधुसूदने।

## अथ देवयाज्ञिकमतानुसारं दर्विहोमानां धर्मा लिख्यन्ते

दर्विहोमेषु शतरुद्रियादिषु तूष्णीं पौर्णमासधर्मा भवन्ति। तत्र चैकस्मिन्नेवाग्नौ आहवनीये तत्स्थानापन्ने परिश्रिदादौ वा होमो न गार्हपत्ये दक्षिणाग्नौ वा। हविः श्रपणप्रतपनादयः संस्कारास्तु गार्हपत्ये कर्तव्याः। तत्र प्रयाजानामनुयाजानामिध्मकाष्ठानां स्विष्टकृदिडाप्रस्तरहोमानां चाभावः। उत्तराघाराज्यभागसंस्रवबर्हिरादयो होमाश्चतुर्थ्यन्तं देवतापदमुच्चार्य स्वाहाकारेण कर्त्तव्याः। एवमग्न्यन्वाधानादारभ्य कर्मापवर्गान्तं मन्त्ररहितं सर्वं कर्म तेषु भवति प्रतिषिद्धवर्जम्।

ये दर्विहोमाः परतन्त्र उक्ताः यथा वाजपेये वाजप्रसवीयहोमः, साकमेधे पूर्णादर्विहोमः सान्तपनीयातन्त्रमध्यपतितः, पक्षे सौत्रामण्यां त्रिपशुषु पयोहोमादयस्ते होममात्रा भवन्ति। तेष्वग्न्यन्वाधानाद्यारादुपकारकमङ्गजातं न भवति। सन्निपत्योपकारकन्तु द्रव्यसंस्कारादि भवत्येव। यथा वाजपेये वाजप्रसवीयहोमे ओषधीनामासादनप्रोक्षणादि पयसश्च वत्सापाकरणादि इति जुहोति धर्माः।

अथ पाकयज्ञेषु स्मार्तेषु पक्षादिश्रवणाकर्मादिषु स्रुवादौ होमार्थमवत्तस्य घृतचर्वादेः सर्वस्य होमो न कर्त्तव्यः। किन्तु किञ्चिदवशिष्य प्रत्याहुति पात्रान्तरे स्थापनीयम्। ततस्तत्रोपदिष्टान् सर्वान् होमान् कृत्वा अनन्तरमेव तस्य हुतशेषस्य प्रत्याहुति पात्रान्तरे स्थापितस्य होमकर्त्रा प्राशनं कर्त्तव्यम्। निरूढपशुषु अग्नीषोमीयात् मते सवनीयानूबन्ध्यनिरूढेषु त्रिष्वेव पशुष्वग्नीषोमीयधर्माः। इतरेषु चातुर्मास्यादिपशुव्यतिरिक्तेषु निरूढधर्मा इति।

अथ प्रसङ्गात् स्मार्तपशुषु केचित् धर्मा उच्यन्ते। यूपस्थाने पशुनियोजनं शाखायां भवति। वपाहोमानन्तरं हृदयादीनि त्रीण्येवावदानानि पशोर्गृह्णाति न सर्वाणि। अथवा हृदयादीनि पञ्चैव गृह्णाति। अनयोः पक्षयोः शेषादेवावदाय स्विष्टकृद्धोमः कर्त्तव्यः। अथवा सर्वाण्यपि पश्ववदानानि गृह्णाति। अवदानैः सहैव पशुपुरोडाशस्थाने स्थालीपाकं श्रपयित्वा तेन सह पञ्चावदानानां प्रदानं भवति।

सर्वेषु स्मार्तेषु पाकयज्ञेषु पूर्णपात्रो दक्षिणा भवति वरो वा। पूर्णपात्रलक्षणमाह कात्यायनः–

**'यावता बहुभोक्तुस्तु तृप्तिः पूर्णेन विद्यते।**

**नाबराद्धर्यमतः कुर्यात्पूर्णपात्रमिति स्थितिः।।' इति।**

वरशब्देन यस्मै दीयते तदभिलषितं यत् यजमानेन दातुं शक्यो धान्यहिरण्यवस्त्रगवादिकं तदभिधीयते। भर्तृयज्ञाचार्यस्तु – दर्विहोमाः स्मार्त्ताः पाकयज्ञाः पक्षादिप्रभृतय इति स्वभाष्ये व्याख्यातवन्तः। अत एव तेषां मते स्मार्तेषु पाकयज्ञेषु देवतोद्देशेन हविर्ग्रहणम्, इध्मावेदिप्रोक्षणं बर्हिः प्रोक्षणं,

स्तरणादिकञ्च दर्शपूर्णमासधर्मत्वेन तत्क्रियमाणं समूलं भवति। स्रुचा होमश्च प्राप्नोति। अन्यदपि वेदिमानपूर्णपात्रादिकमधिकं प्राप्नोति यत् पाकयज्ञेषु कथमपि न भवतीति। अत एव विदुः – जैमिनिमते सर्वाः शतरूद्रियजुहोतयो अपूर्वा एव भवन्ति न दर्शपूर्णमासधर्मकाः।

## अथ तृतीयोऽध्यायः

# ( क ) विकृतियज्ञाः ( विकृतिलक्षणम् )

श्रुतिप्रतिपादिताः ये यज्ञाः ते श्रौतयागा इत्युच्यन्ते। श्रौतयागानां प्रकृतिविकृतिरूपं भेदद्वयं मुख्यम्। तयोर्भेदयोः पूर्वाध्यायेषु प्रकृतियज्ञ-विषयकं विवरणं प्रस्तुतं प्रतिपादितञ्चेदानीमिह विकृतियज्ञानां लक्षणं क्रियते। विकृतियागस्य लक्षणं कुर्वता। मीमांसकैरेवमुक्तम्-

'येषु यागेषु तत्तत्कर्मोपयोगी समस्तः क्रियाकलापो न पठ्यते, कर्मणः पूर्त्यर्थं च य अन्यतः (= प्रकृतेः) क्रियाकलापान् गृह्णन्ति ते विकृतियागा इच्युच्यन्ते। यथा – दीक्षणीयेष्टिः, दाक्षायणेष्टिः, मित्रविन्देष्टि इत्यादयः।'

### अथ महाप्रकरणम्

मीमांसान्यायप्रकाशकारेण श्रीमदापदेवेनोक्तं – '**यत्र न समग्राङ्गोपदेशः सा विकृतिः**, यथा–सौर्यादिः।[1]' अर्थात् '**सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकामः**[2]' इति विहितेष्टिस्सौर्येष्टिः। यत्र च भावनापेक्षिताङ्गपौष्कल्यं विधायक- वाक्याम्नानं सा विकृतिरित्यर्थः। तत्र च यान्यपूर्वाण्यङ्गानि पठ्यन्ते उपहोमादीनि तेषां न प्रकरणं विनियोजकम्। तत्र यद्यपि तेषां किं भावयेदित्य-स्त्याकाङ्क्षा, तथापि प्रधानस्य च कथंभावाकाङ्क्षास्ति, प्राकृतैरेवाङ्गैर्निरा-काङ्क्षत्वात्। न च प्राकृतानामङ्गानामत्रापठितत्वेनाप्रत्यक्षत्वाद्वैकृतानां तु पठितत्वेन प्रत्यक्षत्वात्तैरेवाकाङ्क्षोपशम इति वाच्यम्। तेषां पठितत्वेऽपि अक्लृप्तोपकारकत्वेन झटित्याकाङ्क्षोपशमनेऽसामर्थ्यात्, प्राकृतानां तु क्लृप्तोपकारकत्वेन तच्छमने सामर्थ्यात्।

---

1. मी० न्या० प्रकाशे 53 पृष्ठे
2. तत्रैव टीकायाम्

न चात्र तेषामुपस्थापकाभावः, उपमितिलक्षणप्रमाणेन तेषामुपस्थितत्वात्। सौर्यवाक्ये हि दृष्टे औषधद्रव्यकत्वेन एकदैवत्यकत्वेन च सादृश्येन आग्नेयवाक्यमुपमीयते, गवयदर्शनाद्गोरुपमानवत्। तस्मिंश्चोपमिते तेन तदर्थो ज्ञायते। सा त्र्यंशा भावना। तत्र सौर्यवाक्ये भावनायाः भाव्यकरणयोः सत्वात् इतिकर्तव्यताकाङ्क्षायामुपकारपृष्ठभावेनाग्नेयेतिकर्तव्यताऽतिदिश्यते - सौर्ययागेन ब्रह्मवर्चसं भावयेदाग्नेयवदुपकृत्येति। तथा च तयैवाकांक्षोपशमान्न विकृतेः प्रकरणमस्ति। अन्यतराकांक्षारूपस्थानादेव चापूर्वाङ्गग्रहणम्।

न च प्राकृताङ्गग्रहणमेव विकृतौ प्रकरणात् किं न स्यादिति वाच्यम्। तेषामपि प्रकृत्युपकारकतयाऽऽकाङ्क्षोपशमात्। आशङ्कामिमां निरूपयन्नाह- प्रमाणबलाबलात् प्रमाणस्वरूपपर्यालोचनायां यद्यपि स्थानापेक्षया प्रकरणं प्रबलं, तथापि प्रमेयस्वरूपपर्यालोचनायां प्राकृतानामङ्गानां क्लृप्तोपकारकत्वेन स्वतः प्राबल्यात् तेषामेव प्रथमं सम्बन्धो युक्त इति भावः। नात्र क्लृप्तोपकारकत्वेन कल्प्योपकारकत्वेन वा प्रयोजनम्, किन्तु विकृतिः पदार्थान् परमाकाङ्क्षति। आकाङ्क्षा च सन्निहितैरेव शाम्यतीति कथं प्राकृताङ्गसम्बन्धः? इत्यत आह - विकृतेरिति। न पदार्थमात्राणामिति। स्यादेवं यदि पदार्थत्वरूपेण पदार्थानामाकाङ्क्षा, न त्वेतदस्ति; किन्तु उपकारजनकत्वेन, तच्च प्राकृतानामेव पूर्वं प्रकृतौ कृतकार्यतया क्लृप्तमिति तेषामेव प्रथमं सम्बन्ध इत्यर्थः। विकृतौ प्रकरणस्याविनियोजकत्वमुपसंहरति- '**ततश्च न विकृतौ प्रकरणं विनियोजकमि**'ति।[1] न सर्वथा विकृतौ न प्रकरणं विनियोजकं, किन्तु विकृतावपि यत् प्राकृताङ्गानुवादेन विधीयते तदपि प्रकरणेन गृह्यते। एवञ्च प्रकृतौ प्रकृताङ्गानुवादेन विहिताङ्गविषये विकृतौ च प्रकरणं विनियोजकं भवतीति सिद्धम्। यथा - '**औदुम्बरो यूपो भवति।**'[2] इति यूपानुवादेन औदुम्बरत्वम्, तत्प्रकरणाद्गृह्यते। यत औदुम्बर

---

1. मी० न्या० प्र० पृ० 55
2. मी० न्या० प्र० पृ० 55

उदुम्बरवृक्षीयकाष्ठनिर्मितः। **'सौमापौष्णं त्रैतमालभेत् पशुकामः[1]'** इति वाक्यविहितकाम्यपशुयागसन्निधौ श्रुतमिदम्।

ननु न प्रकरणाद् गृह्यते अक्रियात्वात्। क्रियाया एव प्रकरण-ग्राह्यत्वादिति चेत् सत्यम्। तथापि तु तावद्विधीयमानस्यौदुम्बरत्वस्यास्त्येवा-काङ्क्षा किं भावयेदिति। न च यूपानुवादेन तस्य विधीयमानत्वाद्यूपस्य चादृष्टरूपत्वात्तेनैवौदुम्बरत्वस्य नैराकाङ्क्ष्यम्, आहवनीयेनेवाधानस्येति वाच्यम्। यूपस्य केवलादृष्टरूपत्वाभावात् तस्य हि तद्रूपत्वे खादिरत्वादिकं केवलादृष्टार्थः स्यात्। न च तत्संभवति। तथा सति खदिराभावे प्रतिनिधित्वेन कदरोपादानं न स्यात्, अदृष्टार्थस्य प्रतिनिध्यभावात्; हि खदिरजन्यमदृष्टं कदरेण क्रियत इत्यत्र प्रमाणमस्ति। अत एव नादृष्टार्थानां प्रतिनिधिः। तदुक्तम्–

**'न देवताग्निशब्दक्रियमन्यार्थत्वात्' इति।[2]**

अन्यार्थत्वात् अदृष्टार्थत्वात्। प्रतिनिधित्वेन चोपादानं कदरादेरुक्तं ग्रन्थेषु। तस्मान्न यूपस्य केवलादृष्टरूपत्वम् अपि तु दृष्टादृष्टगणो संस्काररूपो यूप इति सांप्रदायिकाः। एवं चौदुम्बरत्वस्य न यूपमात्रेण नैराकाङ्क्ष्यम्, दृष्टसंस्कारस्य प्रकारान्तरेणापि सम्भवात्। अतश्चास्त्यौदुम्बरत्वस्याकाङ्क्षा। सा च तदा शाम्यति यदोपकारास्तत्पृष्ठभावेन च पदार्था अन्वीयन्ते। न तूपकारमात्रान्वयेन शाम्यति। अतश्च यथेन्द्रियभावनायाः करणाकाङ्क्षा दध्नः करणत्वेनान्वये जाते सिद्धस्य करणत्वानुपपत्त्या होमस्याश्रयत्वेनान्वयं यावदनुवर्तते, न तु दध्यन्वयमात्रेण निवर्तते; आश्रयत्वेन च गृह्यमाणो होमः करणाकाङ्क्ष्यैव गृह्यत इत्युच्यते, न त्वाश्रयाकांक्षा नाम चतुर्थ्यस्ति, एवं विकृतेः कथंभावाकाङ्क्षा नोपकारान्वयमात्रेण निवर्तते, उपकारपृष्ठभावेन यावत्पदार्थान्वयमनुवर्तते। अतश्चोपकारपृष्ठभावेन गृह्यमाणाः पदार्थाः कथंभावाकाङ्क्ष्यैव गृह्यन्ते। तत्र प्राकृताः कथंभावाकांक्षया गृह्यमाणा अपि न प्रकरणग्राह्याः प्रत्युपकारकतया तेषामाकांक्षाभावात्। औदुम्बरत्वादयस्तु

1. मी० न्या० प्र० पृ० 56
2. मी० न्या० प्र० पृ० 56 तमे पृष्ठे

अन्यानुपकारकतया साकाङ्क्षाः पशुनियोजनयूपपृष्ठभावेन यावत्खादिरत्वमायाति तावद्विधीयन्ते इति युक्तं तेषां प्रकरणाद् ग्रहणम्, उभयाकाङ्क्षासत्वात्। यदि हि यूपपृष्ठभावेन खादिरत्वं विहितं स्यात्, ततो विकृतेराकाङ्क्षाभावादौदुम्बरत्वं न प्रकरणग्राह्यं स्यात्। न चैतदस्ति। चोदकस्य खादिरत्वाविषयत्वात्। एवं च खादिरत्वस्यातिदेशवाक्येनासंस्पर्शात् विकृतौ विध्यभावेन आकांक्षाया अनिवृत्तेः युक्तमौदुम्बरत्वस्य प्रकरणग्राह्यत्वमिति भावः।

खादिरत्वस्य चोदकाविषयत्वे तद्बाधस्याप्राप्तबाधत्वं शङ्कते – ननु यदि यावत्खादिरत्वमायाति तावदेवौदुम्बरत्वं विधीयते, तदा तेन खादिरत्वबाधोऽप्राप्तबाधः स्यात्, तार्तीयबाधवत्। तथाहि– बाधो द्विविधः– अप्राप्तबाधः, प्राप्तबाधश्चेति। तत्र तृतीयाध्यायगोचरो तार्तीयो बाधो अप्राप्तबाधः। तयोर्मध्ये कथं तार्तीय बाधस्याप्राप्तबाधत्वम्? अत आह– तत्र हि यावद् दुर्बलेन प्रमाणेन विनियोगः कर्तुमारभ्यते तावतेव प्रबलप्रमाणेन विनियोगः क्रियते इति तद्बोधितेनेतरबाधोऽप्राप्तबाधः, दुर्बलप्रमाणस्याप्रवृत्तत्वात्। अर्थात् दुर्बलप्रमाणबोधितस्य विनियोगदशामप्राप्तस्यैव बाधात् अप्राप्तबाध इति व्यवहारः। कथमप्राप्तता? अत आह – दुर्बलेति–

**'निः श्रेण्यारोहणप्राप्यं प्राप्तिमात्रोपपादि च।**
**एकमेव फलं प्राप्तुमुभावारोहतो यदा।।**
**एकस्सोपानपङ्क्तिस्थो भूम्स्थिश्चापरस्तयोः।**
**उभयोश्च जवस्तुल्यः प्रतिबन्धश्च नान्तरा।।**
**विरोधिनोस्तदैको हि तत्फलं प्राप्नुयात्तयोः।**
**प्रथमेन गृहीतेऽस्मिन् पश्चिमोऽवतरेन्मुधा।।[1]'**

इत्यनेन प्रकारेण स्वरूपतः सत एवोत्तरोत्तरस्य स्व–स्वविषयविनियोगे आकांक्षारूपकल्पनामूलोच्छेदात् श्रुतिकल्पनाप्रतिबन्धेन अलब्धप्रमाणभावस्यैव बाधनादिति भावः।

1. मी० न्याय प्र० 58 पृ०

एवमप्राप्तबाधं निरूप्य प्राप्तबाधस्वरूपं निरूप्यते – प्राकृतस्य त्वङ्गस्य विकृतौ चोदकप्राप्तस्य प्रत्याम्नानात् विरुद्धपदार्थाम्नानात्। **'अर्थलोपात्'** अर्थस्य प्राकृतस्य प्रयोजनस्य लोपात् प्रतिषेधात्। न कुर्यादिति शब्दतो वारणात्। प्रकृतौ दर्शपूर्णमासयोः **'कौशं बर्हिः'** इत्यनेन व्रिहितानामित्यर्थः। एभिर्बाधजन्यैर्वचोभिः प्राकृतस्य त्वङ्गस्य विकृतौ चोदकप्राप्तस्य प्रत्याम्नानादर्थलोपात् प्रतिषेधाद्वा यो बाधः स प्राप्तबाधः। यथा – प्राकृतानां कुशानां प्रतिकूलशराम्नानात्, यथा वाऽवघातस्य कृष्णलेषु वैतुष्यरूपप्रयोजनलोपात्, यथा वा पित्र्येष्टौ होतृवरणस्य **'न होतारं वृणीत'** इति प्रतिषेधात्। औदुम्बरत्वेन च खादिरत्वविषयत्वे प्राप्त्यभावात्तदनुपपत्तिः स्यादिति। उपर्युक्तोदाहरणेन प्राकृतानां कुशानां वैकृतैश्शरैर्बाधो यथा प्राप्तबाधः, एवं प्राकृतस्य खादिरत्वस्य बाधः प्राप्तबाध एव वक्तव्यः। एवं च यदि न चोदकः खादिरत्वं विषयीकरोति तदा खादिरत्वस्याप्राप्तत्वादेव कथं तत्र प्राप्तबाधव्यवहार संगच्छते एवञ्च **'औदुम्बरो यूपो भवति'** इत्यस्य प्राप्तबाधत्वसिद्धये चोदकस्य खादिरत्वविषयकत्वमवश्यं वक्तव्यं भवतीति भावः। इतरस्य खादिरत्वस्य स्थानप्रमाणविनियुक्तस्य। वैकृतेन प्राकृतबाधस्य प्राप्तबाधत्वाङ्गीकरणात् कथं सोऽप्राप्तबाधो भवेत्? अत आह – नहि वैकृतेन प्राकृतबाधः प्राप्तबाध एवेति कुलधर्मः।

वस्तुतस्तु प्राप्तबाध एवायम्। न च खादिरत्वस्य चोदकाविषयत्वेन प्राप्त्यभावात् कथं तद्बाधः प्राप्तबाधः? तद्विषयत्वे वा तेनैव नैराकाङ्क्ष्यान्नौदुम्बरत्वे प्रकरणं विनियोजकं स्यादिति वाच्यम्। नहि प्राप्तबाधस्थले चोदकेन पदार्थाः प्राप्यन्ते। तथा सति शास्त्रप्राप्तत्वेन बाधो न स्यात्। किं तर्हि तानेव पदार्थान्वस्तुतः प्रापयति ये विकृतौ न बाध्यन्ते।

अर्थाद्यत्र प्रत्याम्नानात् प्रतिषेधाद्वा बाधः प्रकरणविनियोज्यत्वसम्भवेन अप्राप्तबाधत्वापत्तौ तस्य तृतीये निरूपणीयत्वेन दशमे निरूपणानुपपत्तिः। न चास्य प्राधान्येन अध्यायार्थत्वाभावेऽपि आहवनीयादिबाधस्येव प्रसङ्गान्निरूपणमिति वाच्यम्। तथात्वे प्राप्तबाधस्य त्रैविध्यकथनानुपपत्तेरिति। ननु खादिरत्वस्य चोदकविषयत्वमङ्गीक्रियते? न वा? अन्त्ये

तस्य प्राप्त्यभावेन कथं तस्य बाधः प्राप्तबाधो भवेत्? अङ्गीकरणे वा तेनैव यूपस्य नैराकांक्ष्यात् कथमौदुम्बरत्वस्य प्रकरणग्राह्यत्वम्? इत्याशङ्क्याह चोदकविषयत्वे खादिरत्वेनैव। विकृत्याकांक्षान्यथानुपपत्या कल्पितेन प्रकृतिवद्विकृतिः कर्तव्येत्यनेन शास्त्रेण प्राप्तेरित्यर्थः। तत्रोच्यते-

**'तार्तीयप्रमाणविनियुक्तेनेतरस्य बाधनं तावदप्राप्तबाधनम्। प्रकरणं च तार्तीयम्। तेन तद्विनियुक्तौदुम्बरत्वेनेतरस्य बाधनमप्राप्तबाध एव। नहि वैकृतेन प्राकृतबाधः प्राप्तबाध इति कुलधर्मः।**[1]'

वस्तुतस्तु प्राप्तबाध एवायम्। न च खादिरत्वस्य चोदकाविषयत्वेन प्राप्त्यभावात्। कथं तद्बाधः प्राप्तबाधः? तद्विषयत्वे वा तेनैव नैराकाङ्क्ष्यान्नौदुम्बरत्वे प्रकरणं विनियोजकं स्यादिति वाच्यम्। नहि प्राप्तबाधस्थले पदार्थाः प्राप्यन्ते। तथा सति शास्त्रप्राप्तत्वेन बाधो न स्यात्। किं तर्हि तानेव पदार्थान्वस्तुतः प्रापयति ये विकृतौ न बाध्यन्ते। ते च पदार्थाः प्रकृतिवच्छब्देन प्राप्यन्ते इति भवति पुरुषस्य भ्रान्तिः - यथा प्रकृतौ कृतं तथा विकृतौ कर्त्तव्यमिति सर्वे पदार्थाः प्राकृताः कर्तव्या इति। अतश्च भ्रान्तिप्राप्ताः खादिरत्वादयः शास्त्रप्रतिपत्तैरौदुम्बरत्वादिभिर्बाध्यन्ते इति भवति तद्बाधः प्राप्तबाधः। न च भ्रान्तिप्रतिपन्नेन वैधी आकांक्षा निवर्तयितुं शक्यते। तस्माद्युक्तमुक्तमुभयथाकाङ्क्षारूपप्रकरणसम्भवाद्विकृतौ प्राकृताङ्गानुवादेन विधीयमानानामौदुम्बरत्वादीनां प्रकरणं विनियोजकमिति।

केचित्तु - **नेत्थम्भावेन गृह्येत क्रियारूपविवर्जनात्।**
**इतिकर्तव्यतांशस्यां येनोद्दिश्योपसत्क्रियाम्।।**[2]

इति बलाबलाधिकरणस्थ वार्तिके क्रियामुद्देश्येत्युक्तत्वात् विकृतौ द्रव्योद्देशेन जात्यादिविधिस्थले **'औदुम्बरो यूपो भवति'** इत्यादौ न प्रकरणग्राह्यत्वम्। न च यूपलक्षितनियोजनसम्बन्ध एव वाक्यीय इति वाच्यम्। आनर्थक्य परिहारस्य सन्निधिनैव सिद्धेः। यूपपरिच्छेदिकाया-

---

1. मीमांसान्यायप्रकाशे पृ० 59
2. मी० न्या० प्र० पृ० 60

श्चौदुम्बरत्वजातेरर्थापत्तिकल्पितनियोजन एवान्वयात्। यत्र तु प्रमाणान्तरात् क्रियान्वयस्यालाभः तत्रैव परं लक्षितक्रियान्वयं यावत् विधिरायास्येत यथा– '**यस्य पर्णमयी जुहूर्भवती**'त्यादौ। एवं च क्रियोद्देशेनैव विहितस्य प्रकरणग्राह्यत्वसम्भवात् यत्प्राकृताङ्गानुवादेन विधीयत इत्यादौ अङ्गपदं क्रियापरमेवेत्याहुः। एतेषां मते दृष्टादृष्टसंस्कारविशिष्टं काष्ठमेव यूपशब्दार्थ इति बोध्यम्।

एवं पशुचातुर्मास्यादौ प्रकृतिप्राप्तानूयाजोद्देशेन विहितस्य पृषदाज्यस्यापि प्रकरणग्राह्यत्वं न्यायसुधाकृतां मतमनुवदति –

'**एवं पृषदाज्येनानूयाजान् यजती**'ति प्राकृतानुयाजानुवादेन विधीयमानं पृषदाज्यमपि प्रकरणाद्विकृत्यङ्गमिति केचिदाचार्याः।[1] अर्थात् प्राकृतानु- याजानुवादेन पृषदाज्यविधानात् प्राकृताङ्गग्रहणवेलायामेव पृषदाज्यग्रहण– प्रतीतेः तदानीं च नैराकाङ्क्ष्याभावात् प्रकरणेन पृषदाज्यं यथा गृहीतम् इति। एवमेव प्राकृताङ्गानुवादेन विहितस्यौदुम्बरत्वस्य प्रकरणग्राह्यत्वमिति। अस्य तात्पर्यमिदमस्ति यत् पृषदाज्यं हि अनुयाजानुवादेन विधीयते। तत्स्वरूपे चानर्थक्यप्राप्तौ तैर्न विकृत्यपूर्वं लक्षयितुं युक्तं, विप्रकर्षात्, किन्तु दीक्षणीयावाङ्नियमन्यायेन स्वापूर्वमेव लक्षयितुं युक्तं, सन्निकर्षात्। अत एवोत्पवनादीनां प्रोक्षणाद्यपूर्वप्रयुक्तत्वमुक्तं नवमे। तत्र दीक्षार्थत्वेन विहितेष्टिर्दीक्षणीया। '**यावत्या वाचा कामयते तावत्या दीक्षणीयायामनुब्रूयात्**[2]' इति वाक्येन ज्योतिष्टोमाङ्गभूतदीक्षणीयोद्देशेन कामस्वरो विधीयते, तस्य च दीक्षणीयास्वरूपे आनर्थक्यप्रसक्तौ दीक्षणीयापदेन दीक्षणीयाजन्यमपूर्वमेव लक्षयित्वा तदुद्देशेनैव कामस्वरविधानं, तस्यैव सन्निकर्षात्, न तु ज्योतिष्टोमीयपरमापूर्वोद्देशेन, तस्य विप्रकर्षात्, दीक्षणीया– पूर्वार्थत्वेऽप्यानर्थक्य– परिहारादित्युक्तं नवमे, तन्न्यायेनेत्यर्थः। स्वापूर्वमेव = अनूयाजजन्यापूर्वमेव। अत एव स्वरूपे आनर्थक्यप्रसक्तौ तस्य सन्निहित– स्वजन्यापूर्वलक्षकत्वादेव।

1. मी० न्या० प्र० पृ० 61
2. मी० न्या० प्र० पृ० 61

उत्पवनादीनाम् '**उदगग्राभ्यां पवित्राभ्यां प्रोक्षणीरुत्पुनाति**[1]' इति वाक्यविहितस्योत्पवनस्य –

'**शुन्धध्वं दैव्याय कर्मण इति त्रिः प्रोक्षति**[2]' इति विहितपात्रप्रोक्षण-स्वरूपे आनर्थक्यप्रसक्तौ तेषां सन्निहितप्रोक्षणजन्यापूर्वप्रयुक्तत्वमेव, न तु विप्रकृष्टदर्शपूर्णमासापूर्वप्रयुक्तत्वमित्युक्तम्। नवमशब्दात् नवमाध्यायस्य प्रथमे पदे द्वितीयाधिकरणे, द्वितीयवर्णक इत्यर्थः। एवं च अनूयाजार्थं विधीयमानस्य पृषदाज्यस्य अनूयाजस्वरूपे आनर्थक्यप्रसक्तौ अनूयाजपदेन अनूयाजापूर्वं लक्षयित्वा तदर्थत्वमेवाङ्गीक्रियते। तेनैव च तस्य नैराकाङ्क्ष्यात्, न तु विकृतिप्रधानभावनया ग्रहणमिति न प्रकरणग्राह्यत्वं तस्येति। एवञ्च प्रबलेन वाक्येन स्वविषयापहारात् दुर्बलस्य प्रकरणस्य तत्र प्रवृत्तिरेव नास्तीति न प्रकरणविनियोज्यत्वं पृषदाज्यानामिति भावः। इत्येषः अनन्तदेवसंज्ञकानां महोदयानां मतम्।

इदानीं स्वीयं मतमुद्घाटयितुमारभते – वयं तु विकृत्यर्थत्वमङ्गी-कृत्यापि वक्ष्यमाणरीत्या प्रकरणाग्राह्यत्वम् इत्येवमुपपादयामः। तत्र प्रथमतः विकृतेरूपकारापेक्षायांमुपकारः तत्पृष्ठभावेन च अनूयाजाः। तत्पृष्ठभावेन च तत्साधनीभूतमाज्यमायाति इत्यत्र पृषदाज्यस्याज्यभिन्नत्वेन आज्यस्थानापन्नत्वेन विधिसम्भवात् कथं नौदुम्बरत्वसाम्यमित्यत आह – '**नहि पृषदाज्यं नाम द्रव्यान्तरं किञ्चिदस्ति, यदाज्यस्थानापन्नं विधीयेत, औदुम्बरत्वमिव खादिरत्वस्थानापन्नम्, पृषच्छब्दस्य पृषणमणिरित्यादौ चित्रतावाचित्वेन दृष्टत्वात्, पृषदाज्यशब्दस्य चित्राज्यवाचित्वात्। अत एव निगमेषु आज्यपानित्येव वक्तव्यं न तु पृषदाज्यापानित्युक्तम्।**[3]' अर्थात् मणिरित्यादिपदेन पृषद्रज्जुः पृषण्मृग इत्यादेः परिग्रहः। आवाहनसूक्त-वाकादिमन्त्रेषु सन्ति प्रकृतौ यक्ष्यमाणदेवतावाहनार्था इष्टदेवतासंस्कारार्थाश्च

---

1. मी० न्या० प्र० 61 तमे पृ०
2. मी० न्या० प्र० 61 तमे पृष्ठे
3. मी० न्या० प्र० 62 तमे पृ०

मन्त्राः '**देवानाज्यपानावह, देवा आज्यपा आज्यमजुषन्त**[1]' इत्यादयः ते चाज्यदेवताप्रकाशका विकृतावुपकारपृष्ठभावेनातिदिष्टाः। यदि पृषदाज्यस्य द्रव्यान्तरत्वं तर्हि तदीयदेवताप्रकाशकत्वेन पृषदाज्यपदमाज्यपदस्थाने ऊहनीयं भवेत्। न चोहितव्यं, किन्तु प्राकृतमेव पदं प्रयोज्यमित्युक्तं तदधिकरणे, अतो ज्ञायते न पृषदाज्यं द्रव्यान्तरमिति।।

यावत्प्राकृतमाज्यमायाति तावदेव चित्राज्यविधानात् प्रकरणविनियोगः सम्भवतीति। न हि पृषदाज्यशब्देन चित्रतागुणविशिष्टमाज्यं विधीयते। विशिष्टविधाने गौरवापत्तेः, किं तु प्राकृताज्यानुवादेन चित्रतागुणमात्रं विधीयते, '**लोहितोष्णीषा ऋत्विजः प्रचरन्ती**[2]' तिवत्। तदुक्तं दशमचतुर्थचरणान्ते – '**न वा गुणशास्त्रत्वात्**' इति।[3] अर्थाद्यथा लोहितोष्णीषा इत्यत्र एकप्रसरताभङ्गभिया लौहित्यविशिष्टोष्णीषविधानेऽपि प्राप्ताप्राप्तविवेचने उष्णीषस्य प्रकृतितः प्राप्तत्वेन लौहित्यमात्रे विधेः पर्यवसानात् नैकप्रसरताभङ्ग इति भावः। नावाहनादिनिगमेषु पृषदाज्यपानिति वक्तव्यम्, पृषदाज्यशब्दस्य गुणमात्रविधायकत्वादिति। शास्त्रदीपिकाप्यस्म-दनुकूलेत्याशयेनाह –

'**प्राकृतस्यैवाज्यस्य चित्रतागुणमात्रविधानमिति च**[4]' द्वयं वा इदं सर्पिश्च दधि च इति वाक्यशेषात् आज्ये दधिमिश्रणरूपं चित्रत्वमात्रं विधीयत इत्यर्थः। एवञ्च विकृतेः प्राकृतेनाज्येन क्लृप्तोपकारैश्चानुया-जैर्नैराकाङ्क्ष्ये पश्चाद्विधीयमानस्य चित्रतागुणस्योपहोमाद्यपूर्वाङ्गवन्न प्रकरणं विनियोजकं सम्भवति। यथा – '**अग्नये कृत्तिकाभ्यः पुरोडाशमष्टाकपालान्निर्वपेत्, प्रजापतये रोहिण्यै चरुं निर्वपेत्**[5]' इति विहितनक्षत्रेष्टिसन्निधौ विहितानां '**अग्नये स्वाहा कृत्तिकाभ्यः स्वाहा**'

1. मी० न्या० प्र० 62 तमे पृ०
2. मी० न्या० प्र० 62 तमे पृ०
3. मी० न्या० प्र० पृ० 63
4. मी० न्या० प्र० पृ० 63
5. मी० न्या० प्र० पृ० 63

**प्रजापतये स्वाहा रोहित्यै स्वाहा** 'इत्याद्युपहोमानां प्राकृतैः क्लृप्तोपकारैरेवाङ्गैः निराकाङ्क्षीकृतत्वाद्विकृतिभावनायाः न प्रकरणविनियोज्यत्वमेवं पृषत्ताया अपीत्यर्थः।

यावदाज्यपृष्ठभावेन प्राकृतो गुण आयाति तावत् पृषत्ताविधानात् कथं न प्रकरणग्राह्यत्वमित्यत आह -

**'यदि हि प्राकृतस्य कस्यचिद्गुणस्य स्थाने चित्रता गुणो विधीयेत तदा स गुणो यावदायाति तावद्विकृतेर्नैराकाङ्क्ष्याभावात् चित्रतागुणस्य च तावदेव विधानादुभयाकाङ्क्षासम्भवात् प्रकरणविनियोगो भवेत्। न च तादृशः प्राकृतो गुणोऽस्ति। आज्यस्यानुयाजानां च चित्रतागुणात्प्रागेव विधानात्। तस्य तत्स्थानापन्नत्वाभावात्।'**[1] विकृत्याकाङ्क्षायाः प्राकृतचरमाङ्गान्वयं यावदनुवर्तनादिति भावः। ततः पूर्वमेव प्रकृतौ कस्यापि गुणस्याज्यो- द्देशेनाविधानात् प्राकृता अनूयाजास्तत्पृष्ठभावेनाज्यं वा यावदायान्ति ततः पूर्वमेव पृषदाज्यविधिरस्तु। ततश्च प्राकृतस्थानापन्नत्वेन सम्भवति प्रकरणग्राह्यत्वमिति मन्दाशंकां मन्दविषन्यायेन परिहरति। पृषत्तायाः प्राकृतानूयाजोद्देशेनैव विधेयत्वेन ततः पूर्वं तत्प्राप्त्यवश्यंभावेन तत्स्थानापन्नता न कदापि सम्भवतीति भावः।

तथापि प्राकृतस्य निर्गुणस्य स्थाने विहितत्वात् पृषत्ताया अस्तु प्रकरणग्राह्यतेत्याशङ्क्याह -

**'न च आज्य पृष्ठभावेन यावत्प्राकृतं निर्गुणत्वमायाति तावदेवास्य विधानात्प्रकरणसम्भव इति वाच्यम्। निर्गुणत्वस्याविहितत्वेन पाणिकण्डूयनवदनङ्गत्वाद्विकृतेस्तदाकाङ्क्षाभावात्। तथाहि ज्योतिष्टोमे दक्षिणादानसमये विहितकृष्णविषाणत्यागस्य। द्विरात्रादिषु चोदकप्राप्तस्य प्रथमेऽह्नि अननुष्ठानम्। उत्तरेऽह्नि दक्षिणादानपूर्वकालीनैः पदार्थैः कृष्णविषाणकण्डूयनस्य शास्त्रविहितत्वेनोपेक्षिततत्वात्। ज्योतिष्टोमे च दक्षिणादानोत्तरकालं पाणिकण्डूयनं दृष्टमपि द्विरात्रादिषु प्रथमेऽह्नि**

---

1. मी० न्या० प्र० पृ० 63

**अनुष्ठीयमानैर्दक्षिणादानोत्तरकालीनैः पदार्थैर्नापेक्ष्यते, तस्य प्रकृतावर्थ-सिद्धत्वेनाशास्त्रीयत्वादिति। एवं निर्गुणत्वस्याविहितत्वेन विकृतेस्तदपेक्षा नास्तीति। तस्मादुभयाकाङ्क्षाया असम्भवात्पृषदाज्यस्य न प्रकरणविनियोगः सम्भवतीति।[1]'**

अस्य पृषत्तारूपगुणस्य न ह्यविहितमङ्गं भवतीति न्यायादिति भावः। पाणिना कण्डूयनं पाणिकण्डूयनं तद्वदित्यर्थः। तमेव दृष्टान्तं विशयदति – ज्योतिष्टोमे सुत्यादिवसे माध्यन्दिने सवने ऋत्विग्भ्यो दक्षिणादानं विहितम्, अनन्तरञ्च '**नीतासु दक्षिणासु चात्वाले कृष्णविषाणां प्रास्यती**'**ति**[2] कण्डूयनार्थं दीक्षामध्ये यजमानेन स्वीकृतस्य कृष्णविषाणस्य त्यागो विहितः। स च द्विरात्रादिष्वहर्गणेष्वतिदिष्टः प्रथमेऽह्नि सुत्यायां न क्रियते। तद्यदि प्रथमेऽह्नि त्यज्यते तत उत्तरेष्वहस्सु दक्षिणादानपूर्वकालिकानां पदार्थानां विषाणकण्डूयनं विहितं बाध्येत। न हि त्यक्तस्य पुनरुपादानं भवति, न च पुनरुपादित्समानस्य त्यागबुद्धिर्भवति। अतश्च ज्योतिष्टोमे दक्षिणादानोत्तरं दृष्टमपि पाणिकण्डूयनं न द्विरात्रादावतिदिश्यते। नापि वैकृतैः पदार्थैस्तद-पेक्ष्यते, प्रकृतौ दक्षिणादानोत्तरं विषाणाभावेन पाणिकण्डूयनस्यार्थिकत्वात्, न ह्यार्थिकं चोदकः प्रतिदिशतीति न्यायात्। किन्तु कृष्णविषाणसत्वात् तेनैव कण्डूयनमिति। विषाणस्य त्यक्तत्वेन कण्डूयति सम्भवे पाणेरेव सन्निहितत्वेन तेनैव कण्डूयनं प्राप्नुयादिति भावः शास्त्राविषयत्वादित्यर्थः।

दृष्टान्तोक्तन्यायं प्रकृतेऽतिदिशति – निर्गुणत्वापेक्षा पृषदाज्यस्य प्रकरणग्राह्यत्वाभावनिरूपणमुपसंहरति। प्रकृतावनूयाजानां केवलाज्य-विशिष्टानां कार्यजनकत्वश्रवणेऽपि विकृतौ तेषां पृषदाज्यविशिष्टानामेव कार्यजनकत्वश्रवणात् विशेषणसम्पत्त्यर्थं वैकृताकाङ्क्षायाः पृषत्तान्वयं यावदनुवर्तनात् कथं न प्रकरणविषयतेति।

तत्सिद्धं महाप्रकरणं प्रकृतावेव विनियोजकम्। विकृतौ तु

---

1. मी० न्या० प्र० 63 पृ०
2. मी० न्या० प्र० पृ० 64

यत्प्राकृतदृष्टार्थाङ्गानुवादेन विधीयते तस्य विनियोजकं, न तु केवलं विधीयमानस्यापूर्वाङ्गस्येति। एवं हि प्राकृतानां वैकृतोपहोमादि-क्रमसापेक्षत्वेनैव प्राकृतोपकारसाधनत्वात् उपहोमादीनामपि प्रकरणग्राह्यत्वं प्रसज्येते। अदृष्टार्थाङ्गानुवादेन विहितस्याङ्गस्य उद्देश्यस्वरूपे आनर्थक्या-भावात् तेनैवाकाङ्क्षाशान्तौ विकृत्यपूर्वपर्यन्तानुधावने प्रयोजनाभावात् उभयाकांक्षाभावेन प्रकरणग्राह्यता सम्भवतीति।

**'यत्तु विकृतावपि प्राकृतधर्मानुवादेन विधीयमानयोर्धर्मयोरन्तरालेऽ-पूर्वमप्यङ्गं केवलं पठ्यते तदपि प्रकरणेन विनियुज्यते। यद्यपि विकृतेः कथंभावाकाङ्क्षा प्राकृतैरेवाङ्गैः शाम्यति, तथापि तत्र प्राकृताङ्गानुवादेन धर्मविधानं तत्र तद्विधानं यावद्भवति तावत् कथंभावाकाङ्क्षा न निवर्तते। अतो विकृतेराकाङ्क्षावत्वादन्तराले विहितस्याप्यपूर्वाङ्गस्य भाव्याकाङ्क्षा-सत्वादयुक्तं तस्य प्रकरणाद्विकृत्यर्थत्वम् यथा आमनहोमेषु। ते हि प्राकृताङ्गानुवादेन विधीयमानयोर्द्धर्मयोरन्तराले विधीयन्त इत्युक्तं तन्त्ररत्नादाविति।[1]'**

अर्थात् प्राकृताङ्गानुवादेन विधानाभावेऽपि प्राकृताङ्गानुवादेन विहितधर्ममध्ये पठितस्याप्यपूर्वाङ्गस्य प्रकरणग्राह्यता सम्भवति। वस्तुतः विकृतिभावना कथंभावाकाङ्क्षा प्राकृतैर्धर्मैस्तदनुवादेन विहितैर्वा शाम्यतीति कथमुभयभिन्नस्यापूर्वाङ्गस्य प्रकरणविषयतेत्याशङ्कते। यद्यपि उत्पन्ना आकाङ्क्षा प्राकृतसर्वाङ्गसम्बन्धानन्तरमेव शाम्यति, अतो मध्ये पठितस्यापि साकाङ्क्षायामेव विकृतिभावनायामन्वयात् सम्भवति प्रकरणग्राह्यतेति परिहरति – यत्र प्राकृताङ्गानुवादेन धर्मविधानं तत्र तद्विधानं यावद्भवति तावत्कथंभावाकांक्षा न निवर्ततेति। अनेन विकृतिप्रधानप्राकृताङ्गधर्मयोर्मध्ये पठितस्याप्यपूर्वाङ्गस्य सन्देशेन प्रकरणग्राह्यता सूचिता।

**'वैश्वदेवीं साङ्ग्रहणीं निर्वपेद् ग्रामकामः[2]'** इति साङ्ग्रहणेष्टिं विधाय

---

1. मी० न्या० प्रा० पृ० 64
2. तैत्तिरीयसंहितायाम्– 2/3/9/2

तदनन्तरं '**आमनमस्यामनस्य देवा इति तिस्र आहुतीर्जुहोति**[1]' इति विहितेषु होमेषु प्राकृताङ्गानुवादेन विधीयमानयोः धर्मयोरन्तराले विधीयन्त। तद्यथा – मैत्रायण्यां – '**यत् प्रयाजानां पुरस्ताद् जुहुयात् बहिरात्मानं सजातानां दध्यात्, यदनूयाजानां परस्ताद् जुहुयात् स्वर्गं लोकमपक्रामेत्, मध्ये जुहोति।**[2]' इति वाक्येन प्राकृतप्रयाजानुयाजमध्य एवामनहोमानां विधानात्। अत एव मिश्रैरपि न्यायरत्नमालायां '**विकृतिष्वपि यत्प्राकृताङ्गमध्ये पठितः यथा – आमनहोमः**[3]' इति प्राकृताङ्गमध्यपाठ एवोक्तेः। शास्त्रदीपिकायामपि '**आमनहोमानाञ्च प्राकृताङ्गमध्य-विहितत्वेने**' त्युक्तम्। तन्त्ररत्नेऽपि च – 'प्राकृतास्तावदाकाङ्क्षयैव गृह्यन्ते। तयोर्द्वयोः प्राकृतयोः परामृश्यमानयोर्मध्ये पतितमपूर्वमप्यङ्गमाकाङ्क्षाया-मव्यावृत्तायां विधीयमानम् आकाङ्क्षापरनामधेय प्रकरणेन गृह्यते यथा – '**यत्प्रयाजानां पुरस्ताद् जुहुयात् बहिरात्मानं सजातानां दध्यात्, यदनूयाजानां परस्तात्, स्वर्गं लोकमपक्रामेत्, मध्ये जुहोति, मध्यत एव सजातानामात्मन्धत्ते**[4]' इत्येवं परामृश्यमाना आमनहोमाः सम्बन्धिपदव्यवायेनाकाङ्क्षाग्राह्यप्रयाजानूयाजमध्यवर्तित्वेन ग्रहीष्यन्ते इत्यनेन आमनहोमानां प्रयाजानूयाजमध्यवर्तित्वस्यैवोक्तत्वात् प्राकृताङ्गानुवादेन विधीयमानधर्ममध्यपाठस्य कुत्राप्यनुपलम्भात्। तच्च तन्त्ररत्ने प्रकरण-ग्राह्यत्वोक्तावपि शास्त्रदीपिकायां सन्निधिग्राह्यत्वमुक्त्वा '**प्रकरणग्राह्यत्व-स्यापि सम्भवात्**' इत्यपि नाप्रकरणग्राह्यत्वेऽस्वरसः सूचितः। अत एव च न्यायसुधायां बलाबलाधिकरणे आमनहोमानां सन्निधिविषयतैवोक्तेति कथं तेषां प्रकरणग्राह्यत्वम्? इत्यत आह – '**इत्यास्तां तावदिति।**' यद्यप्यामनहोमानां सन्निधिग्राह्यतैव समुचिता, अभिमतं चास्माकमपि तदेव, तथापि तन्त्ररत्नादयुक्तिमात्रमवलम्ब्य प्रकृतोदाहरणार्थमत्रोक्तमिति भावः।

1. मी० न्या० प्र० 64 तमे पृष्ठे।
2. तत्रैव उल्लेखः
3. मी० न्या० प्र० 64 तमे पृष्ठे उल्लेखः
4. मी० न्या० प्र० पृ० 65

## अवान्तरप्रकरणनिरूपणम्

एवं महाप्रकरणं निरूप्य इदानीमवान्तरप्रकरणं निरूप्यते – **'फलभावनाया अन्तराले यदङ्गभावनायाः प्रकरणं तदवान्तरप्रकरणम्। तच्चाभिक्रमणादीनां प्रयाजादिषु विनियोजकम्। तच्च सन्दंशेन ज्ञायते। तदभावेऽविशेषात्सर्वेषां फलभावनाकथम्भावेन ग्रहणात्।**[1]'

अथ को नाम सन्दंशः? अत आह – **'सन्दंशो नाम एकाङ्गानुवादेन विधीयमानयोरङ्गयोरन्तराले विहितत्वम्, यथा अभिक्रमणम्।**[2]' इदमुपलक्षणं सन्दंशान्तरयोरपि। प्राकृताङ्गानुवादेन विहिताभ्यां सन्दंष्टं यदसंयुक्तमपि विकृतौ श्रुतं तदपि प्रकरणेन गृह्यते। विकृतेः पूर्वमसंयुक्तं किंचिद्विहितं ततः पूर्वं तु प्राकृताङ्गानुवादेन यद्विहितं ततोऽसंयुक्तं यत् तत् तद्विकृतिग्रहणेन गृह्यते। तथा विकृतेरनन्तरमसंयुक्तं किंचिद्विधाय प्राकृताङ्गानुवादेन कस्मिंश्चिद्विहिते तत्पूर्वमसंयुक्तं प्रकरणेन गृह्यते। इति भेदत्रयस्य ग्रन्थान्तरेषु दर्शनात्। लोहकण्टकविद्धलोहशलाकाद्वयरूपः पात्रादिग्रहणसाधनभूतः कश्चन पदार्थो लोके सन्दंशपदवाच्यः। हिन्दीभाषायां **सडसी** इति द्राविड़भाषायां **इडिक्की** इति च प्रसिद्धः। अभिक्रमणं खलु प्रतिप्रयाजं किञ्चिदन्तरं आहवनीयसमीपदेशं प्रति पदनिक्षेपणम्। तादृशाङ्गमध्यपाठमुपपादयति – **'समानयत उपभृतः'** अत्र जौहवेनाज्येन प्रथमतः त्रीन् प्रयाजानिष्ट्वा बर्हिः प्रयाजार्थमुपभृत्स्थमाज्यं जुह्वां समानयेदित्यर्थः। यद्यप्यस्मिन् वाक्ये प्रयाजशब्दो नास्ति, तथापि औपभृताज्यस्य **'यदुपभृति प्रयाजानूयाजेभ्यस्तत्**[3]' इत्यनेन प्रयाजानूयाजार्थत्वावगमात् औपभृतार्धस्य प्रयाजद्वयार्थमेव जुह्वां समानेयत्वात् प्रयाजाङ्गत्वसङ्कीर्तनाविरोधः। एवं प्रयाजोद्देशेन विहितं पूर्वमङ्गमभिधाय पाश्चात्यमप्यङ्गं कथयति– **"यो वै प्रयाजानां मिथुनं वेदे"**त्यादिना किञ्चिदङ्ग **'विधीयते'**[4] प्रयाजानिष्ट्वा

1. तत्रैव पृ० 66
2. मी० न्या० प्र० 66 पृ०
3. तत्रैव पृ० 66
4. मी० न्या० प्र० 66 पृ०

हवींष्यभिघारयति इत्यन्तेनेति शेषः। अतः प्रयाजाङ्गमध्ये पठितमभिक्रमणं तदङ्गं भवति, तत्कथम्भावाकाङ्क्षायाम् अशान्तेः। अत्र वार्तिकं प्रमाणयति –

**'परप्रकरणस्थानामङ्गे श्रुत्यादिभिस्त्रिभिः।**
**ज्ञाते पुनश्च तैरेव सन्दंशेन तदिष्यते।।' इति।**[1]

अर्थात् दर्शपूर्णमासप्रकरणस्थानां प्रयाजादीनामङ्गे औपभृताज्यसमानयनादिके श्रुतिलिङ्गवाक्यैः पूर्वं विहितत्वेनावगते पश्चादपि श्रुत्यादिभिः कस्मिंश्चिदङ्गे विहिते सति तत्सन्दष्टं तत्तन्मध्यविहितं किञ्चिदङ्गं तादृशपूर्वोत्तराङ्गसन्दंशेन प्रयाजाद्यङ्गं भवतीति। यद्यपि पूर्वमिति नैवास्ति श्लोके तथापि पुनश्चेति च शब्दबलात् तल्लभ्यत इति न दोषः। अत्र प्रधानभावनानामेवेतिकर्तव्यताकाङ्क्षा, तासामेव फलसाधनत्वेन कथमित्याकाङ्क्षोदयात्, नाङ्गभावनानां, तासामफलत्वात् इति वदतां प्राभाकराणां मतमनुवदति – **'न चाङ्गभावनायाः कथंभावाकाङ्क्षाभावात् कथं प्रयाजभावना कथंभावेनाभिक्रमणं गृह्यते इति वाच्यम्। भावनासाम्येन सर्वत्र कथंभावाकाङ्क्षायाः सत्वात्। प्रयाजैरपूर्वं कृत्वा यागोपकारं भावयेदित्युक्ते यो नाम न जानाति प्रयाजैरपूर्वं कर्तुं तस्यास्त्येव कथंभावाकाङ्क्षा – कथमेभिरपूर्वं कर्तव्यमिति। सा च सन्दंशपतितैर्वाचनिकैः स्मार्तैश्चाचमनादिभिः शाम्यति। तदभावे च स्वरूपनिष्पादनेन दर्विहोमन्यायेन निवर्तते**[2]'। अर्थात् अङ्गभावनानामपि कार्यतया विधिना बोधितत्वात् कार्यस्य चालौकिकत्वात् अनिर्ज्ञातप्रकारत्वेन कर्तव्यताविशेषरूपेति कर्तव्यताकाङ्क्षा सम्भवत्येव। तासामपि भावनासाम्येन अङ्गभावनाया अपि भावनात्वाविशेषात् प्रधानभावनातुल्यत्वेनेत्यर्थः। सर्वास्वपि भावनासु अभिक्रमणादिभिः सन्दंशाभावस्थले कथमाकाङ्क्षाशान्तिः? अत आह – वाचनिकैः **'इन्द्र ऊर्ध्वो अध्वर इत्याघारमाघारयति**[3]' इत्यादिवचनविहितैरङ्गैरित्यर्थः। तेषामप्यभावे

1. मी० न्या० प्र० 66 पृ०
2. मी० न्या० प्र० 67 पृ०
3. मी० न्या० प्र० 67 पृ०

कथम्? इत्यत आह – '**स्मार्तैराचमनादिभिरिति।**' आचान्तेन कर्मकर्तव्यम् –'**दक्षिणाचारेण कर्तव्यम्**[1]' इति सर्वकर्मसाधारण्येन स्मृतिविहितैः आचमनदक्षिणपाण्याचरणादिभिरिति।

दर्विहोमेषु हि स्वरूपनिष्पादनातिरिक्तस्तथा व्यापारो न श्रूयते। यथा दर्विहोमा अपूर्वाः अश्रुतेतिकर्तव्यताश्चेति तत्रोत्पन्नाऽपि कथंभावाकाङ्क्षा स्वरूपनिष्पादनेनैव शाम्यति तद्वदिति। दर्विहोमेषु जुहोत्युत्पत्तिकाः एकमन्त्रकाः स्वाहाकारप्रदानाः दर्विहोमाः। सन्निधौ व्यापाराश्रवणेऽपि अतिदेशेन तत्प्राप्तिरस्तु, अत आह – '**नाप्यतिदेशेन तत्प्राप्तिः**' अतिदेशो यागीयधर्माणां होमीयधर्माणां वा? नाद्य इत्याह – '**यागीयानां धर्माणां तावन्नातिदेशः, यागत्वेन होमत्वेन वैलक्षण्यात्।**[2]' प्रक्षेपाङ्गकोद्देश-त्यागरूपक्रियाद्वयवृत्तिजातेः यागत्वात् उद्देश-त्याग-प्रक्षेपात्मक-क्रियात्रयवृत्तिजातेः होमत्वाच्च तयोरत्यन्तं भेदादित्यर्थः। चोदनालिङ्गाति-देशस्य सादृश्यमूलकत्वेन तदभावे तस्यैवासंभवादिति भावः। अग्निहोत्रस्य न दर्विहोमप्रकृतित्वं, विशेषनियामकाभावात्, नापि नारिष्ठहोमानाम्, "**अप्रतिष्ठिता वै त्र्यम्बका इत्याहुः। नेध्माबर्हिः सन्नह्यति**"[3] इति दर्विहोमानाम् 'अप्रतिष्ठितत्वे इध्माबर्हिरभावस्य हेतुत्वेन निर्देशात्, नारिष्ठहोमेषु चाङ्गप्रधानसाधारणानामिध्माबर्हिषां सत्वात् तेषां च चोदकतस्तत्रापि प्राप्तिसम्भवात्। न चायं चोदकप्राप्तस्यैव प्रतिषेधोऽस्त्विति वाच्यम्। अस्य च '**आदित्यं चरुं निर्वपेद् पुनरेत्य गृहेषु**[4]' इत्यादित्यचरुविधायकवाक्यशेषत्वेन प्रतिषेधविधित्वासंभवात्। नापि पिष्टलेपफलीकरणहोमयोः, तयोः प्रतिपत्तिकर्मत्वेन धर्मप्रयोजकत्वाभावेन प्रकृतित्वासंभवात्, इत्येतत् सर्वं मनसि निधायाह – "**कस्य होमस्य धर्मः कस्मिन् होमे प्रवर्तत**" इति विशेषनिर्णये प्रमाणाभावात्। अतो

1. मी० न्या० प्र० 67 पृ०
2. मी० न्या० प्र० पृ० 67
3. मी० न्या० प्र० पृ० 68
4. मी० न्या० प्र० पृ० 68

धर्मप्राप्त्यभावात् दर्विहोमैरिष्टं भावयेत्कथमित्युत्पन्नाप्याकाङ्क्षा स्वरूप-निष्पादनेनैव शाम्यति। एवं येष्वङ्गेषु सन्दंशाद्यभावस्तत्रोत्पन्नाप्याकाङ्क्षा तेनैव निवर्तते, न तु सर्वथा तदभावः। तस्माद्युक्त**मभिक्रमणं प्रयाजाङ्गमिति।**[1]' अर्थात् वाचनिकाङ्गस्मार्ताचमनादीनि न किञ्चिन्मध्ये पठितम्। न वा वाचनिकं किञ्चित्। नापि स्मार्तं किञ्चित्। एतादृशानि सन्ति बहून्यङ्गानि प्रोक्षणादीनि। तत्र लोकत एव तत्स्वरूपं ज्ञात्वाऽऽकाङ्क्षा निवर्तनीयेत्यर्थः।

एवमवान्तरप्रकरणं निरूप्य तस्य महाप्रकरणापेक्षया प्राबल्यं प्रतिपाद्यते- '**तच्चेदमवान्तरप्रकरणं महाप्रकरणाद्बलीयः, सन्दंश-पतितानां धर्माणां कैर्मथ्याकाङ्क्षायां प्रधानापूर्वात्प्रयाजाद्यपूर्वस्य झटित्युपस्थितेरिति।**[2]' प्रधानापूर्वापेक्षया तस्यै सन्निहितत्वेन बुद्धौ विपरिवर्तमानत्वादिति।

स्थानाद्यपेक्षया प्रकरणस्य प्राबल्यं यथोक्तं श्रीमदापदेवेन 'तदिदं स्थानादिप्रमाणाद्बलवत्। यत्र हि स्थानादङ्गत्वं तत्रान्यतरस्य प्रकारान्तरेण निराकाङ्क्षत्वम्। न च साकांक्षं निराकाङ्क्षेण संबद्धुं योग्यं बिनाकाङ्क्षोत्थापनेन। अतश्चान्यतराकाङ्क्षया यावदुभयाकाङ्क्षारूपप्रकरणकल्पनद्वारा वाक्यादि कल्पयितुमारभ्यते, झटिति तावत्प्रकरणेन वाक्यादिकं कल्पयित्वा विनियोगः क्रियत इति स्थानात्प्रकरणस्य बलीयस्त्वम्।[3]'

अत्र आदिपदेन समाख्यापरिग्रहः स्थानरूपप्रमाणात् तस्याङ्गत्वं बोध्यते। क्लृप्तोपकारप्राकृतपदार्थान्वयेन प्रकृतौ कृतकार्यत्वेन वेति। एवमेवोच्यते यत् विदेवनादयो धर्मा अभिषेचनीयसन्निधौ पठिता अपि नाभिषेचनीयस्याङ्गम्। तेषां तदङ्गत्वं भवत् स्थानाद्भवेत्, न तु प्रकरणात्। तद्यथा -'**राजा राजसूयेन स्वाराज्यकामो यजेत**'[4] इत्यनेन स्वाराज्यरूपफलोद्देशेन विहितः। तत्र अनुमत्यादय इष्टयः, पञ्चवातीयादयो

1. मी० न्या० प्र० पृ० 68
2. मी० न्या० प्र० पृ० 68
3. मी० न्या० प्र० पृ० 68
4. यद्राजसूयेन यजते सर्वेषां राज्यानां श्रैष्ठ्यं स्वाराज्यमाधिपत्यं पर्येति। शांखायन श्रौतसूत्रे- 15/12/1

दर्वीहोमाः, **'आदित्यां मलहां गर्भिणीमालभते।'** इत्यादयः पशुयागाः, पवित्राभिषेचनीय, दशपेय, केशवपनीय, व्युष्टिद्विरात्र, क्षत्रधृतिसंज्ञकाः षट्सोमयागाश्च विहिताः। तत्राभिषेचनीयाख्यसोमयागसन्निधौ **'अक्षैर्दीव्यति, राजन्यं जिनाति शौनश्शेपमाख्यापयत्'** इत्यादिभिः अक्षदेवनराजन्यजयादयः श्रूयन्ते। तत्राङ्गानि विदेवनादीनामभिषेचनीयाङ्गत्वम्। अभिषेचनीयस्य निर्धर्मकत्वेन कथंभावाकाङ्क्षासत्वात् विदेवनादीनामप्याकाङ्क्षावत्वात् तेषामभिषेचनीयाङ्गत्वं प्रकरणादेव कुतो न स्यात्? तत्रोच्यते – अव्यक्त-चोदितानां ज्योतिष्टोमविकारत्वस्याष्टमे' अव्यक्तासु तु सोमस्य' इत्यनेनोक्त-त्वादिति भावः। अव्यक्तत्वस्वरूपं पूर्वमेव निरूपितमग्निष्टोमसंस्थाक-ज्योतिष्टोमाङ्गैः।

तत्र **'अनुमत्यै पुरोडाशमष्टाकपालं निर्वपति'** इत्यादिवाक्यविहिता-नामेवेष्टिपशुसोमानां 'राजसूयेन स्वाराज्यकामो यजेत' इत्यनेन फलसम्बन्ध-बोधनात् तेषामेव राजसूयपदवाच्यत्वमङ्गीकरणीयम्। ते च प्रत्येकं स्वैः स्वैः प्राकृतैरङ्गैर्निराकाङ्क्षा इति उभयाकाङ्क्षाभावात् कथं विदेवनादयः प्रकरणग्राह्याः? आख्यातं यादृशार्थबोधकं तादृशार्थबोधकमित्यर्थः। नामधेयत्वेऽपि दर्शपूर्णमासपदवत् स्वतन्त्रतैवाऽस्तु इत्याशंकते – **'न च दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते'** त्यत्र यथा दर्शपूर्णमासपदं नामधेयमपि नाख्यातपरतन्त्रम्, तत्र हि यजेतेत्याख्यातमविशेषात्सर्वानेव प्रकृतानाग्नेयादीन् प्रयाजादींश्चाभिधातुं समर्थम्, दर्शपूर्णमासपदं त्वाग्नेयादीनेव वदति, न सर्वान्, अतश्च न तदाख्यातपरतन्त्रम्। तथा – राजसूयपदमपि किं न स्यादिति वाच्यम्। प्रसिद्धेन हि पदेनाप्रसिद्धं निर्णीयते। यथाहुः –

**'पदमज्ञातसंदिग्धं प्रसिद्धैरपृथक् श्रुति।**
**निर्णीयते निरूढं तु न स्वार्थादपनीयते।।**[1]'

दर्शपूर्णमासपदं च कालनिमित्तम्, तद्योगश्चाग्नेयादिषूत्पत्ति-वाक्यैरवगतः। अतस्तद्वाचित्वेन दर्शपूर्णमासपदं प्रसिद्धम्। न च आग्नेयादीनां बहुत्वाद्द्विवचनान्तत्वमस्यानुपपन्नमिति वाच्यम्। विद्वद्वाक्यद्वयसिद्ध-

---

1. मी० न्या० प्र० पृ० 69

समुदायद्वयाभिप्रायेण तदुपपत्तेः। एवं च दर्शपूर्णमासपदस्याग्नेयादिवाचित्वे निर्णीते यजेतेत्याख्यातमपि तानेव वदति। न हि तदुक्तौ स्वार्थत्यागो भवति। राजसूयपदं त्वनिर्णीतार्थम्, अतस्तदाख्यातपरतन्त्रमेव, तच्चाविशेषा-त्सर्वेष्विष्टिपशुसोमेषु विद्यते। तत्परतन्त्रत्वाद्राजसूयपदमपि तानेव वदति।

राजसूयशब्दस्य राजा= सोमः, सूयते = निष्पीड्यते, इति व्युत्पत्त्या अभिषेचनीयादि- सन्निहितसोमयागवाचित्वमेव। तस्य च सोममभिषुणोतीति वाक्येन चोदितोऽस्ति, तद्वाक्यस्य ज्योतिष्टोमे सत्वात्। तया च व्युत्पत्त्या प्रकृतिभूतज्योतिष्टोमप्रकरणस्थस्यात्रानुपस्थितेः तमादाय न राजसूय-शब्दार्थवर्णनमुपपत्तिमदिति भावः। प्रथमतः फलाकांक्षा ततः करणाकाङ्क्षा, अनन्तरं कथम्भावाकाङ्क्षा इत्येवाकाङ्क्षाक्रमात्। एवञ्च एतद्वाक्यावगत्युत्तर-कालीनाया आकाङ्क्षाया एतद्वाक्यार्थावगमदशायामनुपस्थितत्वेन तदाकाङ्क्षापूरकपदार्थोपस्थितेः तत्प्रापकातिदेशस्य च दूरापेतत्वात् तन्निमित्तीकृत्य राजसूयपदस्य नामधेयत्वकथनं न युक्तिसहमिति भावः। अस्मिन्नर्थेऽभियुक्तोक्तिं प्रमाणयति – '**अत एव राजसूयपदमव्युत्पन्न-श्वकर्णशब्दवदित्युक्तं साम्प्रदायिकैः।**[1]' अश्वकर्णशब्दो यथा अव्युत्पन्नप्रातिपदिकं वृक्षविशेषे रूढः, एवं राजसूयशब्दो रूढ इत्यर्थः।

राजसूयपदस्याख्यातपरतन्त्रमुपसंहरन्नुक्तमापदेवेन – 'एवं चाप्रसिद्धार्थत्वेनाख्यातपरतन्त्रत्वाद्राजसूयपदेनेष्टिपशुसोमयागा उच्यन्ते। ते च तैस्तैः प्राकृतैर्धर्मैर्निराकाङ्क्षा इति न प्रकरणं विदेवनादीनां राजसूये विनियोजकम्, उभयाकाङ्क्षाया अभावात्। न च प्रातिस्विकरूपैर्नैराकाङ्क्ष्येऽपि न राजसूयत्वेन रूपेण नैराकाङ्क्ष्यमिति वाच्यम्। आकाङ्क्षाद्वये प्रमाणा-भावात्।[2]' अर्थादिष्टीनां दर्शपूर्णमासतोऽतिदिष्टैरैष्टिकैः, पशूनामग्नीषोमी-यतोऽतिदिष्टैः पाशुकैः, सोमयागानाञ्च ज्योतिष्टोमतोऽतिदिष्टैस्सौमिकैश्च धर्मैश्शान्ताकाङ्क्षत्वादित्यर्थः। येन रूपेण फले विनियोगः तेनैव रूपेण धर्माकाङ्क्षा युक्ता; अतश्च प्रातिस्विकरूपेणातिदिष्टैर्धर्मैः प्रातिस्विकरूपेणा-काङ्क्षायाश्शान्तत्वेऽपि 'राजसूयेन स्वाराज्यकामो यजेते'ति राजसूयत्वधर्म-

---

1. मी० न्या० प्र० पृ० 71
2. मी० न्या० प्र० पृ० 71-72

पुरस्कारेणैव फले विनियोगात् तेनापि रूपेणाकाङ्क्षायास्सत्वात् तस्याश्च कैरपि धर्मैश्शान्तत्वात् सम्भवत्येवोभयाकाङ्क्षेति। इत्याशंकायामिदमुच्यते यत् अनुमत्यादिवाक्यैरुत्पन्नानामेव भावनानां राजसूयवाक्ये फलसम्बन्धबोधनात् तदपेक्षया राजसूयभावनाया अनतिरिक्तत्वेन तासां च स्वस्वेतिकर्त्तव्यता-विषयिण्या एकस्या एवाकाङ्क्षाया अङ्गीकर्तुमुचितत्वादिति भावः।

वस्तुतः प्रातिस्विकरूपेणोत्पन्नायामेव कथंभावाकाङ्क्षायां प्राकृतपदार्थान्वयात् पूर्वमेव विदेवनादीनां विधानात् कुतो न प्रकरणग्राह्यतेति। अत एवाह – **'किं च प्रातिस्विकरूपैर्या कथंभावाकाङ्क्षा सापि फलसम्बन्धोत्तरकारणम्। स च राजसूयत्वेन, न तु प्रातिस्विकरूपैः, राजसूयत्वेन च फलसम्बन्धे उत्पन्नायाः कथंभावाकाङ्क्षायाः विदेवनादिभिः शान्तेरतिदेशकल्पनमेव न स्यात्। यदि हि सामान्यरूपेण प्रातिस्विकरूपेण च फलसम्बन्धविधायि वाक्यद्वयं भवेत्तदा युज्येताप्याकाङ्क्षाद्वयानुसारेण विदेवनादीनामतिदेशिकानां चाङ्गानां सम्बन्धः। न तु तदस्ति तस्मात्प्राकृतैर्धर्मैर्नैराकाङ्क्ष्यान्न विदेवनादीनां प्रकरणं विनियोजकमिति चेत् सत्यम्, अत एव साम्प्रदायिकैर्विदेवनादीनां सन्दंशो दर्शितः।'**[1]

अर्थात् फलसम्बन्धोत्तरकालमतिदेशसम्बन्धमेव न स्यात्। प्रातिस्विकरूपेण या आकाङ्क्षा तस्या एव राजसूयवाक्ये राजसूयत्वधर्मा-वच्छिन्नत्वेन प्रतीयमानत्वात् तस्याश्च विदेवनादिभिश्शान्तत्वादाकाङ्क्षाभावेन प्राकृतानां धर्माणामतिदेशो न स्यादित्यर्थः। विदेवनादिभ्यः पूर्वं प्राकृतपदार्थान्वयस्यैवावश्याभ्युपगन्तव्यत्वात् आकाङ्क्षाद्वयस्वीकारे को दोषः? इत्येतदत्र समाधत्ते – सत्यम्। राजसूयाय ह्येना उत्पुनाति एना राज्याभिषेकार्थमाहृता अपः, यतस्तु राजसूयार्थमेव खलूत्पवनं करोत्यध्वर्युरिति। विदेवनाद्यभिषेकान्ता अपः सर्व इति एतेन पदेन बुध्यते। राजसूयाङ्गत्वे दृष्टान्तमाह – **'प्रयाजानुवादेन विधीयमानधर्ममध्ये पठितप्रया-जाङ्गाभिक्रमणवत्। तस्माद्युक्तमुक्तं विदेवनादीनां प्रकरणाद्राजसूया-**

1. मी० न्या० प्र० पृ० 72

ङ्गत्वमिति।[1]' यत्त्वत्र मयूखमालिकायां तैत्तिरीयशाखायामभिषेचनीय-प्रयोगमध्ये '**दिशोऽभ्ययं राजाऽभूदिति पञ्चाक्षान् प्रयच्छति**' इत्येवमादिभिर्विदेवनादीन् विधाय तदनन्तरं '**मारुतस्य चैकविंशति-कपालस्य वैश्वदेव्यै चामिक्षाया अग्नये स्विष्टकृते समवद्यति**[2]' इत्यभिषेचनीयाङ्गेष्टिविशेषमाम्नाय '**अपां नप्त्रे स्वाहोर्जो नप्त्रे स्वाहाग्नये गृहपतये स्वाहेति तिस्र आहुतीर्जुहोति**[3]' इत्यभिषेचनीयाङ्गहोमविशेष आम्नायते। तेन विदेवनादीनार्थत्वात्तेषां क्रमप्रकरणविरोधोदाहरणत्वं कृत्वा चिन्तयेत्युक्तम्। तत्रेदं वक्तव्यम् – नाभिषेचनीयस्यावान्तरप्रकरणं सम्भवति। स हि ज्योतिष्टोमविकृतिभूतः क्लृप्तोपकारैः प्राकृतैरेव धर्मैर्निराकाङ्क्षः। न च मारुतस्येति वाक्येनाभिषेचनीयाङ्गभूता इष्टिरप्याम्नायते। तस्य पूर्वविहितमारुतामिक्षायागाङ्गभूतयोः स्विष्टकृद्यागयोः कालमात्रविधाय-कत्वात्। तैत्तिरीयब्राह्मणे हि प्रथमाष्टके सप्तमप्रपाठके सप्तमानुवाके-'**मारुत एष भवति,**' '**एकविंशतिकपालो भवति**[4]' इति वाक्यद्वयेन मारुतयागः तद्गुणश्च विहितौ। तत्रैव दशमानुवाके '**वैश्वदेव्यामिक्षा**[5]' इत्यनेनामिक्षायागो विहितः। तत्सम्बन्धिनोश्च स्विष्टकृद्यागयोस्तन्त्रेणानुष्ठा-नमनेन वाक्येन विधीयते। एवं सत्यपि यद्येतदनन्तरं विहितस्य होमविशेषस्य प्राकृतकार्यापन्नत्वेन विधानं स्यात् तदानीं तादृशपदार्थान्वयं यावदाकाङ्क्षया अनुवृत्तेः तत्सन्दष्टानां विदेवनादीनां भवेदवान्तरप्रकरणादभिषेचनीयाङ्गत्वम्। न त्वेतदस्ति। केवलमसंयुक्ततयैव तस्य विधानात्। प्राकृताङ्गानुवादेन विहितधर्ममध्यपतितस्यैवासंयुक्ताङ्गस्य विकृतौ प्रकरणग्राह्यत्वसिद्धान्तात्। अत एवोक्तं भाट्टदीपिकायाम् – '**यस्य हि प्रधानकार्यापन्नतया वैकृताङ्गस्य विधानं, यथा औदुम्बरत्वशरत्वादेः, तस्यैवा-**

---

1. मी० न्या० प्र० पृ० 72
2. मी० न्या० प्र० पृ० 72
3. मी० न्या० प्र० पृ० 72
4. तै० ब्रा० 1/7/7
5. तै० ब्रा० 1/7/10

**निवृत्ताकाङ्क्षतया विधानम्, तत्सन्दष्टस्यैव च तत्पूर्वभाविनो वा प्रधानोत्तराङ्गस्य विकृतिप्रकरणेन ग्रहणम्।'** इति। एवञ्च होमविशेषस्य विकृतिभावनायां निवृत्ताकाङ्क्षायामेवोपहोमादिवत् विधानात् नात्रावसरोऽवान्तरप्रकरणस्य। एतदेवाभिप्रेत्य वार्तिककारैरप्युक्तम् – **'यद्य निराकाङ्क्षीकृतेऽभिषेचनीये तेषां पाठः स्यात् ततोऽवान्तरप्रकरणमवगम्येत। स तु प्रागेव विदेवनादिभ्यः प्राकृतैर्धर्मैर्निराकाङ्क्षीकृतः'** इति। योग्योपकार-प्रदानेन पूरिते कथंभावे निवृत्तं प्रकरणम्, समीपाम्नातधर्मानर्थक्या-पत्तिभयादेव पुनरुत्पाद्येत इति च। एवञ्च स्थानविनियोज्यत्वस्यैव सम्भवात् युक्ता क्रमप्रकरणविरोधोदाहरणतेति।

**स्थाननिरूपणम्**

क्रमप्राप्तं स्थाननिरूपणमवतारयति – **'देशसामान्यं स्थानमिति**[1]**'** समानदेशवत्वमित्यर्थः। तच्च स्थानं द्विविधम् – पाठसादेश्यमनुष्ठानसादेश्यं चेति। सादेश्यशब्दः 'द्वन्द्वान्त' इति न्यायेन पाठतः सादेश्यमनुष्ठानतः सादेश्यमिति प्रत्येकं सम्बध्यते। यदाहुः –

**'तत्र क्रमो द्विधैवेष्टो देशसामान्यलक्षणः।**
**पाठानुष्ठानसादेश्याद्विनियोगस्य कारणम्।।'** इति।[2]

इत्यनेन वार्तिकेन स्पष्टं यत् सादेश्यशब्दः पाठसादेश्याद-नुष्ठानसादेश्याच्च सम्बद्धः। ननु अलौकिकार्थस्य शब्दातिरिक्तप्रमाणा-गम्यत्वात्, सादेश्यादेश्च शब्दत्वाभावात् न विनियोजकत्वम्, अतश्च तेषां प्रयोजनाकाङ्क्षायां विश्वजिन्न्यायेन स्वर्गार्थत्वमेव युक्तमिति।

यद्यपि सादेश्यस्य न शब्दरूपत्वं, तथापि सन्निधिपठितानामङ्गानां प्रधानोपकारसम्पादकत्वे सम्भवति न कल्पनागौरवोत्पादकस्वर्गफलत्वं युक्तम्। अतश्च प्रधानार्थत्वे वर्णनीये पाठसादेश्यादेर्युक्तैव नियामकतेति भावः। स्थानं क्रमश्चेत्यनर्थान्तरम्। पाठसादेश्यमपि द्विविधम् –

---

1. मी० न्या० प्र० पृ० 73
2. मी० न्या० प्र० पृ० 73

यथासंख्यपाठः सन्निधिपाठश्चेति। तत्र **'ऐन्द्राग्नमेकादशकपालं निर्वपेत्' 'वैश्वानरं द्वादशकपालं निर्वपेदित्येवं क्रमविहितेष्टिषु'** इन्द्राग्नी रोचना दिव इत्यादीनां याज्यानुवाक्यामन्त्राणां यथासंख्यं प्रथमस्य प्रथमं द्वितीयस्य द्वितीयमित्येव यो विनियोगः स यथासङ्ख्यपाठात्। प्रथमपठितमन्त्रस्य हि कैमर्थ्याकाङ्क्षायां प्रथमतो विहितं कर्मैव प्रथममुपतिष्ठते, समानदेशत्वात्।

यानि तु वैकृतान्यङ्गानि प्राकृताङ्गाननुवादेन विहितानि संदेशापतितानि तेषां विकृत्यर्थत्वं सन्निधिपाठात्। तेषां हि कैमर्थ्याकाङ्क्षायां फलवद्वि-कृत्यपूर्वमेव भाव्यत्वेन सम्बध्यते, उपस्थितत्वात्। अत एव तेषु न विश्व-जिन्न्यायावतारः। स्वतन्त्रफलार्थत्वे विकृतिसन्निधिपाठानर्थक्यापत्तेश्च।

पशुधर्माणामग्नीषोमीयार्थत्वमनुष्ठानसादेश्यात्। औपवसथ्येऽह्नि अग्नीषोमीयः पशुरनुष्ठीयते, तस्मिन्नेव दिने ते धर्माः पठ्यन्ते। अतस्तेषां कैमर्थ्याकाङ्क्षायामनुष्ठेयत्वेनोपस्थितं पश्वपूर्वमेव भाव्यत्वेन सम्बध्यते। अतो युक्तमनुष्ठानसादेश्यात्तदर्थत्वं तेषाम्।

न च पाठसादेश्यादेव तत्किं न स्यादिति वाच्यम्। अग्नीषोमीयस्य पशोः क्रमसन्निधौ पाठात्। न च क्रमसन्निधौ तस्य पाठे तदनुष्ठानमपि तत्र स्यादिति वाच्यम्। **'स एष द्विदैवत्यः पशुरौपवसथ्येऽहन्यालब्धव्यः'** इति वचनात्तदनुपपत्तेः। न च स्थानात्प्रकरणस्य बलीयस्त्वेन पशुधर्माणां ज्योतिष्टोमार्थत्वमेव किं न स्यादिति वाच्यम्। तस्य सोमयागत्वेन पशुधर्मग्रहणेऽयोग्यत्वात्। अतः आनर्थक्यप्रतिहतानां विपरीतं बलाबलम् इति न्यायात् स्थानात्पशुयागार्थत्वमेव धर्माणां युक्तम्।

न च तेषां तदर्थत्वं प्रकरणादेव किं न स्यादिति वाच्यम्। अग्नीषोमीयकथंभावाकाङ्क्षायाः क्लृप्तोपकारैः प्राकृतधर्मैरेवोपशान्तत्वात्। स हि सान्नाय्ययागप्रकृतिकः उभयोः पशुप्रभवत्वसामान्यात्। तदुक्तम् – **'सान्नाय्यं वा तत्प्रभवत्वात्'** इति।

सान्नाय्यं दधिपयसी। तत्र पशुयागः पयोयागप्रकृतिकः साक्षात्पशुप्रभवत्वात्। अतश्चोदकप्राप्तैस्तद्धर्मैर्निराकाङ्क्षत्वान्न पशुयागे धर्माणां प्रकरणं विनियोजकम्, किं तु स्थानमेव। तदेवं निरूपितः संक्षेपतः स्थानविनियोगः।

# ( ख ) विकृतियज्ञानां भेदास्तेषां कारणानि च

येषु यागेषु प्रकृतियागविधीनां धर्मातिदेशो भवति, ते विकृतियज्ञा इत्युच्यन्ते। तथा च येषु यागेषु प्रकृतियागेभ्यो विशिष्टं किमपि कृत्यं सम्पाद्यते, ते यज्ञा विकृतय उच्यन्ते। वस्तुत एषु भूयमानानि समस्तान्यपि सामान्यकृत्यानि प्रकृतियज्ञानुसृतान्येव भवन्ति तथापि कानिचिद्विशिष्टानि कृत्यानि यानि विशेषेण तत्र भवन्ति तस्मात् ते विकृतियज्ञा उच्यन्ते।

यथात्रोदाहरणार्थम् एवमुच्यते यत् सर्वेऽपि श्रौतयज्ञाः इष्टिपशुसोम-भेदात्त्रिविधाः सन्ति। तेषु समस्तानामिष्टीनां प्रकृतिर्दर्शपूर्णमासौ, समेषां पशुयागानां प्रकृतिः निरूढपशुबन्धः, सर्वेषामपि सोमयागानां प्रकृतिरग्निष्टोम इति। तत्र यदि पर्वदिनादन्यत्र दिनेषु पौर्णमासीविकारेण यागेन सदा यजते तन्मुन्ययनम्। तत्र पञ्चदशसामिधेन्यः। आग्नेयश्च वैष्णवश्च पुरोडाशः। सर्वकामस्य यज्ञोऽयं फाल्गुन्यामारभ्य यावदायुषं कार्य्यः। संवसरं यावद्वा।

यत्र तु पर्वदिनादन्यत्र दिनेषु अमावास्याविकारेण यागेन सदा यजते तदुत्तरायणम्। तत्राग्नेयः, ऐन्द्रः, वैश्वदेवश्चेति त्रयो यागाः। अदीक्षितः कृष्णाजिनं प्रतिमुञ्चते। स्वर्गकामस्य यज्ञोऽयं फाल्गुन्यामारभ्य यावदायुषं कार्य्यः। संवत्सरं वा। एते द्वे अदीक्षितायते अपर्व्वायणे काम्ये चेति दिक्। तान्येतान्यष्टौ दर्शपूर्णमासविकारभूतान्यदीक्षितायनानि नाम। एषामन्यतमं कुर्वाणस्य यावदेतत्संस्थं दर्शपूर्णमासौ नित्यावपि निवर्त्तेते। तत्प्रतिस्थाने एवैषां काम्यत्वेन विधानात्। कौण्डपायनीयौ तु भवत एव। इत्यदीक्षिता-यनानि। इत्येताः पौरुषार्थिक्य इष्टयः।

अथ शांखायनीये प्रायश्चित्तीयाः काश्चिदुपदर्शिताः। तथा हि अभ्युदिता, अभ्युद्दृष्टा चेति द्वे अन्ये। अग्निमदग्नीष्टिः, पथिकृदग्नीष्टिः, वीत्यग्नीष्टिः, विविच्यग्नीष्टिः, संवर्गाग्नीष्टिः, शुच्यग्नीष्टिः, अप्सुमदग्नीष्टिः, इति सप्तान्याः। रुद्रेष्टिः, पथिकृत् पूषेष्टिः, सार्वकामिकीष्टिः, व्रतपत्यग्नीष्टिः, व्रतभृदग्नीष्टिः, क्षामवदग्नीष्टिः, मारुतेष्टिश्चेति च सप्तान्याः। वैश्वानरीष्टिः,

सारस्वतीष्टिः, सुमत्यग्नीष्टिः, प्रातरिष्टिः, वारुणीष्टिश्चेति पञ्चान्याः। एवमादयो बह्व्यो बहुविधाश्च प्रायश्चित्तीया इष्टयः। यस्योपवसथे पुरस्ताच्चन्द्रो दृश्यते स यज्ञपथादपैति अत एव भ्रान्तिवशादनागते पर्वणि यस्यामावास्यं प्रक्रान्तं तेनेयमभ्युदितेष्टिः क्रियते। स एतया यज्ञपथमेत्य यथाविहिते काले पुनरामावास्यं करोति। अत्रेष्टौ त्रीणि हवींषि – अग्नये दात्रेऽष्टाकपालः पुरोडाशः। इन्द्राय प्रदात्रे सायं दोहितं दधि। विष्णवे तु शिपिविष्टाय प्रातर्दोहिते पयसि चरुः। सोऽयं दर्शविकारः।

अथ यस्योपवसथे पश्चाच्चन्द्रो दृश्यते सोऽपि यज्ञपथादपैति। अत एव भ्रान्तिवशादतीते पर्वणि यस्यामावास्यं प्रक्रान्तं तेनेयमभ्युद्दृष्टेष्टिः क्रियते। स एतया यज्ञपथमेत्य तस्मिन्नेवाहन्यामावास्यं करोति। शतपथे तु – **'स आमावास्येन विधिनैवेष्ट्वा अथेष्टिमनुनिर्वपति। तदहर्वा श्वो वा**[1]' – इत्येवमिष्टेः प्रागपि दर्शेष्टिरभ्यनुज्ञायते। अभ्युहितावदभ्युद्दृष्टापि दर्शेष्टिकालव्युत्क्रमनिमित्ता प्रायश्चित्तीया। इयमपि दर्शविकृतिः।

अथ शांखायनः प्राह – यदि पूर्वोद्धृतेऽग्नौ सत्यन्योऽग्निरभ्युद्ध्रियते तर्हि विध्यपराधप्रायश्चित्तायाग्निमतेऽग्नये इष्टिं कुर्य्यात्। साग्निमदग्नीष्टिः। यदि विहृतानग्नीनन्तरेण शकटादिकं चक्रीवन्निर्गच्छेत्। नियतकालानां वा दर्शपूर्णमासादीनामतिपत्तिः स्यात्। तदा तद्दोषशमनाय पथिकृतेऽग्नयेऽ–ष्टाकपालं पुरोडाशं निर्वपेद्। अनपवृत्तकर्मणामग्नीनां द्वयोरनेकेषां वा मिथः संसर्गे सति तत्प्रायश्चित्ताय वीतयेऽग्नये यागः। वीत्यग्नीष्टिः ग्राम्येण लौकिकेनासंस्कृतेनाग्निना संस्कृतानामग्नीनां संसर्गे तद्दोषशमनाय विविचयेऽग्नये यागः। सा विविच्यग्नीष्टिः। अरण्ये घोरं प्रदाहन्नग्निर्यदि ग्राममागतः स्यात् सं प्रदाव्य इत्युच्यते। तेन सह संस्कृताग्नीनां विहृतानां संसर्गे सति प्रायश्चित्तायाग्नये संवर्गायेष्टिः क्रियते सा संवर्गेष्टिः। क्रव्येण शवाग्निना तेषां संसर्गे शुचयेऽग्नये यागः। सा शुच्यग्नीष्टिः। वैद्युतेनाग्निना संस्कृताग्निसंसर्गेऽप्सुमतेऽग्नये यागः। साऽप्सुमदग्नीष्टिः। सप्तैताः अग्निदोषप्रायश्चित्तीयाः।

---

1. उल्लेखः यज्ञमधुसूदने 83 तमे पृ०

अथ स्वजनविषये व्याधिप्राचुर्य्ये सति रुद्रायेष्टिं कुर्यात्। महान्तमध्वानं गमिष्यन् पूष्णे पथिकृते यजेत। सर्वकामसिद्ध्यर्थमग्नये कामाय यजेत। व्रत्यवेलायां यदि सकलं व्रत्यमतः प्रवासेनातिपतेत्। अव्रत्यं वा मैथुनमांसभोजनादि चरेत् तदाऽग्नये व्रतपतये व्रातपतीष्टिः कार्य्यः। व्रत्यबेलायामार्त्यश्रुपातयित्वा व्रतभृतेऽग्नये इष्टिं कुर्य्यात्। गृहदाहे सति तत्प्रायश्चित्ताय क्षामवतेऽग्नये इष्टिं कुर्य्यात्। द्वयोः स्वरूपयोर्यमलजनने, असरूपयोर्जनने, बहूनां यमलजनने वा मरुद्भ्य इष्टिं कुर्य्यात्। सप्तैता विप्रकीर्णदोषप्रायश्चित्तीयाः।

अथ सुमत्यग्नीष्टिः, अथप्रातरिष्टिः, अथ वारुणीष्टिः 'वैश्वानरीं व्रातपतीं पवित्रेष्टिस्तथैव च। ऋतावृतौ प्रयुञ्ज्यानः पुनाति दशपौरुषम्।'

**'क्लृप्तानां पशुसोमानां निष्कृत्यर्थमसंभवे।**
**इष्टिं वैश्वानरीं नित्यं निर्वपेदब्दपर्यये।'**[1]

इत्येवमादयः प्रायश्चित्तीया द्रष्टव्याः। अग्निहोत्रापचारे च बह्व्यः प्रायश्चित्तीष्टयः शतपथे व्याख्याताः। प्रायश्चित्तीयाः पौरुषार्थिक्यश्च भवन्ति क्रात्वर्थिक्यश्च। येषां यागानामकरणे प्रत्यवायः प्राप्नोति तेषां विध्यपचारप्रायश्चित्तय उभयार्था भवन्ति। काम्यानां विध्यपचारे प्रायश्चित्तयः क्रत्वर्था इव। अथ अपराः काश्चन क्रात्वर्थिक्यो भवन्ति। तत्तत्क्रतुसिद्धये प्रंयुज्यमानास्ता यज्ञधर्म्मा इष्यन्ते। यथा दीक्षणीयेष्टिः, आतिथ्येष्टिः, उपसदिष्टिरित्यादयो ज्योतिष्टोमधर्म्माः। प्रायणीयेष्टिरुदयनीयेष्टिरित्यादयः सत्रधर्म्माः। अवभृथेष्टिः, अनीकवतीष्टिः, सांतपनेष्टिः, क्रीडियेष्टिः, पित्र्येष्टिः, आदित्येष्टिः, सवनेष्टिरित्यादयश्चातुर्मास्यधर्म्माः। उखासम्भरणीयेष्टिरित्याद-यश्चयनधर्म्माः। एवमुदवसानीयेष्ट्यादयोऽन्याऽन्या अपि बहव्य इष्टयो यज्ञार्थास्तत्रतत्रानुसंधेयाः इति। इति क्रात्वर्थिकेष्टयः। द्यावापृथिव्ययनम्, मित्रविन्दा, संज्ञानी, द्वितीया संज्ञानी, ऐन्द्रामारुती, ऐन्द्राबार्हस्पत्या, स्नुषाश्वशुरीया, पवित्रेष्टिः, स्वस्त्ययनीया, जीवातुमती, पुत्रकामिका,

---

1. उल्लेख यज्ञमधुसूदने 84 तमे पृ०

पुष्टिकामिका, प्रजाकामेष्टिः, इन्द्रियवीर्य्यप्रतिष्ठाकामेष्टिः, अनुनिर्वापपौष्णेष्टिः, क्षैत्रपत्येष्टिः, राक्षोघ्नेष्टिः, सुरभिमदिष्टिः, क्षामवदिष्टिः, कामेष्टिः, आयुः कामेष्टिः, भूतिकामेष्टिः, द्वितीया भूतिकामेष्टिः, रूक्कामेष्टिः, तेजस्कामेष्टिः, अन्नकामेष्टिः, अन्नाद्यकामेष्टिः, अन्नपतित्वकामेष्टिः, चिररोगमुक्तिकामेष्टिः। चक्षुः कामेष्टिः, द्वितीया चक्षुः कामेष्टिः, पुत्रकामेष्टिः, रसकामेष्टिः, वसुकामेष्टिः, अभिशापनिवृत्तीष्टिः, ग्रामकामेष्टिः, द्वितीयाग्रामकामेष्टिः, भिक्ष्यमाणद्रव्यप्राप्तिकामेष्टिः, पशुकामेष्टिः, द्वितीया पशुकामेष्टिः, ब्रह्मवर्चसकामेष्टिः, अन्नकामेष्टिः, पापक्षयकामेष्टिः, बन्धादिमोक्षकामेष्टिः, महायज्ञकामेष्टिः, दत्तद्रव्यप्राप्तिकामेष्टिः, अधिकश्रीकामेष्टिः, यज्ञकामेष्टिः, दुश्चर्मत्वाभावेष्टिः, शतकृष्णलेष्टिः, हिरण्यलाभकामेष्टिः, लब्धहिरण्येष्टिः, पुंस्त्वकामेष्टिः, लोकेष्टिः, आशापालेष्टिः, कारीरीष्टिः, पिण्डयागः, इत्यष्टापञ्चाशत्। एवमादयोऽन्या अपि बह्व्यः काम्या इष्टयः।

मित्रलब्धिकामोऽग्निं सोमं वरुणं मित्रमिन्द्रं बृहस्पतिं सवितारं पूषणं सरस्वतीं त्वष्टारमित्येता दश देवता यजति। सैषा मित्रविन्दा नामेष्टिः। इयमेव महावैराजी नाम।

ज्ञातयः - सपिण्डाः सनाभयो वा। ते वा स्वामिभृत्या वा परस्परसंविदानाः कार्य्येषु विभिन्नमतयः सन्तो यदि संमतिकामाः स्युस्तदा संज्ञानीमिष्टिं निर्वपेरन् सैषा संज्ञानी बहुदेवता चोच्यते। तत्राग्निर्वसुमान्, सोमो रुद्रवान्, इन्द्रो मरुत्वान्, वरुण आदित्यवान्, इत्येतासां सगुणानां चतसृणां देवतानामेकं प्रदानम्। तत्र ज्ञातयः - संज्ञानमुशनावदद् - इति सूक्तं जपेयुः। समाने श्रैष्ठ्यमिच्छतश्चेयमिष्टिः। राजविशोरसंपत्तिकामानामाहिताग्नीनां च प्रकृत्यैव संज्ञानीष्टिः। एवमेव भेदकामानामियमैन्द्रामारुतीष्टिः क्रियते। तत्र मारुतयागादूर्द्ध्वमैन्द्रो यागः। स्नुषाश्वशुरीया नामेष्टिराभिचारिकी क्रियते। तत्र केवलं इन्द्रो वा इन्द्रः सुरो वा देवता। अथ शत्रुभिः प्रधृष्यमाणानामियमैन्द्राबार्हस्पत्या नामेष्टिः। तत्र बार्हस्पत्यं निरूप्य इन्द्राय नोदयेयुः। संवत्सरमतिप्रसवतः शुद्धिकामस्य पवित्रेष्टिः। तत्र पावकवत्यौ धाय्ये। अथ स्वस्त्ययनीयेष्टिः, रक्षितवती चेयमुच्यते।

तत्राग्निश्च सोमश्चेत्येतौ रक्षितवन्तौ देवता। यत्र त्वायुष्कामेनाग्निरिन्द्रश्चेति द्वे जीवातुमत्यौ देवते इज्येते सा जीवातुमती। सैवायुः कामेष्टिरप्युच्यते। तत्राग्नेरायुष्मत्वमिन्द्रस्य च त्रातृत्वं गुणः। पुत्रकामेष्टावग्निः पुत्रवती देवता इयमेव पुत्रवतीष्टिः। पुत्रकामेष्टाविन्द्रो दाता देवता। अथ प्रजाकामेष्टिः सद्यस्काला चोच्यते। ऐन्द्राग्नो ब्रीहिमय एकादशकपालः पुरोडाशः। सप्तदशसामिधेन्यः पौर्णमासतन्त्रम्। अथ धर्मसभायां व्यवहारादिभाषणा-येन्द्रियवीर्य्यप्रतिष्ठार्थमिष्टिः क्रियते, प्रजाकामेष्टिवत्। इन्द्रियवीर्य्यप्राप्त्यर्थ-मिमामिष्टिं कृत्वा यत्र पौष्णं चरुमनुनिर्वपति साऽनुनिर्वापापौष्णेष्टिः। अथ जनसमूहं प्राप्तः प्रतिष्ठार्थं क्षेत्रपत्यं चरुं निर्वपति सा क्षैत्रपत्येष्टिः। रक्षोगणपीडानिवृत्यर्थममावास्यायां महारात्रेऽग्नये रक्षोऽघ्नेऽष्टाकपालः पुरोडाशः सा रक्षोघ्नेष्टिः। गोमरणनिवृत्यर्थं पुरुषमरणनिवृत्यर्थं भयनिवृत्यर्थं पूतिगन्धनिवृत्यर्थं चाग्नये सुरभिमतेऽष्टाकपालः सा सुरभिमतीष्टिः। शेषजातिमृत्युनिवृत्यर्थमग्नये क्षामवतेऽष्टाकपालः। गृहदाहनिवृत्तयेऽपि च क्षामवतीष्टिः। प्रतिबन्धकनिवृत्या काम्यकर्मफलसिध्यर्थमग्नये कामायेष्टिः। सर्वायुः सिद्ध्यर्थमग्नये आयुष्मतेऽष्टाकपालः इन्द्राय त्रात्रे एकादशकपालः। इयमेव जीवातुमतीष्टिः।

भूतिकामोऽग्नये रूक्मवतेऽष्टाकपालं निर्वपति रूक्कामेष्टिः। तेजस्कामोऽग्नये तेजस्वते। अन्नकामोऽग्नयेऽन्नवते। अन्नाद्यकामोऽग्नयेऽ-न्नादाय। अन्नपतित्वकामोऽन्नपतये। दीर्घरोगमुक्त्यर्थमग्नये पवमानाय, अग्नये शुचये चाष्टाकपालः पुरोडाशः। चक्षुः कामोऽपि पूर्ववत् करोति। पुत्रकामस्याग्नये पुत्रवतेऽष्टाकपालः। इन्द्राय पुत्रिणेऽष्टाकपालः। रसकामस्य त्वग्नये रसवतेऽजक्षीरे चरुः। अत्र पयसः प्रणयनं नापाम्। वसुकामस्याग्नये वसुमतेष्टाकपालः। पतितत्वेन जनैरभिशस्यमानस्य वैश्वानराय द्वादशकपालः। वरुणाय चरुः। दधिक्रव्याश्चरुः। ग्रामकामस्याग्नये वैश्वानराय द्वादशकपालः, मरुद्भ्यः सप्तकपालः। भिक्ष्यमाणद्रव्य-प्राप्तिकामस्याग्नये वैश्वानराय द्वादशकपालः। भिक्षितद्रव्यप्राप्तौ प्रतिष्ठाकामो वैश्वानर्य्या यजते। पशुकामस्यैन्द्रश्चरुः। अथवा पशुकामस्येन्द्रायेन्द्रियावते

एकादशकपालः सा द्वितीया पशुकामेष्टिः। ब्रह्मवर्चसकामस्य इन्द्राय धर्मवते एकादशकपालः। अन्नकामस्येन्द्रायार्कवते एकादशकपालः। भूतिकामस्येन्द्राय धर्मवते एकादशकपालः। पापक्षयकामस्येन्द्रायांहोमुचे एकादशकपालः। बद्धो वा शत्रुवेष्टितो वा तन्मोक्षार्थमिन्द्राय त्रात्रे एकादशकपालं निर्वपति। महायज्ञान् वाजपेयादीन् कर्तुमशक्तस्येन्द्राया-र्काश्वमेधवते एकादशकपालः। ग्रामकामस्येन्द्रायानृजवे एकादशकपालः सा द्वितीयेष्टिः। दत्तद्रव्यप्राप्तिकामस्येन्द्राय प्रदात्रे एकादशकपालः। तुल्येभ्योऽधिकश्रीकामस्येन्द्रायैकादशकपालः। साधारणज्योतिष्टोमादियज्ञ-कामस्याग्नावैष्णव एकादशकपालः। अथ ब्रह्मवर्चस्य द्वितीयेष्टिः। पौष्ण्यायाग्निहोत्रानन्तरं सोमारुद्राभ्यां चरुः। भाविदुश्चर्मत्वाभावकामस्य सौमापौष्णश्चरुः। यो मृत्योर्विभेति स पूर्णायुः प्राप्त्यर्थं प्रजापतये हिरण्यनिर्मितगुञ्जाप्रमाण- शतकृष्णलमयं चरुं निर्वपति सा शतकृष्णलेष्टिः। हिरण्यलाभकामस्याग्नेयोऽष्टाकपालः, सावित्रो द्वादशकपालः, भूम्यै चरुः। हिरण्यलाभे जाते तत्प्रतिष्ठार्थं पुनरेतयैवेष्ट्या यजते सा लब्धहिरण्येष्टिः। क्लीबत्वनाशपूर्वकपुंस्त्वकामस्य सोमाय वाजिने श्यामाकश्चरुः। चक्षुः कामस्याग्नये भ्राजस्वतेऽष्टाकपालः। सौर्य्यश्चरुः सैषा द्वितीया चक्षुः कामेष्टिः। अथ लोककामस्य पृथिव्यन्तरिक्षदैवत्येष्टिः। सा लोकेष्टिः। एवमाशायालेष्टिः। अथ वृष्टिकामेन कारीरीष्टिः कार्या। सा चाग्न्यादि नानादेवताकाऽग्निदेवताका वा। वर्षकामेष्टिमात्रेऽप्सुमन्तौ गायत्रौ देवते। अग्निः सोमो वा। अथवा धामच्छद्गुणकोऽग्निः। ता एतास्तिस्रो मरुद्देवत्या इष्टयः पिण्डीसंज्ञाः। संस्थितायामिष्टौ सर्वासां दिशामुपासनं च कार्य्यम्। एवमादयः काम्याः आश्वलायनीयापस्तम्बीयबौधायनीयादिश्रौतग्रन्थेषु ब्राह्मणग्रन्थेषु च तत्र तत्र समाख्याताः। एताश्च दर्शेष्टिविकारा वा पौर्णमासविकारा वेति तत्र तत्रोपेक्ष्यम्। काम्यानां चादीक्षितायनवदिष्ट्ययनत्वाविशेषेऽपि भूयसा याज्ञिकैः पार्थक्येन व्यवह्रियमाणत्वात् तदनुरोधेन ब्राह्मणवशिष्ठन्यायेनेहापि तासां पृथगुपदेशः।

उपर्युक्ता सर्वा इष्टयः इष्टिपशुसोमयज्ञेषु यथावसरमिज्यन्ते। तस्मादत्र तासामिष्टीनां यज्ञानां वा पृथक् पृथग्गणना निर्देशो वा न कर्तुं शक्यते। अतोऽनेन विवरणेनेदं स्फुटं भवति यद् प्रकृतियागवद्विकृतियागोऽपि नानाभेदभिन्नोऽस्ति। एषां विकृतियागानां भेदत्वे किं कारणमेतस्मिन् विषये तावत् किञ्चिद्विचार्यते।

## विकृतियज्ञभेदत्वे कारणानि

विकृतियज्ञानां भेदा इत्यनेन शीर्षकेन प्रतिपादिते खलूपर्युक्ते निबन्धे अनेकभेदप्रभेदेषु विभक्तानां विकृतियागानां नामान्युल्लिखितानि। ते यज्ञा कथम् अनेकभेदेषु विभक्ता अभवन् अत्र कारणद्वयमस्माकं पुरतः समायाति। यथा प्रथमन्तु संस्थाभेदाद् प्रकृतियज्ञानामनेकभेदत्वम्, अपरञ्च कारणमिदं वर्तते यत् कामनानुगुणं यज्ञानां भेदस्वीकरणमिति। प्रथमं कारणम् पूर्वं यदुक्तं समस्ता अपि श्रौतयागाः इष्टि-पशु-सोमभेदेषु निरुपिता भवन्ति। तत्रापि समस्तानामिष्टीनां प्रकृतिः दर्शपूर्णमासौ, समस्तानां पशुयागानां प्रकृतिर्निरूढपशुबन्धः तथा च समस्तसोमसंस्थानां प्रकृतिरग्निष्टोमः। तत्र संस्थाभेदाद् प्रकृतियज्ञः त्रिविध उक्तः। तेषु त्रिविधेष्वपि पूर्व-पूर्वक्रमेण प्रकृतेर्निदर्शनं यत्र तत्रोपलभ्यते यथा सप्तसोमसंस्थासु - अग्निष्टोमोऽत्य-ग्निष्टोमोक्थ्यषोडशी वाजपेयोऽतिरात्र आप्तोर्याम इत्येते सप्तयज्ञा उक्ताः। एषां सप्तानामपि यागानां पूर्वपूर्वक्रमेण प्रकृतेर्निदर्शनमेवं क्रियते यत्सर्वप्रथमसंस्थारूपेणात्राग्निष्टोम उक्तः। तस्मात् समस्तानां सोमसंस्थानां प्रकृतिरग्निष्टोमः। अत्यग्निष्टोमानन्तरमुक्थ्ययागस्य वर्णनं भवति तस्मादुक्थ्ययागस्य प्रकृतिरत्यग्निष्टोमः भवेत् परं अत्यग्निष्टोमोऽग्निष्टोम इवैव भवति तस्मादुभयोर्नास्ति कश्चिद्विशिष्टभेदः। अत उक्थ्यस्य प्रकृतिरग्निष्टोम एव। परं उक्थ्ययागानन्तरं षोडश्याः ग्रहणं भवति, तत्र षोडशीयागस्य प्रकृतिरूक्थ्य एव मन्यते। एवमेव षोडशी वाजपेयस्य, वाजपेयोऽतिरात्रस्यातिरात्रश्चाप्तोर्यामस्य प्रकृतिरुक्तः। एवं क्रमेणैव दर्शपूर्णमासौ इष्टीनां प्रकृतिः। तदङ्गग्रहणेनानुष्ठीयमानाः सर्वा अपि

आग्रयणेष्ट्याद्या इष्टयः विकृतय इत्युच्यन्ते। यतो हि अस्य आग्रयणस्य पौर्णमासतन्त्रत्वात्, सर्वं क्रियाकलापं पौर्णमासवदेव भवति। किन्तु प्रधानयागस्विष्टकृद्धोमयोर्मध्ये उपहोमो विशेषः। सर्वान्ते च ब्राह्मणतर्पणं विशेषः। नवान्नानां ब्रीहिश्यामाकयवानामग्निहोत्रहोमानन्तरं समन्त्रकं भक्षणं भवति। अथवा नवान्नं ब्रीह्यादिकं गां भक्षयित्वा तत्पयसाऽग्निहोत्रहोमं नैत्यकं कृत्वा समन्त्रकं भक्षणं भवति। इयं नवान्नेष्टिरप्युच्यते। एवं सवनेष्टिकाम्येष्ट्यस्तत्तद्विकृतिविशेषैरनुसन्धेयाः।

पशुबन्धो नाम यागश्चतुर्धा व्याख्यायते - निरूढपशुबन्धः, चरकसौत्रामणीपशुबन्धः, कौकिलसौत्रामणीपशुबन्धः, आश्वलायन-सौत्रामणी पशुबन्धश्चेति। तेषु चतुर्षु भेदभिन्नेषु पशुबन्धेष्वपि अङ्गकर्मरूपेण संकल्पः, ऋत्विग्वरणम्, उदवसानम्, अग्निमन्थनम्, अग्निविहरणम्, पाशुकवेदिः, उतरवेदिस्तन्नाभिश्च, चात्वालः, उत्करः, यजमानसंस्कारः पात्रसंभारसंस्कारः, अग्निहोत्रहोमः, आग्नेयीष्टिः, पशुपूर्वेष्टिरित्यादीन्यनेकानि कर्माणि दर्शपूर्णमाससम्बन्धीन्येव भवन्ति। मध्ये किमपि विशिष्टं कर्म आचर्यते। तस्मात्पुशबन्धोऽपि दर्शपूर्णमासस्यैव विकृतिरिति सिध्यति।

## द्वितीयं कारणम्

कामनानुगुणं यज्ञा अनेकविधा उक्ताः। तदुक्तं तैत्तिरीयसंहितायाम् - **'सर्वेभ्यो हि कामेभ्यो यज्ञः प्रयुज्यते।**[1]' अर्थात् मानवानां यावन्त्यः कामनाः सन्ति तासां सर्वासां कामनानां पूर्तये अनेकविधयज्ञा उक्ताः। यतोहि कामनायाः स्वरूपमुपवर्णयता महर्षिणा ऐतरेयेण उक्तम् - **'मनसि वै सर्वे कामाः श्रिताः।**[2]' अर्थात् मानवानां मनसि अनेकविधकामाः भवन्ति। कामस्य स्वरूपन्तु समुद्रवदपारमगाधञ्चोक्तं श्रुतौ। तद्यथा - **'समुद्र इव हि कामः। नैव हि कामस्यान्तोऽस्ति न समुद्रस्य।**[3]' यथा समुद्रे अनन्तजलविन्दवो

1. तै० सं० 2/4/11/2
2. ऐ० आ० 1/3/2
3. तै० ब्रा० 2/2/5/6

भवन्ति तथैव मानवानां मनसि कामा अपि भवन्ति। एकस्य कामस्य पूर्तिः भवति चेदन्यः काम उत्पतति। यावज्जीवनं कामस्योत्पत्तिस्तु मानवानां मनसि भवत्येव। मनुष्यस्य मानवत्वे मन एवं मुख्यं कारणम्। मनसः सकाशात् एव कामस्योत्पत्तिरभूत् तस्मात् कामः मनस्येव तिष्ठति। उक्तं हि यथा ऋग्वेदे – **'कामस्तदग्रे समवर्तताधि मनसो रेतः प्रथमं यदासीत्।'**[1] मनसः रेतत्वेन कामो व्याख्यातः। रेतः वीर्यं स वै खलु मनसः सकाशादुत्पद्यते। समुद्रस्योत्पत्तिश्चापि मनसः सकाशादेव श्रुतिषु वर्णितः। **'चन्द्रमा मनसो जातः'** इत्यनेन श्रौतवचनेन चन्द्रमस उत्पत्तिः मनसः सकाशात्। चन्द्रमा च समुद्रस्याधिष्ठाता। तस्माच्चन्द्रमसा समुद्रस्यावबोधो स्फुटरूपेणैव भवति। चन्द्रमसा सह समुद्रस्याभिन्नसम्बन्धः। अतः सिध्यति यत् समुद्रस्य मनसः च स्वरूपं समानमेवास्ति। समुद्रस्य मनसा सह साम्यमेवावलोक्य श्रुतौ **'समुद्र इव हि कामः नैव हि कामस्यान्तोऽस्ति न समुद्रस्य'**[2] इत्युक्तम्।

भगवता व्यासेनोक्तम् – **'मन एव मनुष्याणां कारणं बन्धमोक्षयोः।'** तत्रापि काम एव बीजभूतः। मनुष्यस्य मनसि कामः जागर्ति चेत् स प्रतिबन्धितो भवति तथा च कामस्य समाप्तौ स मुक्तो भवति। अत एव स्पष्टमिदं यत् कामस्तु मानवस्य मुख्यः प्रतिबन्धकः, तस्मात् कामस्यानन्तत्वात् कामसिद्धौ समर्थस्य साधनभूतस्य यागस्यापि अनन्तस्वरूपं सम्पद्यते। अत एवोक्तमृषिभिः **'अनन्ता वै वेदाः'**[3] वेदानां प्रवृत्तिः यज्ञार्थमेव। वेदानाम् अनन्तत्वात् वेदेषु प्रतिपाद्यविषयरूपेण यज्ञानामप्यनन्तत्वं सिध्यत्येव। श्रूयते चापि – **'सर्वकामोऽग्निष्टोमः'** – **दर्शपूर्णमासाभ्यां यजेत् स्वर्गकामः, उद्भिदा यजेत् पशुकामः, 'दध्नेन्द्रियकामस्य', वाजपेयेनेष्ट्वा सम्राड्भवति, राजा वै राजसूयेन यजेत, अतिष्ठाकाम = पुरुषमेधः, सोऽश्वमेधेनेष्ट्वा स्वराड्इति नामाधत्त** इत्यादीनि

1. ऋ० 10/129
2. तैत्तिरीयब्राह्मणे 2/2/5/6
3. तै० ब्रा० 3/10/11/3

कामसम्बन्धीनि वचनानि श्रौतग्रन्थेषूपलभ्यन्ते। वस्तुतः मानवस्य कर्मव्यापारो काममधिकृत्यैव प्रचलति। किमपि कर्म कर्तुं कश्चिज्जीवः प्रभवति चेत् प्रथमं तस्य मनसि काम एवोद्भवति। पूर्वं कामो भवति अनन्तरं कामपूर्तये स कर्माण्याचरति। कर्माचरणेन यत्फलमागच्छति तत्तस्याभीष्टम्। अत्रेष्टपदमपि कामस्यैव प्रतिरूपमुक्तम्। तस्मादुक्तं श्रौताचार्येण श्रीमता कात्यायनेन –'**कर्माणि फलवत्यानि**[1]' इति। अस्माभिः यदपि कर्म क्रियते तस्य फलं भवति। उदाहरणार्थमिह किञ्चिदुच्यते यत् वयं भोजनं कुर्मः, भोजनरूपव्यापारेणास्माकं जीवनं तिष्ठति। जीवनस्य सुरक्षायै भोजनादिकर्मव्यापारोऽस्माभिराचर्यते। तत्र भोजनकर्मणा किमिष्टं सिध्यति जीवनसुरक्षेति। अतः सिद्धमेव यत् सर्वाण्यपि कर्माणि फलयुक्तानि भवन्त्येव। फलमेवास्माकमिष्टम्। फलप्राप्तिद्वारैवास्माकमिष्टसिद्धिर्भवति। अत एव श्रुतिषु '**पुरुषो ह नारायणोऽकामयत**', '**प्रजापतिरकामयत**' इत्यादिभिः वचनैर्विविधयज्ञानुष्ठानस्य प्रवचनमारब्धमित्यवलोक्यते। भगवता यास्केनापि निरुक्ते – '**यत्काम ऋषिर्यस्यां देवतायामार्थमत्यमिच्छन् स्तुतिं प्रयुङ्क्ते तद्दैवतः स मन्त्रो भवति**[2]' इत्युल्लेखि। अत्रापि मन्त्रप्रवचने हेतुत्वेन काम एव उक्तः। तस्मादिदं सिद्धं यत्कामनानां वैविध्यत्वाद्यज्ञानां विविधत्वं सम्पन्नमिति। पूर्वं कामोऽल्पः तस्माद्यज्ञोऽप्यल्पा एवासन्। कालान्तरेषु यथा यथा कामवृद्धिर्जाता तथा तथा यज्ञानां स्वरूपं परिवर्धितमिति।

अत्रैतिहासिकाख्यानेनापि यज्ञस्यानेकविधत्वं सिध्यति। तद्यथा सृष्ट्यादौ सत्वगुणविशिष्टाः योगजशक्तिसम्पन्नाः परावरज्ञा ऋषयः स्वीयदिव्यमानसशक्त्या अस्य चराचरजगतः परमाणुत आरभ्य महद्द्रव्यपर्यन्तं समस्तं पदार्थजातं हस्तामलकवद् द्रष्टुं समर्थाः बभूवुः।[3]

1. का० श्रौ० सू० 1/1/2
2. निरुक्ते दैवतकाण्डस्यारम्भे।
3. साक्षात्कृतधर्माण ऋषयो बभूवुः। निरुक्ते 1/20; पुरा खलु अपरिमितशक्तिप्रभावीर्याः धर्मसत्वशुद्धचेतसः पुरुषा बभूवुः।। पराशरकृत ज्योतिषसंहितायाम्, उत्पलकृतायां बृहत्संहितायाष्टीकायाः 15 शे पृ० उद्धृतम्।

उत्तरोत्तरं सत्वगुणस्य ह्रासाद् रजस्तमोगुणयोर्वृद्धया च काम-क्रोध-लोभ-मोहादयः प्रादुर्बभूवुः।[1] तैर्वशीभूता मानवी प्रजा सुखविशेषेच्छया प्राजापत्यान् शाश्वतनियमान् उल्लंघ्य कृत्रिमं जीवनं यापयितुं प्रवृत्ताः।[2] यथा यथा आवश्यकता वृद्धिं गतवती तथा तथा जीवनसाधनेषु कृत्रिमता अपि ववर्धे। एतेन सहैव मानवीयानां दिव्यशक्तीनां ह्रासोऽपि समजनि।[3] तासां ह्रासेन सूक्ष्मदूरस्थ - व्यवहिताः पदार्था अज्ञेया अभूवन्। अतो ब्रह्माण्डस्य पिण्डस्य (= शरीरस्य) च कीदृशी रचनेति ज्ञातुं मानवा असमर्थाः समजायन्त। अत एवाधिभौतिकाधिदैविकाध्यात्मिकप्रक्रियानुसारं वेदार्थोऽपि दुरूहः समभवत्। एतादृशे काले तात्कालिकैः साक्षात्कृतधर्मभिः परावरज्ञैर्ऋषिभिर्ब्रह्माण्डस्य पिण्डस्य च रचनां विज्ञापयितुम्, अथ चाधिदैविकस्याध्यात्मिकस्य च प्राचीनवेदार्थस्य सुरक्षायै यज्ञानां प्रकल्पनाऽकारि। यज्ञानां मूलभूतं प्रयोजनं दैवताध्यात्मयोर्विज्ञापनमेव वर्तते। एतस्मिन् विषये भगवता यास्केन '**वाचं शुश्रुवाँ अफलामपुष्याम्**[4]' इति ऋक्चरणस्य व्याख्यान उक्तम् - '**अयं वाचः पुष्पफलमाह याज्ञदैवते पुष्पफले देवताध्यात्मे वा**[5]' इति। अथर्ववेदेऽप्युक्तम् - **तस्माद्वा ओदनात् त्रयस्त्रिंशतं लोकान् निरमिमीत प्रजापतिः। तेषां प्रजानाय यज्ञान् असृजत्।**[6] इति।

---

1. तेषां क्रमादपचीयमानसत्वानामुपचीयमानरजस्तमस्कानां तेजोऽन्तर्दधे। तत्रैव 15 शे पृ०
2. ता इमाः प्रजास्तथैवोपजीवन्ति यथैवाभ्यः प्रजापतिर्व्यदधात्। नैव देवा अतिक्रामन्ति न पितरो न पशवः। मनुष्या एवैकेऽतिक्रामन्ति।। शतपथश्रुतौ 2/4/2/5-6
3. भ्रंश्यति तु कृतयुगे - लोभः प्रादुरासीत्। ततस्त्रेतायां लोभादभिद्रोहः, अभिद्रोहाद् अनृतवचनम्, अनृतवचनात्, कामक्रोधमानद्वेषपारुष्याभिघातभयतापशोक-चिन्तोद्वेगादयः प्रवृत्ताः।। चरकसंहिता, विमानस्थाने तृतीयाध्याये।
4. ऋ० 10/71/5
5. निरुक्ते 1/2
6. अथर्ववेदे 11/3/3, 52, 53

भगवतो यास्कस्य मतानुसारं यज्ञदैवतयोः ज्ञानं यथाक्रमं पुष्पफलस्थानीयम् अर्थाद् यथा पुष्पाणि फलानां निष्पत्तौ कारणानि भवन्ति, तथैव याज्ञिकप्रक्रियाया ज्ञानं दैवतज्ञाने (=ब्रह्माण्डविज्ञाने) कारणम्। यदा च दैवतज्ञानं सम्पद्यते तदा तदेवाध्यात्मज्ञानदृष्ट्या पुष्पस्थानीयं सत् फलस्थानीयमध्यात्मज्ञानं सम्पादयति। अत एव ब्राह्मणग्रन्थेषु बहुत्र याज्ञिकप्रक्रियानुसारं मन्त्रं व्याख्याय इत्यधियज्ञम्, इत्युक्त्वा अथाधिदैवतम्, अथाध्यात्मम्, इत्यादिरूपा निर्देशा उपलभ्यन्ते। तेन च अधियज्ञ अधिदैवत – अध्यात्मप्रक्रियाणां पारस्परिकी समता निदर्शिता भवति।

उक्त विवेचनया इदं सुव्यक्तं भवति तद् यज्ञानां प्रकल्पना ब्रह्माण्डस्य पिण्डस्य च सूक्ष्मरचनाया यथावद् विज्ञानायैव प्राचीनैर्ऋषिभिः कृता। अत एव यज्ञकर्मणि प्रमादात् किञ्चिन्मात्रपरिवर्तने सति कर्म फलप्रदं न भवति, पात्राणां च यथास्थानं स्थापनाभावे फलप्रदमपूर्वं नोत्पद्यते इत्याद्याः प्रकल्पना याज्ञिकैः क्रियन्ते। यथा – पृथिव्या विविधप्रदेशानां परिज्ञापनाय नगर–मण्डल–प्रान्त–देश–महादेशानां क्रम आश्रीयते, तदर्थं चानेकविधानि मानचित्राणि निर्मीयन्ते, तथैव ब्रह्माण्डस्य पिण्डस्य च स्थूल – सूक्ष्मरचनां क्रमशः परिज्ञापयितुमग्निहोत्र – दर्शपूर्णमास– चातुर्मास्यादिरूपा विविधाः यज्ञाः प्रकल्पिताः। कल्पनादेव यज्ञानां '**कल्प**' इत्येकं नाम। तस्य व्याख्यानानि च कल्पसूत्राणीत्युच्यन्ते।

प्रसङ्गानुसारमत्र कल्पशास्त्रस्य महत्त्वं प्रतिपादनाय वेदाङ्गेषु कल्प–शास्त्रस्य किं स्थानमिति लिख्यते–

## वेदाङ्गेषु कल्पशास्त्रस्य स्थानम्

वेदा ह्यार्यजातेः सर्वस्वम्। वेदानामध्ययनमिहापरिहार्यत्वेनानिवार्यत्वेन चाभ्युपगतम्। यो हि द्विजो वेदमनधीत्यान्यत्र श्रमं विदधाति स इह शूद्रो मतः। तदुक्तं भगवता मनुना –

**"योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम्।**
**स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः।।[1]"**

यः पुमान् वेदं तदर्थञ्च कर्मब्रह्मात्मकं तत्त्वतः जानाति स नित्यनैमित्तिककर्मानुगृहीत- ब्रह्मज्ञानेन ब्रह्मचर्याद्याश्रमावस्थितोऽस्मिन्नेव लोके तिष्ठन् ब्रह्मत्वाय कल्पते। मनुना प्रोक्तश्चापि -

**"वेदशास्त्रार्थतत्त्वज्ञो यत्र कुत्राश्रमे वसन्।**
**इहैव लोके तिष्ठन्स ब्रह्मभूयाय कल्पते।।[2]"**

मुण्डकोपनिषदि द्वे विद्ये व्याख्याते स्तः। तयोर्द्वयोर्यत्रापराविद्यान्तर्गताः षडङ्गसहिताः चत्वारो वेदाः परिगृहीतास्तत्र पराविद्यान्तर्गतमक्षरपुरुष-स्याधिगमनं व्याख्यातम्। तद्यथा -

**"द्वे विद्ये वेदितव्ये इति ह स्म यद्ब्रह्मविदो वदन्ति परा चैवापरा च। तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षाकल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति। अथ परा यथा तदक्षरमधिगम्यते।[3]"**

मैत्रायण्यां द्वयोर्ब्रह्मणोरूल्लेखो मिलति। यथा -

**"द्वे ब्रह्मणी वेदितव्ये शब्दब्रह्म परं च यत्।**
**शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति।।[4]"**

अत्रोक्तेन शब्दब्रह्मेतिपदेन षडङ्गसहिताः ऋग्यजुस्सामाथर्ववेदा एव बुध्यन्ते। तस्माद्वेद-वेदाङ्गशास्त्रेषु यो निष्णातो भवति स परब्रह्माधिगच्छति एतदेव तात्पर्यं मनोः **'ब्रह्मभूयाय कल्पते'** इत्यस्मिन् पदेऽपि घटते।

वेदानां षडङ्गानि ऋषिभिः प्रोक्तानि। अङ्गशब्दस्य व्युत्पत्ति-लभ्योऽर्थोऽस्ति **"अङ्ग्यन्ते ज्ञायन्ते अमीभिरित्यङ्गानि"** अनया व्युत्पत्त्या अङ्गशब्दस्यार्थो भवति **"उपकारक"** इति। अर्थाद्येन कस्यापि वस्तुनः

---

1. मनुस्मृतौ, 2/168
2. मनुस्मृतौ, 12/102
3. मुण्डकोपनिषद्, 1/1/4-5
4. मैत्रायण्याम्, 6/12

स्वरूपज्ञाने साहाय्यं मिलति तदङ्गमित्युच्यते। वेदानामर्थज्ञाने तस्य कर्मकाण्डप्रतिपादने च यान्युपयोगीनि शास्त्राणि सन्ति तान्येव वेदाङ्गानि भवन्ति। वेदानां यथार्थज्ञानलाभाय षण्णां विषयाणां ज्ञानमपेक्षितम्भवति। यथा वैदिकमन्त्राणामुचितोच्चारणाय शिक्षायाः कर्मकाण्डस्य यज्ञीयानुष्ठानस्य च निमित्तं कल्पस्य, शब्दानां स्वरूपज्ञानाय व्याकरणस्य, अर्थज्ञानाय निर्वचनाय च निरुक्तस्य, वैदिकच्छन्दसां ज्ञानलाभाय छन्दसस्तथा-ऽनुष्ठानस्योचितकालनिर्णयार्थं ज्योतिषशास्त्रस्य प्रयोजनमस्ति। तस्माच्छिक्षा, कल्पो, व्याकरणम्, निरुक्तम्, छन्दो, ज्योतिषञ्चेत्येतानि वेदाङ्गानां नामानि सन्ति। पाणिनीयशिक्षा प्राह –

**"शिक्षा कल्पो व्याकरणं निरुक्तं छन्दसां चयः।**
**ज्योतिषामयनञ्चैव वेदाङ्गानि षडेव तु।।"**

तथा च –

**छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते।**
**ज्योतिषामयनञ्चक्षुर्निरुक्तं श्रोत्रमुच्यते।।**
**शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम्।**
**तस्मात्साङ्गमधीत्यैव ब्रह्मलोके महीयते।।**[1]

महाभाष्यकारेणाचार्यपतञ्जलिनाऽपि पस्पशाह्निके उक्तम् –

**"ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च।"**

उपर्युक्तेन विवेचनेनेदं स्फुटं भवति षडङ्गसहितानां वेदानामध्ययनं सर्वकल्याणप्रदायकं पुरुषार्थचतुष्टयसिद्ध्यर्थमत्यन्तमुपयुक्तञ्च भवति। षडङ्गेषु येषां शास्त्राणां नामान्युक्तानि तेषु द्वितीयं स्थानमस्ति कल्पशास्त्रस्य। इतिहासग्रन्थेषु वैदिककालस्य चत्वारो भागाः व्याख्याताः सन्ति। संहिताकालः, ब्राह्मणकालः, आरण्यककालः, उपनिषत्कालश्च। तत्र ब्राह्मणकाले यागस्य तावान् प्रचारो जातो यत्तेषां यथावज्ज्ञानाय पूर्णपरिचयप्रदायकग्रन्थानामावश्यकताऽनुभूयते स्म, तामेवावश्यकतां

1. पा० शि० 41/42

स्वल्पैः शब्दैः पूरयितुं कल्पसूत्राणि विरचितानि। वेदविहितानां कर्म्मणां व्यवस्थापनं क्रमपूर्वकं कल्पशास्त्रे कल्पितम्। उक्तञ्च –

**"कल्पो वेदविहितानां कर्मणामानुपूर्व्येण कल्पनाशास्त्रम्।"**

पारिभाषिकदृष्ट्या यज्ञयागादीनां विभिन्नविधानानां समर्थनं निरूपणञ्च कल्पशास्त्रस्य मुख्यमुद्देश्यम्। एतत्सिद्धान्तमभिलक्ष्यैव पदवाक्यप्रमाण–पारावारपारीणेन सायणाचार्येणोक्तं ऋग्भाष्यभूमिकायाम् – **"कल्प्यते समर्थ्यते यागप्रयोगोऽत्र कल्पः।"**

कर्काचार्येण कात्यायनश्रौतसूत्रसन्दर्भे कल्पसूत्रं श्रौतसूत्रञ्चोभयं समानार्थकमित्युक्तम्। पाणिनिः पतञ्जलिश्च कल्पसूत्रग्रन्थान् **"प्रोक्त"** (साहित्य) अन्तर्गतं स्वीकरोति।[1] अस्य तात्पर्यमिदमस्ति यत्प्रोक्तग्रन्थः प्रवचनकर्तृणामाचार्याणां स्वीया कृतिर्नास्ति। इमौ द्वावेव महामुनी (पाणिनिपतञ्जली) काश्यपस्य कौशिकस्य च कल्पसूत्राणामुल्लेखः कुरुतः। कौशिककल्प एव संभवतः कौशिकसूत्रमस्ति। एषां कल्पसूत्राणां प्रणयनं ऋषयः कृतवन्तः। महाभाष्ये – **"यावमतीभिरद्भिर्यूपं प्रोक्षति"** एतद् कल्पवचनं ऋषिप्रणीतमुक्तम्।[2]

तात्पर्यमिदमस्ति यत्कर्मकाण्डस्य विपुलानां विधिविधानानां विभिन्नानां प्रयोगानुष्ठानानां, नियमोपनियमानां, सामाजिक प्रथा – परम्पराणां, लोक–आस्थानां च संक्षेपेणासंदिग्धरूपेण च प्रस्तुतीकरणमेव कल्पसूत्राणामभीष्टम्। श्रूयते यत्पुरा (1130) त्रिंशदुत्तरशतसहस्रसंख्यकानि कल्पसूत्राण्यासन्, येषु सम्प्रति (50) पञ्चाशत्संख्यकानि कल्पसूत्राण्येवोपलब्धानि। एषु समस्तेषु कल्पसूत्रेषु (42) द्विचत्वारिंशत्कर्मणां प्रतिपादनमस्ति।

तद्यथा – चतुर्दशश्रौतयागानां, सप्तगृह्ययज्ञानां, पञ्चमहायज्ञानां, षोडशसंस्काराणाञ्च।

वस्तुतः कल्पशास्त्राणि द्विविधानि – श्रौतसूत्राणि स्मार्तसूत्राणि च। श्रुत्युक्तयागविधिप्रकाशकानि श्रौतसूत्राणि। श्रौतसूत्रस्यापरो भेदः

1. अष्टाध्याय्याम् – 4.3.105; महाभाष्ये 4.2.64–66
2. महाभाष्ये 5.2.94

शुल्बसूत्रमिति। स्मार्तसूत्राण्यपि द्विधा – गृह्यसूत्राणि धर्मसूत्राणि चेति। एवमुपर्युक्तविभागेन कल्पसूत्राणि चतुर्विधानि दृश्यन्ते – (1) श्रौतसूत्रम्, (2) गृह्यसूत्रम्, (3) धर्मसूत्रम्, (4) शुल्बसूत्रञ्च। संक्षेपेण तेषां परिचयोऽत्र दीयते –

1. श्रौतसूत्रम् – श्रौतसूत्रेषु अग्नित्रयाधानम्, अग्निहोत्रम्, दर्शपूर्णमासौ, पशुयागः, नानाविधानां सोमयागादीनां ब्राह्मणग्रन्थवर्णितानां श्रौताग्नियज्ञानां क्रमबद्धानि वर्णनानि सन्ति।
2. गृह्यसूत्रम् – गृह्यसूत्रेषु तेषामनुष्ठानाचारयागानां वर्णनं विद्यते, येषां सम्पादनं त्रैवर्णिकैरवश्यं कर्त्तव्यमिति। षोडशसंस्काराणां विशिष्टं वर्णनमपि गृह्यसूत्रेषु कृतं बोध्यम्। मुख्यतः गृह्यसूत्रे चतुर्णां गृह्याग्निसम्बद्धयागानामुपनयनविवाह-श्राद्धादिसंस्काराणां विस्तृतं विवरणं विद्यते।
3. धर्मसूत्रम् – धर्मसूत्रेषु धार्मिकनियमाः, राज्ञां प्रजानाञ्च कर्त्तव्यचर्याः, चत्वारो वर्णाः, चत्वार आश्रमाः, तेषां धर्माः पूर्णतया निरूपिताः। एतानि धर्मसूत्राण्येव स्मृतीनां जन्मनेऽकल्पन्त। धर्मसूत्रे चतुर्णां वर्णानामाश्रमाणां च किञ्च राज्ञामपि कर्त्तव्यानि निर्दिष्टानि सन्ति।
4. शुल्बसूत्रम् – चतुर्थं शुल्बसूत्रन्तु वेदिनिर्माणप्रकारं विशेषतः प्रतिपादयति। सूत्रस्यास्य वैज्ञानिकं महत्त्वमस्ति। मुख्यतः शुल्बसूत्रमपि कल्पसूत्रमेव, तत् श्रौतसूत्रान्तर्गतम्। शुल्बं मापक्रिया। इदं सूत्रमेव भारतीयज्यामितिशास्त्रस्य प्रवर्तकम्। पाश्चात्यैः 'पिथागोरस' प्रभृतिभिरिदं ज्यामितिशास्त्रं प्रणीतमिति ये कल्पयन्ति, ते शुल्बसूत्रं दृष्ट्वा दृढीकुर्वन्तु यदिदं ज्यामितिशास्त्रं भारतीयैः पाश्चात्यज्यामितिशास्त्रोत्पत्ते-र्बहुदिवसपूर्वमेव प्रकटीकृतमिति। यतः शुल्बशब्दस्यार्थो भवति 'रज्जुः।' अतः रज्ज्वा मापितवेद्या रचना शुल्बशास्त्रस्य प्रतिपाद्यविषयोऽस्ति।

## कल्पसूत्राणि तत्तद्वेदसम्बन्धनिबन्धनभेदयुतानि तत्र

| वेदः | श्रौतसूत्रम् | गृह्यसूत्रम् | धर्मसूत्रम् | शुल्बसूत्रम् |
| --- | --- | --- | --- | --- |
| ऋग्वेदः | (1) आश्वलायनश्रौतसूत्रम् | (1) आश्वलायनगृह्यसूत्रम् | – | – |
| | (2) शाङ्खायनश्रौतसूत्रम् | (2) शांख्यायनगृह्यसूत्रम् | – | – |
| | (3) कौषीतकि श्रौतसूत्रम् | (3) कौषीतकि गृह्यसूत्रम् | – | – |
| शुक्लयजुर्वेदः | (1) कात्यायनश्रौतसूत्रम् | (1) पारस्करगृह्यसूत्रम् | – | (1) कात्यायनशुल्बसूत्रम् |
| | | (2) वैजवापगृह्यसूत्रम् | | |
| कृष्णयजुर्वेदः | (1) बौधायनश्रौतसूत्रम् | (1) बौधायनगृह्यसूत्रम् | (1) बौधायनधर्मसूत्रम् | (1) बौधायनशुल्बसूत्रम् |
| | (2) आपस्तम्बश्रौतसूत्रम् | (2) आपस्तम्बगृह्यसूत्रम् | (2) आपस्तम्बधर्मसूत्रम् | (2) आपस्तम्बशुल्बसूत्रम् |
| | (3) हिरण्यकेशी वा सत्याषाढ़श्रौतसूत्रम् | (3) हिरण्यकेशिगृह्यसूत्रम् | (3) हिरण्यकेशिधर्मसूत्रम् | (3) हिरण्यकेशिशुल्बसूत्रम् |
| | | – | – | – |
| | (4) वैखानसश्रौतसूत्रम् | (4) वैखानसगृह्यसूत्रम् | (4) वैखानसधर्मसूत्रम् | – |
| | (5) बाधूलश्रौतसूत्रम् | (5) अग्निवेशगृह्यसूत्रम् | – | – |
| | (6) भारद्वाजश्रौतसूत्रम् | (6) भारद्वाजगृह्यसूत्रम् | (5) भारद्वाजधर्मसूत्रम् | – |
| | (7) मानवश्रौतसूत्रम् | (7) मानवगृह्यसूत्रम् | (6) वशिष्ठधर्मसूत्रम् | (4) मानवशुल्बसूत्रम् |
| | (8) वाराहश्रौतसूत्रम् | (8) वाराहगृह्यसूत्रम् | (7) विष्णुधर्मसूत्रम् | (5) वाराहशुल्बसूत्रम् |
| | (9) काठकश्रौतसूत्रम् | (9) काठकगृह्यसूत्रम् | (8) गौतमधर्मसूत्रम् | (6) मैत्रायणीशुल्बसूत्रम् |
| | – | (10) लौंगाक्षिगृह्यसूत्रम् | (9) शंखधर्मसूत्रम् | – |

| वेदः | श्रौतसूत्रम् | गृह्यसूत्रम् | धर्मसूत्रम् | शुल्बसूत्रम् |
|---|---|---|---|---|
| सामवेदः | (1) आर्षेयकल्पसूत्रम् | (1) गोभिलगृह्यसूत्रम् (कौषी० शाखा) | – | – |
| | (2) मुद्राकल्पसूत्रम् | (2) खादिरगृह्यसूत्रम् | – | – |
| | (3) लाट्यायनश्रौतसूत्रम् | – | – | – |
| | (4) मशककल्पसूत्रम् | – | – | (1) मशकशुल्बसूत्रम् |
| | (5) द्राह्यायणश्रौतसूत्रम् | – | – | – |
| | (6) जैमिनीयश्रौतसूत्रम् | (3) जैमिनीयगृह्यसूत्रम् | – | – |
| अथर्ववेदः | (1) वैतानश्रौतसूत्रम् | (1) कौशिकगृह्यसूत्रम् | (1) कौशिकसूत्रम् | – |
| कुल 4 वेदाः | 21 श्रौत्रसूत्राणि | 19 गृह्यसूत्राणि | 10 धर्मसूत्राणि | 8 शुल्बसूत्राणि |

चतुर्ण्णां वेदानां क्रमेण क्रमशः एकविंशतिः श्रौतसूत्राणि, एकोनविंशतिगृह्यसूत्राणि, दशधर्मसूत्राणि, अष्टौ शुल्वसूत्राणि चैतिहासादिषु चर्चितानि सन्ति। आहत्य सर्वाण्यपि कल्पशास्त्राणि (58) अष्टपञ्चाशत्संख्यकान्युक्तानि। उक्तेष्वेषु कल्पसूत्रेष्विदानीं न सर्वाणि सन्त्युपलब्धानि परं येषां नामानि शास्त्रान्तरेषूल्लिखितानि तान्यत्रोद्धृतानि। आचार्यपाणिनिना स्वप्रणीतशिक्षाग्रन्थे सर्वाङ्गपूर्णस्य वेदपुरुषस्य कल्पना कृता। तत्र कल्पशास्त्राणि वेदपुरुषस्य **"हस्तौ कल्पोऽथ पठ्यते"** हस्ताङ्गरूपाण्युक्तानि। यथा लोके सव्यापसव्ययोः हस्तयोर्महत्वं वर्तते एवमेव वेदाङ्गेषु कल्पशास्त्रस्य महत्त्वमवधेयम्। नारदपुराणे - **"कल्पविज्ञानमात्रेण मनुष्याः कर्मसु कुशला भवन्ति[1]"** इत्येतदुक्तमस्ति। तत्र पञ्चविधानि कल्पशास्त्राण्युक्तानि - (1) नक्षत्रकल्पः, (2) वेदकल्पः, (3) संहिताकल्पः, (4) आङ्गिरसकल्पः, (5) शान्तिकल्पश्च। एषु कल्पशास्त्रेषु नक्षत्रकल्पे नक्षत्रस्वामिनां वर्णनानि सन्ति, वेदकल्पे ऋगादिविधानस्य सुविस्तृतानि वर्णनानि, संहिताकल्पे तत्त्वद्रष्टृभि-र्ऋषिभिर्ऋषिच्छन्दो देवताः निर्दिष्टाः, आङ्गिरसकल्पे ब्रह्मणा स्वयमेवाभिचारविधिना षट्कर्माणि निरूपितानि, तथा च शान्तिकल्पे दिव्य-भौमान्तरिक्षसम्बद्धा उत्पाताः पृथक् पृथगुक्ताः।

उपर्युक्तेन विवेचनेनेदं ज्ञायते यत्कल्पशास्त्रस्य महत्त्वं श्रौत-स्मार्तोक्तानां यज्ञानुष्ठानानां सम्पादनायातीवोत्कृष्टम्। कल्पशास्त्रस्य ज्ञानं विना वैदिककर्म्मणां तात्त्विकं ज्ञानमसम्भवमेव। तत्त्वज्ञानाभावे च तेषां सम्यक् परिपालनं सम्पादनञ्चापि दुष्करम्। यथा लोके जनाः हस्ताभ्यां विना दानप्रतिग्रहादीनि कर्म्माणि न कर्तुमर्हन्ति एवमेव कल्पशास्त्रस्याध्ययनं विना श्रौतस्मार्तकर्माण्यनुष्ठातुं कदाचिदपि समर्था न भवितुमर्हन्ति। मानवजीवने यथा हस्तयोः महत्वमुक्तं तथैव यज्ञादिसम्पादनार्थं प्रकटीभूतानां परब्रह्मपरमात्मनः निःश्वासरूपाणां, कालाकाशादिवदविच्छिन्नानां,

---

1. नारदपुराणे, पूर्वभागे, द्वितीयपादे 51 तमे अध्याये द्रष्टव्यः।

कालत्रयेषु सदा विद्यमानानां, शब्दब्रह्मात्मकानां, ऋग्यजुस्सामाथर्ववेदानां हस्ताङ्गरूपेण कल्पितानां कल्पशास्त्राणाम्महत्त्वमत्यन्तमुपयोगिशास्त्रत्वेन वर्णितम्। अनेन शास्त्रमाध्यमेन यागप्रयोगेषु विशिष्टं सामर्थ्यमवाप्य जनाः श्रेष्ठतमस्यास्य यज्ञानुष्ठानकर्मण आचरणं कुर्वन्ति। "**फलयुक्तानि कर्माणि**[1]" इति श्रौतसूत्रवचनात् कर्माणि फलवत्यानि भवन्ति एवं तस्मात्तेन सदनुष्ठानेन जनाः यथेप्सितान्यैहिकसुखान्यवाप्य पारलौकिकसुखानि चापि प्राप्नुवन्ति। एतदेवाभिलक्ष्य श्रीमता सायणाचार्येण वेदपदस्यार्थं कुर्वता – "**इष्ट प्राप्त्यनिष्टपरिहारयोरलौकिकमुपायं यो वेदयति स वेदः**[2]" इत्युक्तम्। इत्थं इष्टप्राप्तिरनिष्टपरिहृतेश्चालौकिकोपायरूपेण यज्ञानुष्ठानमेवोक्तम्। तच्चानुष्ठानं कल्पशास्त्रानुसारमनुष्ठेयमिति। तस्मादेतस्मात्कारणात् कल्पशास्त्रस्याध्ययनमिहापरिहार्यत्वेनानिवार्यत्वेन चावश्यमेव सर्वैरनुष्ठातृभिः कर्त्तव्यमिति।

विविधानां नित्य-नैमित्तिक-काम्यानां श्रौतयज्ञानां प्रकल्पना सृष्टिं विज्ञापयितुमेव कृतेति तथ्यं हृदयङ्गमं कारयितुं प्रकृतियज्ञानां विकृतियज्ञानां च काचित् समता समुपस्थाप्यते।

**अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः।**
**प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम्।।**[3]

इत्युक्तो वैश्वानरोऽग्निः सर्वेषां जठरे स्थितः तत्र हूयमानश्चान्न-पानादिगतः सोमोऽनवरतं रसासृङ्मांसादिरूपमापद्य देहं रक्षतीति सर्वेषां नः प्रत्यक्षसिद्धम्। भुक्तमन्नादि वैश्वानरेण वह्निना रसरूपतां नीयते, असृक् च मांसरूपेण, मांसं मेदो रूपेण, मेदोऽस्थिरूपेण, अस्थि मज्जारूपेण, मज्जा च शुक्ररूपेण, परिणमतीति सप्तधातून् आयुर्वेदविद आचक्षते। शुक्रं सन्तत्युत्पादने शारीरबलप्रयोगे च कारणतां गच्छति, रक्षितं त्वोजोरूपेण,

---

1. का० श्रौ० सू० 1/1/2
2. ऋग्वेदभाष्यभूमिकायाम्
3. गीता 15/4

ओजश्च मनोरूपेण परिणमतीति '**अन्नमयं हि सौम्य मनः**[1]' इत्यादि छान्दोग्यश्रुतौ विवृतम्। मनश्च सोमरूपं सोमसमष्टिरूपे चन्द्रमण्डलेऽनवरतं गच्छति। ततश्च पुनरोषध्यादिषु सोमः संक्राम्यतीत्येतदेव चक्रम्। एवमनवरतं नवनवोत्पत्तिः पुरातनानां जीर्णानां रूपान्तरतापत्तिश्चेति चक्रं सर्वेषु पदार्थेष्वनुस्यूतं भाव्यमिति स एव प्राकृतो यज्ञः।

वस्तुतस्तु द्वयोः सम्बन्धरूपो यज्ञः सृष्टेरारम्भादेव प्रवृत्तः श्रुतिष्वाम्नातः। द्वयोः सम्बन्धे प्रधानः पुरुष इति, अग्निरिति च परिभाष्यते। अप्रधानस्तु योषेति सोम इति च परिभाष्यते। अग्नीषोमयोर्यथाऽन्नादान्नरूपो वृषयोषारूपश्च सम्बन्धः, तथैव द्वयोः सम्बन्धे एकस्य वृषत्वमर्थात् पुरुषत्वम्, अपरस्य तु योषात्वं प्रकल्प्य तत्राप्यग्नित्वं च सोमत्वं चारोप्यते। तयोः सम्बन्धश्च यज्ञशब्देनैव व्यवह्रियत इति भाव्यम्। तदुक्तं केनापि – '**अग्नौ सोमाहुतिर्यज्ञः**' इति। अस्यैव अग्नौ सोमाहुतिरूपस्य यज्ञस्यैव वर्णनं कुर्वता कात्यायनेन – '**द्रव्यं देवता त्यागो याग**' इति यागपदार्थ उक्तः।

अथैवं सृष्ट्यादौ पुरुषत्रयप्रादुर्भावः संसारमूलभूतानां मनः प्राणवाचां परस्परमुत्तरोत्तरीभावश्च सर्व एव यज्ञकृतस्तत्र तत्र व्याख्यायते। सर्वेऽपि यज्ञाः अग्नौ सोमाहुतिरूपाः। एतानेव प्राकृतयज्ञानाश्रित्यानेकविधाः विकृतियज्ञाः प्रादुर्भूता इति सम्यग् निरूपितम्।

---

1. छां० उप० 6/4/4

# ( ग ) विकृतियज्ञेषु प्रकृत्योपकारित्वम्

**'प्रकृतिवद्विकृतिः कर्त्तव्या'** इत्यनेनादेशवाक्येनेदं सिध्यति यद् विकृतियागाः न स्वतन्त्रपद्धत्याऽनुष्ठीयन्ते। प्रकृतियज्ञानां पद्धतिमनुसृत्यैव तेषामनुष्ठानं सम्भवम्। यतस्तु मीमांसाग्रन्थेषु प्रकृतिविकृत्योर्लक्षणं कुर्वता आचार्यैरिदमुक्तम् - **'यतो विकृतिरङ्गानि गृह्णाति सा प्रकृतिः'** अनेन लक्षणेन प्रकृतियागेषूक्तानामङ्गानां साहाय्येनैव प्रकृतियज्ञानामनुष्ठानम्भवितु-मर्हतीति स्पष्टं पूर्वप्रकरणेषु। उक्तानां समस्तानामपि नित्यनैमित्तिककाम्यानां यागानुष्ठानानां प्रकृतिर्दर्शपूर्णमासावेव। तथा चोक्तं गवामयनविकारप्रसङ्गे यज्ञमधुसूदने समीक्षाचक्रवर्तिना मधुसूदन ओझा महोदयेन -

'अथाऽन्ये गवामयनविकारा भवन्ति - यान्यहानि दर्शपूर्णमासाभ्यां यजनीयदिवसाभ्यां संनिपतेयुः तान्युत्सृजेत्। तदिदं संसदामयनम्। अथवा पौर्णमासीभिरेव यानि सुत्यान्यहानि संगच्छेयुस्तान्येवोत्सृजेत्। अत्र पौर्णमासीशब्दो यजमानायाहर्वचनः - इति शांखायनभाष्यकारः। इत्युत्सर्गिणामयनम्। अथ दशरात्रे यः पृष्ठ्यः तं वर्जयित्वा गवामयने यावन्तः पृष्ठ्याः, तेषां स्थानेऽभिप्लवाः कार्य्याः। तदिदमभिप्लवायनं नाम संवत्सरसत्रम्। तान्येतानि त्रीणि वैकारिकाणि गवामयनानि। उपसद्भिश्चरित्वा सुत्यास्थानेषु तन्त्रवत् सायंप्रातर्होमक्रमतो मासमग्निहोत्रं जुहोति। दर्शपूर्णमासाभ्यामेकतन्त्रिकया मासमुपैति। ततश्चातुर्मास्यपर्वणां वैश्वदेव - वरुणप्रघास- शाकमेध-शुनासीरीयाणामेकैकेन मासं मासमेकविंशेन, मासं त्रिणवेनोपैतीत्येकादशमासाः सम्पद्यन्ते। उत्तमे तु मासेऽष्टादशाहं त्रयस्त्रिंशस्तोमेनोपैति। ततो दशाहः, ततो महाव्रतमहः, ततोऽतिरात्रम् - इतीत्थं सवत्सरः पूर्य्यते। अत्र यो होता, सोऽध्वर्युः स पोता। यो मैत्रावरुणः स ब्रह्मा स प्रतिहर्ता। य उद्गाता सोऽच्छावाकः स नेष्टा। यः प्रस्तोता स ब्राह्मणाच्छंसी स ग्रावस्तुत्। यः प्रतिप्रस्थाता सोऽग्नीत् स उन्नेता। सुब्रह्मण्यः सुब्रह्मण्यः। गृहपतिर्गृहपतिरिति।'

अनेन विवेचनेनेदं सिद्धं यद्दर्शपौर्णमास याग एव समेषामपि श्रौतयागानां प्रकृतिभूतः। तत एवान्येषु श्रौतक्रतुष्वङ्गानि प्राप्यन्ते। शतपथब्राह्मणस्य चतुर्थाध्यायारम्भे एकाख्यायिका श्रूयते, या विकृतियज्ञस्य प्रकृतियज्ञमूलकत्वं स्फुटीकरोति। कुरुपाञ्चालदेशवास्तव्य आरणिरुद्दालको यज्ञे वृत उदीच्ये गतः। तस्यादरार्थं तत्र यजमानेन निष्क आहितः, तेन उदीच्या ब्राह्मणा ईर्ष्यां दधानाः स्वैदायनं नाम वेदनिष्णातं ब्राह्मणमग्रेसरीकृत्याऽऽरुणिना सह ब्रह्मोद्याय प्रेषयामासुः। तेन यज्ञे गत्वा गौतमगोत्र आरुणिरुद्दालक एवं पृष्टः – **'स वै गौतमस्य पुत्र वृतो जनं धावयेत्, यो दर्शपूर्णमासयोरष्टौ पुरस्तादाज्यभागान्। स वै गौतमस्य पुत्र वृतो जनं धावयेत्, यस्तद्दर्शपूर्णमासयोर्विद्यात् यस्मादिमा प्रजाः अदन्तका जायन्ते, यस्मादासां जायन्ते यस्मादासां प्रभिद्यन्ते यस्मादासां संतिष्ठन्ते यस्मादासां पुनरुत्तमे वयसि जायन्ते यस्मादासां प्रभिद्यन्ते यस्मादासां संतिष्ठन्ते यस्मादासां पुनरुत्तमे वयसि सर्वा एव प्रभिद्यन्ते। यस्मादधर एवाग्रे जायन्तेऽथोत्तरे यस्मादणीयांस एवाधरे प्रथीयांस उत्तरे, यस्माद्दंष्ट्रा वर्षीयांसो यस्मात्समा एव जम्भ्याः। स वै गौतमस्य पुत्र वृतो जनं धावयेत्, यस्तदर्शपूर्णमासयोर्विद्याद् यस्मादिमाः प्रजा लोमशा जायन्ते, यस्मादासां पुनरिव श्मश्रूण्योपपक्ष्याणि दुर्बीरिणानि जायन्ते, यस्माच्छीर्षण्येवाग्रे पलितो भवत्यथ पुनरुत्तमे वयसि सर्व एव पलितो भवति। स वै गौतमस्य पुत्र वृतो जनं धावयेत्, यस्तद्दर्शपूर्णमासयोर्विद्याद् यस्मात् कुमारस्य रेतः सिक्तं न संभवति, यस्मादस्य मध्यमे वयसि संभवति, यस्मादस्य पुनरुत्तमे वयसि न संभवति। यो गायत्रीं हरिणीं ज्योतिष्पक्षां यजमानं स्वर्गं लोकमभिवहन्तीं विद्यादिति।।[1]'**

एतान् प्रश्नान् समाधातुमसमर्थेनोद्दालकेन स निष्कः स्वैदायनस्याग्रे स्थापितः। त्वं मदपेक्षयाधिको वेदज्ञोऽसि त्वमेव निष्कमर्हसीति। स्वैदायनस्तमुपगुह्य गृहं गतः। यज्ञान्निवृत्तस्तु गौतम आरुणिः समित्पाणिः

---

1. श० प० ब्रा० 11/4/1/4–8

स्वैदायनमाससाद, यान् प्रश्नान् त्वमपृच्छस्तेषामुत्तरं मह्यं शिक्षयेति च प्रार्थयाञ्चक्रे। ततः स्वैदायन एवमुत्तराण्याह –

'अथ यद्पुरोऽनुवाक्यकाः प्रयाजाः भवन्ति, तस्मादिमाः प्रजा अदन्तका जायन्तेऽथ यत्पुरोऽनुवाक्यवन्ति हवींषि भवन्ति तस्मादासां जायन्तेऽथ यद्पुरोऽनुवाक्यका अनुयाजा भवन्ति तस्मादासां प्रभिद्यन्तेऽथ यत्पुरोऽनुवाक्यवन्तः पत्नीसंयाजा भवन्ति तस्मादासां संतिष्ठन्तेऽथ यद्पुरोऽनुवाक्यकं समिष्टयजुर्भवति तस्मादासां पुनरुत्तमेवयसि सर्व एव प्रभिद्यन्ते। अथ यदनुवाक्यामनूच्य याज्यया यजति तस्मादधर एवाग्ने जायन्तेऽथोत्तरेऽथ यद्गायत्रीमनूच्य त्रिष्टुभा यजति तस्मादणीयांस एवाधरे प्रथीयांस उत्तरेऽथ यत्प्राञ्चावाघारावाघारयति तस्माद्दंष्ट्रा वर्षीयांसोऽथ यत्सच्छन्दसावेव संयाज्ये भवतस्तस्मात्समा एव जम्भ्या। अथ यद् बर्हिस्तृणाति, तस्मादिमा प्रजा लोमशा जायन्तेऽथ यत्पुनरिव प्रस्तरं स्तृणाति तस्मादासां पुनरिव श्मश्रूण्यौपपक्ष्याणि दुर्बीरिणानि जायन्तेऽथ यत्केवलमेवाग्रे प्रस्तरमनुप्रहरति तस्माच्छीर्षण्येवाग्रे पलितो भवत्यथ यत्सर्वमेव बर्हिरनुप्रहरति तस्मात्पुनरुत्तमे वयसि सर्व एव पलितो भवति। अथ यदाज्यहविषः प्रयाजा भवन्ति, तस्मात् कुमारस्य रेतः सिक्तं न सम्भवत्युदकमिवैव भवत्युदमिव ह्याज्यमथ यन्मध्ये यज्ञस्य दध्ना पुरोडाशेनेति चरन्ति तस्मादस्य मध्यमे वयसि संभवति, द्रप्सीवैव भवति द्रप्सीव हि रेतोऽथ यदाज्यहविष एवानुयाजा भवन्ति, तस्मादस्य पुनरुत्तमे वयसि न संभवत्युदकमिवैव भवत्युदकमिव ह्याज्यम्। वेदिरेव गायत्री, तस्मै येऽष्टौ पुरस्तादाज्यभागाः स दक्षिणः पक्षो येऽष्टा उपरिष्टादाज्यभागाः स उत्तरः पक्षः सैषा गायत्री हरिणी ज्योतिष्पक्षा यजमानं स्वर्गं लोकमभिवहति य एवमेतद्वेद।'

अनया आख्यायिकया स्पष्टमिदं सिध्यति यद् दर्शपौर्णमासमूलभूता अध्यात्मं याः क्रियाः, ता एव दन्तलोमाद्युत्पादिकास्तत्र परिवर्तनादिकारिण्यश्च भवन्तीति। ये तु दर्शपौर्णमासादिष्वनुष्ठीयमानाः क्रियाः त एव दन्तलोमाद्युत्पादिका इत्यागृह्णीरन् ते सर्वेषु प्राणिषु दन्तलोमाद्युत्पत्तिं

तत्परिवर्तनानि च न समाधातुमीशते। येऽपि द्विजातिरिक्ता म्लेच्छाद्याश्च दर्शपौर्णमासादिकं नानुतिष्ठन्ति, तेषामपि दन्तलोमादिर्जायते परिवर्तते च। तस्मान्मूलभूतया प्राणादिक्रिययैवात्र तात्पर्यं नेयं स्यात्। अधिदैवं च या गायत्री सैव यजमानं स्वर्गे लोके प्रापयतीति च। तदित्थं मूलभूतं प्राकृतं यज्ञमेवावलम्ब्य विकृतियज्ञाः वेदेषु (कृत्रिमत्वेन) विहिताः। ताश्च मूलभूताः प्राकृतयज्ञक्रिया अपि तत्तत्कर्मोपपादनार्थं ब्राह्मणेषु बहुत्र निर्दिष्टाः, परं ता अर्थवादरूपेण प्रख्याप्य मीमांसकैरूपेक्षिता इत्येव कर्मोपपत्तिविषये आन्ध्यं प्रसृतम्।

संसारेऽस्मिन् प्रत्येकं जनाः सुखमभिलषन्ति। सुखं नाम किम्? अत्रोच्यते यदपि स्वेच्छानुकूलं स्यात् तत् सुखम्। तस्य सुखस्य स्वरूपं विभिन्नं भवितुमर्हति। धनरूपं, पुत्ररूपं, विद्यारूपं वा परन्तु एतत्तु सत्यमेव यत् किमपि स्वेच्छानुकूलं तत् सुखं, तच्च सर्वेषामभीष्टमिति। यथा कश्चित् बुभुक्षितः भोजनमभिलषति तथैव प्रयत्नं करोति। स कस्यापि सेवां करोति, केनापि मैत्रीं करोति, वैरभावमाचरति, व्यापारं करोति, भृत्यकर्ममाचरति यत्किमपि वा करोति तत् सर्वं कार्यं केवलं स्वाभीष्टपूर्त्यर्थमेव करोतीति सिद्धमेव स्वाभीष्टपूर्तिद्वारा स सुखं प्राप्य सुखी भवति।

तेषामभिलषितवस्तूनां प्राप्तये चानेकानि मार्गाणि सन्ति। तेषु विविधेषु मार्गेषु सर्वश्रेष्ठं वेदविहितं च मार्गं यज्ञानुष्ठानमेवास्ति। तस्मादुक्तं सायणाचार्येण वेदशब्दस्यार्थं कुर्वता – '**इष्टप्राप्त्यनिष्टपरिहारयोरलौकिकमुपायं यो ग्रन्थो वेदयति स वेदः।**' अर्थात् वेदेष्वस्माकं विविधसुखलाभसाधनानि व्याख्यातानि। तानि च व्याख्यानानि ऋषिभिः कृतानि, तस्मात् साधारणो जनः स्वशक्त्यपेक्षया देवर्षीणां मुन्याप्तजनानां शक्तिं महत्वपूर्णं मन्यते। यतस्तु स्वशक्त्या क्रियमाणं प्रयत्नं लौकिकं खलु। अत एव स्वप्रयत्ने विफलतां प्राप्यान्ते देवर्षीणां मार्गाण्यनुसरति। तदेव मार्गं यज्ञानुष्ठानरूपम्। तैश्च देवर्ष्यादिभिः दर्शपूर्णमासादीनां प्रकृतियज्ञानां विधानानि उक्तानि। कालान्तरे यथा-यथा मानवानामभिलाषाः वृद्धिं गताः तदनुरूपाः विविधाः विकृतिरूपयज्ञाः प्रोक्ताः।

अत्रेदं ध्यातव्यं यद्विकृतियागेषु कानिचिदेव विशिष्टकर्म्माणि भवन्ति यानि प्रकृतियागाद्भिन्नानि अन्यानि च पूर्वोत्तराङ्गानि प्रकृतियागादेव गृह्यन्ते। प्रकृतिवद्विकृतियागेष्वपि पूर्वाङ्गान्युत्तराङ्गानि च भूयांसि कर्त्तव्यानि। अङ्गसाहित्यमाप्नुवाना एव प्रधानयागाः फलसाधका भवन्ति। एकेनाप्यङ्गेन विहीनाः फलं न साधयेयुः। प्रधानयागा अपि भिन्नकालानुष्ठेया मिथस्साहित्यमवाप्यैव फलं साधयितुं क्षमाः। सर्वेषां साहित्यञ्च नियतं काञ्चन क्रममाश्रित्य सम्पाद्यते। क्रमनियामकप्रमाणानि षट्श्रुत्यर्थपाठ-स्थानमुख्यप्रवृत्ताख्यानि। एवम् अङ्गत्वावगमाय षट्श्रुतिलिङ्गवाक्य-प्रकरणस्थानसमाख्यानानि।

परमवैज्ञानिकेन श्रौतयज्ञमर्मज्ञेन श्रीमता देवयाज्ञिकेन कात्यायनश्रौतसूत्रस्योपरि '**देवयाज्ञिकपद्धति**' रिति नाम्ना विस्तृता पद्धतिर्लिखिता। तत्र सोयागप्रकरणारम्भे तेनेदं लिखितम् – '**स्वकाले कृताधानस्य पूर्वं दर्शपूर्णमासाभ्यां यागः। तदनन्तरं विकृतिभूता इष्टिपशुसोमयागा भवन्ति न ततः प्राक्। अग्निहोत्रहोमस्तु प्रागपि दर्शपूर्णमासाभ्यां भवत्येव, यजतेरेव निषेधात्। अग्निहोत्राङ्गभूता नैमित्तक्य इष्टयश्च भवन्ति।।**[1]'

एवमुक्तप्रकारेण दर्शपूर्णमासेष्टेः सर्वेषां श्रौतयागानां प्रकृतित्वं सिध्यति। देवयाज्ञिकपद्धत्यनुसारं – '**अग्निष्टोमादनन्तरं पुनर्दर्शपूर्णमासावनुष्ठायैवान्ये यागाः कर्तव्या न ततः पूर्वम्। स्वकाले कृताधानस्याग्निष्टोमो वसन्त एव भवति। सोमाधानपक्षे अग्निष्टोमस्य ऋतुनक्षत्रादिनियमो न भवति।**[2]' इत्यनेन वचनेन तु पूर्वाङ्गोत्तराङ्गरूपेण च दर्शपूर्णमासस्यानुष्ठानमेवाग्निष्टोमे विहितम्। अर्थात् वक्तुं शक्यते यत् दर्शपूर्णमासेष्वाचरणीयानि सर्वाण्यपि पूर्वाण्युत्तराङ्गानि सर्वेष्वपि सोमयागादिषु आवश्यकरूपेण अनुष्ठीयन्त एव। तस्माद्दर्शपूर्णमासस्य प्रकृतिधर्मता सर्वविधान्वेषणेन सिद्धा एव। अन्याश्च

1. का० श्रौ० सू० दे०या०प० पृ० 232
2. दे० या० प० पृ० 232

सर्वा अपि इष्टयः, पशुयागाः, सोमयागाश्च दर्शपूर्णमासयोः विकृतित्वेन पठिताः श्रौतग्रन्थेषु। तथापि च श्रौतयज्ञानां संस्थाभेदत्वात्तिसृणामपि संस्थानां पृथक् पृथक् यज्ञा उक्तास्तासु त्रिसृष्वपि संस्थासु पाकयज्ञसंस्थाः – गृह्यसूत्रधर्मसूत्र–स्मृति ग्रन्थेषु विहितत्वान्नैताः श्रौतयज्ञेषु परिगणिता भवन्ति। तस्माद्द्वयोः संस्थयोर्हविर्यज्ञसोमयज्ञयोरेवोक्ताः यज्ञाः श्रौतयागाः कथ्यन्ते। यतः संस्थाद्वये पठितानां यज्ञानामेषां विधानानि रूपाणि श्रौतग्रन्थेषूपलभ्यन्ते। तयोः द्वयोरपि संस्थयोः क्रमशः त्रयो विभागाः इष्टिपशुसोमाख्याः। इष्टिपशुसोमविधयैव दर्शपूर्णमासाविष्टीनां, निरूढपशुबन्धः पशुयागानाम्, अग्निष्टोमः सोमयागानां प्रकृतित्वेनोक्ता। एषु त्रिविधप्रकृतियागेषु पुनः प्रथमस्थाने पठितयोदर्शपूर्णमासयोः प्रकृतित्वं सर्वथा सुसिद्धमिति। यतस्तु पशुसोमयोश्चापि विविधा इष्टयो भवन्त्येव। सर्वसामिष्टीनां प्रकृतित्वात् दर्शपूर्णमासौ स्वाङ्गैस्तासां विकृतीनामुपकारः कुरुतः। अनेन विकृतियज्ञेषु प्रकृत्योपकारित्वमपि सिद्धमिति।

## अथ चतुर्थोऽध्यायः

## (क) विकृतियज्ञपद्धतिः विशेषता च

यद्यपि श्रौतसूत्र - ब्राह्मणग्रन्थेषु च विकृतियज्ञानां स्वतन्त्ररूपेणानुष्ठानस्य न काचित् पद्धतिरवलोक्यते। तथापि इष्टिपशुसोमयज्ञेषु प्रकरणगतव्याख्यानेन क्रमप्राप्तानां विकृतियज्ञानां तथा - तथाऽवसरानुकूलानि यान्यपि विशेषकृत्यानि तान्युक्त्वा दर्शपौर्णमासवदिति अनुष्ठानविधानमुक्तम्। तथापि यथोपलब्धप्रमाणैः प्रकृतेऽस्मिन् गवेषणविषयप्रसङ्गे विकृतियज्ञपद्धतेरनुसरणं क्रियते। आशासे विद्वांसः सुधयः पद्धतिमिमामवलोक्य सन्तुष्टा भविष्यन्तीति।

अमायां पूर्णिमायां चानुष्ठेयत्वादेव चानयोः कर्मणोर्दर्शपूर्णमासाविति संज्ञा। अत्र यद्यपि दर्शपूर्णमासाविति द्विवचनमेव सर्वत्रोपलभ्यते,. तथापि पौर्णमास्यामाग्नेयोऽष्टाकपालः पुरोडाशयागः, अग्नीषोमीय उपांशुयाग आज्यद्रव्यकः, अग्नीषोमीय एकादशकपालः पुरोडाशयाग इति यागत्रयम्। अमायाञ्चाग्नेयः पुरोडाशयाग एकः, इन्द्रदेवताको दधिद्रव्यको यागो द्वितीयः, इन्द्रदेवताकः पयोद्रव्यको यागश्चापर इति यागत्रयम्। उभयत्र मिलित्वा षड्यागाः। एते षड्यागाः सर्वासामिष्टीनां प्रकृतयो भवन्ति। '**दर्शपूर्णमासाविष्टीनां प्रकृतिः।**[1]' '**इष्टिषु दर्शपूर्णमासयोः प्रवृत्तिः स्यात्**[2]' इति स्पष्टमुक्तत्वात्। श्रुतौ हि तत्तत्फलोद्देशेन तत्तन्निमित्तोद्देशेन च '**ऐन्द्राग्नमेकादशकपालं निर्वपेत्प्रजाकामः**[3]' '**यस्याहिताग्नेरग्निर्गृहान्दहेंत्सोऽग्नये**

1. आप० श्रौ० सू० 24/3/32
2. जै० 8/1/11
3. तै० सं० 2/2/1

**क्षामवतेऽष्टाकपालं पुरोडाशं निर्वपेत्**[1]' इत्यादिना परः सहस्रमिष्टयो विहिताः, तासां सन्निधौ तत्तदपेक्षितान्यङ्गानि न पठितानि, परन्तु पूर्वनिरूपितेषु दर्शपूर्णमासाख्येषु षट्सु यागेषु सर्वानङ्ककलापानभिधाय तत एव तासु तासु विकृतिषु अङ्गानामतिदेशः कर्त्तव्यः। अत एव च अपेक्षितसर्वाङ्गोपदे- शाद्दर्शपूर्णमासयागौ प्रकृतिरित्युच्यते, इतरास्त्विष्टयो विकृतय इति। यत्र समग्राङ्गोपदेशः सा प्रकृतिः, यत्र चान्यतोऽङ्गप्राप्तिः सा विकृतिरिति तयोर्लक्षणमुद्घोषयन्ति न्यायविदः। प्रकृतितो विकृतौ धर्मप्राप्तावपि प्राकृतो द्व्यहकालो न विकृतौ प्राप्नोति। '**य इष्ट्या पशुना सोमेन यजेत सोऽमावास्यायां पौर्णमास्यां वा यजेत**[2]' इति विशेषविधिना सर्वा विकृतीरतिदिश्य सद्यस्कालताविधानात्।

एवमतिदेशसिद्ध्यर्थं निर्वपत्यादिषु यागत्वे साधिते तत्र केवलं यागमात्रमस्ति उत धर्मा अपि? यदा च धर्मास्तदा कस्य धर्माः कुत्र भवन्ति? इति संशये धर्माणामाम्नानात् अधर्मका एवेति पूर्वपक्षे प्राप्ते कात्यायनः प्राह –

'**दर्शपूर्णमासधर्मा इष्टि–पशुषु, सामर्थ्यात्**[3]' इति। अर्थात् इष्टि–पशुषु च दर्शपूर्णमासयोर्धर्मा भवन्ति। कुतः। इष्टीनां पशूनां च तत्र शेषीभवितुं समर्थत्वात्। '**तस्यै प्रजायेषु तायमानेषु**', इत्युपक्रम्य '**तिस्रः स्वयं भृता गाथां गायति**[4]' इति वाक्येन विकृतिरूपायां सावित्रेष्टौ प्रकृतितः प्राप्तानां प्रयाजानां दर्शनादित्यर्थः। यथा चातुर्मास्ययागे चत्वारि पर्वाणि। तत्र प्रथमे वैश्वदेवपर्वणि दर्शपूर्णमासधर्माः। उत्तरेषु पर्वसु तु वैश्वदेवधर्माः प्रवर्त्तन्ते। कुतः। वचनात्, प्रवृत्तेश्च। '**अथैतान्येव पञ्च हवींषि भवन्ति**[5]' इति

1. तै० सं० 2/2/2
2. काठ० सं० (उल्लेखः विघाधरशर्मणा विरचितायां कात्यायनश्रौतसूत्रस्य सरलावृत्तेः भूमिकायाम् 34 तमे पृ०)
3. का० श्रौ० सू० 4/3/2
4. श० प० ब्रा० 2/4/2/8
5. श० प० ब्रा० 2/6/3/4

वचनम्। एतच्छब्देन शुनासीरीये वैश्वदेवपर्वोक्तान्येव पञ्च हवींषि वरुणप्रघासादौ परामृश्यन्ते। **'तस्यावृन्नोपकिरन्त्युत्तरवेदिं, न गृह्णन्ति पृषदाज्यम्[1]'** इत्यादिनिषेधबलात्। निषेधस्य च प्राप्तिसापेक्षत्वात् प्राप्तिदर्शनादित्यर्थः। वरुणप्रघासावभृथे सौत्रामण्याद्यवभृथे च सौमिकादवभृथाद्धर्माः प्रवर्तन्ते सामप्रतिषेधात्। **'तत्र न साम गीयत[2]'** इति श्रौतवचनात्। सामगानस्य च सौमिके अवभृथे एव विधानात्। तत्प्रतिषेधश्च तदैवोपपद्यते यदा सौमिकादवभृथाद्धर्माः स्युः। दर्शपूर्णमासयोः पुरोडाशकपालेन तदैवोपपद्यते यदा सौमिकादवभृथाद्धर्माः स्युः। दर्शपूर्णमासयोः **'पुरोडाशकपालेन कणानपास्यत्यधः कृष्णाजिनं रक्षसामिति[3]'** सूत्रेण कृष्णाजिनस्थकपालेन प्रक्षेपो मन्त्रेण विहितः। रूधिरापासनेऽपि **' तथो एवासृक्पशोः[4]** इति वाक्येन कणापासनवत् इतिकर्त्तव्यताविशिष्टो मन्त्रः प्राप्तः। तत्रोच्यते - पशुयागे कणापासनवत् कपालेनाधः कृष्णाजिनम् 'इति इतिकर्तव्यता न प्रवर्तते, किन्तु केवलं मन्त्रमात्रं प्रवर्तते। तथो एवासृक्पशोः' इति मन्त्रबलात् समन्त्रकायामिति कर्त्तव्यतायां प्राप्तायां पुनः **'रक्षसां भागोऽसि[5]'** इति मन्त्रोपदेशसामर्थ्यादिदं ज्ञायते यत् रूधिरापासनमात्रं मन्त्रेण कर्त्तव्यम्। इतिकर्त्तव्यता तु न प्रवर्तते।

दर्शपूर्णमासधर्माः सौर्यादिष्विष्टिषु, अग्नीषोमीयादिषु पशुषु चातिदेशेन प्राप्नुवन्तीति निश्चिते तत्र षण्णां यागानां सत्वात् यतः कुतश्चिद्धर्मप्राप्तिः? उत नियमोऽस्ति इति संशये नियमाभावादनियम इति प्राप्ते कात्यायनो वदति -**'विधिविशेषः कर्मण्येक-द्वि-शब्दपरिमाण-द्रव्य- देवतागुण-सामान्येभ्यः।[6]'** अर्थाद्विकृतौ विधेर्विशेषो भवति - एकत्वसामान्यात्,

1. श० प० ब्रा० 2/6/3/3
2. श० प० ब्रा० 2/5/2/46
3. का० श्रौ० सू० 3/8/7
4. श० प० ब्रा० 1/9/2/35
5. शु० य० सं० 6/15
6. का० श्रौ० सू० 4/3/8

द्वित्वसामान्यात्, शब्दपरिमाणसादृश्यात्, द्रव्यसादृश्यात्, देवतासादृश्यात्, गुणसादृश्याच्च। तत्र एकदेवताकस्य कर्मण आग्नेयादेकदेवताकाद्धर्मप्राप्तिः। द्विदेवताके कर्मणि द्विदेवाग्नीषोमीयाद्धर्मप्राप्तिः। शब्दपरिमाणाच्च मारुते यागे ऐन्द्राग्नधर्मप्राप्तिः। द्रव्यसामान्यात् पौरोडाशिके यागे पुरोडाशधर्म-प्राप्तिः। सान्नाय्ये च सान्नाय्यधर्मप्राप्तिः। देवतासादृश्याच्च ऐन्द्रपुरोडाशे ऐन्द्राग्नधर्मप्राप्तिः। यत्र 'आग्नेयं पय' इत्यादौ देवतासामान्यात्पौरोडाशिक-धर्मप्राप्तिः, द्रव्य सामान्याच्च सान्नाय्यधर्मप्राप्तिः। तत्र कस्य धर्माः कार्या? इति संशये सिद्धान्तयति – '**नियमो द्रव्यदेवताविरोधे द्रव्यस्य समवायात्**[1]' अर्थाद्द्रव्यदेवताविरोधे देवतासादृश्यापेक्षया द्रव्यसादृश्यं प्रबलम्। देवतापेक्षया द्रव्यस्य यागनिष्पादकत्वेन सन्निकृष्टत्वात्। अतो द्रव्यदेवतयोर्विरोधे द्रव्यसादृश्यमादायैव धर्मप्राप्तिः।

अस्ति चामिक्षायागः '**सा वैश्वदेव्यामिक्षा**[2]' इति। आमिक्षा नाम पयस्तप्तं कृत्वा तप्ते पयसि दधि प्रक्षिपेत्, तत्र स्फोटने सञ्जाते यद् घनीभूतं सा आमिक्षा, द्रवभूतं वाजिनम्। तत्र कस्य धर्माः प्रवर्तन्ते? इत्याशङ्कायां कात्यायनः प्राह –'**आमिक्षायामुभयोस्तन्निवृत्तेः**[3]' इति। अर्थादामिक्षाया दधिपयोरूपत्वादुभयधर्माणां प्रवृत्तिः। तन्निवृत्तेः दधिपयोभ्यामामिक्षाया उत्पत्तेरिति नोभयोर्धर्माः प्राप्नुवन्ति। एकस्यैव धर्मणो विहितत्वात्। एकस्याश्चोदनाया उभयधर्मप्रापकत्वाभावात्। अतो दधिपयसोरन्यतरस्य धर्माः कार्याः। तत्रापि दध्नः पयसोऽवेति संशये – '**दध्नः सङ्घातात्**[4]' इत्यनेन सूत्रेण दध्न एव धर्माः प्राप्नुवन्ति इत्युक्तम्। यतो हि दधिकठिनम्, आमिक्षा च कठिनेति तस्मात् कठिनत्वसादृश्यात् पयोयागस्यैव धर्माः कार्याः। पयस एवाऽऽमिक्षासमुदयात्। अथवा पयोरसस्यैव माधुर्यस्य तत्र

---

1. का० श्रौ० सू० 4/3/9
2. मै० सं० 1/10/10
3. का० श्रौ० सू० 4/3/10
4. का० श्रौ० सू० 4/3/13

दर्शनात्। प्रयोजनं दधियागविकारत्वे आतञ्चनार्थे दधनि सांयदोहधर्माननुष्ठाय लौकिके पयसि तत्प्रक्षेप्तव्यम्। पयोयागविकारत्वे पयसि प्रातर्दोहधर्माननुष्ठाय तत्र लौकिकं दधि प्रक्षेप्तव्यम्। उभयविकारत्वे दधनि सायंदोहधर्माः, पयसि प्रातर्दोहधर्माश्च शाखापरिवासनादयोऽनुष्ठेयाः।

तत्राग्नीषोमीये पशौ देवतासादृश्यात् अग्नीषोमीयपुरोडाशधर्मप्राप्तौ आह – **'पशोः सान्नाय्यस्य, तदुक्तम्**[1]' इति। अर्थादग्नीषोमस्य पशोः सान्नाय्यस्य धर्माः कार्याः एककालवर्त्तमानत्वात्। यथा हि पयो दोहननान्तरमेकदिनमविकृतं तिष्ठति। एवं पशु हृदयाद्यपि एकदिनपर्यन्तम-व्रिकृतं तिष्ठति। दिनान्तरे तूभयमपि विकृतं भवति। आनन्तर्यात्। धर्मानुग्रहाच्च। एतत्कारणत्रयेण पयो धर्मा एव पशौ प्रवर्तन्ते च दध्नः।

## अथ विकृतियज्ञपद्धतिर्लिख्यते

पूर्वप्रकरणेषु पौर्णमासयागस्य विकृतिषु दाक्षायणेष्टिरुक्ता। अत्र प्रसङ्गानुसारं विकृतियज्ञपद्धतिर्दर्शनीयाऽस्ति। तस्माद्दाक्षायणेष्ट्याः पद्धतिलेखनेन विकृतियज्ञस्य स्वरूपं स्थापयितुं वाञ्छामि। तदनुसृत्य दाक्षायणयागविषयकं चिन्तनं प्रस्तूयते। वस्तुतः दाक्षायणयज्ञ इति दर्शपूर्णमासयोरेव गौणं नाम, न कर्मान्तरम्। यतो हि दर्शपूर्णमाससन्निधावेव दाक्षायणयज्ञस्य पाठ उपलभ्यते। दर्शपूर्णमासयागपक्षे प्रतिपदि एकैको यागो भवति। दाक्षायणयज्ञे अमायां प्रतिपदि चेति दिनद्वये, एवं पूर्णिमायां प्रतिपदि चेति दिनद्वये द्वयोर्द्वयोर्यागयोर्विधानात् **'पञ्चदश दाक्षायणयज्ञो अत्र ह्येव सा सम्पत्सम्पद्यते**[2]' इति श्रुत्या दर्शपूर्णमासयागपक्षे त्रिंशद्वर्षैर्या सम्पत्तिर्भवति सा सम्पत्तिर्दाक्षायणयज्ञे पञ्चदशवर्षैरेव भवतीति दाक्षायणयज्ञस्य दर्शपूर्णमासरूपता बोध्यते। तस्माद्दाक्षायण इति दर्शपूर्णमासयोरेव नामान्तरं, न कर्मान्तरम् इति। अतश्च दर्शपूर्णमासानुष्ठानपक्षे दाक्षायणयज्ञस्याक्रिया। दाक्षायणयज्ञानुष्ठानपक्षे च दर्शपूर्णमासयोरक्रिया।

---

1. का० श्रौ० सू० 4/3/14
2. श० प० ब्रा० 11/1/2/13

**दाक्षायणयज्ञानुष्ठानप्रकारः**

प्रजाकामपशुकामान्नाद्यकामयशस्कामानां दाक्षायणयज्ञो भवति। तत्र प्रथमपौर्णमास्यां पूर्वाह्णे मातृपूजापूर्वकमाभ्युदयिकं श्राद्धमन्वारभणीयां च कृत्वा तदानीमेव पुनरुद्धृत्याग्नीषोमीयः पुरोडाशोऽग्न्यन्वाधानादिकर्मा-पवर्गान्तः पौर्णमासाग्नीषोमीयवद्भवति। हिरण्यं दक्षिणेति विशेषः। तत्र **प्रजापतेर्भागोऽसि**[1] इति मन्त्रे ऊर्गसीत्यस्य स्थाने हिरण्यमसीति प्रयोगः। अथवाऽन्वाहार्य एव दक्षिणा।

ततः पुनरुद्धरणम्, अग्न्यन्वाधानम्, मांसमैथुनवर्जनसङ्कल्पः, वपनं वा, अपराह्णे पत्नीयजमानयोर्व्रत्याशनम्, शाखाच्छेदः, ऊर्जेत्वेत्यनुमार्जनम्, व्रतग्रहणमत्र वा, वत्सापाकरणम्, इन्द्राय भागमिति देवतानियमः। **'ऐन्द्रं सान्नाय्यमि'ति श्रुतेः।**[2] न पाक्षिको महेन्द्रः। उद्गूहनम्, शाखापरिवासनम्, मूलादुपवेषकरणम्, पवित्रबन्धनं, रात्रौ स्वयमेव यवाग्वाऽग्निहोत्रहोमः। हुते उपसृष्टादि निधाय वत्सापाकरणम् पूर्ववदित्यन्तरम्। आरण्याशनं वा, अन्यतरागारशयनं, प्रातर्यवाग्वा स्वयं होमः। उदिते ब्रह्मवरणादि। **'दाक्षायणयज्ञेनाहं यक्ष्ये'** इति वा। ससान्नाय्यामावास्येष्टिवत्सर्वं भवति। उपांशुयाजाभावः। आग्नेयः पुरोडाशः, ऐन्द्रं दधि, ऐन्द्रं पय इति हविस्त्रयम्। अन्वाहार्यो हिरण्यं वा दक्षिणा। उत्तमे प्रयाजे इदमग्नये सोमायाग्नय इन्द्राय देवेभ्य आज्यपेभ्य इति। प्रस्तरहोमे च। व्यूहने अग्नेरिन्द्रस्योज्जितिम्। अग्निरिन्द्रस्तमपनुदतामिति। सहशाखयाप्रस्तरानुप्रहरणम्। परिधिभिः सहोपवेषहोमः। पक्षे वैमृधेष्टिरन्वाहार्यदक्षिणा। अमावास्यापर्यन्तं मांसस्त्र्यनृतकारुधौतवाससां वर्जनम्।

अमावास्यायां पूर्वाह्णे ऐन्द्राग्नो द्वादशकपालः उद्धरणादिकर्मा-पवर्गान्तोऽमावास्येष्ट्यन्तर्गतैन्द्राग्नवत्। दर्शेष्ट्यर्थं दर्शेष्ट्या यक्ष्ये इत्येवं प्रयोगः। अन्वाहार्यो दक्षिणा हिरण्यं वा।

---

1. का० श्रौ० सू० 3/4/30
2. श० प० ब्रा० 2/4/4/8

कर्मापवर्गार्थे पुनरुद्धरणम्। अग्न्यन्वाधानं मांसमैथुनवर्जनसङ्कल्पः, वपनं वा, अपराह्णे पिण्डपितृयज्ञः, दर्शश्राद्धं, व्रत्याशनं, शाखाच्छेदः, सन्नमनं व्रतग्रहणं वा, शाखापरिवासनम्, उपवेषनिष्पत्तिः, पवित्रबन्धनं, रात्रौ स्वयमग्निहोत्रहोमः, हुते पयस्यार्थं षड्वर्गस्यापाकरणं, तत्र मित्रावरुणाभ्यां भागमितिविशेषः। उद्गूहनम्, आरण्याशनं वा, अन्यतरागारे, प्रातः स्वयं होमः।

अनुदिते ब्रह्मवरणादि। दर्शेष्ट्याऽहं यक्ष्य इति। पात्रासादनादि दर्शेष्टिवत् सर्वम्। शृतावदानानन्तरं वाजिनभाण्डम्। दक्षिणा हिरण्यं वा। पयस्यार्थं दधि चेति। तत्रस्थाभिघारमदत्वा दत्वा वा वाजिनस्यावस्रावणम्। तत्रस्थाभिघारः। यथाक्रममुद्वासनम्। वाजिनस्य च। यथाक्रमं प्राणदानम्, अग्निं गच्छेति, पुरोडाशे, मित्रावरुणौ गच्छेति पयस्यायां, वाजिनो गच्छेति वाजिने। पुरोडाशपयस्ययोर्वेद्यासादनम्, उत्करे वाजिनस्यासादनम्। सर्वाण्यालभ्यान्ते वाजिनस्यालम्भः। उत्तमप्रयाजे इदमग्नये सोमायाग्नये मित्रावरुणाभ्यां देवेभ्य आज्यपेभ्यो वाजिभ्यश्च, इति विशेषः।

आग्नेययागानन्तरं मित्रावरुणाभ्यामनुब्रूहीत्युक्त्वा जुह्वामुपस्तीर्य शृतावदानेन पयस्याया मध्यात्पूर्वार्द्धाच्च, पयोविकारत्वात्स्रुवेण वा द्विरवदायोपरिष्टादभिघार्यावदाने प्रत्यभिघार्योत्थायातिक्रम्याश्राव्य मित्रावरुणौ यजेत्युक्त्वा वषट्कृते जुहोति। इदं मित्रावरुणाभ्यामिति त्यागः। उपांशुयाजाभावः।

ततः स्विष्टकृदादि। पयस्यायाः प्राशित्रेडयोरेवावदेयं नान्यत्र। अन्वाहार्यो हिरण्यं वा दक्षिणा। व्यूहने - अग्निर्मित्रावरुणयोरुज्जितिम्, अग्निर्मित्रावरुणौ तमपनुदन्त्विति। प्रस्तरहोमे - इदमग्नये सोमायाग्नये मित्रावरुणाभ्यां देवेभ्य आज्यपेभ्योऽग्नये होत्राय वाजिभ्य इति विशेषः। तृणं प्रास्यात्मानमालभ्याप उपस्पृश्य वाजिनयागः स्रुग्विमोकानन्तरं वा।

तत्र बर्हिषि वाजिनमवसिञ्चन् स्थाल्यैव जुह्वां निनयति। ग्रहणानन्तरं वाजिभ्योऽनुब्रूहीत्यनुवाचनम्। उत्थायातिक्रम्याश्राव्य वाजिनो यजेत्युक्त्वा

वषट्कृते अग्नेः पूर्वभागे जुहोति। इदं वाजिभ्य इति त्यागः। अनुवषट्कृते पुनः पूर्वभागे एव जुहोति। '**स वै प्रागेवाग्रे जुहोति**[1]' इति श्रुतेः।

ततोऽप उपस्पृश्याग्नेरुत्तरत उपविश्य वाजिनशेषेण दिशः स्वाहेति प्रतिमन्त्रं दिशो व्याघारयति। 'दिशः स्वाहेत्यग्नेः पूर्वभागे, इदं दिग्भ्यः। प्रदिशः स्वाहेति दक्षिणतः, इदं प्रदिग्भ्यः। आदिशः स्वाहेति पश्चात्, इदमादिग्भ्यः। विदिशः स्वाहेत्युत्तरतः इदं विदिग्भ्यः। उद्दिशः स्वाहेति मध्ये, इदमुद्दिग्भ्यः। स्वाहेति पूर्वार्धे इदं दिग्भ्यः।

ततः स्रुक्स्थं वाजिनशेषमुपहवपूर्वकं होत्रध्वर्युब्रह्माग्नीद्यजमानाः क्रमेण भक्षयन्ति। तद्यथा- होता वाजिनं हस्ते गृहीत्वाऽध्वर्यु उपह्वयस्व, ब्रह्म उपह्वयस्व, अग्नीदुपह्वयस्व, यजमानोपह्वयस्वेति पृष्ट्वा भक्षयति। ततोऽध्वर्युर्वाजिनं भक्षार्थं हस्ते कृत्वा, होतरुपह्वयस्व, ब्रह्मनुपह्वयस्व, अग्नीदुपह्वयस्व, यजमानोपह्वयस्वेति पृष्ट्वा भक्षयति। भक्षणे विकल्पेन त्रयो मन्त्राः। ऋतूनां त्वेति वा। वाज्यहं वाजिनस्येति वा। वाजे वाजीति वा। एवं ब्रह्मा होत्रध्वर्य्वग्नीद्यजमानान् पृष्ट्वाऽनेनैव मन्त्रेण भक्षयति।'

ततोऽग्नीत् होतारमध्वर्युं ब्रह्माणं यजमानं च पृष्ट्वा भक्षयति। ततो यजमानो होतारमध्वर्युं ब्रह्माणमग्नीधं च पृष्ट्वैवमेव भक्षयति। एवं पञ्च भक्षयन्ति। अथवा सर्वेभ्यः पूर्वं पश्चाच्चोभयतो यजमानो भक्षयति। तथा चोपहवेऽपि पूर्वं पश्चाच्चोभयतो यजमानोपह्वयस्वेति यजमानः प्रष्टव्यः। परिधिभिः सहोपवेषहोमः। ततः पुनरुद्धृत्यादित्येष्टिर्वा।

दाक्षायणयज्ञेन पञ्चदशवर्षाण्येव यजेत। अथवा संवत्सरमेवान्वहं दाक्षायणयज्ञेन यजेत, न तत ऊर्ध्वम्।

तत्र यस्यां पौर्णमास्यामारम्भः क्रियते तस्यां पूर्वाह्णेऽग्नीषोमीयः पुरोडाश उद्धरणाद्याब्राह्मणतर्पणान्तः। ततस्तस्मिन्नेव दिने पुनरुद्धरणादि सायन्दोहमातञ्चनान्तं कृत्वा प्रातर्दोहार्थं वत्सापाकरणं कुर्यात्। प्रतिपदि प्रातर्ब्रह्मवरणादि। आग्नेयपुरोडाशेनैन्द्रेण सान्नाय्ये दध्ना पयसा च यागो ब्राह्मणतर्पणान्तः। पक्षे वैमृधेष्टिश्च।

---

1. श० प० ब्रा० 2/4/4/23

ततस्तस्मिन्नेव दिने पुनरुद्धृत्य कर्मापवर्गान्त ऐन्द्राग्नः कर्तव्यः। ततस्तस्मिन्नेव दिने उत्तरेष्ट्युपक्रमः पयस्यार्थं वत्सापाकरणान्तः। प्रातर्द्वितीयायां ब्रह्मवरणाद्याग्नेयेन पुरोडाशेन मैत्रावरुण्या पयस्यया च यागः कर्मापवर्गान्तः। तत आदित्येष्टिर्वा।

ततस्तस्मिन्नेव दिने पुनरग्नीषोमीयः कर्मापवर्गान्तः। पुनरुद्धरणाद्युत्तरेष्ट्युपक्रमश्च।

एवं संवत्सरं यावत्प्रतिदिनमिष्टिद्वयं भवति। संवत्सरेण पञ्चदशवर्षसंख्या सम्पद्यते। पञ्चदशभिर्वर्चैः सप्तशतानि विंशतिश्चेष्टयो भवन्ति। संवत्सरं प्रतिदिनमिष्टिद्वयानुष्ठाने चैतावत्य एवेष्टयो भवन्ति। अथवाऽग्निहोत्रहोममिव यावज्जीवं दाक्षायणयज्ञेन यजेत।

## उपांशुदेवताकथनम्

अथ सर्वकर्मसूपांशुदेवताः कथ्यन्ते। काम्यस्य कर्मणो देवता उपांशु भवति। अत्राहुः कर्काचार्याः –

**'व्यक्तत्वे चोदनैकत्वे तन्त्रैक्ये यत्र कामना।**
**तादर्थ्येनैव चोत्पत्तिस्तत्रैव स्यादुपांशुते, ति।।'**

आग्रयणे वैश्वदेव उपांशु भवति। वारुणवर्जिताः सर्वे एककपाला उपांशु भवन्ति। प्राजापत्यः सर्वत्रोपांशु भवति। चातुर्मास्येषु चतुर्ष्वपि पर्वसु सावित्र उपांशु भवति। चातुर्मास्येष्वेव वैश्वदेवपर्वणि वैश्वदेवी पयस्योपांशु भवति। वैश्वदेवीति स्त्रीलिङ्गनिर्देशात्पाशुकेषु वैश्वदेवः पशुः पुरोडाशो वा नोपांशु। शुनासीरीये वायव्यं पय उपांशु भवति। यवागूपक्षेऽपि वायोरुपांशुत्वं भवति। **'तेषां वै चतुर्ण्णां द्वयोस्त्रीणि त्रीणि हवींष्यनिरुक्तानि भवन्ती**[1]**'** ति श्रुतत्वात्।

अग्न्याधेये तनूहविषां देवता उपांशु भवन्ति न सकला इष्टयः चरणशब्दाभावात्। यत्रोपांशु चरन्तीत्येवं चरणशब्दस्तत्रैव सर्वमुपांशु भवति। **'चरणशब्दे सर्वमि**[2]**'** त्युक्तत्वात्। **'आदिष्ट्येष्ट्यास्तनूहविष्ट्वाभावेऽपि**

1. श० प० ब्रा० 11/5/2/7
2. का० श्रौ० सू० 3/7/6

**वह्वृचवशादुपांशुत्वम्।**[1]' दीक्षणीयाप्रायणीयाऽऽतिथ्येष्टीनां देवता उपांशु भवन्ति। अग्नौ चयने वायव्य इष्टकापशुरुपांशु भवति। चयन एवान्ते या मैत्रावरुणी पयस्या सोपांशु भवति। अग्नाविति विशेषोक्तेर्दाक्षायणाग्निष्टोमादौ मैत्रावरुण्याः पयस्याया नोपांशुत्वम्। सौत्रामण्यां प्रथम ऐन्द्रः पशुरुपांशु। प्रथमग्रहणात्त्रिपशौ **'ऐन्द्र वृषभ**[2]' इत्यत्र नोपांशुत्वम्। वायोधसोऽपि सौत्रामण्यामन्ते भवति, सोऽप्युपांशु।

अत्र वह्वृचानां विशेष उक्तः – **'प्रणवो, ये यजामहे, वषट्कारः, सम्प्रैषाः, प्रैषाश्चोच्चैः, उपांशुहविःषु देवतानामधेयं चोपांश्विति**[3]'। **'सर्वकामावाप्त्यर्थमाग्नेयोऽष्टाकपालः काम्यो भवति**[4]' तत्रापि देवता उपांशु भवति।

वृष्ट्यर्थे आग्नेये क्रियमाणे विशेषः – आग्नेयस्यारम्भे वृष्टिकामोऽस्मीत्येवं यजमानो ब्रूयात्। अथ यजमान एव पुरोवातं च विद्युतं च मनसा ध्यायेत्यध्वर्युं प्रति ब्रूयात्। ततोऽभ्राणि मनसा ध्यायेत्यग्नीधं प्रति ब्रूयात्। ततः स्तनयित्नुं च वर्षं च मनसा ध्यायेति होतारं प्रति ब्रूयात्। ततः पुरोवातं च विद्युतं चाभ्राणि च स्तनयित्नुं च वर्षं च मनसा ध्यायेति ब्रह्माणं यजमानः प्रकृतौ दर्शपूर्णमासेष्टावेवोद्धरणकाल एवं ब्रूयात् न पृथगग्नेयेष्टिः कुर्यात्।

एवमेवोपर्युक्तपद्धत्या सर्वा इष्टयो विकृतिरूपा इज्यन्ते। यथाऽत्रेष्टीनां प्रकृतीष्ट्यनुसारिणी पद्धतिरेवमेवान्येषामपि पशुसोमानां प्रकृतीनां विकृतयः किमपि विशेषमादायानुष्ठीयन्ते। तस्मात् ततत् प्रकृतिपद्धत्यनुसारम् अन्येषां विकृतीनां पद्धतिरवगन्तव्येति।

सोमयागान्तर्गतस्य विकृतिरूपेणानुष्ठीयमानस्य पुरुषमेधयज्ञस्य विवेचनमिह प्रस्तूयते। तद्यथा–

---

1. शां० श्रौ० सू० 2/2/15
2. का० श्रौ० सू० 19/3/5
3. शा० श्रौ० सू० 11/36/37
4. श० प० ब्रा० 1/3/5/10

# पुरुषमेधयज्ञविचारः

शाब्दिकार्थाधारे, 'पुरुषमेधयज्ञ' इति शब्दस्यार्थः पुरुषाणाम्मेधायै कृतानुष्ठानमेवावगम्यते। परमाधुनिकैर्विद्वद्भिः पुरुषमेधशब्दस्यार्थः हिंसार्थे क्रियते। तेषां सम्मतौ पुरुषमेधः नरवलिना संबध्यते। अत्र मतैक्यतायाः सर्वथाऽभावो दरीदृश्यते। अत एव श्रुतिस्मृतिषु 'पुरुषमेध' शब्दस्य व्युत्पत्तिलभ्यार्थाः प्रस्तूयन्ते। यतोहि - वेदेषु पुरुषादीनां पशूनां हिंसा सर्वथा प्रतिषिद्धाऽस्ति। वैदिकवाङ्मये पञ्चैव पशुयागा वर्णिता उपलभ्यन्ते तद्यथा - पुरुषमेधः, अश्वमेधः, गोमेधः, अविमेधः, अजमेधाख्याश्च। सन्त्येते श्रौतयज्ञाः[1] श्रुतिप्रतिपादिताः।

शुक्लयजुषस्त्रिंशैकत्रिंशावध्यायौ पुरुषमेधे विनियुक्तौ स्तः। त्रिंशत्तमाध्यायस्यारम्भिकाश्चत्वारो मन्त्राः सवितृदेवताकाः सन्ति। तेष्वाद्यैस्त्रिभिर्मन्त्रैस्तिस्रो घृताहुतयो विहिताः सन्ति। तदनन्तरम् पञ्चमकण्डिकात आरभ्य द्वाविंशतिकण्डिकापर्यन्तं विभिन्नकार्यकर्त्तृणां विभिन्नाकारवताञ्च पुरुषाणां वर्णनमुपलभ्यते। अत्राऽऽहत्य चतुरशीत्युत्तरशतं पुरुषाः परिगणिताः। अत्र **ब्राह्मणराजन्यादयः पुरुषविशेषा द्वितीयविभक्त्यन्ताः पठ्यन्ते, तद्देवताश्च चतुर्थ्यन्ताः।**[2] आलभते क्रिया द्वाविंशत्यां कण्डिकायां निर्दिश्यते, तस्याः प्रतिवाक्यं सम्बन्धो भवति -

**"ब्रह्मणे ब्राह्मणमालभते, क्षत्राय राजन्यमालभते"**[3] इत्येवामदि। श्रौतयज्ञेषु एषा चतुरशीत्युत्तरशतं पुरुषपशूनां यूपेषु बन्धनं निर्दिश्यते।

ब्रह्मा यूपेषु नियुक्तान् पुरुषपशून् 'सहस्रशीर्षे'त्यनुवाकेन अभिष्ट्वा अश्वमेधे यथा कपिञ्जलादीनामारण्यानां पशुपक्षिणामुत्सर्जनमुक्तम् तथैव ब्राह्मणादयोऽप्युत्सृज्यन्ते। तदुक्तम् -

---

1. श्रुत्या साक्षाद्विधानादिमे श्रौतयज्ञा उच्यन्ते। यज्ञमीमांसा, पृष्ठ 5
2. चतुर्थ्यन्ता देवताः, द्वितीयान्ताः पशवः। तै० ब्रा० भट्टभाष्यकरभाष्यम्, 3/4/1
3. तै० ब्रा० 3/4/1-19

**"नियुक्तान् ब्रह्माभिष्टौति होतृवदनुवाकेन सहस्त्रशीर्षेति।**
**कपिञ्जलादिवदुत्सृजन्ति ब्राह्मणादीन्।।[1]"**

ब्राह्मणादीनामुत्सर्जने कृते यस्य पुरुषस्य या देवता मन्त्रे उक्ता तस्यै सकृद्गहीतेनाज्येन यजन्ति। यथा 'ब्रह्मणे स्वाहा, क्षत्राय स्वाहा।' एता देवता आज्याहुतिभिरेव तृप्यन्ति इत्युक्तम् –

**"तान् पर्यग्निकृतानेवोदसृजत्। तद्देवत्या आहुतिरजुहोत्, ताभिस्ता देवता अप्रीणात्। ता एनं प्रीता अपृणन् सर्वैः कामैः।[2]"**

एता आज्याहुतय एकादशानामनुबन्ध्यानां गवां यजनं कृत्वा स्विष्टकृदाहुतेः पूर्वं दीयन्ते।[3]

शुक्लयजुषः एकत्रिंशेऽध्याये निर्दिष्टो विराट् पुरुषः आधिदैवते = (सृष्टियज्ञे) महदण्डो वर्तते, अध्यात्मे च परमपुरुषो नारायणः। उक्तं हि गोपथश्रुतौ –

**स ( प्रजापतिः ) पुरुषमेधेनेष्ट्वा विराडिति नामधत्त।[4]**

सहस्त्रपुराणाधिमहाभाग्यः सर्गान्तरे शयनावस्थायां कामितवान्। धर्मज्ञानवैराग्यैश्वर्यप्राप्तिप्राकाम्यादिभिश्च गुणैरतीत्य तिष्ठेयम्। कृत – कर्त्तव्यः सन्नमेध्यस्वः स्याम। अहमेव च इदं सर्वं चेतनाचेतनं भवेयम्, मम चित्तानुविधायि इदं सर्वं स्यादिति। स एतं प्रमाणं पुरुषमेधाख्यं यज्ञक्रतुं एतच्छास्त्रानुसारेणैव, नारायणत्वं तेनायमयजत्। तेन समीहितं फलं साधितवान्। अत्र प्रश्नः समुदेति यत्किं तत्साधितवान्? इत्यत आह – **'अत्यतिष्ठत् सर्वाणि भूतानि'** एतदितिहासेन क्रतूत्पत्तिवचनम्। अतिष्ठिति सर्वाणि भूतानीति फलवत् प्रयोगवाक्यम्। यो वा एतदेवं वेद उपास्ते इत्युपासनाफलवचनम्। त्रयोविंशतिदीक्षाणां द्वादशोपसदां संख्या विधीयते।

---

1. का० श्रौ० सू० 21/1/11–12, श० प० ब्रा० 13/6/2/13
2. श० प० ब्रा० 13/6/2/13
3. का० श्रौ० सू० 21/1/16
4. गो० ब्रा० 1/5/8

सुत्यानान्तु संख्यानुवादः, विराजासमानः पुरुषमेधो भवतीत्यर्थः। विराट् संख्याभिधानेन तु संख्यासामान्यात् अभ्यस्तः पुरुषमेधः सुखमुपास्यते। तदुक्तम् – "**ततोव्विराडजायतव्विराजोऽअधिपूरुषः।**" इति मन्त्रेणापि विराडुपासनं पुरुषमेधे दर्शितम्। एषा वै सा विराट् या मन्त्रे उक्ता सा आधियाज्ञिकी विराट्। एतस्या एव च विराजः सकाशात् यज्ञं यज्ञाभिमानिनं पुरुषं नारायणं जनयति। ततश्च पुरुषाणां नारायणात् भाविनः विराट् आधियाज्ञिकी चत्वारिंशद्रात्रात्मिका, तस्मिन्यजमानोऽजायत, विराजस्तस्याः आधियाज्ञिक्याः सकाशात् तत्पूर्वसंस्कृतात्मा सर्वभावावेशेषु पुरुषो नारायणः अजायत। ततो हिरण्यगर्भाद्विराट् त्रैलोक्यशरीरोऽजायत, विराजोऽपि सकाशात् तच्छरीरार्द्धबृगलरूपः स्वायंभुवो मनुः सर्वस्य जातिपिण्डसर्गस्य प्रथमोऽजायतेति।

सम्प्रतीह पुरुषमेधस्य सम्बन्धे केचिद्विचारणीया विषयाः प्रस्तूयन्ते–

## पुरुषमेधस्य प्रयोजनम्

कात्यायनश्रौतसूत्रे पुरुषमेधस्य प्रयोजनमित्थं निर्दिष्टम् – "**पुरुषमेधस्त्रयोविंशतिदीक्षोऽतिष्ठाकामस्य।**[1]" अस्यायमर्थः – सर्वाणि भूतान्यतिक्रम्य तिष्ठत इत्यतिष्ठाः, तां कामयते इत्यतिष्ठाकामः। तस्य त्रयोविंशतिदीक्षो द्वादशोपसत्कः पञ्चसुत्यः, एवं चत्वारिंशदहोरात्रसाध्यः पुरुषमेधसंज्ञको यज्ञो भवति।

"**पुरुषो ह नारायणोऽकामयत।**[2]" अनेनैव यज्ञेन परब्रह्म परमात्मा अस्य सृष्टेः संरचना कृतवान्। अतएव सृष्टियज्ञनाम्नाऽपि यज्ञोऽयं व्यवह्रियते। अनेनैव यज्ञेन ऋग्यजुस्सामाथर्वणादयो वेदाः साङ्गाः सरहस्याः, गवाश्वादि पशवः, इन्द्रादिदेवाः, चराचरजीवाः, प्राणवायुतेजाः, प्राचीप्रतीच्यादिदशदिक्–सहितं चतुर्दशभुवनानि सूर्यचन्द्रनक्षत्रग्रहादितत्त्वानि द्यावापृथिव्यादीनि सर्वाणि चौषधान्तानि फलादीन्यारण्यकपदार्थानि

1. का० श्रौ० सू० 21/1/1; श० प० ब्रा० 13/6/1/1
2. श० प० ब्रा० 13/6/1/1

स्थावरजङ्गमादिविषाणि यानि तानि सर्वाण्युत्पादितवन्तः। उक्तं हि मनुना–

**"ततः स्वयम्भूर्भगवानव्यक्तःव्यञ्जयन्निदम्।**
**महाभूतादिवृत्तौजाः प्रादुरासीत्तमोनुदः।।[1]"**

तदेतद् पुरुषमेधानन्तरं यजमानाय अरण्यवासस्यापि व्यवस्था वेदे श्रूयते। तद्यथा महर्षिकात्यायनेनोक्तम् –

**"त्रैधातव्यन्ते समारोह्यात्मन्नग्नी सूर्यमुपस्थायादृभ्यः सम्भृतः" इत्यनुवाकेनानपेक्षमाणोऽरण्यं गत्वा न प्रत्येयात्। ग्रामे वा विवसन्नरण्योः।[2]**

अनयोः सूत्रयोरयमभिप्रायः – **त्रैधातवीमिष्टिं[3]** कृत्वा आत्मनि स्वशरीरेऽग्नी समारोप्य = ऊष्माणमास्ये कोष्ठे वा प्रवेश्य सूर्यमुपस्थाय पश्चादनवलोकयन् अरण्यं गत्वा ग्रामं नागच्छेत्। अथवा ग्रामे एव निवसन् अरण्योरेवाग्नी समारोप्य सूर्यमुपस्थाय ग्रामं प्रत्यागच्छेत्।[4]

एवं पुरुषमेधानन्तरं अरण्ये प्रव्रजनम्, ग्रामं वा प्रतिनिवर्तनं द्वे पक्षे विहितेस्तः। केचन अरण्ये प्रव्रजनस्य सन्यासं गृह्णीयादित्यर्थं मन्यन्ते। अत एव महीधर आह –

**"पुरुषमेधानन्तरं सन्यास एव।"[5]**

अत्रेदमप्यवधेयम्–**"पुरुषमेधस्यारम्भे सूर्यदेवताको होमो विहितः, अन्ते च सूर्योपस्थानम्।"[6]** इति।

शतपथब्राह्मणे पुरुषमेधस्य निर्वचनमित्थमुपलभ्यते –

**"इमे वै लोकाः पूः, अयमेव पुरुषो योऽयं पवते। सोऽस्यां पुरि शेते तस्मात् पुरुषः। यदेषु लोकेष्वन्नं तदस्यान्नं मेधः। तद्यदस्यैतदन्नं**

---

1. मनुस्मृतौ 1/6
2. का० श्रौ० सू० 21/1/17-18
3. का० श्रौ० सू० 13/7/8
4. श० प० ब्रा० 13/6/2/20
5. यजुर्वेद-महीधरभाष्ये 30/22
6. का० श्रौ० सू० 21/1/6, 17

**मेधस्तस्मात् पुरुषमेधः। अथो यदस्मिन् मेध्यान् पुरुषानालभते तस्मादेव पुरुषमेधः।[1]"**

अस्यायमभिप्रायः - इमे पृथिव्यादयो लोका एव पूः (=शरीरम्) स एव पुरुषो योऽयं पवते (योऽयमादित्यः)। स एवास्मिन्पुरि शेते तस्मात् पुरुषः। यदेषु लोकेष्वन्नं = अदनीयं - भक्षणीयं रसरूपम्, तदेव तस्य पुरुषस्य आदित्यस्यान्नं (= भक्षणीयो रसः) मेधः (= सारः)। तस्मात् पुरुषमेधः। अथो (= अधियज्ञपक्षे) यदस्मिन्यज्ञे मेध्यान् पुरुषान् आलभते, तस्मादेव पुरुषमेधः।

शतपथब्राह्मणे पुरुषमेधस्यान्यानि च निर्वचनानि -

1. "इमे वै लोकाः पुरुषमेधः।[2]"
2. "तस्य (पुरुषस्य वायोः) यदेषु लोकेष्वन्नं तदस्यान्नं मेधस्तद्यदस्यै तदन्नं मेधस्तस्मात्पुरुषमेधोऽथो यदस्मिन्मेध्या-न्पुरुषानालभते तस्माद्वेव पुरुषमेधः।[3]"
3. एकादशिनी वा इदं सर्वं प्रजापतिर्ह्येकादशिनी सर्वं हि प्रजापतिः सर्वं पुरुषमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै।।[4]
4. स वा एष पुरुषमेधः। पञ्चरात्रो यज्ञक्रतुर्भवति पाङ्क्तो यज्ञः पाङ्क्तः पशुः पञ्चर्तवः सम्वत्सरो यत्किञ्च पञ्चविधमधिदेवत-मध्यात्मन्तदेनेन सर्वमाप्नोति।।[5]
5. यवमध्यः पञ्चरात्रो भवति। इमे वै लोकाः पुरुषमेधऽउभयतो ज्योतिषो वा इमे लोका अग्निनेतऽआदित्येनामुतस्तस्मादुभयतो ज्योतिरन्नमुक्थ्य आत्माऽतिरात्रस्तद्यदेताऽउक्थ्यावतिरात्रमभितो भवतस्तस्मादयमात्माऽन्नेन परिवृढोऽथ यदेष वर्षिष्ठोऽतिरात्रोऽह्नां

---

1. श० प० ब्रा० 13/6/1/1
2. श० प० ब्रा० 13/6/1/9
3. श० प० ब्रा० 13/6/2/1
4. श० प० ब्रा० 13/6/1/6
5. श० प० ब्रा० 13/6/1/7

स मध्ये तस्माद्यवमध्यो युते ह वै द्विषन्तम्भ्रातृव्यमयमेवास्ति नास्य द्विषन्भ्रातृव्यऽइत्याहुर्य्यऽएवम्वेद।[1]

अत्र 'यवमध्यः' यवस्येव गुरुर्मध्योऽस्येतीति, इमे वै लोकाः पुरुषमेध इति विधिमात्र इत्यधिदैववचनम्। अन्नमुक्थ्यः, आत्माऽतिरात्र इत्याध्यात्मवचनम्। अन्नमुक्थ्यः परिबृंहणभूतत्वात्। आत्मा अतिरात्रः मध्यत्वात् महत्त्वाच्चाग्रे अन्योऽन्येन। अथ यदेव वर्षिष्ठ इति यवमध्यशब्दनिर्वचनम्। युते ह वै इत्युपासनाफलम्। युते आत्मना मिश्रयति स्वीयं करोति भ्रातृव्यम् अयमेवोपासकोऽस्ति। त्रिवर्गसम्पन्नः। अस्य द्विषन् भ्रातृव्यो नास्ति त्रिवर्गहीनत्वात्।

6. "तस्यायमेव लोकः प्रथममहः। अयमस्य लोको वसन्तर्तुः। यदूर्ध्वमस्माल्लोकादर्वाचीनमन्तरिक्षात्। तद्द्वितीयमहः। तद्वस्य ग्रीष्मर्तुः। अन्तरिक्षमेवास्य मध्यममहः। अन्तरिक्षमस्य वर्षाशरदावृतू। यदूर्ध्वमन्तरिक्षादर्वाचीनं दिवः। तच्चतुर्थमहः। तद्वस्य हेमन्तर्तुः। द्यौरेवास्य पञ्चममहः। द्यौरस्य शिशिरऋतुः। इत्यधिदेवतम्।।[2]"

7. अथाध्यात्मनिरुक्तिः – "प्रतिष्ठैवास्य प्रथममहः प्रतिष्ठोऽअस्य वसन्तर्तुः यदूर्ध्वम्प्रतिष्ठायाऽर्वाचीनम्मध्यात्। तद्द्वितीयमहः। तद्वस्य ग्रीष्मर्तुः। मध्यमेवास्य मध्यममहः। मध्यमस्य वर्षा शरदावृतू। यदूर्ध्वंमध्यादवाचीनं शीर्ष्णः। तच्चतुर्थमहः। तद्वस्य हेमन्तर्तुः। शिशिर एवास्य पञ्चममहः। शिरोऽस्य शिशिर ऋतुः। एवमिमे च लोकाः संवत्सरश्च आत्मा च पुरुषमेधमभिसम्पद्यन्ते। सर्वं वा इमे लोकाः। सर्वं संवत्सरः। सर्वमात्मा। सर्वं पुरुषमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै।।[3]"

---

1. श० प० ब्रा० 13/6/1/9
2. श० प० ब्रा० 13/6/1/10
3. श० प० ब्रा० 13/6/2/11

8. सहस्रशीर्षेत्यादि षोडशर्चेन षोडशकलम्वा इदं सर्वम्। सर्वम्पुरूषमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै।।[1]

पूर्वमेवोक्तं यद् '**यदस्मिन्मेध्यान्पुरुषानालभते तस्मात्पुरुषमेधः**'[2] अर्थात् प्रथमं दीक्षादि-संस्कारैः पुरुषपशून् मेध्यते, तान् मेध्यान् पुरुषानालभते = यज्ञेश्वरायोत्सृज्यतेति च तत्र तेषां वधः क्रियते। विषयेऽस्मिन् उक्तं हि ऐतरेयब्राह्मणे –

**"पुरुषं वै देवाः पशुमालभन्त तस्मादालब्धान्मेध उदक्रामत्सोऽश्वं प्राविशत्।। तस्मादश्वो मेध्योऽभवत्। अथैनमुत्क्रान्तमेधमत्यार्जत स किम्पुरुषोऽभवत्। तेऽश्वमालभन्त। सोऽश्वादालब्धादुदक्रामत्। स गां प्राविशत्। तस्माद्गौर्मेध्योऽभवत्। अथैनमुत्क्रान्तमेधमत्यार्जत स गौरमृगोऽभवत्। ते गामालभन्त। स गोरालब्धादुदक्रामत्। सोऽविं प्राविशत्। तस्मादविर्मेध्योऽभवत्। अथैनमुत्क्रान्तमेधमत्यार्जत स। तेऽविमालभन्त। सोऽवेरालब्धादुदक्रामत्। सोऽजं प्राविशत्। तस्मादजो मेध्योऽभवत्। अथैनमुत्क्रान्तमेधमत्यार्जत स उष्ट्रोऽभवत्। सोऽजे ज्योक्तमामिवारमत। तस्मादेष एतेषां पशूनां प्रयुक्ततमो यदजः। तेऽजमालभन्त। सोऽजादालब्धादुदक्रामत्। स इमां प्राविशत्। तस्मादियं मेध्याऽभवत्। अथैनमुत्क्रान्तमेधमत्यार्जत स शरभोऽभवत्। त एत उत्क्रान्तमेधा अमेध्याः पशवः। तस्मादेतेषां -नाश्नीयात्। तमस्यामन्वगच्छन्। सोऽनुगतो ब्रीहिरभवत्। तद्यत् पशौ पुरोडाशमनुनिर्वपन्ति स मेधेन नः पशूनेष्टमसत्. ......। स वा एष पशुरेवालभ्यते यत्पुरोडाशः।।**[3]

अर्थात् कदाचिद्देवाः पुरुषं पशुमालभन्त। विषयेऽस्मिन् उल्लिखितमस्ति यदुत्तरकाले यदा देवेषु मांसाहारस्य प्रवृत्तिं लेभे तदा इन्द्रेण यज्ञेषु पशुहिंसा प्रावर्ति। ऋषिभिरस्यानर्थरूपस्य कर्मणो महान् विरोधः

1. श० प० ब्रा० 13/6/2/12
2. श० प० ब्रा० 13/6/2/1
3. ऐ० ब्रा० 2/8-9

कृतः। तदैव तस्मादालब्धात्पुरुषात्मेधो निर्गत्याश्वं प्रविष्टः, तेनाश्वो मेध्योऽभूत्। देवा अश्वमालभन्त। तस्मादालब्धादश्वान्मेधो गवि प्रविष्टः, तेन गौर्मेध्याऽभूत्। देवा गामालभन्त! तस्या आलब्धाया गोर्मेधो निर्गत्य अविं प्रविष्टः, साऽविर्मेध्याऽभूत्। देवा अविमालभन्त। तस्या मेधो निःसृत्य अजं प्रविष्टः, तेनाजो मेध्योऽभूत्। देवा अजमालभन्त। तस्मादालब्धा-दजान्मेधो निःसृत्येमां पृथिवीं प्रविष्टः, तेन सा पृथिवीं प्रविष्टः, तेन सा पृथिवी मेध्याऽभूत्। तस्मादेत उत्क्रान्तमेधाः पशवः। देवाः अजादुत्क्रान्तं मेधं पृथिव्यां प्रविष्टमन्वगच्छत्। स मेधः देवैरनुगतो ब्रीहिरभवत्। यत् पशुयागे पुरोडाशमनुनिर्वपन्ति, तेन स मेधः पशुरिष्टो भवति। स वा एष पशुरेवालभ्यते यत्पुरोडाशः।

एतस्य पुराकल्परूपस्यार्थवादस्य प्रयोजनं याज्ञिकानाम्मते पशुयागानन्तरं क्रियमाणस्य पशुपुरोडाशस्य प्रशंसनमस्ति। सत्यप्येवमेते-नार्थवादेनेदं स्पष्टम्भवति, यत् पुरुष-अश्व-गो-अवि-अजा अमेध्या अर्थाद् यज्ञयोग्या न सन्ति। पुरोडाश एव यज्ञीयः। तस्मात् श्रौतकर्मसु पुरोडाशस्यैव विधानं सर्वत्रोपलभ्यते।

## पशुयागे पशुपुरोडाशस्य विधानम्

पशुयागे '**यद्देवत्यः पशुस्तद्देवत्यः पुरोडाशः**' इति नियमेन पशुदेवतायै पुरोडाशस्यापि विधानं क्रियते। याज्ञिकाः पशुपुरोडाशं छिद्रापिधानार्थं मन्यन्ते। तेषां कथनमस्ति यदा यज्ञे हिंसितः पशुः स्वर्गे जीवितो भवति, तदा तस्य पशोः शरीरात् निष्क्रान्तानामङ्गानां यानि छिद्राणि सन्ति तेषां पूर्णताऽनेन पशुपुरोडाशेन भवति। वस्तुत इदं कल्पनामात्रम्। यतो हि यज्ञे हुतः पशुर्यज्ञप्रभावात् स्वर्गं प्राप्नोति, तर्हि किं तस्यैव यज्ञस्य प्रभावात् स सर्वाङ्गपूर्णो न भवितुमर्हति? तथा इदमप्यत्र विचारणीयम् - यदि यज्ञे हुतः पशुः स्वर्गेऽपि पशुयोनिमेव प्राप्नोति, तर्हि किमत्र तस्य यज्ञस्य माहात्म्यम्?

परं महाभारतादि-पुराणैतिहासिकग्रन्थेषु यानि प्रमाणानि-उद्धृतानि

सन्ति, तैरिदं स्पष्टम्भवति यत् आदिकाले पशूनामालम्भनं न भवतिस्म। केवलमालभनमेव (स्पर्शमात्रमेव) भवति स्म। यस्य - यस्य पशोर्या या देवता आसीत् तां तां निर्दिश्य पशुं स्पर्शयित्वा स यज्ञीयः पशुरुत्सृज्यते स्म। अस्माकं वैदिकशाखानां ब्राह्मणग्रन्थानाञ्चानुसारेणेदमपि स्पष्टीकृतं यद् यज्ञीयाः पाशव आधिदैविके सृष्टियज्ञे अग्निवाय्वादित्यपृथिव्यादयो विशिष्टाः पदार्था एव सन्ति। तेषां सृष्टियज्ञे आलम्भनं (वधः = नाशः) नैव भवति स्म, अपितु भौतिकानां देवानां स्पर्शेन (= सहयोगेन) तेषु गुणाधानमेव भवति स्म। अतः सृष्टियज्ञानुकृतिरूपेषु पशुयागेषु लौकिकपशूनामालम्भनं कथं भवितुमर्हति? वस्तुतस्तु यथा सम्प्रत्यपि पुरुषमेधे पुरुषपशूनामश्वमेधे चारण्यपशूनां तत्तद्देवता निर्देशपूर्वकमुत्सर्जनं भवति, तथैवादिकाले अन्यपशूनामपि उत्सर्ग एव भवति स्म। कस्यचिदपि प्रारम्भस्य कर्मणो मध्ये परित्यागोऽनुचितो भवति। अतः पुरुषादिपशुयागेषु पुरुषपशूनामुत्सर्गे कृते यज्ञकर्मपूर्तये आज्य-पुरोडाशपयस्या - आमिक्षादीनां द्रव्याणां विधानं तत्तत्प्रकरणेषु दृश्यते। तद्यथा प्रथमम्-

1. **आज्येन**-"तस्मिंस्त्वाष्ट्रं साण्डं लोमशं पिङ्गलं पशुमुपाकृत्य पर्यग्निकृतमुत्सृज्याज्येन शेषं संस्थापयेत्। यावन्ति पशोरवदानानि स्युस्तावत्कृत्व आज्यस्यावद्येत्। पशुधर्माज्यं भवति।।[1]"
   अत्र त्वाष्ट्रस्य पात्नीवतः पशोरुत्सर्जनं विधाय आज्येन तत्कर्मसमाप्तिरूक्ता।
   पुरुषमेधेऽपि "स्विष्टकृद् वनस्पत्यन्तरे पुरुषदेवताभ्यो जुहोति।[2]" श्रीमद्विद्याधरेण अस्य सूत्रस्य व्याख्याने इदमुक्तं यत् - 'पुरुषाणां या ब्रह्मादयो देवताः ताभ्यः प्रत्येकं सकृद् गृहीतमाज्यं ब्रह्मणे स्वाहा - क्षत्राय स्वाहेत्येवं पदं चतुर्थ्यन्तमुच्चार्य स्वाहाकारेण जुहुयात्।

---

1. आप० श्रौ० सू० 14/7/13-15
2. का० श्रौ० सू० 21/1/13

2. **पुरोडाशेन** – अभिचाररूपे गोसंज्ञके सोमयागे अग्नीषोमीय-पशोरालम्भनं न भवति। तत्र 'अग्नीषोमीयस्य स्थानेऽग्नीषो-मीयैकादशकपालः[1]' इत्यनेन अग्नीषोमीयस्य एकादशकपालस्य पुरोडाशस्य विधानं क्रियते।
3. **पयस्यया** – "उभयाभावे पयस्या।[2]" वशाया गोः उक्ष्णोरप्यभावे पयस्या कार्या। कलौ गवालम्भनस्य निषिद्धत्वात् पयस्यायाग एव तत्स्थाने कार्यः इति विद्याधरः।
4. **आमिक्षया** – "मैत्रावरुणीमामिक्षामनूबन्ध्यायाः स्थाने वह्वृचाः समामनन्ति।[3]"
   "अनूबन्ध्यानां वपायां हुतायाम् आमिक्षाया वा प्रधाने इष्टे।[4]"
   "अनूबन्ध्यास्थाने मैत्रावरुण्यामिक्षा।[5]"
   "यदन्नः पुरुषस्तदन्ना स्याद्देवता।[6]"

सम्भवतः 'यद्देवत्यः पशुस्तद्देवत्यः पुरोडाशः' इत्यस्य विधान-मप्यारम्भे अनया दृष्ट्यैव कृतं स्यात्। सत्येवं, पशुदेवत्यस्य पुरोडाशस्य छिद्रापिधानार्थरूपोऽर्थवादोऽप्युपपद्यते। उत्तरकाले यदा यज्ञेषु पशूनामालम्भनं प्राचलत्, तदा पौर्वकालिकं पुरोडाशविधानमपि सम्बद्धमेवातिष्ठत्।

पुरस्तादैतरेयब्राह्मणस्य यत्सुदीर्घमर्थवादवचनमलेखि। तेनापीदमेव ध्वन्यते यत्पुरुषादीनां पशूनामङ्गैर्यज्ञो न भवितुमर्हति। यतस्ते उत्क्रान्तमेधाः सन्ति। तेषां मेधाः पृथिवीं प्रविश्य ब्रीहिरूपेण प्राकट्यमलभन्त। अतो ब्रीहिरेव मुख्यं यज्ञीयं द्रव्यं वर्तते। सत्यप्येवं यदि पुरुषादिभिर्पशुभिरेव

---

1. आप० श्रौ० सू० 22/3/1
2. का० श्रौ० सू० 10/9/16
3. आप० श्रौ० सू० 13/24/10
4. आप० श्रौ० सू० 14/7/12
5. आप० श्रौ० सू० 22/3/11
6. निदानसूत्रे 10/9

यज्ञः क्रियते, तर्हि स उत्क्रान्तमेधेन (= अमेध्येन) पदार्थेन कृतं स्यात्। इदमप्यत्रास्ति विचारणीयम्- देवैः पुरुषादीनामालम्भने कृते, यदा पुरुषादय उत्क्रान्तमेधा बभूवुस्तदा पुनरेतेषु मेध्यत्वं कथमुदपतत्? एतद् वैदिकवाङ्मयस्य नहि कस्मिंश्चिदपि ग्रन्थ उक्तम्।

वस्तुतस्तु ऐतरेयब्राह्मणस्य पूर्वोक्तोऽर्थवादोऽपि पुराकल्परूप एव। अत एतस्मिन्निर्दिष्टाः 'पुरुष-अश्व-गो - अवि-अजा' अपि सृष्टिगता विभिन्ना लोकलोकान्तरा एव। एभ्यो मेधस्य (= शक्तेः) उत्सर्जनं तु सर्वदा भवत्येव, तच्च मेधोत्सर्जनं रश्मिभिर्वर्षाजलैर्वा इमां भूमिं प्राप्नोति। तेनैव ब्रीहियवादय ओषधिवनस्पतय उत्पन्ना भवन्ति। द्रव्यमयस्य यज्ञस्य एते ब्रीह्यादय ओषधय एव मेध्याः पदार्थाः सन्ति।

शास्त्रकाराणामिदं कथनमस्ति - **"यदन्नः पुरुषो भवति तदन्नास्तस्य देवता[1]"** इति। एवं सति निरामिषभोजिनाम् ऋषिमुनीनां ब्राह्मणवर्णस्थानां यजमानानाञ्च देवता अपि निरामिषा एव भवन्ति। सत्येवं कथं ताभ्यो देवताभ्यो यज्ञेषु पशवङ्गानां प्रदानं भवितुमर्हति? वेदार्थपारिजाते करपात्रस्वामिना गवालम्भनस्य निराकरणप्रयत्नपूर्वकमकारि, परं साहसिकेन स्वामिनोत्तररामचरितादिग्रन्थेषु प्रत्यक्षमुल्लिखितस्य गोवत्सस्य गवां चालम्भनमपि न स्वीकृतम्। तेन स्वामिनेदमपि प्रतिज्ञातं यत् कदाचिदपि गवालम्भनं न भवतिस्म। इदं सर्वमपि करपात्रस्वामिनः कथनं **'गतानुगतिको लोको न लोकः परमार्थिकः'** इत्याभाणकानुसारमेव। करपात्रस्वामी ब्राह्मणश्रौतसूत्राध्येता स्वकीये वेदार्थपारिजाते इत्थमुक्तम् -

**अश्वालम्भं गवालम्भं सन्यासं पलपैत्रिकम्।**
**देवराच्च सुतोत्पत्तिं कलौ पञ्च विवर्जयेत्।।[2]**

यद्यप्युपगमसिद्धान्तेन दुर्जनसन्तोषन्यायेन वापि पशुयागविषये पशुहिंसा वर्जिताऽस्ति। समस्ता अपि द्रव्यमया यज्ञा आधिदैविकान्

---

1. निदानसूत्रे, 10/9
2. वेदार्थपारिजाते, भाग - 2, पृष्ठ 2049

सृष्टियज्ञान् प्रत्यक्षवत् परिज्ञापनाय रूपका नाटकानि वा सन्ति। यज्ञानां विषये सम्पूर्णस्य वैदिकवाङ्मयस्यायमेव सारः। एतस्मिन् विषये आरम्भ एवास्माभिर्विस्तरेण लिखितम्। अतो यदि सृष्टियज्ञे केषाञ्चित् पशूनां (= द्रव्याणां) आलम्भनं (= हिंसा) भवति, तेषाञ्च वर्णनं मन्त्रेषूपलभ्यन्ते, तथा सत्यपि यदा सृष्टियज्ञस्य परोक्षां प्रक्रियां प्रत्यक्षरूपेण विज्ञापयितुं तां द्रव्यमययज्ञेषु नाटकरूपेण प्रस्तूयते, तदा नाट्यसम्प्रदायस्य यथावत् परिपालनमावश्यकम्। भारतीये नाट्यसम्प्रदाये नाटकप्रस्तुतिकाले हिंसा प्रतिषिद्धा वर्तते।

काव्यानि दृश्य – श्रव्य भेदेन द्विविधानि। श्रव्यकाव्यानि रामायणमहा-भारतादीनि, दृश्यकाव्यानि – विक्रमोर्वशीयाभिज्ञानशाकुन्तलादीनि। श्रव्यकाव्येषु रामायणमहाभारतादिषु रामरावणयुद्धस्य कौरवपाण्डवयुद्धस्य च यथावद् वर्णनं कृतम्। तस्मिन् घात–प्रत्याघातादीनामेतादृग् वर्णनं प्रस्तुतम्, येन पठतां सहृदयानां पाठकानां पुरस्ताद् युद्धस्य घातप्रत्याघातरूपा घटना हस्तामलकमिव उपतिष्ठन्ति। परन्तु यदा ईदृशान् प्रसङ्गान् आधारीकृत्य नाटकानां रचना भवति, तदा एषु घातप्रत्याघातादीनां वर्णनं न क्रियते। अत एव रंगमञ्चेऽपि तासां निदर्शनं न भवति। अस्यैव लौकिकस्य नाट्यधर्मस्य यज्ञीयनाटकेष्वपि परिपालनमावश्यकम्। सत्येवं, यज्ञेषु पशोः साक्षात् हिंसाया निदर्शनं न भवितुमर्हति। यज्ञार्थं सम्पादितानां पशूनां कर्मणो मध्य एव पर्यग्निकरणसंस्कारानन्तरमुत्सर्जनं भवति। अवशिष्टस्य नाटकरूपस्य कर्मणः परिपूर्तिः पुरोडाशादिद्रव्यैः सम्पाद्यते।

## यज्ञेषु पश्वालम्भविधायकभ्रान्तेर्द्वे प्रधानकारणे

1. **प्रथमं कारणम्** – 'वेदेषु पशुहिंसाया विधानमस्ति' इति भ्रान्त्यैव यज्ञेषु पशुहिंसा प्रवृत्ता। इदं चरकसंहितायाः पूर्वोद्धृते वचने 'पशूनामेवाभ्यनुज्ञानात्' इति पाठेन उपरिचरवसोश्च **'संहिता मन्त्रा हिंसालिङ्गाः[1]'** कथनेन स्पष्टम्। अस्य भ्रमस्यापि द्वे कारणे स्तः एकम् –

1. वायुपुराणे, 57/107

अजादि पुरुषपशुशब्दानामनेकार्थत्वम्, द्वितीयम् आलभ – आलम्भ क्रिययोः साङ्कर्यम्।

**अजशब्दार्थे भ्रमः**

अजशब्दस्य द्वावर्थौ स्तः। एकः छागः अपरः प्ररोहणसामर्थ्यरहितः। प्राचीनागमग्रन्थेषु '**अजैर्यष्टव्यम्**' इत्यादि वाक्येषु अजशब्दः छागस्य वाचकः, अथवा '**प्ररोहणसामर्थ्यरहितस्य**' अर्थस्य वाचकः अस्य मीमांसामकृत्वा '**योगाद्रूढिर्बलीयसी**' इति न्यायेन '**अजशब्दस्य छागार्थग्रहणेन यज्ञेषु पशुहिंसा प्रावर्ति।**' अत्र कानिचित् प्रमाणान्युद्धरामि-

(क) महाभारतस्य शान्तिपर्वणः 337 तमेऽध्याये देवानां ऋषीणाञ्चैकः संवाद उपलभ्यते। तत्रोक्तम् –

**देवा ऊचुः- अजेन यष्टव्यमिति प्राहुर्देवा द्विजोत्तमान्।**[1]
**स च छागोऽप्यजो ज्ञेयः नान्यः पशुरिति स्थितः।।**

ऋषयः ऊचुः

**बीजैर्यज्ञेषु यष्टव्यमिति वै वैदिकी श्रुतिः।**
**अजसंज्ञानि बीजानि छागं नो हन्तुमर्हथ।।**[2]
**"नैष धर्मः सतां देवा यत्र वै वध्यते पशुः।।**[3]**"**

अजशब्दस्य छागोऽर्थ इति देवानाम्मतम्। ऋषयश्च श्रद्धालवः अजसंज्ञानि बीजानि इत्याहुः। पशूनां वधो नैव सतां धर्म इति च प्रोचुः।

(ख) यद्यप्युक्तप्रकरणे कानि अजसंज्ञकानि बीजानीति न स्पष्टी भवति, तथापि वायुपुराणान्तर्गतायामुपरिचरवसोः कथायामुक्तम् –

**"यज्ञबीजैः सुरश्रेष्ठ येषु हिंसा न विद्यते।**
**त्रिवर्षपरमं कालमुषितैरप्ररोहिभिः।।**[4]

1. महाभारते शान्तिपर्व अ० 337, श्लोक 57
2. महाभारते शान्तिपर्वे, 337/58
3. महाभारते शान्तिपर्वे, 337/100
4. वायुपुराणे, 57/100–101

वायुपुराणस्यास्मिन् श्लोके अजशब्दस्यार्थ अप्ररोहिभिः शब्देन निदर्शितः। अप्ररोहित्वस्य निदर्शनाय – त्रिवर्षपरमं कालमुषितैरिति उक्तम्। एतेन वचनेनेदमपि ध्वन्यते यत् ऋषीणां मते क्षेत्रेषु प्ररोहणसमर्थैर्धान्यैरपि यज्ञानुष्ठानमनुचितम्, किं पुनः पशुभिः।

(ग) मत्स्यपुराणेऽपि उपरिचरवसोः कथायामुक्तम् –

**"यज्ञबीजैः सुरश्रेष्ठ त्रिवर्षपरिमोषितैः।[1]"**

(घ) महाभारते पुराणेषु च अजशब्दस्य योऽर्थो निर्दिष्टः, स जैनग्रन्थेष्वप्युपलभ्यते। तदुक्तं स्याद्वादमञ्जर्याम् –

**"तथाहि किल वेदे 'अजैर्यष्टव्यम्' इत्यादि वाक्येषु मिथ्यादृशोऽजशब्दं पशुवाचकं व्याचक्षते। सम्यग्दृशस्तु जन्माप्रायोग्यं त्रिवार्षिकं यवव्रीह्यादि, पञ्चवार्षिकं तिलमसूरादि, सप्तवार्षिकं कङ्गुसर्षपादि धान्यपर्यायतया पर्यवसायन्ति।।[2]"**

(ङ) अस्यैव प्रतिध्वनिः पञ्चतन्त्रेप्युपलभ्यते। तद्यथा – **"एतेऽपि याज्ञिका यज्ञकर्मणि पशून् व्यापादयन्ति, ते मूर्खाः परमार्थश्रुतेर्न जानन्ति। तत्र किलैतदुक्तम् – 'अजैर्यष्टव्यम्'। अजा व्रीह्यः सप्तवार्षिकाः कथ्यन्ते, न पुनः पशुविशेषः।।[3]"**

अत्रापि अजशब्दस्यार्थः सप्तवार्षिका व्रीह्य उक्ताः न पुनः पशुविशेषः। एतेन विस्पष्टं यदोत्तरकाले भ्रान्त्या अजशब्दस्यार्थस्याविज्ञानाद् छाग इति स्वीकृतम्। ततो यज्ञेषु पशुहिंसा प्रवृत्ता।

### पुरुष-अश्व-गो-अविशब्दानामर्थेषु भ्रान्तिः

यथा अजशब्दस्यार्थे भ्रान्त्या छागस्यालम्भनं यज्ञेषु प्रवृत्तम्, तथैव पुरुष – अश्व – गो – अविशब्दानामपि वास्तविकार्थस्याविज्ञानाद् यज्ञेषु पुरुषादीनामालम्भनं प्रवृत्तम्। वैदिकयज्ञप्रकरणे पुरुषादीनां कस्मिन्नर्थे

1. मत्स्यपुराणे, 143/14
2. स्याद्वादमञ्जर्याम् – श्लोक 23 तमस्य व्याख्या, पृष्ठ 107, 108
3. पञ्चतन्त्रे – काकोलूकीयं कथा 2, 104, श्लोकानन्तरम्।

तात्पर्यमिति 'पुरुषशब्दविचार' 'नामके शीर्षके विस्तरेण स्पष्टीकृतम्। अतः पुनरिह पिष्टपेषणं न क्रियते।'

**द्वितीयं कारणम् - यज्ञेषु पश्वालम्भप्रवृत्तेः**

आलभ - आलम्भयोः साङ्कर्यम् - पाणिनेः प्रागेव संस्कृतभाषातः शुद्धस्य लम्भ धातोर्तिङन्तप्रयोगाणामुच्छेदो बभूव। अतः तात्कालिकै-र्वैयाकरणैर्लम्भधातुर्धातुपाठेषु न पठितः। लम्भधातोर्निष्पन्ना भाषायां ये प्रयोगा अवशिष्टा आसन्, तेषां सम्बन्धो लभधातोर्नुमागमं विधाय संयोजितः। अत आलभ-आलम्भ इत्येतौ समानार्थकाविति मिथ्या धारणा प्रचलिता। तस्याधारेणापि यज्ञेषु पशुहिंसा प्रावर्ति। लभ - लम्भ द्वौ स्वतन्त्रौ धातूस्तः।

वस्तुतस्तु पुरुषमेधयज्ञे पुरुषपशोः हिंसाया क्वचिदपि प्रमाणं नोपलभ्यते। विषयेऽस्मिन् श्रुतिषूक्तवचनेन पुरुषमेधयज्ञसम्बन्धिन पुरुषपशुविषये विचारः क्रियते - शुक्लयजुर्वेदस्यैकत्रिंशत्तमेऽध्याये पुरुषमेधयज्ञस्य विस्तृतं वर्णनमुपलभ्यते। तत्रैकस्मिन्मन्त्रे पुरुषपशोः नियोजनस्य प्रक्रियाऽपि दृश्यते। तद्यथा -

**"सप्तास्यासन्परिधयस्त्रिः सप्तसमिधः कृताः।**
**देवा यद्यज्ञं तन्वाना अबध्नन्पुरुषं पशुम्।।[1]"**

मन्त्रमिमं वेदेषु पुरुषसूक्तनाम्ना सुविख्यातसूक्तात् गृहीतोऽस्ति। अत्र परब्रह्मपरमात्मा सृष्टिसर्जनैच्छया सर्वहुत् नामकं यज्ञमकल्पयन्। तस्मिन्यज्ञे गायत्र्यादीनि सप्तछन्दांसि सप्तपरिधयः आसन्।[2] अत्र महीधरेणोच्यते यत् यदा देवाः = प्रजापतिप्राणेन्द्रियरूपाः यज्ञं तन्वानाः मानसं यज्ञं कुर्वाणाः पुरुषं पशुमबध्नन् विराट्पुरुषमेव पशुत्वेन भावितवन्तः। त्रिः सप्त त्रिगुणाः सप्त एकविंशतिसंख्याकाः समिधः कृताः 'द्वादशमासाः पञ्चर्तवस्त्रय इमे लोका असावादित्यः' एते एकविंशतिरेकविंशतिदारुयुक्तेध्मत्वेन भाविताः।

---

1. शु० य० सं० 31/15
2. शु० य० सं० 31/15, उव्वटभाष्ये - सप्तसमुद्राः परिधिरूपेण गृहीताः।

अत्र यदि 'अबध्नन्' इति शब्दस्यार्थः 'हतवन्त' इति क्रियते चेत् विराट्पुरुषस्यैव हननं भविष्यति नैतद्युक्तम्। अतोऽनेन मन्त्रेण इदमेव विज्ञायते यत् तं विराट्पुरुषं कश्मिंश्चिद्यूपे नियोजितवन्तः। यतोहि यज्ञोऽयं मानसकल्पनासादृश्यमेव। मन्त्रेणैव स्पष्टीभवति यत् -

**यत्पुरुषेण हविषा देवा यज्ञमतन्वत।**
**वसन्तोऽस्यासीदाज्यङ्ग्रीष्म इध्मः शरद्धविः।।**[1]

अस्मिन्यज्ञे वसन्तर्तुः आज्यस्वरूपम्, ग्रीष्मर्तुः इध्मस्वरूपं, शरदर्तुश्च हविःस्वरूपमासीत्। अनेन आज्येध्महविरिति पदार्थेन साम्प्रतं कश्चिदपि सामर्थ्यशाली यज्ञानुष्ठानाय समर्थो न भविष्यति। स एव परमात्मा तस्मिन् कर्मणि योग्य इति बुध्यते।

अत एव पुरुषसूक्तेनैव पुरुषमेधस्य रहस्योद्घाटनम्भवति। सहस्र-शीर्षनेत्रपादैर्युक्तं पुरुषं सम्पूर्णविश्वस्य एकमात्र पुरुष इति मन्तुं शक्यते। वर्त्तमान-भूत-भविष्यादि विश्वस्याशयः सार्वकालिकपुरुषेणैवास्ति। पुरुषस्य अमृतत्वं स्वयमेव सिद्धमस्ति। यतोहि लोके मानवः मरणात्पूर्वं स्वकीयमुत्तराधिकारिणम् (पुत्रं) उत्पादयति। अतः पुरुषः मर्त्यो न भूत्वा अमर एव भवतीत्यर्थः।

मेधशब्दस्यार्थः बलिदानमिति ग्रहणेनापि अस्याशयं मानवं हत्त्वा कस्यैचिद् इष्टदेवतायै अर्पणेन सह न योजितुं शक्यते।

मानवस्तु कश्मिंश्चिदपि रूपेण स्वात्मानः बलिदानं तु करोत्येव। उदाहरणार्थं पश्यताम् तावत् -

कश्चिदपि यागः तन - मन - धनेन विना न सम्पादितुं शक्यते। अतो यज्ञानुष्ठानस्यारम्भायैव प्रथमं मनसि संकल्पो भवितव्यः, अनन्तरं यज्ञसाधनादीनि पुरोडाशादि हविर्द्रव्याणि - अध्वर्यवादयश्चैते सर्वे धनेनैवाप्ताः सन्तुष्टाश्च भवन्ति। तदनन्तरं यज्ञारम्भात् समाप्तिपर्यन्तं यजमानस्योपस्थितिरनिवार्या भवति। एतेन तन - मन - धनस्य च त्यागं

---

1. शु० य० सं० 31/14

करणीयम्भवति। एतेषां त्यागेन (बलिदानेन) विना न कोऽपि यज्ञकर्मणि समर्थो भवितुमर्हति।

अतोऽनेन व्याख्यानेनेदमेव सुस्पष्टम्प्रतिभाति यदस्मिन् संसारे एक एव परमात्मा पुरुषः तेभ्यः मेध्यानां (यज्ञीयानां) पुरुषाणां आलभनम् (उत्सर्जनम्) एव पुरुषमेधस्य तात्पर्यम्।

अत एव यो मनुष्यः इमं रहस्यं जानाति अथवा इमं रहस्यं विज्ञाय परुषमेधयागमाचरति स सर्वेषु जीवेषु सर्वोपरि भूत्वा सर्वसम्पन्नश्च भवतीति।

## अथ पुरुषमेधयज्ञप्रक्रिया

अतिष्ठाकामेन ब्राह्मण-क्षत्रियाभ्यां पुरुषमेधयज्ञो विधीयते। अतिष्ठाशब्दार्थश्च = सर्वभूतान्यतिक्रम्य स्थानं सर्वतः श्रेष्ठत्वमिति वा **'अतिष्ठा'** इति कथ्यते। तेन च यज्ञेनानेन अतिष्ठाफलं ब्राह्मण-क्षत्रियाभ्यां लभ्यते। इति तु स्वत एवस्फुटायते।

सामान्यतः चैत्रशुक्लदशम्यामारभ्यमाणोऽयं यज्ञः। यज्ञेऽस्मिन् त्रयोविंशतिर्दीक्षाः[1] द्वादशोपसदः - पञ्चसुत्याश्च भवन्ति। यज्ञोऽयं चत्वारिंशद्दिनैः सिद्ध्यति। उक्तं हि शतपथश्रुतौ - **"तस्य त्रयोविंशतिर्दीक्षाः। द्वादशोपसदः पञ्च सुत्याः स एष चत्वारिंशद्रात्रः"** इति।[2]

तत्र यजमानः कर्मानुष्ठानात्पूर्वं गुरोः मातुः पितुश्च पुण्यजनानामनुमतिं गृह्येत्। ज्योतिर्विद्भिर्भूमिपूजनार्थमुचितं मुहुर्त्तं ज्ञायेत्, तदनुसारं पौरोहितेन दैवज्ञेन सह च पूजनसामग्रीं गृहीत्वा यजनीयस्थाने गच्छेत्। पवित्रभूमौ सपत्नीको यजमानः शुचिर्भूत्वा पूर्वाभिमुखः सङ्कल्पयेत्-

**"ॐ विष्णुर्विष्णुर्हरिर्हरिः। ॐ अद्य श्रीब्रह्मणोऽह्निद्वितीयपरार्द्धे श्रीश्वेतवाराहकल्पे वैवस्वतमन्वन्तरे भरतखण्डे जम्बूद्वीपे आर्यावर्त्तैकदेशान्तर्गतेऽमुके क्षेत्रे मासानामुत्तमे मासि चैत्रे मासि शुभे**

1. पुरुषमेधस्त्रयोविंशतिदीक्षोऽतिष्ठाकामस्य, का० श्रौ० सू० 21/1/1
2. श० प० ब्रा०, 6/4/1/2

**शुक्लपक्षे शुभपुण्यतिथौ दशम्यां तिथौऽमुकवासरेऽमुकगोत्रस्यामुक प्रवरान्वितोऽहममुकशर्मा सपत्नीकोऽहं करिष्यमाण सोमयागाङ्ग-भूताग्निष्टोमसंस्थस्य पुरुषमेधयागोपयोगिप्राच्यादिदिक्साधनपूर्वक शालायतननिर्मातुं तदङ्गतया विहितानि स्वस्तिवाचनभूमिकूर्मा-नन्तवराहविश्वकर्मपुरोहित दैवज्ञपूजनानि करिष्ये। तत्रादौ निर्विघ्नतासिध्यर्थं गणपतिगौरीपूजनञ्चाऽहं करिष्ये।"**

सङ्कल्पानुसारं स्मार्तविधिना भूम्यादिदेवानामावाहनम्पूजनञ्च कुर्यात्। देवयजनस्य निर्माणकार्यं प्रारभेत्।

देवयजनं निर्माय सपत्नीको यजमानः पूर्वोक्त प्रक्रिययैव पूर्वाभिमुखो भूत्वा आचम्य प्राणानायम्य प्रधानसङ्कल्पं कुर्यात् – **"स्वर्ण, शतं गौः, वस्त्रादि दक्षिणाभिस्सम्पाद्यमान रथन्तरपृष्ठ, अग्निष्टोमसंस्थ पुरुषमेधयागमहं करिष्ये।"** इति संकल्प्य दैवर्त्विग्वरणम्, मानुषर्त्विग्वरणम्, मधुपर्कार्चनम् आदि कृत्वा यजमानः – **"अग्निर्मे होता स मे देवयजनं ददातु इत्युपांशु, होतर्देवयजनं मे देहीत्युच्चैः, एवं सर्वत्र। दत्तमिति सर्वेषां होत्रादीनां प्रतिवचनम्।**[1]**"** इति मन्त्रेण ऋत्विजैः देवयजनं याचयित्वा अरणौ अग्निं समारुह्य, समस्तोपयोगिसामग्रीणां सञ्चयं कृत्वा पत्नी, ऋत्विज् परिचारकैस्सह च मङ्गलघोषः मङ्गलपाठश्च कुर्वन् देवयजनम्प्रति गच्छेत्।[2] तत्र अरणी मथित, पूर्वनिर्मिते गार्हपत्यायतने मथनोत्पन्नमग्निं प्रतिष्ठापयेत्। ततोऽध्वर्युराहवनीयं प्रणीय, तत्र संभारयजुस्संज्ञकान् चतुर्विंशति संख्याकान्, होमान् हुत्वा, तमग्निं विसृज्य, पुनर्गार्हपत्यात् प्रणीय सप्तहोतृसंज्ञकं होमं कृत्वा, तमप्युत्सृज्य, पुनः तत एवाहवनीयदक्षिणाग्नी विहृत्य तत्र दीक्षणीयेष्टिं कुर्यात्।

## दीक्षा

दीक्षणीयेष्टावपि विविधा दीक्षा क्रियते। तत्र प्रथमम् –

1. दे० प० पृ० 233
2. का० श्रौ० सू० 7/1/30, 'समारोह्याग्नी०.........'

## अप्सुदीक्षा

**"क्रत्वर्थमपदिश्यान्यस्मा उत्तरे परिवृत्त उदकुम्भवत्यप्सु दीक्षा।।[1]"** इत्यस्मात् श्रौतसूत्रवचनात् यज्ञशालाया उत्तरे दीक्षाशाला भवितव्या। तन्मध्ये गर्ते जलपूर्णकलशं स्थापयेत्। दीक्षायाः शेषाः सामग्र्यः दीक्षाशालाया-मासादयेत्। अध्वर्युरुत्तराभिमुखः यजमानश्च पूर्वाभिमुख उपविशेदुत्तरे च नापितः। अध्वर्युर्यजमानस्य दक्षिणहस्तादारभ्य उभयोः हस्तयोः नखकर्तनं कुर्यात्।[2] अनन्तरमध्वर्युर्यजमानस्य दक्षिणकर्णोपरि तृणं निधाय दर्भसहितं केशं छित्वा उदपात्रे प्रास्यति।[3] अनन्तरं **"नापिताय क्षुरं प्रयच्छति"** तेन केशश्मश्रुवपति[4] औदुम्बरकाष्ठेन दन्तधावनं कृत्वा **"आपो अस्मान्मातरः शुन्धयन्तु[5]"** इति मन्त्रेण स्नात्वा अहतवस्त्रं धौतवस्त्रं क्षौमवस्त्रं वा गृहीत्वा नित्येष्टवै ब्रूयादिति प्रैषपूर्वकं प्रक्षालनं कृत्वा परिधत्ते।[6]

## पत्नीदीक्षा

प्रकृतिशालायाः पश्चिमे पत्नीशाला भवति। तस्यां शालायां प्रतिप्रस्थाता तूष्णीमेव पत्नीं दीक्षयति।[7] **"वपनं वा"**[8] इति कात्यायनश्रौतसूत्रवचनात् केवलं नखकृन्तनादि संस्कारं कृत्वा स्नानादि संस्कारं यथावत् कुर्यात्। वपनञ्च वा भवति, वा न भवति। वपनाभावे च वितारणोन्दनादि न भवति; वपनार्थत्वात्। अप्सुदीक्षां समाप्य यज्ञशालाम्प्रत्यागच्छेत्।

---

1. का० श्रौ० सू० 7/2/5
2. नापित उपतिष्ठते० का० श्रौ० सू० 7/2/6
3. ओषधे त्रायस्व, इति मन्त्रेण शु० य० सं० 4/1, का० श्रौ० सू० 7/2/7-12
4. का० श्रौ० सू० 7/2/13-14, 'स्वधिते मैनं हिंसीः' शु० य० सं० 4/1
5. शु० य० सं० 4/2; का० श्रौ० सू० 7/2/15
6. का० श्रौ० सू० 7/2/16
7. एवं प्रतिपस्थाताऽपरस्मिन्परिवृते पत्नीं तूष्णीम् - का० श्रौ० सू० 7/2/20
8. का० श्रौ० सू० 7/2/21

**दीक्षणीयेष्टिः**

पूर्वोल्लिखितान् नियमान् पालयन् यजमानः प्रकृतिशालायामागत्य दीक्षणीयेष्टिं प्रारभेत्। "**प्रपाद्याग्नावैष्णव एकादशकपालः।**[1]" प्रपाद्य बाहुगृहीतं (यजमानं) विमिते प्रवेश्याग्नावैष्णव एकादशकपालः कर्त्तव्यः। समिष्टयजुराहुतिपर्यन्तमिष्टिं कुर्यात्। इत्थं मध्ये क्रियमाणेषु इष्टिषु अग्न्यन्वाधानं व्रतोपायनादिकं न करणीयम्।[2] अध्वर्योः प्रैषं श्रुत्वा प्रधानयागकाले प्रस्तोता तार्क्ष्यसामगानं कुर्यात्।

**नवनीतदीक्षा**

प्रकृतिशालायाः पूर्वस्यां दर्भमास्तीर्य यजमानः तिष्ठेत्। यजमानस्य दक्षिणभागे पत्नी तिष्ठेत्। अध्वर्युर्यजमानं प्रस्तोता पत्नीञ्च नवनीतं दद्यात्। "**अथाग्रेण शालां तिष्ठन्नभ्यङ्क्ते**"[3] इति श्रुति वचनात् उभावपि स्वशरीरं नवनीतेनाभ्यङ्क्ते। शिर्ष्णादारभ्य पादपर्यन्तमनुलोमधर्मेण नवनीतेनाभ्यङ्क्ते। शरीरस्य यस्मिन्नङ्गे यजमानस्य हस्तं न गच्छेत् तत्राध्वर्युरभ्यङ्क्ते।

**अञ्जनदीक्षा**

अध्वर्युः प्रतिप्रस्थाता च क्रमशः यजमानस्य पत्न्याः च अक्ष्णौ "**स दक्षिणमेवाग्रावनक्ति**[4]" शलाकया अञ्जयेत्। प्रथमं दक्षिणेऽक्ष्णौ अनन्तरं सव्येऽक्ष्णौ चेति।

**यजमानपावनम्**

अध्वर्युः हस्ते दर्भमुष्टिं गृहीत्वा यजमानस्य पत्न्याश्च शरीरं '**अथैनं**

1. का० श्रौ० सू० 7/2/25
2. अग्न्यन्वाधानं व्रतोपायनारण्यभोजनदानब्रह्मवरणादीनि दीक्षणीया प्रभृति प्रागुदवसानीयायाः सोमे कृतत्वात्। का० श्रौ० सू० 8/1/4; शां० श्रौ० सू० 5/3/8
3. श० प० ब्रा० 3/1/3/7
4. श० प० ब्रा० 3/1/3/14

**दर्भपवित्रेण पावयति**[1]' इति श्रुतिवचनात् दर्भमुष्टिना सम्मार्जयेत्। सम्मार्जनविधिरियं दक्षिणावर्तं करणीयम्।

### मुष्टिबन्धनम्

अध्वर्युः प्रतिप्रस्थाता च यजमानस्य पत्न्याश्च क्रमशः मुष्टिबन्धनं कुर्यात्। उभयोर्हस्तयोरङ्गुष्ठतर्जन्योः विहाय शेषाङ्गुलिं वस्त्रेणावेष्टयेत् "**अथाङ्गुलीर्न्यञ्चति**[2]" इति श्रुतिवचनात्। अनन्तरं यजमानं पत्नीञ्च तयोरासने उपवेशयते।

### औद्ग्रभहवनम्

अध्वर्युराहवनीये "**आकूत्यै प्रयुजेग्नये स्वाहा**[3]" प्रभृतिमन्त्रेभ्यो आज्याहुतिर्दद्यात्।[4]

### कृष्णाजिनदीक्षा

ततोऽध्वर्युः दीक्षाहुतिः षट् हुत्वा यजमानाय कृष्णाजिनद्वयं दद्यात्।[5] स तत् परिगृह्य, आवहनीयसमीपं गत्वा भूमौ तदास्तीर्य तदुपरि कटिप्रदेशेनारुह्य, उपविश्य, मेखलां मुञ्जतृणनिर्मितामध्वर्युदत्तां कट्यां बद्ध्वा[6] नीवीमुद्गूह्य[7] कृष्णमृगस्य शृंगं[8] शरीरकण्डूयनार्थम्, उदुम्बरवृक्षीयं

1. श० प० ब्रा० 3/1/3/18
2. श० प० ब्रा० 3/1/3/25
3. शु० य० सं० 4/7
4. श० प० ब्रा० 3/1/4/1; शा० श्रौ० सू० 5/4/1
5. दक्षिणेनाहवनीयं प्राचीनग्रीवे कृष्णाजिने उपस्तृणाति 'शर्मासीति' मन्त्रेण, श० प० ब्रा० 3/1/5/1
6. अथ मेखलां परिहरते। सा वै शाणी भवति। सा वै त्रिवृद् भवति। श० प० ब्रा० 3/1/3/1-12
7. अथनीवीमुद्गूहते, श० प० ब्रा० 3/1/5/18
8. कृष्णवर्णो हरिणः कृष्णमृगः। तस्य शृंगं विषाणम्।
   अथ कृष्णविषाणां सिचि बध्नीते। श० प० बा० 3/1/5/18

स्वसमपरिप्रमाणमूर्ध्वतायां दण्डं च गृहीत्वा[1] धारयन्नासीत। यदा स्वाङ्गेषु क्वचित् कण्डूतिर्जायेत तदा कृष्णमृगशृंगेणैव कण्डूयेत न नखेन। एवं यजमानपत्न्याः शिरसि इषीकानिर्मितं जालं, कट्यां मुञ्जनिर्मितं योक्त्रं च बध्नीयात्।[2] काष्ठस्य प्रादेशमात्रं शङ्कुः अञ्चले बन्धयेत्।[3]

## दीक्षितघोषणा

अध्वर्युः प्रतिप्रस्थाता च प्रकृतिशालायाः पूर्वद्वारे तिष्ठन् यजमानं दीक्षितं देवेभ्यो मनुष्येभ्यश्च आवेदयेत् – **"अदीक्षिष्ट अयं ब्राह्मणोऽमुकशर्मा अमुकस्य पुत्र इत्यादि।"** अत्र पितृपितामहप्रपितामहानां मातृपितामहीप्रपिता- महीनाञ्च नामानि वक्तव्यानि, त्रिवारमुच्चैः घोषयेत्।[4]

## यजमाननियमाः

एवं त्रिरुपांशु त्रिरुच्चैश्चावेदने अध्वर्युणा कृते यजमानो वाङ्नियमनं कृत्वा रात्रौ नक्षत्रोदयपर्यन्तं तथैवासीत्। नक्षत्रोदयानन्तरं व्रतकरण प्रैषेणैव (व्रतं कृणुत)[5] वाचं विसृजेत्।[6] एवं वाचं विसृजन् अध्वर्युणा पयसि दत्ते

---

1. अथास्मै दण्डं प्रयच्छति। औदुम्बरो० मुखसम्मितो भवति, श० प० ब्रा० 3/1/5/32–34
2. एवं प्रतिप्रस्थाता पत्नीमभ्यञ्जनादि तूष्णीम्। का० श्रौ० सू० 7/3/11
3. औदुम्बरपलाशादेः प्रादेशमात्रः शङ्कुः। दे० प० पृ० 243
4. दीक्षितोऽयं ब्राह्मण इति निवेदितमेवैनमेतत्सन्तं देवेभ्यो निवेदयत्ययं महावीर्यो यो यज्ञं प्रापयदित्ययं युष्माकैकोऽभूतं गोपायत। श० प० ब्रा० 3/1/5/39
5. पयो व्रतो ब्राह्मणस्य, यवागू क्षत्रियस्य, आमिक्षा च वैश्यस्य। का० श्रौ० सू० 7/4/24
6. वाचं यच्छति। अस्तमिते वाचं विसृजते। व्रतं श्रपयन्ति। व्रतं प्रयच्छति। व्रतं व्रतयति। अव्रत्यं वा व्याहरति क्रुध्यति वा तन्मिथ्या करोति। श० प० ब्रा० 3/2/1/1, 4, 10, 16, 18, 24। नानृतं वदति। न स्त्रियमुपैति। नोपर्यास्ते। न निष्ठीवते। अबद्धं मन इत्यमेध्यं दृष्ट्वा जपति। मदन्तीर्जलं धत्ते। दक्षिणेन विहारं दीक्षितागारे विहरति। नक्तमेव मुत्रपुरीषं कुर्यात्, दिवा वा छायायाम्। नैनं

तत्पिबेत्। पत्न्यपि चैवं कुर्यात्। एवमेव प्रतिदिनमहनि रात्रौ च पय एव पिबेतां यजमानः, पत्नी च। यदि पयो न लभ्यते पयसैव वा प्राणधारणं दुष्करं मन्वाते तदा दधि, उदुम्बरफलानि, धानाः, सक्तून्, ओदनमात्रं वा भुञ्जीयाताम्।

ततो यज्ञोपयोगिद्रव्यार्जनाय याचकान् प्रेषयेत्। याञ्चेयं धनिकस्यापि नित्या। आगतानि द्रव्याणि तत्तन्मन्त्रेण गृह्णीयात्। एतावता प्रथमदिनकृत्यं समाप्यते। यजमानस्तस्यां रात्रौ जागरणं कुर्यात्। व्याकरणसंस्कृतैरेव शब्दैर्व्यवहरेत्, न लौकिकीं वाचं वदेत्। असच्छूद्रैर्न सम्भाषेत् **"शूद्रसम्प्रवेशसम्भाषा प्रत्युत्थानाभिवादनोदकावायवर्षाणि वर्जयेत् प्रागवभृथात्।।**[1]**"** इति श्रौतसूत्रवचनात्। नास्य यजमानस्य नाम कश्चिद्ब्रूयात्। सुत्यादिने दक्षिणादानात्पूर्वं कृष्णविषाणं विसृजेत्। न दन्तान् दर्शयेत्। नोच्चैर्हसेत्। नानृतं वदेत्। न मांसमश्नीयात्। न स्त्रियमुपेयात्। नोपरि खट्वादौ शयीत। न संध्ययोः प्राग्वंशाद्बहिर्गच्छेत्। यावद्दीक्षमग्निहोत्रदर्शपूर्णमासादीनि श्रौतकर्माण्यपि नानुतिष्ठेत्। नान्यस्मै किञ्चिद्दद्यात्। दीक्षाव्यञ्जकानि कृष्णाजिनादीनि सर्वदा धारयेत्। **"अप्रायश्चित्तमपराधे**[2]**"** इति श्रौतवचनात् नियमभङ्गे सति प्रायश्चित्तस्वरूपं मन्त्रपाठः कुर्यात् यतोहि **"नात्र प्रायश्चित्तिरस्ति प्रतिगुप्यमेवैतस्मात्**[3]**"** इति वचनात्। एवमन्यं साधारणं नियममाचरेत्।

---

शूद्रोऽनुप्रविशति। ब्राह्मणेन राजन्येन वैश्येन वा संभाषेत्। न कञ्चन प्रत्युत्तिष्ठति। नाभिवादयते। लौकिकीं वाचं वदन्नामधेयेषु विचक्षणं चनसितञ्चान्ततो दधाति। स० श्रौ० सू० 10/2/6-8

चनसितेति ब्राह्मणं विचक्षणेति राजन्यवैश्यौ। आप० श्रौ० सू० 10/12/8 गार्हपत्ये दीक्षितस्य श्रपणं दक्षिणाग्नौ पत्न्याः। ये देवा इति व्रतयत्यमृण्मये। पत्नी लौहे। नाभिमालभते। मेक्ष्यन्कृष्णविषाणया लोष्टं किञ्चिद्वादत्ते। का० श्रौ० सू० 7/4/23, 28-31

1. का० श्रौ० सू० 7/5/5
2. का० श्रौ० सू० 7/5/10
3. श० प० ब्रा० 3/2/2/27

**दीक्षितम्प्रत्यन्येषां नियमः**

दीक्षाग्रहणात् दीक्षितो यजमानः मेध्यः अतिपवित्रो वा मन्यते। अत एव न कश्चिदपि तं दीक्षितं स्पृशेत्।[1] दीक्षितस्य नामापि नोच्चरेत्। दीक्षितेन धारितं वस्त्रमपि न धारयेत्। न कश्चिदस्य अशुभं चिन्तयेत्। तस्यान्नमपि न कश्चन भुञ्जीत्।

**यूपच्छेदनम्**

पुरुषमेधयागे त्रयोविंशतिर्दीक्षाः भवन्ति। तासु दीक्षासु यूपच्छेदनं, महावीरसम्भरणं, वनीवाहनादि कर्मान्याचर्यन्ते। तत्र यूपच्छेदनम् –

"**आज्यशेषमादाय सतक्षा गच्छति यूपम्। पालाशं बहुपर्णमशुष्काग्रमूर्ध्वशकलशाखं मध्याग्रोपनतमव्रणम्। प्रथमशकलं निदधाति। न दक्षिणा पतेत्। अष्टाश्रिं करोत्युपरवर्जम्।**[2]" सतक्षो यजमानोऽध्वर्युश्च दर्भकुठारमाज्यञ्च गृहीत्वा यूपच्छेदनार्थं अरण्ये गच्छेत्। पलाशस्य खदिरस्य वा यूपं पञ्चारत्निर्लम्बं छिनेत्। "**ओषधे**" इत्यनेन मन्त्रेण तृणमन्तर्द्धाय "**स्वधिते**" इत्यनेन मन्त्रेण परशुना प्रहरति।[3] यथा अक्षस्योपस्तम्भः स्थाणुर्न भवति तथा च्छिद्यते। "**द्यांमालेखीरिति पतन्तमभिमन्त्रयते**[4]" यूपं पतन्तं '**द्याम्मालेखी**' रिति मन्त्रेणाभिमन्त्रयेत्। स च यूपं दक्षिणा न पतेत्। "**अयं हि त्वा स्वधितिस्तेतिजानः प्रणिनाय**[5]" इति मन्त्रेण शोधयेत्। छित्वा यूपाग्रं पुनश्छेदनं न कर्त्तव्यम्। "**अष्टाश्रिं करोत्युपरवर्जम्**" इति श्रौतवचनात् उपरशब्देन उपरार्हः (गर्तार्हः) प्रदेशोऽभिधीयते। तमुपरार्हप्रदेशवर्जमष्टाश्रिं करोति। यतोहि –

---

1. अग्निर्वै दीक्षितस्तस्मादेनं नोपस्पृशेत्। न चास्य नाम गृह्णीयात्। न दीक्षितवसनं परिदधीत। नास्य पापं कीर्तयेत्। नान्नमश्नीयात्। आप० श्रौ० सू० 10/13/1–2, 15
2. का० श्रौ० सू० 6/1/5, 8, 13, 17, 26
3. शु० य० सं० 5/42
4. का० श्रौ० सू० 6/1/16
5. शु० य० सं० 5/43

**"यथैवात्मा तथा यूपो यूपे ह्यात्मा प्रतिष्ठितः।**
**आत्मा वै यजमानस्य यूपत्वमनुगच्छति।।[1]"**

एवमष्टाश्रिं कृत्वा यूपस्याग्रे आवरणार्थं चषालं विनिर्मेत् तद्यथा - **"अग्राच्चषालं पृथमात्रमष्टाश्रि मध्यसङ्गृहीतम्।[2]"** इति श्रौतसूत्रवचनात्। **'वेदिं करोति[3]'** इत्यनेन वचनेन विधिपूर्वकं यूपच्छेदनं कृत्वा देवयजने आनयेत्।[4]

**महावीरसम्भरणम्**

महावीरो प्रवर्ग्यो घर्मश्चैते त्रयः समानार्थपर्यायः। दीक्षायां महावीरपात्रं निर्मीयते।[5] यस्मिन् परिवृत्ते अप्सुदीक्षायाः विधानमुक्तं, तस्मिन्नेव महावीरपात्रस्य निर्माणं क्रियते। तत्रानेकदीक्षापक्षे यस्मिन्नहनीच्छा भवति। **"मृदं वल्मीकवपां वराहविहतं पूतीकानजापयो गवेधुकाः कृष्णाजिनमभ्रिं चोत्तरतः।[6]" "देवस्यत्वेति मन्त्रेणाभ्रिमादाय औदुम्बरीं वैकङ्कतीं वारत्निमात्रीं सव्ये कृत्वा दक्षिणेनालभ्य जपति 'युञ्जत'।[7]** अर्थात् उदुम्बरतरुत्थां विकङ्कततरुत्थां वा हस्तप्रमाणामभ्रिं "देवस्यत्वा०[8]" इति मन्त्रेणादाय तां वामहस्ते कृत्वा दक्षिणहस्तेन स्पृष्ट्वा "युञ्जतेमन०[9]" इति मन्त्रं जपति। सव्यहस्तस्थिताया एवालभ्य जपो यथा स्यादिति दक्षिणग्रहणम्।

**"मृदमादत्ते पिण्डवद्देवी द्यावापृथिवी इति।[10]"** दक्षिणोत्तराभ्यां

---

1. यू० ल० 4
2. का० श्रौ० सू० 6/1/27
3. का० श्रौ० सू० 6/2/1
4. यूपैकादशिनी भवति - का० श्रौ० सू० 21/1/4
5. दीक्षासु महावीरान्सम्भरति, का० श्रौ० सू० 26/1/1
6. का० श्रौ० सू० 26/1/3
7. का० श्रौ० सू० 26/1/4
8. शु० य० सं० 37/1
9. शु० य० सं० 37/2
10. का० श्रौ० सू० 26/1/5

पाणिभ्यां "**दक्षिणः साभ्रिः**[1]" इति वतिना निर्दिश्यते। तदनन्तरम् उद्धृतं मृदं –

"**कृष्णाजिने निदधाति**[2]" उत्तरतः कृष्णाजिनोपरि निदधाति। "**दैव्यो वम्रय**[3]" इत्यनेन बल्मीकवपामादत्ते। '**इत्यग्र**[4]' इति वराहविहतम् = वराहः – सूकरः तेन विहतं तदुत्खातां मृत्तिकां आदत्ते। "**इन्द्रस्यौजस्थ**[5]" इति मन्त्रेण पूतीकान् = रोहिष पुष्पाणि आदत्ते। "**मखायत्वा**[6]" इत्यनेन मन्त्रेण पयः, तूष्णीमेव गवेधुकाः = जलसन्निहितमहातृणजानि शुक्लानि फलानि। एतान् सम्भारान् प्राक्संस्थानुदक्संस्थान्वा निधाय कृष्णाजिनमभ्रिञ्च वक्ष्यमाणलक्षणामेतेषां सम्भाराणामुत्तरतो निधाय "**मखायत्वा मखस्य त्वा शीर्ष्णे**[7]" इति मन्त्रेण "**तान्सम्भृतानभिमृशति**[8]" युगपदमभिमर्शनम्। अभिमृश्य च "**मखायत्वेति**[9]" मन्त्रेण कुट्टनं कृत्वा प्रादेशमात्रमुच्चं, दीर्घमुखं, मेखलावन्तं मध्ये च त्रीणि कृशपात्राणि निर्मान्ति।[10] सहैव च स्रुच्याकारे द्वे पिन्वन्पात्रे, द्वे रौहिण कपाले च निर्मान्ति। अनन्तरं महावीरपात्रं मखायेति प्रतिमन्त्रं "**गवेधुकाभिः श्लक्ष्णयति**[11]" श्लक्ष्णं च मृण्मार्ष्टीकरणम्। एतदेव तासां सम्भरणप्रयोजनम्। दक्षिणाग्नौ पक्त्वा तेषां पात्राणामुपरि दुग्धसेचनेन शीतलं करोति इति।

---

1. का० श्रौ० सू० 16/2/30
2. का० श्रौ० सू० 26/1/6
3. शु० य० सं० 37/4
4. शु० य० सं० 37/5
5. शु० य० सं० 37/6
6. शु० य० सं० 37/6
7. शु० य० सं० 37/6
8. का० श्रौ० सू० 26/1/12; श० प० ब्रा० 14/1/2/14
9. शु० य० सं० 37/6
10. का० श्रौ० सू० 26/1/17
11. का० श्रौ० सू० 26/1/23; शु० य० सं० 27/8

**प्रायणीयेष्टिः**

"**दीक्षान्ते प्रायणीयमदित्यै चरुं निर्वपति**[1]" इत्यनेन श्रौतसूत्र - वचनानुसारेण दीक्षान्तकाले प्रायणीयेष्टिं कुर्याद्यजमानः। तत्र पञ्च देवताः। पथ्या स्वस्तिः प्रथमा। अग्निर्द्वितीयः। सोमस्तृतीयः। सविता चतुर्थः। अदितिश्च पञ्चमी।[2] तत्र पथ्यादीनां चतुर्णामाज्यद्रव्यम्। अदितेरोदनः।

| **देवताः** | **हविर्द्रव्यम्** |
|---|---|
| पथ्यास्वस्तिः | आज्यम् |
| अग्निः | आज्यम् |
| सोमः | आज्यम् |
| सविताः | आज्यम् |
| अदितिः | चरुः |

तत्राध्वर्युः पात्रासादनं कृत्वा उदयनीयार्थं चर्वादीनां निधानं कुर्यात्।[3] "**सलेपं चरुं प्रमृष्टं मेक्षणम्।**[4]" प्रक्षालयति वा चरुम्[5] इतरे अनुप्रहरति च मेक्षणबर्हिषि। आहवनीयेऽग्नौ तमोदनं पक्त्वा आहवनीय एव पूर्वादिषु चतसृष्वपि दिक्षु पथ्यादिभ्यः क्रमेणाज्यं हुत्वा मध्ये अदित्या ओदनं जुहुयात्। "**शंय्वन्तं भवति**[6]" इति श्रौतसूत्रानुसारं अस्या इष्ट्याः शंयुवाकपर्यन्तमेवानुष्ठानस्य विधानमस्ति। वस्तुतस्तु "**आतिथ्यं हविर्निर्वपन्**" इति प्रकृत्याह "**तस्येडोपहूताऽऽसाथाजग्मुस्तस्मात्स यज्ञ इडान्त**[7]" इति। असुरेभ्यो विभ्यद्भिर्देवैः त्वरमाणैरिडान्ते एव परित्यक्तमिति।

1. का० श्रौ० सू० 7/513; श० प० ब्रा० 3/2/2/1
2. का० श्रौ० सू० 7/5/14
3. 'चरुमेक्षणबर्हिर्निदधात्युदयनीयायै' का० श्रौ० सू० 7/5/15
4. का० श्रौ० सू० 7/5/16; श० प० ब्रा० 3/2/3/21
5. का० श्रौ० सू० 7/5/17
6. का० श्रौ० सू० 7/5/21
7. श० प० ब्रा० 9/5/1/21

**"नित्यानुवादोऽनुयाजप्रतिषेधः[1]"** इति श्रौतवचनात् अनुयाजप्रतिषेधः स इडान्तसंस्तवार्थः। एवं प्रशस्तमिडान्तं येनात्रानुयाजा अपि नेज्यन्त इति। प्रधानयागकाले प्रवद्भार्गवं सामगानं भवितव्यम्।[2] यस्मिन्नोदनः पक्वः तत्पात्रमप्रक्षाल्यैव क्वचित्स्थापयेत्। तथैवोदयनीयेष्टिहविः पाकार्थं तदुपयुञ्जीत।

**अथ सोमक्रयणम्**

सोमक्रयणकाले प्रतिपस्थाता उपरवस्सन्निकटे अनडुहचर्ममासादयेत्।[3] सोमविक्रयी उपविश्य अनुडुहचर्मोपरि सोमलतायाः खण्डनं कुर्यात्।[4] **"शालाद्वाराण्यपिधाय ध्रौवं जुह्वां चतुर्विगृह्णाति।[5]"** अत उपरिष्टात् द्वारापावरणविधानादिहपिधानम्। ध्रौवं जुह्वां चतुः कृत्वो विगृह्णाति। **"एषाते[6]"** इत्यनेन मन्त्रेण बर्हिस्तृणेन जुह्वां हिरण्यं बध्वाऽवधाति। **"जुरसी 'ति जुहोति[7]"** चतुर्गृहीतेन जूरसीति मन्त्रेण जुहोति। **"शुक्रमसि[8]"** इत्यनेन मन्त्रेण हिरण्यमुद्धृत्य वेद्यां तृणं निदधाति। चतुर्गृहीतं गृहीत्वा यजमानो ब्रूते – **'अन्वारभस्व'** इति। अपावृतद्वारे अध्वर्युर्यजमानौ निष्क्रामतः। **"दक्षिणेन द्वारं सोमक्रयणी तिष्ठत्यलक्षिताऽव्यङ्गाऽप्रवीताऽरज्जुबद्धा बभ्रुः पिङ्गला पिङ्गलाभावेऽरुणाऽरुणाभावे रोहिण्यश्येताक्षी।[9]"** तिष्ठति।

---

1. का० श्रौ० सू० 7/5/27
2. प्रायणीयायां प्रवद्भार्गवम्, द्रा० श्रौ० सू० 2/2/22, यथा – प्रवद्भार्गवस्य भृगुऋषिः जगतीछन्दः सोमो देवता प्रायणीयायां गाने विनियोगः। प्रोअयासाइत। इन्दुरिन्दाः। ऊहगान – सामवेदसंहितायाम्, 4/7
3. का० श्रौ० सू० 7/6/1
4. विक्रय्येनं विचिनोति, का० श्रौ० सू० 7/6/2
5. का० श्रौ० सू० 7/6/5
6. शु० य० सं० 4/17
7. तदेव, 4/17
8. शु० य० सं० 4/18
9. का० श्रौ० सू० 7/6/12

'**चिदसि**[1]' इत्यनेन मन्त्रेणेमां सोमक्रयणीमभिमन्त्रयते। मन्त्रश्च साण्डे विपरिणम्यते। '**वस्व्यसि**[2]' इत्यनेन मन्त्रेण उदीचीन्नीयमानामनुगच्छतः, सोमक्रयण्याः। "**अथ सप्तमं पदं पर्युपविशन्ति**[3]" इति वचनात् पर्युपवेशनं च ब्रह्मयजामनाध्वर्युप्रतिपस्थातृणाम्। हिरण्यमस्मिन्सप्तमे पदे निधायाभिजुहोति "**अदित्यास्त्वा**[4]" इत्यनेन मन्त्रेण। "**स्फ्येन पदं त्रिः परिलिखति**[5]" "**अस्मेरमस्व**[6]" इत्यनेन मन्त्रेण। "**अस्मे ते बन्धुः**[7]" इत्यनेन मन्त्रेण हिरण्यमुद्धृत्य पदं स्थाल्यामावपति। "**अपः स्थाने निषिच्य यजमानाय पदं प्रयच्छति "त्वे राय" इति।।**"[8] "**मावयम्**"[9] इत्यनेन मन्त्रेणाध्वर्युरात्मानं संस्पृशति। "**हृत्वा पत्न्यै पदं प्रयच्छति। नेष्टा तोत्त इत्येनां वाचयति।**[10]" "**समख्य**[11]" इत्यनेन मन्त्रेण नेष्टा पत्नीं वाचयति। पाणी प्रक्षाल्य अनामिकाङ्गुल्यां हिरण्यं बध्नीते।

सोमक्रयणी गौः, सुवर्णं, वस्त्रम्, अजा आदयो दशभिर्द्रव्यैः सोमक्रयणस्य विधानमुपलभ्यते। तानि च –

(1) गौरेकहायनी
(2) हिरण्यम्
(3) अजा

---

1. शु० य० सं० 4/19
2. तत्रैव, 4/21
3. श० प० ब्रा० 3/3/1/3
4. शु० य० सं० 4/22
5. का० श्रौ० सू० 7/6/17
6. शु० य० सं० 4/22
7. तत्रैव, 4/22
8. तत्रैव, 4/22
9. तत्रैव, 4/22
10. का० श्रौ० सू० 7/6/21–23
11. शु० य० सं० 4/23

(4, 5) धेनुस्सवत्सा

(6) ऋषभः

(7) अनड्वान् शकटवाही

(8) वत्सतरः

(9) वत्सतरी

(10) वास इति दश।

तदर्थं यया गवा सोमं क्रेतुमिच्छति यजमानः तां सोमशकटसमीपं नीत्वा अवस्थाप्य, कुत्सितेन ब्राह्मणेन शूद्रेण वा शकटेऽवधाय आनीतं सोमं विचित्य अङ्गुलीभिर्यावदपेक्षितं सोमं विमाय तं क्षौमवस्त्रे निक्षिप्य सोमविक्रयिणो हस्ते दत्वा तम् '**सोमविक्रयिन् क्रय्यस्ते सोमः!**' इति पृष्ट्वा तेन "**क्रय्यः**" इत्युक्ते क्रमेण तं पूर्वोक्तैर्दशभिर्द्रव्यैः क्रीणाति।[1]

तत्र प्रथमक्रमे "**गवा ते क्रीणानि**[2]" इत्यध्वर्युणोक्ते सोमविक्रयी "**भूयो वा अतस्सोमो राजा अर्हति**[3]" इति प्रतिब्रूयात्। ततोऽध्वर्युः – "**हिरण्येन क्रीणानि**"[4] इत्यादि। एवं दशद्रव्यपर्यन्तं प्रश्नप्रतिवचने भवतः। दशमद्रव्येण क्रये कृते न ततो भूयस आशंसनम्। विक्रीतं सोममध्वर्युहस्ते दत्वा क्रयद्रव्याण्यादाय सोमविक्रयी गच्छेत्। गच्छन्तं तं न विलोकयेत्। अत्र क्रयार्थं दत्तस्य हिरण्यस्य पुनर्ग्रहणम् – "**हिरण्यं सहसाऽऽच्छिद्य पृषता वरत्रा काण्डेनाहन्ति वा।**[5]" अन्यया गवा एकहायन्या निष्क्रयणं च सूत्रकारा आमनन्ति। ततः क्रीतं सोमं यजमानः '**परिमाग्न**[6]' इति वाचयित्वा स्वस्य दक्षिणस्मिन्नूरावासाद्य हस्ताभ्यां निगृह्य आसीत।[7]

---

1. का० श्रौ० सू० 7/8/1
2. श० प० ब्रा० 3/3/3/3
3. का० श्रौ० सू० 7/8/7
4. का० श्रौ० सू० 7/8/15
5. का० श्रौ० सू० 7/8/25
6. शु० य० सं० 4/28
7. का० श्रौ० सू० 7/9/3

ततस्तमादायोत्थाय हविर्धानशकटसमीपमानीय, तत्र तं निक्षिप्य शकटेऽनड्वाहौ "**उस्त्रावेतम्**[1]" इति मन्त्रेण नियुज्य[2] ताभ्यां शकटं वाहयित्वा प्राग्वंशस्याग्रतः यज्ञवाहमानाय्य सोमहविर्धानशकटस्य दक्षिणं बलीवर्दं मोचयित्वा, सव्यमविमोच्यैव, आतिथ्येष्टिं कुर्यात्।

## आतिथ्येष्टिः

आतिथ्यमिति कर्मणो नामधेयम्। "**तस्मादातिथ्यं नाम**[3]" इति। "**आतिथ्यं निर्वपति वैष्णवं नवकपालम्।**[4]" इत्यत्र विष्णुर्देवता, नवकपालो पुरोडाशो द्रव्यम्। इष्टिरियं सोमस्य राज्ञ आतिथ्यस्थानीया संव्यवहारार्थत्वम्। हविष्कृदाह्वानकाल एव द्वितीयस्य अनडुहो शकटात् विमोचनम्। तदैव च सोमं राजानं शकटादवरोप्य, पूर्वसज्जितायाम्, आहवनीयसमीपेऽव- स्थापितायां राजासन्द्यां[5] तमवस्थापयेत्। ततः इष्टिं तां परिसमाप्य परस्परमवरायै ऋत्विजो यजमानश्च पात्रे स्थापितमाज्यं स्पृष्ट्वा प्रतिज्ञां कुर्युः।[6] तत् तानूनप्त्रमिच्युच्यते।[7]

## अवान्तरदीक्षा

यजमान आहवनीयाग्नौ पत्नी च गार्हपत्याग्नौ समिधो यजति। "**आहवनीये समिधमाधाय मन्दतीरुपस्पृश्य गाढतरं मुष्टिमेखलं कुरुते।**[8]"

---

1. शु० य० सं० 4/33
2. का० श्रौ० सू० 7/9/10
3. श० प० ब्रा० 3/4/1/1
4. का० श्रौ० सू० 8/1/1
5. औदुम्बरीमासन्दीं नाभिदध्नामरत्निमात्राङ्गीभूतामाहरन्ति चत्वारः। का० श्रौ० सू० 7/9/29
6. अनाधृष्टमसि० शु० य० सं० 5/5
7. ऐ० ब्रा० सा० भाष्ये – 'तानूनप्त्रशब्देन शपथमात्रमुपलक्ष्यते' 4/7/24
8. का० श्रौ० सू०, 8/2/4; अग्ने व्रतपा इति मन्त्रेण समिधाधानम्, शु० य० सं०, 5/6

पूर्वं दीक्षाकाले यजमानस्य यजमानपत्न्याश्च उभयोः हस्तयोः मुष्टिबन्धनं वस्त्रेण कृतं वर्तते। अस्यामवान्तरदीक्षायां बद्धां मुष्टिं पुनरधिकं बलपूर्वकं दृढ़तरं करोति। एवमेवावान्तरदीक्षा।[1]

## सोमालम्भनम्

मदन्त्याः जलेन हस्तौ प्रक्षाल्य स्वर्णं धारयति। तदनन्तरं "**यजमानषष्ठाः सोममाप्याययन्त्य ॐ शुर ॐ शुरिति।**[1]" अर्थात् "**अ ॐ शुर ॐ शुष्टे**"[2] इत्यनेन मन्त्रेण ब्रह्मा, होता, अध्वर्युः, उद्गाता, प्रतिप्रस्थाता, यजमानश्च (षष्ठाः) सोमराजानमालम्भन्ते।

सोममालभ्य ऋत्विक्सहितो यजमानः हस्तौ प्रक्षाल्य "**प्रस्तरे निह्नुवत उत्तानहस्ता दक्षिणोत्ताना वा**[3]" वेद्यां स्थापितः प्रस्तरस्योपरि "**आप्याययास्मान्**[4]" इत्यनेन मन्त्रेण पाण्योः करणम्। तदैव प्रस्तरं स्पर्शन्नेव द्यावापृथिवीभ्यां नमस्कुर्वन्ति।

## सुब्रह्मण्याह्वानम्

अध्वर्युरातिथ्येष्टिं समाप्य शालाया पूर्वस्यां तिष्ठन् सुब्रह्मण्यमाह्वयेत्। "**सुब्रह्मण्ये सुब्रह्मण्यमाह्वय**[5]" इति प्रैषः कुर्यात्। पत्न्या यजमानेन च अन्वारब्धे सति "**सुब्रह्मण्योउम् इति त्रिरुक्त्वा निगदं ब्रूयात्**[6]" सुब्रह्मण्यः मन्त्रपाठः कुर्यात्।[7] सुब्रह्मण्येन मन्त्रपाठानन्तरं सुब्रह्मण्यमुपहारस्वरूपं श्रीफलं दद्यात्।

---

7. श० प० ब्रा०, 3/3/4/3
1. का० श्रौ० सू०, 8/2/6
2. शु० य० सं०, 5/7
3. का० श्रौ० सू०, 8/2/7; 'एष्टाराय:' इतिमन्त्रेण – शु० य० सं०, 5/7
4. शु० य० सं०, 5/7
5. का० श्रौ० सू०, 8/2/12
6. ला० श्रौ० सू०, 1/3/1
7. ला० श्रौ० सू०, 1/2/20

**उपसदिष्टिः**

पुरुषमेधे द्वादशोपसदो भवन्ति। अग्न्यन्वाधानब्रह्मवरणयोर-प्रसक्तत्वात्। उपसदिति च कर्मणो नामधेयम्। "**तेषु प्रेतेषूपसदोऽतन्वत**[1]" इति हि श्रूयते। हविष्कृदाह्वानकाले यदाहननं तत्पेषणाभावे न भवति तीक्ष्णीकरणाय हि दृषदुपले आहन्येते।[2]

प्रणीता संस्कारादस्याः इष्टेः आरम्भः कुर्यात्। प्रधानयागे अग्निः। सोमः, विष्णुः इति प्रधानदेवताः।[3] सर्वत्र आज्यं द्रव्यम्। प्रायेणोपांशुयाजवत् प्रयोगः। पूर्ववदत्रापि सोमाप्यायनं, निह्नवम्, सुब्रह्मण्याह्वानं कुर्यात्।[4] "**जुहोति स्त्रुवेण, अयः शयामन्वारब्धे।**[5]" इति श्रौतवचनात् अयः शयानिमित्तकमाहुतिर्दद्यात्। अयः शया निमित्तकाहुतित्वात् इष्टिरियं अयः शयोपसदिष्टिरिच्युच्यते। "**द्विरेकया चरति सुसायं सुपूर्वाह्ने च।**[6]" एकयोपसदा द्विश्चरति। सायं शब्दोऽपराह्नवाची, पूर्वाह्नशब्दः प्रसिद्ध एव।

**व्रतप्रदानम्**

"**त्रिस्तनं प्रथमायां दोहयति**[7]" इति श्रौतसूत्रवचनात् अध्वर्युः गौस्त्रिस्तनं दोहयित्वा यजमानं प्रयच्छेत्। द्वितीये दिवसे द्वयोःस्तनयोर्दुग्धम्, तृतीये दिवसे च एकस्य स्तनस्य दुग्धपानार्थं दद्यात्। एवमेव प्रतिपस्थाता पत्नीम्। यजमानकृतेऽध्वर्युः गार्हपत्याग्नौ दुग्धं पक्त्वा कांस्यपात्रे दद्यात्।

---

1. श० प० ब्रा० 9/5/1/22
2. शतपथश्रुतौ – दृषदुपलयोराहननम् असुरसपत्नहननाय एवोक्तं न तीक्ष्णी करणाय 'यतो हि' सैषा असुरघ्नी वागुद्वदति, श० प० ब्रा० 1/1/4/13–17
3. अग्नयेऽनुवाचयति – अर्धं हुत्वा सोमाय – विष्णवे समानीय – का० श्रौ० सू० 8/2/30–31
4. का० श्रौ० सू० 8/2/30
5. का० श्रौ० सू० 8/2/31
6. का० श्रौ० सू० 8/2/32
7. का० श्रौ० सू० 8/3/1–2

पत्नीकृते च प्रतिप्रस्थाता दक्षिणाग्नौ श्रपयित्वा लौहपात्रे दद्यात्। **"एवं प्रवृद्धौ समं विभजेत्**[1]" इति वचनात् उपसत्प्रवृद्धावेवमेव समो विभागः कर्त्तव्यः। यतो ह्यत्र द्वादशोपसद्विधानमुक्तम्।

## तृतीयदिनकृत्यम्

द्वितीयोपसद्दिने (दीक्षातस्तृतीयदिवसे) प्रातः कालीनं कृत्यं सम्पाद्य वाग्विसर्गान्तं कृत्यमाचरेत्। महावेदेर्निर्माणं कर्त्तव्यम्। सा च प्राचीनवंशमण्डलात् पुरतः षट्पदानि परित्यज्य ततो निर्मातव्या। प्राक्पश्चात् द्विसप्ततिपदायामा दक्षिणोत्तरतः षष्टिपदविस्तारा च भवति। श्रोणिभागे, अंशभागे च अष्टाचत्वारिंशच्च। एवं समग्रां वेदिं विमाय प्रातः ततो यजमानस्य व्रतकरणम् (पयः पानम्) सायं सांयाह्निकीभ्यां प्रवर्ग्योपसद्भ्यां प्रचर्य सुब्रह्मण्यमाहूय व्रतं कृत्वा विरमणम्।

एवमेव द्वादशोपसद्दिनपर्यन्तं करणीयमिति।

## सुत्यादिवसः

पुरुषमेधे पञ्चसुत्यादिवसो भवन्ति तद्यथा - (1) अग्निष्टोमः, (2) उक्थ्यः, (3) अतिरात्रः, (4) उक्थ्यः, (5) अग्निष्टोमः अत्र प्रथमसुत्यादिवसे अग्निष्टोमो यजेत्।

अग्नीषोमीययागविधिः -

पशुयागेऽस्मिन् प्रकृतिशालायाः आहवनीये क्रियमाणं कर्म उत्तरवेद्यां, गार्हपत्यस्य च कर्म प्रकृतिशालायाः आहवनीये क्रियते। प्रकृतिशालायाः आहवनीयशालाद्वार्यः गार्हपत्यश्च '**प्राजहित**' इत्युच्यते।

## अग्नीषोमीया यागसामग्री

आतिथ्यायाः सन्नहनावच्छादनम्, परिधिः, विधृतिः, आज्यम्, होतृसदनम्, वपाश्रपणी, शूलं, उखा, असि, वसाहोमहवणी, प्राशित्रहरणम्,

---

1. का० श्रौ० सू० 8/3/4

इडापात्री, अन्तर्धानकटः, इध्मा, बर्हिः, आतिथ्यायाः, बर्हिः, पृषदाज्यपात्रम्, प्लक्षशाखा, यूपस्य प्रथमशकलः, चषालः, स्वरूः, मैत्रावरुणदण्डम्, त्रिगुणा रशना, उपाकरणदर्भः, अरणी, द्विगुणारशना, पशुः, शमिता, पान्नेजनी, सुवर्णखण्डानि च।

अध्वर्युः वाग्यमनं कृत्वा मदन्त्या जलेन पात्राणां प्रोक्षणं कुर्यात्। अपराह्ले बर्हिप्रोक्षणकाले शकटोपरि स्थापितः, बर्हिषः प्रोक्षणं कुर्यात्। उत्तरवेदिं, खरम्, उपरवं, धिष्ण्याञ्च परित्यज्य शेषे समस्तेऽपि यागभूमौ बर्हिस्तरणं कुर्यात्।[1]

प्रवर्ग्योत्सादनकालात् सुरक्षितं दुग्धं व्रतदुग्धे सम्मेल्य यजमानाय पानार्थं दद्यात्। शाखाच्छेदनमपाकरणञ्च कुर्यात्। शालाद्वार्यः पश्चिमे यजमानः उपविशेत्। "**उपस्थे सोमं कृत्वा**[2]"। अध्वर्युः "**शालाद्वार्यमपरेण सोमक्रयणी पदं परिकिरति।**[3]" शालाद्वार्यः पश्चिमे गोः पादरजांसि त्यजेत्।

आज्यसंस्कारं कृत्वा जुह्वां आज्यं गृह्णीयात्। ततः पूर्वस्यां गमनाय सर्वे तिष्ठन्ति। "**अपिवताश्चान्वारभन्ते यजमानम्। वाससा छादयत्येनान्।**[4]" स्त्रीवर्गश्च यजमानपत्नीम्।

### यज्ञतनुहवनम्

अध्वर्युः स्रुचौ संस्कृतम् आज्यं गृहीत्वा शालाद्वारि "**त्वं सोम तनूकृद्भ्यः**[5]" इत्यनेन मन्त्रेण आहुतिर्दद्यात्। यजमानश्च – '**इदं सोमाय न मम**' इत्युक्त्वा त्यजेत्। अनन्तरं अध्वर्युः "**अग्नये प्रह्रियमाणायानुब्रूऽहि**" इति प्रैषः कुर्यात्। अध्वर्युरग्निम्, यजमानश्च सोमम् शेषाः ऋत्विजः सोमकुट्टनार्थं पाषाणं, द्रोणकलशादयो गृहीत्वा उत्तरवेद्याम्प्रति गच्छन्ति।

गच्छन्नध्वर्युः मध्यवर्ती आग्नीध्रीयायाः उत्तरस्मात् गच्छेत्।

---

1. वेदेस्तरणमग्रहणं प्रस्तरस्यापराह्ले, का० श्रौ० सू० 8/6/27
2. का० श्रौ० सू० 8/6/29
3. का० श्रौ० सू० 8/6/30
4. का० श्रौ०सू० 8/6/34-35
5. शु० य० सं० 5/35

आग्नीध्रीयायाः पूर्वद्वारेण प्रविश्य स्रुच्या "**अयन्नो अग्निर्वरिवस्कृणोतु०**[1]" इत्यनेन मन्त्रेणाहुतिर्दद्यात्। आज्यं सोमञ्च विहायान्यं समस्ता अपि सामग्र्यः उत्तरवेद्याः उत्तरभागे स्थापयेत्। अध्वर्युरुत्तरवेद्याः निरीक्षणात्पूर्वमेव समिदाधानं कृत्वा उत्तरवेद्यामाहुतिर्दद्यात्।

हविर्धानमण्डपे दक्षिणशकटोपरि कृष्णाजिनमास्तीर्य तदुपरि सोमं निदधाति।[2] शकटोपरि सोमं स्थाप्य यजमानः सोमोपस्थानं कुर्यात्।

## अङ्गुलिविसर्जनम्

हविर्धानमण्डपात् बहिरागत्य यजमानः "**आहवनीये समिधमाधाय मदन्तीरूपस्पृ- श्याङ्गुलिर्विसृजते**[3]" आहवनीयाग्नौ समिधं हुत्वा मदन्त्याः जलेन हस्तौ प्रक्षाल्य अङ्गुलीर्विसृजते "**अग्ने व्रतपास्त्वे व्रतपा०**[4]" इत्यनेन मन्त्रेण। एवमेव यजमानपत्न्यपि गार्हपत्ये समिदाधानं कृत्वा अङ्गुलीर्विसृजेत्।

## व्रतविसर्जनम्

अङ्गुलीर्विसृजनान्तरं यजमानेन पत्न्या च दीक्षाविधानकाले यद्व्रतं गृहीतं तस्य विसर्जनं क्रियते। व्रतविसर्जनानन्तरं दीक्षितस्य नाम गृहीतुं शक्यते। अन्नग्रहणमपि भवितुमर्हति।[5]

## यूपसम्पादनम्

अध्वर्युः यूपसम्पादनात्पूर्वं आहवनीयाग्नौ आहुतिर्दद्यात्।[6] उत्तरवेद्याः

---

1. शु० य० सं० 5/37
2. दक्षिणस्य हविर्धानस्य नीडे कृष्णाजिनमास्तृणाति – श० प० ब्रा० 3/5/2/18, दक्षिणेऽनसि कृष्णाजिनमास्तीर्य तस्मिन्त्सोमं निदधाति– का० श्रौ० सू० 8/7/16
3. का० श्रौ० सूत्र 8/7/18
4. शु० य० सं० 5/40
5. का० श्रौ० सू० 8/7/21–23
6. यज्ञो वै विष्णुर्यज्ञेनैवैतद्यूपमच्छैति तस्माद्वैष्णव्यर्चा जुहोति – श० प० ब्रा० 3/5/3/2

पूर्वे यूपं स्थापनायैकं खातं खनेत्।[1] "**उपरसम्मितं खनति**[2]" इति वचनात् खातोऽयं यूपस्य पञ्चमांशो भवेत्। गर्ते जलेन प्रोक्षयित्वा दर्भमास्तरेत्। होमशेषमाज्यं यूपेऽभ्यङ्क्ते। चषाले आज्यमुपलिप्य यूपमावेष्टयेत्। यूपच्छेदन समयात् सुरक्षितं प्रथमं शकलं गर्ते त्यजेत्। यूपमुत्थापयेत्। गर्ते मृत्तिकां दत्वा मैत्रावरुणदण्डेन भूमिं समं कुर्यात्। यूपे त्रिगुणा रशना परिव्ययति।[3] "**यूपशकलमस्यावगूहति।**[4]" शास्त्रसम्मतं शुभलक्षणयुतं छागं यूपस्य पूर्वस्यामुपस्थापयेत्। अरणिभ्यामग्निमन्थनं कृत्वा उत्तरवेद्यामुपरि अग्निस्थापनं कुर्यात्।[5]

## शामित्रशालागमनम्

अनन्तरं एकादशाग्निषोमीयान् पशूनुपाकृत्य शामित्रशालां प्रति गच्छेत्। तत्राग्नीध्रस्य पश्चात् पशुरशनां धृत्वा शमिता, वपाश्रपण्या पशुं स्पृशन् प्रतिप्रस्थाता तत्पश्चादध्वर्युः तत्पश्चात् यजमानो गच्छेत्।

तत्राध्वर्युः द्वौ दर्भौ उत्थाय अध्रिगुसंज्ञको प्रैषः कुर्यात्।[6] प्रैषानन्तरं होता अध्रिगुपाठः कुर्यात्। तद्यथा – "**दैव्याः शमितार उत च मनुष्या आरभध्वमुपनयत मेध्या दुर आशासाना मेधपतिभ्यां मेधमित्यादयः**[7]" शांखायनश्रौतसूत्रवचनात् नवमोच्छ्वास पर्यन्तं त्रिर्जपति।

---

1. चातुर्वर्ण्यं प्रवक्ष्यामि वृक्षाणां पशुभिस्सह।
   वृक्षाश्च्छेदेन विज्ञेया वर्णेन पशवस्तथा।। 1।।
   श्वेतस्तु ब्राह्मणो ज्ञेयः पिङ्गलः क्षत्रियः स्मृतः।
   वैश्यस्तु धूम्रवर्णः स्यात्कृष्णं शूद्रं विनिर्दिशेत्।। 2।।
   एतत्ते यूपलक्षणमेतत्ते यूपलक्षणमिति – यू० ल० पृ० 1-26
2. का० श्रौ० सू० 6/2/9
3. का० श्रौ० सू० 6/3/13
4. का० श्रौ० सू० 6/3/15
5. अग्निं मन्थत्याहोमात्करोति, का० श्रौ० सू० 6/3/22
6. का० श्रौ० सू० 6/5/9
7. शां० श्रौ० सू० 5/17/1-10

**वसतीवरीग्रहणम्**

यज्ञकार्ये उपयुज्यमानस्य पर्याप्तजलस्य नाम वसतीवरी इति। सोमलतायाः कुट्टनं कृत्वा तस्य रसवर्द्धनार्थमिदं वसतीवरी संज्ञकं जलं सोमरसे दीयते। सूर्यास्तसमयात् पूर्वमेव अपो गत्वा "**देवीरापो-अपान्नपाद्यो०**[1]" इत्यनेन मंत्रेण जुहोति।[2] अनन्तरं घटे - जलं गृह्णाति। "**एकधनांश्चोन्नयन्ति। पान्नेजनांश्च।**[3]" अनन्तरं सुब्रह्मण्यो यजमानस्य पूर्वजानां च न गृहीत्वा सस्वरं सामं गायेत्। तदनन्तरं ऋत्विक्प्रबोधनं, यज्ञसारथिसामगानं, लोकद्वारीसामगानं, विश्वरूपासामगानञ्च कुर्यात्।

**प्रातरनुवाकः**

विश्वरूपासामगानानन्तरमध्वर्युः होतारमाह्वयेत्। हविर्धानस्य पूर्वद्वारे पृष्ठयोत्तरे होतृषदनं स्थापयेत्। प्रातः कालीनं पक्षिशब्दात्पूर्वमेव प्रातरनुवाकस्योपाकरणं कुर्यात्। एतदर्थं होतारम्प्रति प्रैषः कुर्यात्।

होता च मन्त्रपाठः कृत्वा आग्नीध्रीयाऽग्नौ आहुतिर्दद्यात्। हविर्धानमण्डपस्य पूर्वस्यां द्वार्युपविशेत् "**भूर्भुवः स्वरिति आदिकैर्मन्त्रैः स्वाहाकारान्तैः षडाहुतिः स्रुवेण हुत्वा**[4]" इति।

मध्यमस्वरे ऋङ्मन्त्राणां पाठः कुर्यात्।[5] होतुर्मन्त्रप्रारम्भे सति अध्वर्युरुत्करसन्निधौ गत्वा सुब्रह्मण्याह्वानाय प्रैषः कुर्यात्।[6] होतुः पार्श्वे उपविश्य प्रातरनुवाकश्रवणं कुर्यात्।

---

1. शु० य० सं० 6/27
2. का० श्रौ० सू० 9/3/4; श० प० ब्रा० 3/7/3/2
3. का० श्रौ० सू० 9/3/7-8
4. शां० श्रौ० सू० भा० 6/3/9
5. देवेभ्यः प्रातर्यावभ्य इत्युक्तो हिङ्कृत्य मध्यमया वाचा प्रातरनुवाकमन्वाह। त्रीणि पदानि समस्य पङ्क्तीनामवस्येद् द्वाभ्यां प्रणुयात्। आपोरेवतीमनूच्य। आग्नेयं गायत्रं क्रतुम् - शां० श्रौ० सू० 6/3/9-11
6. का० श्रौ० सू० 9/1/12

**ग्रहासादनम्**

यदा होता प्रातः सवनस्य पाठः कुर्यात् तदैव उन्नेता ग्रहपात्राणामासादनं कुर्यात्। हविर्धानमण्डपे उपरवात् पूर्वस्यां यत् खरः तस्यामुपर्येव निम्नाङ्कितेन क्रमशः पात्रासादनं करणीयम्।[1]

| | | | | |
|---|---|---|---|---|
| **ईशान** | | **पूर्व** | | **आग्नेय** |
| | आप्तोर्यामपात्रम् उपांशुपात्रम् मन्थिपात्रम् शुक्रपात्रम् | | | |
| | | ऐन्द्रवायवपात्रम् | | |
| | | मैत्रावरुणपात्रम् | | |
| **उत्तर** | अश्विनपात्रम् | प्र० ऋतुपात्रम् | अ० ऋतुपात्रम् | **दक्षिण** |
| | आदित्यपात्रम् | | उक्थ्यपात्रम् | |
| | आदित्यस्थाली | आग्रयणस्थाली | उक्थ्यस्थाली | |
| | | परिप्लवापात्रम् | | |
| **वायव्य** | | **पश्चिम** | | **नैर्ऋत्य** |

दक्षिणहविर्धानशकटस्याधो भागे द्रोणकलशं स्थापयेत्। सोमरसं पवित्रकरणार्थं मेषस्य तन्तुना निर्मितं दशापवित्रं ईषातः द्रोणकलशपर्यन्तं अधोनमनवत् स्थापयेत्। अनेनैव सोमपवनं करिष्यते। तदन्तरं उत्तरशकटेपरि पात्रासादनं कृत्वा सोमाभिषवार्थं यथास्थानमुपविशन्ति।

**महाभिषवः**

मध्ये स्थापिते सोमोपरि "**श्वात्रास्थ**[2]" इति मन्त्रेण निग्राभ्याः जलमासिञ्चति। "**प्रहरिष्यन्द्वेष्यं मनसा ध्यायेदमुष्मा अहं प्रहरामि न तुभ्यं सोमेति।**[3]" द्विष्याभावे तृणमेव मनसा ध्यायेत्।[4] "**माभेर्मासंविक्था**[5]"

1. खरोत्तर पूर्वार्द्ध उपांशु अन्तर्यामयोः – का० श्रौ० सू० 9/2/2–15, अधोऽक्षोजं प्रत्यञ्चं द्रोणकलशम्० का० श्रौ० सू० 9/2/16
2. शु० य० सं० 6/34
3. का० श्रौ० सू० 9/4/11
4. श० प० ब्रा० 3/9/4/17
5. शु० य० सं० 6/35

इत्यनेन मन्त्रेण सोमे प्रहरति। **"षड्भिः पावयति[1]"** इति श्रुतिवचनात् रसनिष्पादनं यावत् प्रहरेत्। अनन्तरं क्षुल्लकाभिषवार्थं एकलः एवाध्वर्युः सोमकुट्टनं कुर्यात्। **"स्वाहेत्युक्त्वा निष्क्रमणम्[2]"** यजमानः अध्वर्युं स्पृशेत्। **"वरं कृत्वा ददाति च[3]"** अध्वर्युः उपांशुग्रहेण **"स्वाङ्कृतोऽसि[4]"** इत्यनेन मन्त्रेण सोमाहुतिर्दद्यात्। अनन्तरं अधिषवणफलकोपरि चत्वारि पात्राणि स्थाप्य तदुपरि ऋजीषं स्थापयेत्। उद्गाता, प्रस्तोता, प्रतिहर्ता च ऋजीषोपरि द्रोणकलशं स्थापयेत्[5] तदुपरि दशापवित्रं स्थापयित्वा धृत्वा च मध्ये सुवर्णं स्थाप्य निग्राभ्यामुन्नेता सोमरसं निक्षिपेत्। **"पूर्णान् स्थालीग्रहान्, अर्धपूर्णं द्रोणकलशं कृत्वा सर्वमासिञ्चति सुन्वन्[6]"** अनन्तरं अध्वर्य्वादयो हविर्धानान्निष्क्रामन्ति।

## प्रायश्चित्तम्

आहवनीयमुपागत्य सर्वेऽपि क्रमश एकैकेन स्रुवेण आहवनीयाग्नौ आज्याहुतिं प्रयच्छन्ति। सोमरसस्य भूमौ विन्दुरूपेण पतनमपि अनुचितम्। तदर्थमत्र विप्रुड्ढोमः प्रायश्चित्तस्वरूपः।[7] तदनन्तरं सदोमण्डपाद्वहिः प्रस्तोता वहिष्पवमानं सामं गायेत्।[8]

## स्तोत्रपाठः

अध्वर्युः मरुत्वतीययागं कृत्वा सदोमण्डपे होतुः सम्मुखे उपविशेत्। अत्रोद्गातारः स्तोत्रपाठं कुर्वन्ति।

---

1. श० प० ब्रा० 4/1/1/2
2. का० श्रौ० सू० 9/4/29
3. का० श्रौ० सू० 9/4/31
4. शु० य० सं० 7/3
5. का० श्रौ० सू० 9/5/12
6. का० श्रौ० सू० 9/6/25
7. विप्रुषां होमं जुह्वति– का० श्रौ० सू० 9/6/28
8. सा० श्रौ० सू० 1/12/7; तां० ब्रा० 6/9/1

**शस्त्रपाठः**

होत्रा '**शोंसाव**' इत्युक्त्वा आह्वाने सत्यध्वर्युः आगत्य सम्मुखे उपविशेत्। होता शास्त्रपाठः कुर्यात्।[1] अध्वर्युः होतापठितं प्रणवोच्चारणानन्तरमवसाने च '**ओयामो दैव**' अन्ते च प्रणवम् उक्त्वा प्रतिगरं कुर्यात्।[2] प्रतिगरोऽयं होतुरुत्साहवर्धनार्थम्। अनन्तरं ऐन्द्राग्नग्रहयागः, चमसकम्पनं, वैश्वदेवग्रहयागश्च कृत्वा उक्थ्यमाचरेत्।

## सवनेष्टिः

**प्रातः सवनम्**

प्रातरनुवाक एव प्रातः सवन इति नाम्ना ज्ञायते। तत्र उक्थ्यविग्रहविधिराचर्यते। तद्यथा –

**प्रथमः उक्थ्यविग्रहः**

अध्वर्युः उक्थ्यस्थाल्यात् उक्थ्यपात्रे तृतीयांशं रसं विगृह्णाति।[3] दर्भेण उक्थ्यपात्रं स्पृष्ट्वा, प्रस्तोत्रे प्रयच्छन् स्तोत्रोपाकरणं कुर्यात्। उद्गाता स्तवनं, मैत्रावरुणश्च शंसनं कुर्यात्। मैत्रावरुणनिमित्तको यागः कर्त्तव्यः यागावशिष्टं हविं भक्षयेत्।

**द्वितीय उक्थ्यविग्रहः**

द्वितीय उक्थ्यविग्रहस्य यागविधानं प्रतिप्रस्थाता करोति।[4] दर्भैः पात्रं स्पृश्य स्तोत्रोपाकरणं कुर्यात्। उद्गाता स्तवनं ब्राह्मणाच्छंसी च शंसनं कुर्यात्। इन्द्रनिमित्तको यागः कर्त्तव्यः। यागशेषं भक्षयेत्। अध्वर्युः

1. श० प० ब्रा० 4/2/6/3
2. श० प० ब्रा० 4/2/6/1
3. का० श्रौ० सू० 9/14/8
4. दे० प० पृ० 342

हविर्धानमण्डपे पूर्ववत् शकटस्य उभयोरीषयोर्मध्ये अधिषणफलकोपरि सोमं निक्षिपेत्।

### तृतीय उक्थ्यविग्रहः

प्रतिप्रस्थाता पूर्ववदेव दर्भेणोक्थ्यपात्रं स्पृश्य स्तोत्रोपाकरणं कुर्यात्। अच्छावाक् शंसनं कुर्यात्।[1] उद्गाता च स्तवनम्। इन्द्राग्नी निमित्तकं यागं कृत्वा शेषं भक्षयेत्। पात्रं मार्जालीया मण्डपे प्रक्षाल्य स्थापयेत्। प्रातः सवने पठनीयः साम्नः चत्वारि आज्यस्तोत्राणि जपेत्।[2]

### माध्यन्दिनसवनम्

यजमान आग्नीध्रीयातः पश्चिमे उत्तराभिमुखोपविश्य लोकद्वारिसामं गायेत्।[3] यजमानसहितं ऋत्विजः सर्पणात् धिष्ण्याभिमन्त्रणपर्यन्तं विधानमाचरन्ति।[4] यजमानाय होतृचमसं दद्यात्। अभिषवनिमित्तं सर्वेऽपि अधिषवस्थाने उपविशन्ति। सोमस्योष्णीषं ग्रावस्तुते प्रयच्छेत्।[5] 'इहा ३। इहा ३।' उच्चारयन् सोमाभिषवं कुर्यात्। प्रथमे पर्याये त्रैमात्रिकः, द्वितीये द्विमात्रिकः, तृतीये चैकमात्रिकश्चोच्चरेत्।[6]

कुट्टितं सोमरसं सम्भरण्यां प्रपूर्याधवनीये प्रक्षिपेत्। प्रक्षाल्य पुनरधिषवणफलके स्थापयेत्। एवमेव त्रीणि अभिषणानि कृत्वा 'वृहद्

---

1. दे० प० पृ० 343
2. अग्न आयाहि वीतये – (1)
   आनो मित्रावरुणेति – (2)
   आयाहि सुषुमा – (3)
   इन्द्राग्नी आगतू – (4)   तां० ब्रा० 11/2/3
3. दे० प० पृ० 345
4. दे० प० पृ० 345
5. का० श्रौ० सू० 10/1/2
6. श० प० ब्रा० 4/2/7/1

**वृहद् मन्त्रं जपेत्**।[1]' पूर्ववदेवाभिषवणफलके द्रोणकलशं स्थापयेत्। यजमानः होतृचमसं गृह्णाति, उन्नेता रसं प्रददाति। यजमानः होतृचमसेन द्रोणकलशे रसं निक्षिप्य पञ्चग्रहपात्राणि प्रपूरयेदध्वर्युः। पूर्ववदेव कच्छं धृत्वा निष्क्रमयेत्।[2]

सदोमण्डपे उपविष्टमुद्गात्रं अध्वर्युः द्वे तृणे प्रयच्छन् पवमानोपाकरणं कुर्यात्। उद्गाता माध्यन्दिनं सामं गायेत् –

उच्चातेजा गायत्रमाहवनीयवे, पुनानः सो० रौरवयौधाजये, प्रतुद्रवेत्यौशनम्।[3] अध्वर्योः प्रैषानन्तरं चमसपात्रेण सोमरसयागः कर्त्तव्यः। अनन्तरं पुरोडाशप्रचारः, शस्त्र–स्तोत्रपाठश्च कृत्वा सवनीयनिर्वापः कुर्यात्।

प्रैषानन्तरं पूर्ववत् पञ्चबिलापात्र्यां स्थापनीयं हविर्द्रव्यं विनिर्मेत। एकादशकपाले इन्द्रस्य एककपाले वरुणस्य च पुरोडाशः कुर्यात् प्रातः सवनवत् त्रयो उक्थ्यविग्रहः कुर्यात्।

**प्रसर्पणम्**

यदा प्रशास्ता '**सर्पत**' इति वदति तदा सर्वे देवयजनात् बहिरागच्छन्ति। आवश्यकतानुसारं दैहिकविधिना निवृत्य शुचिर्भूत्वा पुनर्देवयजने आगच्छन्ति। वेद्यां बर्हिस्तरणं, पुरोडाशं भस्मरहितं कृत्वा प्रतिप्रस्थाता शमितामनुशासयेत्।[4] अनन्तरं पशुयागः सवनीयपुरोडाशयागः, सोमरसयागः कृत्वा सदोमण्डपे – होत्रे इडापात्री दद्यात्। होता अवान्तरेडायाः प्राशनम्, चमसेन च सोमभक्षणं कुर्यात्। अनन्तरं सयजमानाः सर्वे ऋत्विजो हविर्धानमण्डपे यजमानपितृनिमित्तकं पिण्डदानं कुर्युः।[5] इडां भक्षयित्वा

---

1. दे० प० पृ० 346
2. का० श्रौ० सू० 10/1/15
3. ता० ब्रा० 6/3/11, ता० ब्रा० 7/3/2, अहगान, 1/1/1–4
4. दे० प० पृ० 361
5. का० श्रौ० सू० 10/5/11

यागविधिं समाप्य हविर्धानमण्डपे गत्वा उपांशुपात्रे अन्तर्यामपात्रे वा सोमरसेन सावित्रग्रहणं कुर्यात्।[1] खरे यथास्थानमासादयेत्।

**तृतीयसवनम्**

अध्वर्युः **'एहि यजमान'** इत्युच्चारयन् यजमानं पूर्वस्माद्द्वारात् हविर्धानमण्डपे निर्गच्छेत्। ऋत्विजोऽपि तत्रोपस्थिताः भवन्ति। आदित्यस्थालीत आदित्यपात्रे सोमरसं गृहीत्वा यागः कर्त्तव्यः। तृतीयसवनारम्भार्थं **'सर्पण'** विधानमाचरेत्। अन्वारम्भयन् देवयजनात् बहिरागच्छेत्। अनन्तरं स्तोत्रोपाकरणं, धिष्ण्याहुतिः, द्रोणकलशयागः, पत्नीसंयाजादि कृत्वा समिष्टयजुर्होमः कुर्यात्। अनन्तरं अवभृथयागः, उदयनीयेष्टिः, अनूबन्ध्यायागः, उदवसानीयेष्टिः ब्राह्मणभोजनादिकं कारयित्वा देवयजनात् निवासस्थानम्प्रति गच्छेत्।

**उक्थ्यः**

अग्निष्टोमस्य विकृतिरूपोऽयमुक्थ्यसंज्ञकः सोमयागस्य तृतीया संस्थेति। पशुकामनया उक्थ्ययागः क्रियते।[2] यजमानः संङ्कल्पपूर्वकं प्रारभति। यागेऽस्मिन्नग्नय एको इन्द्राय चैकोऽज पशोरावश्यकता भवति। एतेनैव पाशुकपात्रासादनं करणीयम्। यागेऽस्मिन् ग्रह, स्तोत्र, शस्त्रस्य च संख्या पञ्चदश। शेषाः (प्रकृतिवत्) अग्निष्टोमवत् करणीयाः।

**अतिरात्रः**

अग्निष्टोमस्य विकृतिरूपोऽयमतिरात्रः। सोमयागस्य षष्ठी संस्थेत्युच्यते।[3] ब्रह्मवर्चसकामनया क्रियमाणोऽयं यागः। यागेऽस्मिन् ग्रहस्य – स्तोत्रस्य शस्त्रस्य च संख्या एकोनत्रिंशत् भवति। यजमानः सङ्कल्पपूर्वकं

1. श० प० शा० 4/3/3/1
2. दे० प० पृ० 379, स० श्रौ० सू० 9/7
3. का० श्रौ० सू० 10/9/27

यागारम्भः करोति। यागेऽस्मिन् चत्वारः पशवो भवन्ति। प्रथम अग्निदेवता निमित्तकः अजः, द्वितीय इन्द्राग्नीभ्यामज, तृतीय इन्द्राय मेषः, चतुर्थः सरस्वत्यै मेषीति।[1]

एतान् पशून् यूपेषु क्रमशः नियोजयन्ति। क्रमशः संज्ञपनं प्राणशोधनं च कुर्वन्ति।

माध्यन्दिनसवनात्पूर्वमष्टौ कपालेऽग्नेः, द्वादशकपालेषु इन्द्राग्नयोः एकादशकपालेषु इन्द्रस्य अष्टाकपालेषु च सरस्वत्याः चतुर्पुरोडाशान् निर्मीयन्ते। आग्रयणग्रहानन्तरं क्रमशः षोडशी उक्थ्यग्रहस्य च विधानं भवति। यथाविधि सवनीयो पशुयागो भवति। अवभृथप्रभृति शेषविधयः प्रकृतिवदेव कर्त्तव्यः। अन्ते च सहस्रान् ब्राह्मणान् भोजयेत्।

एतावत् पञ्चसु सुत्यादिवसेषु उभयतोऽग्निष्टोमः उक्थ्यश्च भवति। **"स वा एष पुरुषमेधः पञ्चरात्रो यज्ञक्रतुर्भवति पाङ्क्तो यज्ञः पाङ्क्तः पशुः पञ्चर्तवः संवत्सरो यत्किञ्च पञ्चविधमधिदेवतमध्यात्मम्। तदेनेन सर्वमाप्नोति।[2]"**

एषु पञ्चसुत्यादिवसेषु आत्मस्वरूपोऽतिरात्रो मध्यदिवसे भवति। अतिरात्रसंस्थे तृतीये सुत्यादिवसे प्रतियूपमेकैकमेकादशिनं नियुज्य ब्राह्मणादीनष्टचत्वारिंशत्संख्याकान् पुरुषान् प्रकामोद्याय सदमित्यन्तानग्निष्टं यूपे नियुनक्ति, इतरेषु यूपेषु एकादशैकादशपुरुषान् वर्णायानुरुध-मित्यादीन्नियुनक्ति। ब्रह्मणे ब्राह्मणं तत्र ब्राह्मणे जुष्टं नियुनज्मीति अग्निष्टे ब्राह्मणं प्रथमं नियुनक्ति। एवमग्रे सर्वेषां यूपे एव बन्धनम्, चतुर्थ्यन्तं देवतापदं द्वितीयान्तं पुरुषपदं बोद्धव्यम्। तत्र मध्यमे यूपे अष्टचत्वारिंशत् पशूनां नामानि यथादैवतं निदर्श्यते – (1) ब्रह्मणे ब्राह्मणम्, (2) क्षत्राय राजन्यम् (क्षत्रियम्), (3) मरुद्भ्यो वैश्यम्, (4) तपसे शूद्रम्, (5) तमसे तस्करं (स्तेनम्), (6) नारकाय वीरहणं नष्टाग्निं शूरं वा, (7) पाप्मने क्लीबं

1. का० श्रौ० सू० 9/8/5
2. श० प० ब्रा० 13/6/1/8

नपुंसकम्, (8) आक्रयायै अयोगूमयसो गन्तारम्, (9) कामाय पूंश्चलूं व्यभिचारिणीम्, (10) अतिक्रुष्टाय मागधं मगधदेशजं क्षत्रियायां वैश्यपुंसो जातं वा, (11) नृत्ताय सूतं ब्राह्मण्यां क्षत्रियाज्जातः सूतः, (12) गीताय शैलूषं नटम्, (13) धर्माय सभाचरं सभायां चरतीति तम्, (14) नरिष्ठायै भीमलं भयङ्करम्, (15) नर्माय रेभं शब्दकर्त्तारं वाचालम्, (16) हसाय कारिं करणविशिष्टं, (17) आनन्दाय स्त्रीषखं स्त्रियाः सखायम्, (18) प्रमदे कुमारीपुत्रम् कानीयम्, (19) मेधायै रथकारं माहिष्येण करण्यां जातम्, (20) धैर्याय तक्षाणं सूत्रधारम्, (21) तपसे कौलालं कुलालापत्यम्, (22) मायायै कर्मारं लोहकारम्, (23) रूपाय मणिकारं रत्नकर्त्तारम्, (24) शुभे-शुभाय वपं - बीजवप्तारम्। (25) शरव्यायै इषुकारं बाणकर्त्तारम्, (26) हेत्यै धनुष्कारं चापकारिणम्, (27) कर्मणे ज्याकारं प्रत्यञ्चनकर्त्तारम्, (28) दिष्टाय रज्जुसर्जं रज्जोः स्त्रष्टारं निर्मातारं, (29) मृत्यवे मृगयुं मृगग्राहम्, (30) अन्तकाय ध्वनिनम्-शुनो नेतारम्, (31) नदीभ्यः पौञ्जिष्ठं पुञ्जिष्ठोऽन्त्यजः पुल्कसस्तदपत्यम्, (32) ऋक्षीकाभ्यो नैषादं निषादपुत्रम्, (33) पुरुषव्याघ्राय दुर्मदमुन्मत्तम्, (34) गन्धर्वाप्सरोभ्यो व्रात्यं सवित्रीपतितम्, (35) प्रयुग्भ्यः उन्मत्तम्, (36) सर्पदेवजनेभ्यः अप्रतिपदं प्रतिपद्यते जातानीति प्रतिपत् अतथाविधं विकलमित्यर्थः, (37) अयेभ्यः कितवम् द्यूतकारम्, (38) ईर्यतायै अकितवं अद्यूतकृतम्, (39) पिशाचेभ्यः विदलकारीं वंशविदारिणीं वंशपात्रकारिणीम्, (40) यातुधानेभ्यः कण्टकीकारीं कण्टकी कर्म तत्कारिणीम्, (41) सन्धये जारमुपपतिम्, (42) गेहाय उपपतिं व्यभिचारिणम्, (43) आर्त्यै परिवृत्तम् ऊढे कनिष्ठेऽनूढम्, (44) निर्ऋत्यै परिविविदानम् अनूढे ज्येष्ठे ऊढवन्तम्, (45) आराध्यै देव्यै एदिधिषुः पतिम् ज्येष्ठायां पुत्र्यामनूढायामूढा एदिधिषुः तत्पतिम्, (46) निष्कृत्यै पेशस्कारीं रूपकर्त्रीम्, (47) संज्ञानाय स्मरकारीं कामदीप्तिकारीम्, (48) प्रकामोद्याय तत्संज्ञाय देवाय उपसीदत्युपसत् समीपस्थितस्तम् एतानग्निष्टे नियुनक्ति।

**अथ द्वितीये यूपे**

(1) वर्णाय अनुरुधम् अनुरुध्यतेऽनुसरतीत्यनुरुत् तम्, (2) बलाय उपदाम् उपददातीत्युपदास्तमुपायनदातारम्, (3) उत्सादेभ्यः कुब्जं वक्राङ्गम्, (4) प्रमुदे वामनं ह्रस्वाङ्गम्, (5) द्वार्भ्यः स्रामं सर्वदा जलक्लिन्ननेत्रम्, (6) स्वप्नाय अन्धं नेत्रहीनम्, (7) अधर्माय बधिरं कर्णेन्द्रियहीनम्, (8) पवित्राय भिषजं वैद्यम्, (9) प्रज्ञानाय नक्षत्रदर्शं नक्षत्राणि दर्शयति तं गणकम्, (10) अशिक्षायै प्रश्निनं प्रश्नवन्तम् शकुनादिप्रष्टारमिति, (11) उपशिक्षायै अभिप्रश्निनमभिप्रश्नवन्तम्।

**अथ तृतीये यूपे**

(1) मर्यादायै प्रश्नविवाकम् कृतान्प्रश्नान्यो विविनक्ति ब्रूते स प्रश्नविवाकस्तम्, (2) अर्मेभ्यो हस्तिपं गजपालकम्, (3) जवाय अश्वपं तुरगपालकम्, (4) पुष्ट्यै गोपालं धेनुपालकम्, (5) वीर्याय अविपालम्, (6) तेजसे अजपालम्, (7) इरायै कीनाशं कर्षुकम्, (8) कीलालाय सुराकारं मद्यकृतम्, (9) भद्राय गृहपं गेहपालकम्, (10) श्रेयसे वित्तधं वित्तं दधातीति वित्तधः तं धनकर्त्तारम्, (11) आध्यक्ष्याय अनुक्षत्तारं सारथ्यनुसारिणम्।

**अथ चतुर्थे यूपे**

(1) भायै दार्वाहारं काष्ठानामाहर्तारम्, (2) प्रभायै अग्न्येधम् अग्निमेधयति इति तमग्नेर्वर्धकम्, (3) ब्रध्नस्य विष्टपाय सूर्यलोकाय अभिषेक्तारम्, (4) वर्षिष्ठाय नाकाय उत्कृष्टस्वर्गाय परिवेषणकर्त्तारम्, (5) देवलोकाय पेशितारम्, 'पिश अवयवे' पिशतीति पेशिता तम् प्रतिमाधवयवकर्तारम्, (6) मनुष्यलोकाय प्रकरितारम् 'कृ विक्षेपे' विक्षेप्तारम्, (7) सर्वेभ्यो लोकेभ्यः उपसेक्तारमुपसेचनकर्तारम्, (8) अवऋत्यै वधाय उपमथितारमुपमन्थनकर्तारम्, (9) मेधाय वासः पल्पूलीम् वाससां प्रक्षालनकर्तारम् 'पल्पूलप्रक्षालनच्छेदनयोः', (10)

प्रकामाय रजयित्रीं वस्त्राणां रङ्गकारीणीं नारीम्, (11) ऋतये स्तेनहृदयम् स्तेनस्येव हृदयं यस्य तम्।

## अथ पञ्चमे यूपे

(1) वैरहत्याय पिशुनं परवृत्तसूचकम्, (2) विविक्त्यै दातारं प्रतीहारम्, (3) औपद्रष्ट्र्याय अनुक्षत्तारं प्रतिहारसेवकम्, (4) बलाय अनुचरं सेवकम्, (5) भूम्ने परिष्कन्दम् परितः स्कन्दति रेतः सिञ्चति तम्, (6) प्रियाय प्रियवादिनम् मधुरभाषिणम्, (7) अरिष्ट्यै अश्वसादम्, अश्वारोहम्, (8) स्वर्गाय लोकाय भागदुघं भागं दुग्धे भागदुघस्तम् विभागप्रदम्, (9) वर्षिष्ठाय नकाय परिवेष्टारम्, (10) मन्यवे अयस्तापमयः तपं लोहतापकम्, (11) क्रोधाय निसरं नितरां सर्तारम्।

## अथ षष्ठे यूपे

(1) योगाय योक्तारम् योगकर्तारम्, (2) शोकाय अभिसर्तारं सम्मुखमागच्छन्तम्, (3) क्षेमाय विमोक्तारं विमोचनकरम्, (4) उत्कूलनिकूलेभ्यः त्रिष्ठिनम् त्रिषु तिष्ठतीति तिष्ठी तम् विद्यादिषु स्थितं शीलवन्तमिति, (5) वपुषे मानस्कृतं पूजाया अभिमानस्य वा कर्तारम्, (6) शीलाय आञ्जनीकारीम् अञ्जनविद्याकर्त्रीम्, (7) निर्ऋत्यै कोशकारीं खड्गाद्यावरणं कोशस्तत्कारिणीं स्त्रियम्, (8) यमाय असूम् न सुते सा असूः ताम् बन्ध्याम्, (9) यमाय यमसूं युग्मप्रसवित्रीम्, (10) अथर्वभ्यो अवतोकां निरपत्याम्, (11) संवत्सराय पर्यायिणीम् पर्यायोऽनुक्रमस्तद्वतीमनुक्रमप्रज्ञाम्।

## अथ सप्तमे यूपे

(1) परिवत्सराय अविजाताम् अप्रसूताम्, (2) इदावत्सराय अतीत्वरीमत्यन्तं कुटलाम्, (3) इद्वत्सराय अतिष्कद्वरीम् अतिस्कन्दति स्रवति इत्यतिस्कद्वरी, (4) वत्सराय विजर्जरां शिथिलशरीराम्, (5)

संवत्सराय पलिक्नीं श्वेतकेशाम्, (6) ऋभुभ्यः अजिनसन्धं चर्मसन्धातारम्, (7) साध्येभ्यः चर्मम्नं चर्माभ्यासकरम्, (8) सरोभ्यो धैवरं कैवर्तापत्यम्, (9) उपस्थावराभ्यः दाशम् दातारम् दाशो धीवरो वा, (10) वैशन्ताभ्यो वैन्दं विन्दो निषादापत्यम्, (11) नड्वलाभ्यः शौष्कलं मत्स्यजीविनम् शुष्कला मत्स्यास्तैर्जीवति तम्।

**अथाष्टमे यूपे**

(1) पाराय मार्गारम् मृगारेरपत्यं मार्गारस्तम्, (2) अवाराय कैवर्तम्, (3) तीर्थेभ्यः आन्दम् 'अदि बन्धने' अदति आन्दस्तं बन्धनकर्तारम्, (4) विषमेभ्यो मौनालम्, '**अल वारणे**' मीनानलति वारयति जालैरसौ मीनालस्तदपत्यम्, (5) स्वनेभ्यः पर्णकं भिल्लम्, (6) गुहाभ्यः किरातम्, (7) सानुभ्यः जम्भकं 'जभि नाशने' जम्भयतीति तत् हिंसकम्, (8) पर्वतेभ्यः किं पूरुषं कुत्सितनरम्, (9) बीभत्सायै पौल्कसं पुल्कसापत्यम्, (10) वर्णाय हिरण्यकारं स्वर्णनिष्पादकम्, (11) तुलायै वणिजं वणिगपत्यम्।

**अथ नवमे यूपे**

(1) पश्चाद्दोषाय ग्लाविनं 'ग्लै हर्षक्षये' अहृष्टम्, (2) विश्वेभ्यो भूतेभ्यः सिध्मलं सिध्माख्यरोगवन्तम्, (3) भूत्यै जागरणं जागरूकम्, (4) अभूत्यै स्वपनं शयालुम्, (5) आर्त्यै जनवादिनं जनान् वदति तम्, (6) वृद्ध्यै अपगल्भम्, (7) संशराय प्रच्छिदं प्रच्छेदनकर्तारम्, (8) अक्षराजाय कितवं धूर्तम्, (9) कृताय आदिनवदर्शम् आदीनवो दोषस्तं पश्यति तथाभूतम्, (10) त्रेतायै कल्पिनं कल्पकम्, (11) द्वापराय अधिकल्पिनम् अधिकल्पनाकर्तारम्।

**अथ दशमे यूपे**

(1) आस्कन्दाय सभास्थाणुं सभायां स्थिरम्, (2) मृत्यवे गोव्यच्छं

गाः प्रतिगमनशीलम्, (3) अन्तकाय गोघातं गवां हन्तारम्, (4) क्षुधे यो गां विकृन्तन्तं भिक्षमाण उपतिष्ठति यः पुमान् गां विकृन्तन्तं छिन्दन्तम्। भिक्षमाणो याचमानः उपतिष्ठते तं याचितारं क्षुधे दैव्यै आलभेत्, (5) दुष्कृताय चरकाचार्यं चरकाणां गुरुम्, (6) पाप्मने सैलगं सीलगो दुष्टस्तदपत्यम्, (7) प्रतिश्रुत्कायै अर्तनं दुःखिनम्, (8) घोषाय भषं जल्पकम्, (9) अन्ताय बहुवादिनम्, (10) अनन्ताय मूकं वाग्विकलम्, (11) शब्दाय आडम्बराघातं आडम्बरमाहन्ति तं कोलाहल-कर्तारम्।

## अथैकादशे यूपे

(1) महसे वीणावादं वीणावादनकर्तारम्, (2) क्रोशाय तूणवध्मं वाद्यविशेषं धमति तथाभूतम्, (3) अवरस्पराय शङ्खध्मं शङ्खवादकम्, (4) वनाय वनपं वनपालकम्, (5) अन्यतोऽरण्याय दावपं वनवह्निपालकम्, (6) नर्माय पूंश्चलूं दुष्टां नारीम्, (7) हसाय कारिं करणशीलम्, (8) यादसे शाबल्याम् शबलः कर्बुरवर्णः तदपत्यभूतां स्त्रियम्, (9) ग्रामण्यं ग्रामनेतारम्, (10) गणकं ज्योतिर्विदम्, (11) अभिक्रोशकं निन्दकम्।

तान्त्रीन्महसे जुष्टं नियुनज्मीति एकादशे यूपे आलभते। एवं प्रतियूपमेकादशस्वेकादशसु नियुक्तेषु येऽधिका अवशिष्टास्तान् समाप्तिपर्यन्तान् द्वितीयोच्छ्रिते यूपे नियुनक्ति। तांश्च वीणावादं पाणिघ्नमित्यादीन् रात्र्यै कृष्णं पिङ्गाक्षमित्यन्ताश्चतुर्दश। ततोऽथैतानष्टौ विरूपानित्यष्टौ च मागधादींश्चतुरः एव षड्विंशतिं द्वितीये। यूपे पूर्वोक्ता एकादश एवं सप्तत्रिंशत्। तानेवाह। वीणावादं पाणिघ्नं हस्ततालवादकम् तूणवध्मम् तान् त्रीण् नृत्ताय आलभते (4) आनन्दाय तलवम्, (5) अग्नये पीवानं स्थूलम्, (6) पृथिव्यै पीठसर्पिणं पीठे नासनेन सर्पति गच्छति पीठसर्पी तं पङ्गुम्, (7) वायवे चाण्डालम्, (8) अन्तरिक्षाय वशवर्तिनम्, (9) दिवे खल्वाटम्, (10) सूर्याय हर्यक्षम्, (11) नक्षत्रेभ्यः

किर्मिरम्, (12) चन्द्रमसे किलासं, (13) असे शुक्लवर्णम्, (14) रात्र्यै कृष्णवर्णम्।

तत एतान् वक्ष्यमाणानष्टौ विरूपान् परस्परं विरूद्धरूपान् पशून् आलभते। तानाह –

(1) अतिदीर्घम्, (2) अतिह्रस्वम्, (3) अतिस्थूलम्, (4) अतिकृशम्, (5) अतिकृष्णम्, (6) अतिकुल्वम्, (7) रोमरहितम्, (8) अतिलोमशम्। सर्वाङ्ग्यापिरोमाणम्। ते अष्टौ अशूद्राः अब्राह्मणाः शूद्रब्राह्मणव्यतिरिक्ताः पशवो भवन्ति। तेऽष्टावपि प्राजापत्याः प्रजापति देवताः 'अष्टावुत्तमानालभत्' ते वै प्राजापत्याः भवन्ति। "ते अष्टावुत्तमानालभते। अष्टाक्षरा गायत्री। ब्रह्मगायत्री। तत् ब्रह्मैवैतदस्य सर्वस्योत्तमं करोति। तस्मात् ब्रह्मास्य सर्वस्योत्तममाहुः।

**ते वै प्राजापत्या भवन्ति। ब्रह्म वै प्रजापतिः। ब्राह्मो हि प्रजापतिः। तस्मात् प्राजापत्या भवन्ति।**[1]" इति श्रुतेः। अत्र जातिनियमात्पूर्वेषु जातेरनियमः। वीणावादादयश्चतुर्दश अतिदीर्घादयोऽष्टौ एवं द्वाविंशतिः शेषाः। तथा मागधः पुंश्चली कितवः क्लीबः एते चत्वारोऽपि शूद्रब्राह्मणव्यतिरिक्ताः प्रजापतिदेवताः पूर्वैः सहैते षड्विंशतिः ते सर्वे द्वितीययूपे नियोज्याः। सर्वेषां नियोगानन्तरं तान्नियुक्तान् पुरुषान्, "**सहस्त्रशीर्षापुरुषः**[2]" इतिं षोडशर्चेनानुवाकेन दक्षिणत उपविष्टो होतृवदभिष्टौति। होतृवदिति प्रथमोत्तमयोस्त्रिर्वचनम् ऋगन्तानां प्रणवेन सन्धानञ्च। यथा सहस्त्रशीर्षा पुरुषः – ०ङ्गुलो ३म् पुरुष एवेद ७३ – ० रोहतो३म्। एवमभिष्टौति। तत आलम्भनक्रमेण यथादेवतं प्रोक्षणादि। ब्राह्मणादीनां पर्यग्निकरणानन्तरमिदं ब्रह्मणे इदं क्षत्रायेत्येवं सर्वेषां यथा – स्वस्वदेवतोद्देशेन त्यागः। ततः सर्वान् ब्राह्मणादीन् यूपेभ्यो विमुच्योत्सृजति। तत एकादशिनैः पशुभिः संज्ञपनादि प्रधानयागान्तं वनस्पतियागं कृत्वा प्राक् स्विष्टकृतः अध्वर्युराज्यं संस्कृत्य

---

1. श० प० ब्रा० 13/6/2/7–8
2. शु० य० सं० 31/1–16

सकृद्गृहीतमाज्यं गृहीत्वा ओम् पुरुषदेवताभ्यो ब्रह्मादिभ्यः आहवनीये जुहोति, (1) 'ओम् ब्रह्मणे स्वाहा', (2) क्षत्राय स्वाहा, (3) मरुद्भ्यः स्वाहा, (4) तपसे स्वाहा, (5) तमसे स्वाहा इत्यादि सर्वदेवताभ्यः चतुरशीत्युत्तरशत, (184) संख्याकाभ्यः तावतीर्घृत्ताहुतीर्हुत्वा स्विष्टकृदादि उदवसानीयान्तं कर्म कृत्वा अन्ते यजमानः "**अयं ते योनिः**[1]" इति मन्त्रेणात्मन्यग्नीन् समारोप्य "**अद्भ्यः सम्भृतः**[2]" इति षड्चेनानुवाकेन सूर्यमुपस्थाय पश्चादनवलोकयन्नरण्यं गत्वा सन्यसेत्। "**गार्हपत्येऽधरारणि-मनुप्रहृत्याहवनीय उत्तरारणिं आत्मन्यग्नी समारोप्यारण्यं व्रजेत्**[3]" इति कात्यायनः। यदि पुरुषमेधानन्तरं ग्रामवासेच्छा तर्ह्युदवसानीयान्ते सायमाहुती हुत्वाऽरण्योरग्नी समारोप्योत्तरनारायणेनार्कमुपस्थाय देवयजनमादीप्य गृहं व्रजेत्। गृहे आगत्य निर्मथ्याग्निं स्थापयेत् यथेच्छं यज्ञानपि कुर्यात्। अयमपि

पक्षोऽस्ति। तत पुरुषमेधानन्तरं सन्यास एव।

---

1. शु० य० सं० 3/14
2. शु० य० सं० 31/17-22
3. का० श्रौ० सू० 21/1/17-18;
   प्राजापत्यां निरूप्येष्टिं सर्ववेदसदक्षिणाम्।
   आत्मन्नग्नी समारोप्य ब्राह्मणः प्रव्रजेद् गृहात्।। मनु० 6/38

## ( ख ) नित्य-नैमित्तिक-काम्यानां स्वरूपनिरूपणम्

ऋग्यजुस्सामाथर्ववेदेषु कर्मकाण्ड-उपासनाकाण्ड - ज्ञानकाण्डानां त्रयाणां विषयाणां मुख्यरूपेण वर्णनानि सन्ति। तेषु त्रिष्वपि विषय-विभागेषु '**कर्मकाण्डम्**' एवोत्तमं स्थानं भजते। अत एव वेदेषु यज्ञ-यागादीनां विविध क्रियाकलापानां वर्णनानि विशेषरूपेणोपलभ्यन्ते। वेदेषु यज्ञानां प्राधान्यत्वादेव यज्ञेषु वेदमन्त्राणामुच्चारणं क्रियते। वेदमन्त्राणां विना यज्ञसिद्धिर्न जायते, एवञ्च यज्ञं विना वेदमन्त्राणामुचितोपयोगः न सम्भवः। तस्मात् सिद्धं भवति यद् वेदैर्यज्ञाः यज्ञैश्च वेदाः प्रतिष्ठिताः।

विष्णुधर्मोत्तरपुराणे - '**वेदास्तु यज्ञार्थमभिप्रवृत्ताः**[1]' इत्युक्तम्। भगवता मनुना चापि '**दुदोह यज्ञसिद्ध्यर्थमृग्यजुस्सामलक्षणम्**[2]' इत्युक्त्वा वेदानां प्रादुर्भावस्य कारणं यज्ञसम्पादनमित्येव साधितम्।

यथा वेदः दुरूहतमः तथैव वेदाङ्गभूता यज्ञा अपि दुरूहा एव। यथा वेदेषूपास्याः देवताः सन्ति तथैव यज्ञेष्वप्युपास्याः देवता भवन्ति। यथा वेदा अपौरुषेयाः, नित्या, अनादयस्तथैव यज्ञा अप्यपौरुषेयाः, नित्या, अनादयश्च सन्ति। इतिहासविद्भिः महता परिश्रमेण, विविधैः प्रमाणैश्च ऋग्वेदस्य प्रतिष्ठापनं संसारस्यादिज्ञानरूपेण कृतम्। तस्य प्रथममण्डलस्य प्रथमसूक्तस्यादिमे मन्त्रे -'**अग्निमीडे पुरोहितं यज्ञस्य देवमृत्विजम्।**[3]' यज्ञशब्दस्योल्लेखोऽस्ति। अत्र चिन्त्यते यद् कस्यापि तत्त्वस्य क्वचिदुल्लेखः तदैव सम्भवति यदा तस्य तत्रोपस्थितिः स्यात्। अनेन चिन्तनाधारेणेदं सिध्यति यद् वेदानां प्रादुर्भावात् पूर्वं यज्ञानां स्थितिरासीदेव। ऋग्वेदस्यैव प्रसिद्धतमे पुरुषसूक्ते- '**तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे।**

---

1. वेदाङ्गज्योतिषि 3
2. मनु० 1/23
3. ऋ० सं० 1/1/1

**छन्दांसि जज्ञिरे तस्माद्यजुस्तस्मादजायत।।**[1]' इति पठ्यते। अस्यामृचि सर्वहुन्नामकात् यज्ञादेव ऋग्यजुस्साम्नां वेदानामुत्पत्तिर्व्याख्याताऽस्ति। एभिरनेकविधप्रमाणैर्यज्ञानां प्राचीनत्वं सुसिद्धं भवति।

मन्त्रब्राह्मणश्रौतसूत्रेषु विविधयज्ञानां व्याख्यानान्युपलभ्यन्ते। ते नानाविधभेदप्रभेदेषु विभक्ता यज्ञाः मुख्यरूपेण नित्य - नैमित्तिक-काम्यभेदेन त्रिधा विभक्ताः सन्ति। तेषां त्रिविधानामपि यज्ञानां संक्षेपेण विवरणानीह प्रस्तूयन्ते -

**नित्ययज्ञाः**

ते यज्ञाः नित्या उच्यन्ते येषां यथाकालं नियमतो यथाविधानं कर्तव्यत्वमुच्यते। याज्ञिकानां मतानुसारं नित्ययज्ञाः फलभावनां विना क्रियन्ते, अतस्तेषां किञ्चिल्लौकिकं फलं न स्वीक्रियते परन्तु तेषामकरणे प्रत्यवायो भवति। अस्मन्मते तु नित्यानि कर्माणि निष्कामभावनया अर्थात् कर्त्तव्यबुद्ध्या क्रियन्ते, अतस्तेषां फलं आत्मशुद्धिपूर्वकं मोक्षप्राप्तिः शक्यते वक्तुम्। अत्र याज्ञिकानामपि मतभेदस्य नास्त्यवकाशः।

'**अग्निहोत्रादारभ्य सोमान्ताः** (अग्निहोत्रं, दर्शपूर्णमासौ, चातुर्मास्यानि, अग्निष्टोमश्च) **नित्ययज्ञाः प्रकीर्तिताः।**[2]' महाभारते शान्तिपर्वणि अग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यानि च त्रयो यज्ञाः प्राचीना उक्ताः -

**दर्शं च पौर्णमासं च अग्निहोत्रं च धीमतः।**
**चातुर्मास्यानि चैवासन् तेषु धर्मः सनातनः।।**[3]

संसारस्यैषः नियमो वर्तते यत् यदा कस्याश्चिदपि क्रियाया आरम्भः

---

1. शु० य० सं० 31/8
2. द्रष्टव्यम् आप० श्रौ० सू० 1/1/1, सूत्रस्य धूर्तस्वामिनो भाष्यम् वृत्तिश्च। (मैक्समूलर सं० भाग 1, पृ० 5) तथा आप० धर्म० 2/21/7 सूत्रस्य हरदत्तीया व्याख्या।
3. महाभारतम् शां० पर्व 269/20

क्रियते तदा तया क्रियया सह न कश्चित्फलसम्बन्धः व्यवस्थाप्यते। कालान्तरे सैव क्रिया यदा परिपक्वतां गच्छति उतवा तस्यां क्रियायां कर्तुः परिपक्वतां सिद्ध्यति तदा तत्र फलप्राप्त्यादीनि काम्यसिद्धान्तानि संश्लिष्टानि भवन्ति। आरम्भिकावस्थायां तु तत्कर्म निष्कामभावनयैव सम्पाद्यते। तदनुगुणमेव उपर्युक्तानां यज्ञानां विषयेऽपि ज्ञातव्यम्। अस्य तथ्यस्य स्पष्टीकरणमेकेन लौकिकेनोदाहरणेन क्रियते। तद्यथा –

बाल्यावस्थायां कश्चिद् व्याकरणशास्त्रस्याध्ययनं करोति। तदानीं स केवलं सूत्र – वृत्त्यादीनां कण्ठस्थीकरणमात्रमेवालमवगच्छति। स एव यदा उच्चकक्षायां गच्छति तदा तेन सूत्रेण कः आदेशः का च क्रिया क्रियते तस्य व्यापारः करोति तदापि स सम्यक्तया सूत्रस्य वृत्तेश्च साधुप्रयोजनं नावगच्छति। अध्ययनानन्तरं यदा स व्यावहारिकं जीवनं जीवति तदानीमेव तस्य महत्त्वं जानाति। इदानीं स सूत्रस्य वृत्तेश्च साहाय्येन वस्तुसिद्धौ परिपक्वतां प्राप्नोति। स एवान्यान् एवमुपदिशति यद् व्याकरणं पठतु तेन महान् लाभो जायते। वस्तुव्यवस्था, वस्तुविन्यास, शब्दनिर्माणादि प्रक्रियाः व्याकरणशास्त्रस्य ज्ञानं विना नैव भवितुमर्हति। अनन्तरं स एतान् काम्यसिद्धान्तान् प्रदर्श्य व्याकरणशास्त्रस्याध्ययनायान्येषु प्रवृत्तिं जनयति। अनेनोदाहरणेनेदं सिद्धं यदारम्भिकावस्थायां कामनाः न भवन्ति परमनन्तरकाले तत्र कामनाः दृश्यन्ते। तदनुसृत्य आगामिनि क्रियायां फलबोधो जायते। अतः स्पष्टमेव इदं यत् यदद्य नित्यं तदेव स्वः काम्यं भवति। तस्मात् पूर्वमस्माभिः नित्यकर्मवदेव यज्ञानामनुष्ठानं कर्त्तव्यम्। अनन्तरं तु तदेव कर्म काम्यान्तर्गतमागच्छति। यथा – 'यावज्जीवमग्निहोत्रं जुहुयात्।' एषस्तु आरम्भिकावस्थायाः सिद्धान्तः। तत्र परिपक्वता प्राप्त्यनन्तरं 'अग्निहोत्रं जुहुयात् स्वर्गकामः' एषः सिद्धान्तः समुत्पद्यते।

अनेनोदाहरणेनेनेदं सिध्यति यत् यावत्कर्मसु कामनाः न भवन्ति तावत्ते नित्यत्वेनैवानुष्ठीयन्ते। तेषां नित्ययज्ञानामनुष्ठानं यावज्जीवमत्यावश्यकं भवति, अकरणे च प्रत्यवायो भवति।

**नैमित्तिकयज्ञाः**

प्रायश्चित्तादीनि कर्माणि नैमित्तिकानीत्युच्यन्ते। कर्मणो विनाशे तत्कालमेव प्रायश्चित्तानुष्ठानं कर्त्तव्यम्। तदुक्तं कात्यायनेन – '**कर्मोपपाते प्रायश्चित्तं तत्कालम्**[1]' अर्थात् येन केनापि निमित्तेन यत्कर्म क्रियते तन्नैमित्तिकम्। अत्र कर्मणो विनाशनिमित्तं प्रायश्चित्तमुक्तं तच्च तत्कालमेवानुष्ठातव्यमिति।

कर्मण उपपातः चतुर्विधो भवति – अकरणम्, न्यूनकरणम्, अतिरिक्तकरणम्, अयथाकरणञ्च। एवं चतुर्विधकर्मण उपपाते सति यस्मिन्काले विहितकर्मणोऽन्यथाभावो जायेत तदैव तदन्यथाभावनिमित्तं प्रायश्चित्तं कुर्यात् न कर्मसमाप्तौ। नैमित्तिकस्य च निमित्तकालता न्याय्यां अन्तरा पूर्वपक्षयति – '**चोदना वाऽकालशब्दात्**[2]' इत्यस्मिन् सूत्रे भिन्ने जुहोतीत्यादिकं नैमितिकस्य विधानमात्रमेव, न स्कन्दनादिकाल-विशिष्टनैमित्तिकविधिरुक्तः। कुतः? अकालशब्दात्। न ह्यत्र कालवाचकः शब्दोऽस्ति। स्कन्दनकाले भेदनकाले इत्येवम्। तेनागन्तूनामन्तेऽभिनिवेशो भवतीति न्यायेन कर्मणोऽन्ते नैमित्तिकं विधेयम्। तत्र सिद्धान्तयति – '**कालो वा प्रत्ययात्**[3]' अर्थात् निमित्तकाल एव नैमित्तिकस्य स्यात्। कुतः? प्रत्ययात् = प्रत्ययात् = प्रतीयते हि निमित्तकालता नैमित्तिकस्य। यतः प्राक् निमित्तान्नैमित्तिकं न भवति। निमित्ते जाते नैमित्तिकं भवति। तेन निमित्तकालतैव नैमित्तिकस्य। अपुरुषसंबद्धोपपाते जनमरण-गेहदाहादौ तु न तत्कालनियमः।

कर्मोपपात इति सर्वत्रानुवर्तते। यत्र निमित्तिमुद्दिश्य नैमित्तिकं नोक्तं तत्र महाव्याहृतिभिर्होमो नैमित्तिको ब्रह्मकर्तृको भवेत्। ऋग्वेदविहितकर्मणो विनाशे नैमित्तिकान्तरस्यानादेशे ॐ भूः स्वाहेति चतुर्गृहीतं ब्रह्मा जुहुयात्।

---

1. का० श्रौ० सू० 25/1/1
2. का० श्रौ० सू० 25/1/2
3. का० श्रौ० सू० 25/1/3

अग्निहोत्रादौ ब्रह्मणोऽभावे यजमानः। सब्रह्मके कर्मणि ब्रह्मवरणात्प्राङ् निमित्ते जाते ब्रह्माणं समन्त्रकं वृत्वा तेन होमः कारयितव्यः। अब्रह्मके तु अध्वर्य्वादिरेव कर्ता। सोमे च कालाहुतिभिरस्य समुच्चयः। उभयोरप्यादिष्टत्वात्। अत्राग्निर्देवता।

अध्वर्युवेदविहितोपपाते ॐ भुवः स्वाहेति दक्षिणाग्नौ जुहुयात्। सोमयागे यजुर्वेदविहितकर्मणो विनाशे भुवः स्वाहेत्याग्नीध्रीये जुहुयात्। आग्नीध्रीयोत्पत्तेः प्राग्दक्षिणाग्नावेव। न तदर्थमाग्नीध्रीयोत्पत्तिः। अत्र वायुर्देवता।

सामवेदविहितकर्मणो विनाशेऽनादेशे स्वः स्वाहेति। अत्र सूर्यो देवता। एतान्याज्यानि भूः स्वाहेत्याद्युक्तहोमेषु चतुर्गृहीतानि भवेयुः। तदुक्तं कात्यायनेन –'**चतुर्गृहीतान्येतानि सर्वत्र**[1]' सर्वत्र ग्रहणम् 'अविज्ञाते प्रतिमहाव्याहृतीत्येवमर्थम्। होमश्च पूर्णाहुतिधर्मेण स्रुक्स्रुवयोः संस्कारः। स्रुगग्निहोत्रहवणी। आज्यमप्यन्यदेव ग्राह्यं, नान्यार्थं संस्कृतम्। होमोऽयमाहवनीये।

'**सर्वप्रायश्चित्तं च पञ्चभिः प्रत्यृचम्**[2]' इत्यस्मात् कात्यायन-वचनादिदं स्पष्टं भवति यत् होत्रिकाध्वर्य्वौद्गात्रेषूपपातेषु व्याहृतिहोमानन्तरं सर्वप्रायश्चित्तसंज्ञकं होमं सकृद् गृहीतेनाहवनीये वक्ष्यमाणाभिः पञ्चभिर्ऋग्भिः प्रत्यृचं जुहुयात्। तदेवाह –

'**त्वन्नोऽअग्ने इति द्वाभ्याम्। अयाश्चाग्नेऽस्यनभिशस्तिपाश्च सत्यमित्यमयाऽअसि। अथा नो यज्ञं वहास्यया नो धेहि भेषज ꣳ स्वाहा, येते शतं वरुण ये सहस्रं ये यज्ञियाः पाशा वितता महान्तः। तेभिर्नो अद्य सवितोत विष्णुर्विश्वे मुञ्चन्तु मरुतः स्वर्काः स्वाहेदुत्तममिति च।।**[3]'

एतदाहुतिपञ्चकं सर्वप्रायश्चित्तसंज्ञम्। एवं विधमिदं स्फुटं यत्प्रायश्चित्तात्मकं कर्म उपपातनिमित्तवत्वान्नैमित्तिकमिति।

---

1. का० श्रौ० सू० 25/1/9
2. का० श्रौ० सू० 25/1/10
3. का० श्रौ० सू० 25/1/11

**काम्ययज्ञाः**

ये यज्ञाः लौकिकफलानामवाप्त्यै तत्तत्कामनापूर्वकं क्रियन्ते, ते काम्या उच्यन्ते। यतो लौकिक्यः कामनाः बहुविधा भवन्ति, अतस्तेषामवाप्त्यै शाखाब्राह्मण - श्रौत-गृह्य-धर्मसूत्रादिषु बहूनां काम्यानां यज्ञानां विधानमुपलभ्यते। एषां काम्यकर्मणां विस्तारस्त्रेतायां समभवत्। '**तानि त्रेतायां बहुधा सन्ततानि**[1]' इति।

काम्यानां त्रयो भेदाः - काम्याः यज्ञास्त्रिविधा भवन्ति। तत्र केचन एतादृशाः सन्ति येषां कामनाविशेषाय स्वतन्त्रं विधानमुपलभ्यते। यथा - '**वैश्वदेवीं सांग्रहणीं निर्वपेद् ग्रामकामः।**[2]' अपरे काम्या यज्ञा एतादृशाः सन्ति, ये नित्यविहिताः सन्तोऽपि स्वल्पभेदेन तेषु काम्यत्वमुक्तम्। यथा नित्यस्य पयसा सम्पाद्यमानस्याग्निहोत्रस्यैव इन्द्रियकामनया दध्ना विधानमुक्तम् - '**दध्नेन्द्रियकामस्य**[3]' कतिपया एतादृशा अपि यज्ञा, सन्ति ये नित्यविहितास्सन्तस्तेनैव रूपेण कामनाविशेषेभ्योऽपि क्रियन्ते। यथा '**वसन्ते वसन्ते ज्योतिषा यजेत**[4]' अत्र वसन्ते वसन्ते इति द्विर्वचनं[5] नित्यार्थम्। इदमेव कर्म 'स्वर्गकामो ज्योतिष्टोमेन यजेत।' **एककामो सर्वकामो वा। युगपत् कामयेताहारपृथक्त्वे वा**[6] इति।

नित्यकाम्ययोः समानत्वेऽप्यनुष्ठाने भेदः - नित्यकाम्यकर्मणोः समानत्वेऽपि उभयोरनुष्ठानयोरस्त्येको भेदः। यथा - काम्यकर्मणोऽनुष्ठानं सर्वांगपूर्णं कर्तव्यं भवति। यतः सर्वांगपूर्णं कर्म एव फलस्य साधकं भवति, परन्तु नित्यकर्मणः सर्वांगपूर्णानुष्ठानस्य विधानेऽपि यदि कयाचिद् बाधया सर्वाङ्गपूर्णकर्मणोऽनुष्ठानेऽशक्तिः स्याच्चेद् यावद्भिरङ्गैः सह प्रधानं कर्म

---

1. मुण्डके० 1/121
2. तै० सं० 2/3/9/2
3. तै० ब्रा० 2/1/5/6
4. मी० 3/3/9 भाष्योद्धृतम्।
5. द्र० - 'नित्यवीप्सयोः' अष्टा० 8/1
6. आप० श्रौ० सू० 10/2/1

सम्पद्येत, तावतैव तस्य कर्तव्यता पूर्यते। अतस्तत्र प्रयोगविधिरशक्यानंगान् नानुष्ठाने सङ्गृह्णाति। एतस्मादेव कारणात् कतिपय यागानां परित्यागेऽपि दोषो न भवति। एतस्मिन् विषये मीमांसायाम् –'**नित्ये यथा शक्त्यनुष्ठातुरप्यधिकाराधिकरणम्**[1]' द्रष्टव्यम्।

नित्यकर्मसम्बन्धे उक्ताधिकरणेनेदमपि विस्पष्टं भवति यन्नित्यकर्मणामनुष्ठाने विकलाङ्गानामप्यधिकारोऽस्ति। यथा – अन्धः पुरुषो यजमानेन क्रियमाणमाज्यावेक्षणं कर्म कर्तुं न शक्तः, शिष्टं याजमानं कर्म तु कर्तुं शक्नोत्येव। एवमेव पङ्गुर्विष्णुक्रमानुष्ठानव्यतिरिक्तं कर्म तु कर्तुं शक्नोत्येव। एतस्मात् कारणाद् अंगानां श्रौतकर्मण्यधिकारनिदर्शकानां वचनानां[2] तात्पर्यं काम्यकर्मविषयकमेव ज्ञेयम्।

उपर्युक्तेष्वेषु नित्य–नैमित्तिक–काम्यभेदभिन्नेषु यज्ञेषु नित्ययज्ञा एव श्रेष्ठतमा उक्ताः। यतः नित्ययज्ञास्तु निष्कामभावनयाऽनुष्ठीयन्ते। निष्कामकर्मणां महत्त्वमुपर्वणयता भगवता श्रीकृष्णेनोक्तम्–

**'ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा करोति यः।**
**लिप्यते न स पापेन पद्मपत्रमिवाम्भसा।।'**
**कायेन मनसा बुद्ध्या केवलैरिन्द्रियैरपि।**
**योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वात्मशुद्धये।।**
**युक्तः कर्मफलं त्यक्त्वा शान्तिमाप्नोति नैष्ठिकीम्।**
**अयुक्तः कामकारेण फले सक्तो निबध्यते।।[3]'**

एभिर्वचनैरिदं स्पष्टं यत् निष्कामकर्मणि प्रवृत्ताः मानवाः परमात्मानं प्राप्नुवन्ति, अन्ये च सकामयाजिनः कर्मफलैस्सह प्रतिबन्धिता एव भवन्ति। प्रतिबन्धितानां मुक्तिर्न सम्भवति। तस्मात् मुक्त्यर्थं निष्कामकर्मणोऽनुष्ठानं कर्तव्यमिति।

---

1. मीमांसायाम् 6/3/1/7
2. द्र० का० श्रौ० सू० 1/1/5
3. गीता 5/10–11–12

अथ पञ्चमोऽध्यायः

# ( क ) नित्यकर्माणि तेषामनुष्ठानस्यावश्यकता फलानि च

स्वाभाविकमप्रयत्नसाध्यमविशिष्टप्रयासाऽऽयामेन निरन्तरं श्वासप्रच्छ्वासादिवदनुष्ठीयमानं कर्म नित्यमित्युच्यते। अनया परिभाषया समस्तभौतिकजगति भूयमानं विविधं कर्म नित्यकर्मान्तर्गतमेव। इदमेव नित्यं कर्म वेदवेदाङ्गब्राह्मणारण्यकोपनिषदितिहासपुराणादिषु **'सात्त्विकयज्ञ'** नाम्ना व्याख्यातमस्ति। सात्त्विकयज्ञविषयेऽग्निपुराणे एवमुक्तम् -

**'यष्टव्यो विधिना यज्ञो निष्कामाय स सात्त्विकः।**
**यज्ञः फलाय दम्भात्मा राजसस्तामसः क्रतुः।।[1]'**

**गीतायाञ्च - 'अफलाकाङ्क्षिभिर्यज्ञो विधिदृष्टो य इज्यते।**
**यष्टव्यमेवेति मनः समाधाय स सत्त्विकः।।[2]'**

अर्थात् शास्त्रविधिपूर्वकं निष्कामभावनया यत्कर्म कर्त्तव्यमिति मत्वैव केवलं क्रियते तत् सात्त्विकमित्युच्यते। यथा - श्वासग्रहणं कर्म कर्तुं न किमपि विशिष्टमन्यत् क्रियते, तच्च जाग्रत् - सुषुप्त - स्वप्नावस्थायां स्वाभाविकतया फलकामनां विनैवाहर्निशं प्रचलति। एवमेव नित्यकर्म फलाकाङ्क्षादिभिर्विरहितं विशिष्टेन केनाप्युपायाभावेनानायासमेव भवति। एतदभिलक्ष्यैव भगवता प्रोक्तम् -

**'न हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत्।[3]'**

---

1. अग्निपुराणे 381/43
2. गीतायाम् 17/11
3. गीतायाम् 3/5

इत्यनेन वचनेन सन्ध्या – तर्पणं – बलिवैश्वदेवः, देवपूजनं, अतिथि-सत्कारः, जपः, तपः, कथाश्रवणम्, तीर्थयात्रा, अध्ययनाध्यापनम्, अशनं, पानं, शयनं, जागरणादिकं सर्वं नित्ययज्ञान्तर्गतं कर्म उच्यते। न केवलमेतदेवापितु जीवनं मरणञ्चापि यज्ञस्वरूपुक्तम्। भगवता श्रीकृष्णेन तु गर्भाधानं युद्धादिकमपि यज्ञरूपमित्युपपादयता धर्मसमन्वितानां समस्तानामपि कर्मणां यज्ञात्मकत्वं साधितम्। तद्यथा –

**'यथार्थात्कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः।[1]'**

अर्थान्मानवानामखिलानि कर्माणि यज्ञायैव भवितव्यानि। एवमुक्तविधिना मनुष्याणां धर्मसमन्वितानि समस्तान्यपि सत् कर्माणि यज्ञात्मकानि भवितुमर्हन्ति, परञ्च न तानि कर्माणि स्वेच्छाचारप्रेरितानि स्युः। यतस्तु शास्त्रानुकूलमनुष्ठेया एव यज्ञाः फलप्रदाः महत्त्वपूर्णाश्च भवन्ति।

हिन्दूधर्मशास्त्रे गृहस्थानां जीवनमपि यज्ञरूपमेवोक्तम्। यज्ञेऽस्मिन् पाणिगृहीता धर्मपत्नी आजीवनं भर्तुः सेवां, सहायतां, आज्ञापालनं च करोति। महाकविना कालिदासेन गृहस्थाश्रमे परिनिष्ठितयोः आदर्शपति-पत्न्योश्च रमणीयं चित्रणं समुपस्थापितं स्वकीये महाकाव्ये। तद्यथा–

**'विधेः सायन्तनस्यान्ते स ददर्श तपोनिधिम्।**
**अन्वासितमरून्धत्या स्वाहयेव हविर्भुजम्।।[2]'**

गृहस्थधर्मस्यादर्शस्वरूपो भगवान् श्रीरामः पितुर्दशरथस्याज्ञया चतुर्दशवर्षात्मकं वनवासं स्वीकृतवानासीत्, तस्य यज्ञस्य साङ्गोपाङ्ग-परिपूर्णतायैव सीतायाः वनवासोऽप्येकः महान्तो यज्ञ आसीत्। यज्ञमिमं हिन्दूसनातनधर्मावलम्बिनः न कदापि विस्मरिष्यन्ति।

एवमेव भगवता श्रीशंकरेण मातुः पार्वत्याः श्रीरामकथाश्रवणम्, भगवतः श्रीकृष्णस्य धर्मसंस्थापनार्थं गोपालनं साधूनामुद्धारः, मातुः पितुराचार्यस्य च सेवादिकं सर्वं कर्म यज्ञ एवोक्तम्। भगवान् श्रीरामः श्रीकृष्णश्च विष्णोरवतारभूतः। तयोरादर्शजीवनमवलोक्य यज्ञमयं जीवनं

---

1. गीतायाम् 3/9
2. रघुवंशे 1/56

जीवितुमस्माकं मनसि प्रेरणा जायते। शतपथ श्रुतौ '**यज्ञो वै विष्णुः**[1]' इत्युक्तम्। अनेन श्रौतवचनेनेदं स्फुटं भवति यत् भगवान् श्रीरामः श्रीकृष्णश्च स्वीयं सम्पूर्णं जीवनं यज्ञमयं यापितम्, तथैवास्माभिरपि यज्ञमयं जीवनं यापनीयमिति।

उपर्युक्तेनोदाहरणेन ब्रह्मचर्यं, भगवत्प्रार्थना, धर्मार्थबलिदानं, समाजसेवा, परोपकारः, भूदानं, गृहदानं, द्रव्यदानं, विद्यादानं, अन्नदानं, श्रमदानं, वाणीदानं, अभयदानं, अद्यत्वे रक्तदानं, सत्यव्रतानुष्ठानम्, अहिंसा व्रतानुष्ठानम्, समाजकल्याणादिकं विविधं कर्म यज्ञरूपमेवोक्तम्।

पुरुषस्य जीवनं निश्चितरूपेण यज्ञ एवास्ति। पुरुषस्य आयुषः प्रथमचतुर्विंशतिवर्षात्मकः कालः प्रातः सवनम्, पञ्चविंशतिवर्षादारभ्य अष्टषष्टिवर्षस्यायुषं यावन्माध्यन्दिनं सवनम्, अष्टषष्टित आरभ्य षोडशोत्तरशतवर्षपर्यन्तस्यायुषं यावत्तृतीयं सवनमित्युच्यते। एवमुक्तप्रकारेण पुरुषस्यायुषः (116) षोडशोत्तरशतवर्षपर्यन्तमनुष्ठीयमानः सवनत्रयात्मकः सोमयागः श्वासप्रच्छ्वासादिना केनापि विशिष्टप्रत्यनेन बिना स्वाभाविकतया नित्यत्वेनाहर्निशं प्रचलति। तदुक्तं छान्दोग्ये -

**'पुरुषो वाव यज्ञस्तस्य यानि चतुर्विंशति वर्षाणि तत्प्रातः सवनं चतुर्विंशत्यक्षरा गायत्रं प्रातः सवनं तदस्य वसवोऽन्वायत्ताः प्राणा वाव वसव एतेहीदं सर्वं वासयन्ति। अथ यानि चतुश्चत्वारिंशद्वर्षाणि तन्माध्यन्दिनं सवनं चतुश्चत्वारिंशदक्षरा त्रिष्टुप् त्रैष्टुभं माध्यन्दिनं सवनं तदस्य रूद्रा अन्वायत्ताः प्राणा वाव रूद्रा एते हीदं सर्वं रोदयन्ति। अथ यान्यष्टाचत्वारिंशद्वर्षाणि तृतीयसवनमष्टाचत्वारिंशदक्षरा जगती जागतं तृतीयं सवनं तदस्यादित्या अन्वायत्ताः प्राणा वावादित्य एते हीदं सर्वमाददते।। एतद्ध स्म वै तद्विद्वानाह महिदास ऐतरेयः स किं म एतदुपतपसि योऽहमनेन न प्रेष्यामीति स ह षोडशं वर्षशतमजीवत्प्रह षोडशं वर्षशतं जीवति य एवं वेद।।**[2]'

---

1. श० प० ब्रा० 1/1/2/13
2. छा० उप० 3/16

अत एतेनैव सिद्धान्तेन वेदेष्वेवं प्रतिपादितमस्ति –'**आयुर्यज्ञेन कल्पताम्**[1]' इति। यज्ञात्मकेन कर्मणा आयुषः उपभोगः मानवैः कर्त्तव्यः। यज्ञाद्रहितं कर्म न कदापि मनुष्येणाचरणीयम्। अत एव शुक्लयजुस्संहितायाः प्रथमेऽध्याये प्रथमे मन्त्रे '**श्रेष्ठतमाय कर्मण**[2]' इत्युक्तं तथा चान्तिमाध्यायस्य द्वितीये मन्त्रे '**कुर्वन्नेवेह कर्म्माणि**[3]' इत्युद्घोषितम्। श्रेष्ठतमं कर्मणः व्याख्यानावसरे, शतपथश्रुतिरेवं प्रतिपादयति –'**यज्ञो वै श्रेष्ठतमं कर्म**[4]' तानि श्रेष्ठतमानि कर्माणि कुर्वन् अस्मिन् जगति जीवितुमिच्छेत् नान्येन विधिनेति सम्पूर्णेऽस्मिन् कर्मकाण्डप्रतिपादके शुक्लयजुर्वेदे निर्दिष्टम्। तस्मात् पुरुषस्य समस्तं कर्म यज्ञरूपमेवैतद् प्रतिपादयती छान्दोग्योपनिषच्छ्रुत्यवादि –

**'पुरुषो वाव गौतमाग्निस्तस्य वागेव समित्प्राणो धूमो जिह्वार्चिश्चक्षुरङ्गाराः श्रोत्रं विस्फुल्लिङ्गाः। तस्मिन्नेतस्मिन्नग्नौ देवा अन्नं जुह्वति तस्मा आहुते रेतः सम्भवति।।'**

**'योषा वाव गौतमाग्निस्तस्या उपस्थ एव समिद्यदुपमन्त्रयते स धूमो योनिरर्चिर्यदन्तः करोति तेऽङ्गारा अभिनन्दा विस्फुल्लिङ्गाः।। तस्मिन्नेतस्मिन् अग्नौ देव रेतो जुह्वति तस्या आहुतेर्गर्भः संभवति।।[5]'**

अनेन श्रौतवचनेन गर्भाधानं पुरुषस्योत्पत्तिप्रक्रिया च यज्ञरूपत्व-मुक्तम्। इदानीं भोजनयज्ञविषये किञ्चिदुच्यते। उक्तं हि यथा गीतायाम् –

**'अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः।**
**प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम्।।[6]'**

अर्थादस्माकं शरीरे वैश्वानरोऽग्निस्तिष्ठति तस्मै वैश्वानराग्नये वयं प्रतिदिनं भोजनद्रव्यस्याहुतिं दद्मः। अग्नौ सोमद्रव्यस्याहुतिरेव यज्ञ उक्तः।

---

1. शु० य० सं० 9/21; 18/29, 22/33
2. शु० य० सं० 1/1
3. शु० य० सं० 40/2
4. श० प० ब्रा० 1/7/1/5
5. छान्दोग्योपनिषदि 5/7–8
6. गीता 15/14

अनया आहुत्या जीवनयज्ञः प्रचलति। तदुक्तं कात्यायनेन – '**द्रव्यं देवता त्यागो यागः**[1]' अनेन सूत्रेणेदं स्पष्टं यत् यत्र-यत्र देवतामुद्दिश्य सोमादि-द्रव्याणामाहुतिर्दीयते तत्र-तत्र यज्ञः संतिष्ठते। अस्माकं शरीरे वैश्वानरोऽग्निर्देवता तस्यै देवतायै भोजनद्रव्यरूपस्य सोमद्रव्यस्याहुतिर्दीयते तेन चायं जीवनयज्ञः सन्तिष्ठते। यज्ञोऽयं नित्यं नैरन्तर्येण सर्वप्राणिषु स्वाभाविकतया प्रचलति। आत्मनि भूयमानः यज्ञ आध्यात्मिकः, भौतिकपदार्थेषु-लता-गुल्म-वृक्ष-वनस्पत्यौषध्यन्नादिषु सम्पद्यमानः यज्ञ आधिभौतिकस्तथा सूर्य -चन्द्राग्निदेवतासु सम्पद्यमानः यज्ञ आधिदैविक इत्युच्यते। इमे आधिदैविंकाधिभौतिकाध्यात्मिकयज्ञाः नित्या उच्यन्ते।

### नित्ययज्ञानामनुष्ठानस्यावश्यकता

नित्ययज्ञानामनुष्ठानं विश्वकल्याणाय सर्वजनहिताय स्वात्मसंरक्षणाय च क्रियते। अत्र प्रश्नोत्पद्यते यत् भोजनस्य का आवश्यकता? अस्य प्रश्नोस्योत्तरं कश्चिदपि जन एवमेव प्रकटयति क्षुधाशान्तय इति। परं क्षुधाशान्तिस्त्वत्र दृष्टं प्रयोजनम्। अदृष्टप्रयोजनसिद्धिस्तु काचिदन्येव। तदुक्तं स्कन्दपुराणे – '**कलावन्नगतप्राणाः लोकाः स्वल्पायुषस्तथा।**[2]' अर्थात् कलौ प्राणिनां प्राणाः अन्नगताः सन्ति। अन्नस्य भोजनेन क्षुधाशान्त्या सह प्राणतत्त्वस्य रक्षणमपि भवति। प्राणं ह्यस्माकं मुख्यमवलम्बनम्। प्राणं बिना न कश्चित् शरीरधारी क्षणमपि स्थातुं शक्नोति। तस्मात् प्राणस्य रक्षणमस्माकं मूलभूतं मुख्यं कर्म। तत्कर्मसम्पादनायान्नस्य भोजनं प्राणिभ्य अत्यावश्यकम्। एतत् कर्म तु स्वाभाविककर्मस्वागच्छति। स्वाभाविककर्म एव सहजकर्मेत्युच्यते। तदुक्तं भगवता श्रीकृष्णेन –

'**सहजं कर्म कौन्तेय सदोषमपि न त्यजेत्।**[3]' सहजे कर्मणि यदि कश्चिद्दोषोऽपि स्याच्चेत्तथापि तस्य परित्यागः न कर्त्तव्यः। यतस्तु तत्परित्यागेन महान् हानिर्भवितुमर्हति। यदि वयं भोजनयज्ञास्यानुष्ठानं

1. का० श्रौ० सू० 2/1/2
2. स्कन्दपुराणे, रेवाखण्डे, सत्य ना० व्र० कथायां 1/9
3. गीता 18/48

परित्यजामश्चेदस्माकं प्राणरक्षा न भविष्यति, प्राणं बिना शरीरस्य स्थितिरसम्भवा। शरीरे स्थिते सत्यस्माकमन्यत् कर्म सम्पत्स्यते। अतः शरीररक्षणमावश्यकमिति मत्वा भोजनयज्ञस्त्वावश्यकतया सम्पादनीय एव। अत्रेवमुच्यते यत् कथं भोजनयज्ञस्य नित्यत्वमुच्यते? चिन्तयामस्तावत् बुभुक्षोत्पादनाय न वयं किमपि विशिष्टं कर्म कुर्मः। सा च स्वयमेवोदरस्यान्त उत्पन्ना भवति। स्वयमाविर्भूतायै क्षुधायै स्वाभाविको यज्ञोऽनुष्ठीयते। तस्मात् स्वाभाविककर्मसम्पादनाय नित्ययज्ञस्यावश्यकत्वं सिध्यति। एवमेव सूर्यचन्द्राग्न्यादिषु देवतासु, लता - गुल्म - वृक्ष - वनस्पत्यौषध्यन्नादिषु भौतिकपदार्थेषु चावगन्तव्यम्। तस्मात् सिद्धमेतत् यद्दृष्टादृष्टप्रयोजनयोः सम्पादनाय नित्ययज्ञानामनुष्ठानमावश्यकं भवति।

## नित्ययज्ञानां फलानि

यथा जलपानेन पिपासाशान्तिः, भोजनेन च क्षुधाशान्तिः स्वाभाविकी तथैव नित्ययज्ञानामनुष्ठानेन नैत्यकं फलं स्वाभाविकतया लभ्यते। पूर्वं यदुक्तम् – '**अग्निहोत्रादारभ्य सोमान्ताः नित्ययज्ञाः प्रकीर्तिताः।**' इत्यनेन सिद्धान्तवाक्येन 'यावज्जीवनमग्निहोत्रं जुहुयात्, यावज्जीवदर्शपूर्णमासाभ्यां यजेत, यावज्जीवमग्निष्टोमेन यजेत' इत्यादयो आजीवनमनुष्ठेया यज्ञा सम्बद्धाः। आजीवनमनुष्ठानस्यात्र कोऽभिप्रायः? तात्पर्यमिदमस्ति यत् कामनाविशेषाय क्रियमाणस्य यज्ञस्य फलप्राप्त्यनन्तरं पूर्णता मन्यते। सा कामना तच्च फलं लौकिकं तस्माल्लौकिकफलप्राप्तेरनन्तरं काम्यकर्मणां सम्पूर्णता भवति, परमत्र नित्ययज्ञे न काचिल्लौकिकी कामना युक्ता भवति। अत एवैषां यज्ञानां पूर्तिः जीवनयज्ञपूर्तिना सहैव भवति। एषामुपर्युक्तानां नित्ययज्ञानां फलानि 'स्वर्गप्राप्तिरुक्तानि। स्वर्गप्राप्तिस्तु अस्माल्लोकात्प्रेत्य एव भवति। अस्मिन् मर्त्यलोके स्थितः सन् न कश्चिदपि जीवः स्वर्गप्राप्तिरूपादृष्टफलप्राप्तौ समर्थः। तस्मादत्र यावत्तस्य स्थितिर्भवति तावत् फलप्राप्तेरभावात् आजीवनमस्यानुष्ठानं विधीयते। दर्शनशास्त्रकारा एवं प्रवदन्ति –'**मरणान्मुक्तिः**' इति। मृत्युप्राप्तेरनन्तरं जीवो मुक्तिं प्राप्नोति। मरणं जीवनस्यान्तिमं लक्ष्यम्। मृत्युमवाप्य मुक्तिर्लभ्यत एषः सर्वमान्यः

सिद्धान्तः। नित्ययज्ञानां फलानि मोक्षादीनि नात्र विषयवासनायुते संसारे कथमपि लब्धुं शक्यते तस्माद्यावज्जीवं नित्ययज्ञानामनुष्ठानं विहितमिति मामकीनं मतम्।

नित्ययज्ञानां फलानि विषये मुण्डकोपनिषद्येवमुक्तम् -

**'यस्याग्निहोत्रमदर्शपौर्णमासचातुर्मास्यमनाग्रयणमतिथिवर्जितञ्च। अहुतमवैश्वदेवमविधिना हुतमासप्तमांस्तस्य लोकान् हिनस्ति।।[1] 'इति।**

अर्थात् यः पुरुषोऽग्निहोत्रं सम्यङ्नानुतिष्ठति तथा च दर्श-पौर्णमास-चार्तुर्मास्य- शरदर्तुकर्त्तव्यमतिथियज्ञः, दानम्, वैश्वदेवः प्राणिमात्रस्य यथोचितेनान्नदानेन सेवादिकञ्च न करोति उतवा शास्त्रविरुद्धमाचरति तस्य भूर्भुवः स्वरादीनां सप्तलोकानां हननं भवति। फलतः स तलातलवितलादिषु अधोमुखेषु लोकेषु कीटपतङ्गादिषु योनिषु जन्म गृह्णाति। यः पुमान् यज्ञादिकं दानादिकञ्च विधिपूर्वकमाचरति स उपर्यवस्थितान् भूरादीन् सप्तलोकानाप्नोति।

**'एतेषु यश्चरते भ्राजमानेषु यथाकालं चाहुतयो ह्याददायन्।**
**तन्नयन्त्येताः सूर्यस्य रश्मयो यत्र देवानां पतिरेको अधिवासः।।[2]'**

अर्थात् सम्यक् प्रदीप्तायामस्यामग्नेर्ज्वालारूपजिह्वायां यः पुमान् श्रद्धया जुहोति, यथोचिते काले प्रदत्ता आहुतयः सूर्यरश्मयो भूत्वा तं यजमानं भूर्भुवः स्वरादिषु लोकेषु नयन्ति यत्रेन्द्रो विराजते।

**'एह्येहीति तमाहुतयः सुवर्चसः सूर्यस्य रश्मिभिर्यजमानं वहन्ति।**
**प्रियां वाचमभिवदन्त्योऽर्चयन्त्य एष वः पुण्यः सुकृतो ब्रह्मलोकः।।[3]'**

ताः प्रदीप्ताहुतयः सूर्यरश्मिभिस्सह प्रकाशितास्सन्तः मधुरेण वाण्या यजमानमाह्वयन्ति, तस्य पूजां स्तुतिं च कुर्वन्त्यस्तं ऊर्ध्वं नयन्ति कथयन्ति च यत् एषस्तव पुण्यात्मकः मङ्गलमयः ब्रह्मलोकः स्वर्गलोकोऽस्ति। इति।

---

1. मुण्डके 1/2/3
2. मुण्डके 1/2/5
3. मुण्डके 1/2/6

# (ख) नैमित्तिककर्माणि, तेषामनुष्ठानेन कीदृशं फलं लभ्यत इति विश्लेषणम्

केनापि निमित्तविशेषेणानुष्ठीयमाणं कर्म नैमित्तिकमित्युच्यते। यथाह्युपनयनम्, विवाहसंस्कारादीनि कर्माणि। श्रौतक्रियासु च **'यस्याहिताग्नेरग्निर्गृहान् दहेत् सोऽग्नये क्षामवतेऽष्टाकपालं पुरोडाशं कुर्यात्।**[1]' इत्यादिनिमित्तसत्वे अग्निहोत्रादिषु नित्ययागेष्वपि नैमित्तिकानि कर्माण्यनुष्ठीयन्ते। प्रायश्चित्तविधानं तु सर्वथा नैमित्तिकमेव।

यद्यपि मन्त्रब्राह्मणश्रौतसूत्रेषु नैमित्तिककर्माणि न पृथक्तया क्वचिद्वर्णितानि, नित्यकाम्यकर्मणोः प्रकरणान्तर्गतवर्णितत्वात्तथाप्यत्र प्रसङ्गानुसारं यथोपलब्धप्रमाणैः नैमित्तिककर्मणां स्वतन्त्रतया चर्चा क्रियते। यथा –

**'आग्नेयीष्टावग्निदेवतानिमित्तमष्टाकपालं पुरोडाशं निर्वपेत्**[2]' अत्रोक्ता आग्नेयीष्टिरपि काम्येष्टिरेव, किन्तु अत्राग्निनिमित्तम्, अष्टाकपाल-पुरोडाशस्य विधानं नैमित्तिकत्वं निर्दिशति। एवमेवाधिक श्रीकामेष्टौ इन्द्रदेवतानिमित्तमेकादशकपालेषु पुरोडाशस्य विधानमुक्तम्।[3] गृहदाहनिवृत्त्यर्थं महामारीनिवृत्तिनिमित्तञ्च **'अग्नये क्षामवत्ते पुरोडाशमष्टा-कपालं निर्वपेत्।' 'इन्द्रायानृजवे पुरोडाशमेकादशकपालं निर्वपेद् ग्रामकामः।**[4]' **इन्द्राय प्रदात्रे पुरोडाशमेकादशकपालं निर्वपेद्**[5]' इष्टिरियं कस्मैचिद् दत्तद्रव्याणां प्राप्तिनिमित्तं क्रियते। भिक्षायां स्वाभिलषितपदार्थानां प्राप्तिनिमित्तं **'वैश्वानरं द्वादशकपालं निर्वपेत्।**[6]' ऐश्वर्यकामनया

1. तै० सं० 2/2/2
2. का० श्रौ० सू० 4/5/15
3. तै० सं० 2/2/8
4. तै० सं० 2/2/8
5. तै० सं० 2/2/8
6. तै० सं० 2/2/6

भूतिकामेष्टिः क्रियते। अस्यामिष्टौ **अग्नये जातवेदसे पुरोडाशमष्टाकपालं निर्वपेद् भूतिकामः**[1]।' यो ह्याहिताग्निः महद्यागमनुष्ठातुमिच्छेत्, परं तत्कर्तुमसमर्थः स्याच्चेत् स महायज्ञकामेष्टेरनुष्ठानं कुर्यात्। तत्र **'इन्द्रयार्काश्वमेधवते पुरोडाशमेकादशकपालं निर्वपेद् यद्यमहायज्ञो नोपनयेत्।**[2]' ज्योतिष्टोमादियागानुष्ठानकामनया यज्ञकामेष्टिमाचरेत्। तत्रा'**ग्नावैष्णवमेकादशकपालं निर्वपेत्।**[3]' रसकामनया रसकामेष्टि-मनुतिष्ठेत्तत्रा'**ग्नये रसवतेऽजक्षीरं चरुं निर्वपेत्**'[4] कान्तिकामनया रूक्कामेष्टिः कुर्यात्। '**रूक्मतेऽग्नये पुरोडाशमष्टाकपालं निर्वपेत्।**[5]' वसुकामेष्टौ '**वसुमते अग्निनिमित्तमष्टाकपालं पुरोडाशं निर्वपेत्।**[6]' **शत्रुघ्नीष्टौ ऐन्द्रबार्हस्पत्यं चरुं निर्वपेद् राजन्ये जाते।**[7] अन्वारम्भणीयेष्टौ '**आग्नाविष्णु देवतानिमित्तमेकादशकपालं, पुरोडाशं, सरस्वत्यै चरुं, द्वादशकपालं सारस्वतं चरुं कृत्वा दक्षिणायां पष्ठौही गौर्दद्यात्।**[8]' आदित्येष्टावदितिदेवतानिमित्तं चरुं निर्वपेद्, अन्वाहार्यो दक्षिणा च।[9] वैमृधीष्टौ '**इन्द्राय विमृध एकादशकपालः पौर्णमासमनु।**[10]' अन्वाहार्यो दक्षिणा च।

आहिताग्नेः मायात्मकस्य भौतिकशरीरस्य यदाऽन्तः स्यात्तदा तन्निमित्तं यत्क्रियते साऽन्त्येष्टिरिच्युच्यते। आहिताग्नेः पुरुषस्य पत्न्या वा उभयोः कस्यापि प्रथमं मृत्युः भवेच्चेदिदं विधीयते। विधिपूर्वकमस्या अन्त्येष्टिविधेरनुष्ठानेन आहितग्निः स्वर्गमाप्नोति। तदुक्तं शतपथश्रुतौ- '**स्वर्गे**

---

1. तै० सं० 2/2/3
2. तै० सं० 2/2/7
3. तै० सं० 2/2/9
4. तै० सं० 2/2/4
5. तै० सं० 2/2/3
6. तै० सं० 2/2/4
7. आप० श्रौ० सू० 19/27/22
8. का० श्रौ० सू० 4/5/21
9. का० श्रौ० सू० 4/5/25
10. का० श्रौ० सू० 4/5/23

**लोके जितो भवति।**[1]' अर्थात् स्वर्गे लोके सुरक्षितं स्थानं प्राप्तिनिमित्तमियमिष्टिः क्रियते।

**प्रायश्चित्तम्**

अकरणम्, न्यूनकरणम्, अतिरिक्तकरणम्, अयथाकरणम्, इत्येवं चतुर्विधकर्मण उपपाते (विनाशे) सति यस्मिन्काले विहितकर्मणो - अन्यथाभावो जायते तदैव तदन्यथाभावनिमित्तं प्रायश्चित्तं कुर्यात् न कर्मसमाप्तौ। भिन्ने जुहोति, स्कन्ने जुहोति इति निमित्तसप्तमी। नैमित्तिकस्य च निमित्तकालता न्याय्या।

भिन्ने जुहोतीत्यादिकं नैमित्तिकस्य विधानमात्रमेव, न स्कन्दनादिकाल-विशिष्टनैमित्तिकविधिः। कुतः? अकालशब्दात्। यथोक्तं कात्यायनेन - '**चोदना वाऽकालशब्दात्**[2]' इति। न ह्यत्र कालवाचकः शब्दोऽस्ति। स्कन्दनकाले भेदनकाले इत्येवम्। तेनागन्तूनामन्तेऽभिनिवेशो भवतीति न्यायेन कर्मणोऽन्ते नैमित्तिकं विधेयम्। तथा सिद्धान्तः - '**कालो वा प्रत्ययात्**[3]' इति। काल = निमित्तकाल एव नैमित्तिकस्य स्यात्। कुतः? प्रत्ययात् = प्रतीयते हि निमित्तकालता नैमित्तिकस्य। यतः प्राक् निमित्तान्नैमित्तिकं न भवति। निमित्ते जाते नैमित्तिकं भवति। तेन निमित्तकालतैव नैमित्तिकस्य। अपुरुषसंबद्धोपपाते जनमरण - गेहदाहादौ तु न तत्कालनियमः।

कर्मोपपात इति सर्वत्रानुवर्तते। यत्र निमित्तिमुद्दिश्य नैमित्तिकं नोक्तं तत्र महाव्याहृतिभिर्होमो नैमित्तिको ब्रह्मकर्तृको भवेत्। हौत्रिके = ऋग्वेद-विहितकर्मणो विनाशे नैमित्तिकान्तरस्थानादेशे '**ॐ भूः स्वाहेति**' चतुर्गृहीतं ब्रह्मा जुहुयात्। अग्निहोत्रादौ ब्रह्मणोऽभावे यजमानः। सब्रह्मके कर्मणि ब्रह्मवरणात्प्राङ्निमित्ते जाते ब्रह्माणं समन्त्रकं वृत्वा तेन होमः

---

1. श० प० ब्रा० 12/2/8/8
2. का० श्रौ० सू० 25/1/2
3. का० श्रौ० सू० 25/1/3

कारयितव्यः। अब्रह्मके तु अध्वर्य्वादिरेव कर्ता। सोमे च कालाहुतिभिरस्य समुच्चयः। उभयोरप्यादिष्टत्वात्। अत्राग्निर्देवता। अध्वर्युवेदविहितोपपाते '**ॐ भुवः स्वाहे**'ति दक्षिणाग्नौ जुहुयात्। सोमयागे यजुर्वेदविहितकर्मणो विनाशे भुवः स्वाहेत्याग्नीध्रीये जुहुयात्। आग्नीध्रीयोत्पत्तेः प्राग्दक्षिणाग्नावेव। न तदर्थमाग्नीध्रीयोत्पत्तिः। अत्र वायुर्देवता। सामवेदविहितकर्मणो विनाशेऽनादेशे '**ॐ स्वः स्वाहे**'ति। अत्र सूर्यो देवता। एतत् सर्वं पूर्वमुक्तम्।

## स्मार्तस्य कर्मणो विनाशे प्रायश्चित्तम्

अविज्ञातं स्मार्तं कर्मोच्यते। नहि तज्ज्ञायते क्रियाग्वैदिकं याजुर्वैदिकं सामवैदिकमिति। तथा यज्ञोपवीतिना बद्धशिखिना पवित्रपाणिनेत्वेवमादि च। तदपचारे प्रतिमहाव्याहृतिं हुत्वा सर्वाभिर्व्याहृतिभिश्चतुर्थी सर्वप्रायश्चित्तं चेत्याहुतिनवकमाहवनीये जुहुयात्। आवसथ्यकर्मण्यपचारेऽपीदमेव प्रायश्चित्तम्। पितृयज्ञे च यज्ञोपवीतित्वावसरे निमित्ते जाते नैमित्तिकहोमोऽपि यज्ञोपवीतिना कार्यः। प्राचीनावीतित्वावसरे तु प्राचीनावीतिना। पितृयज्ञे भुव इति त्वन्न इत्यादिहोमश्च दक्षिणाग्नावेव, '**दक्षिणाग्निराहवनीयवत्**[1]' इति सूत्रेणाहवनीयकार्यस्य दक्षिणाग्नौ विधानात्। अवभृथौ चाप्स्वेव सर्वप्रायश्चित्तहोमः। शतरुद्रिये तु परिश्रित्सु। त्र्यम्बकेषु चतुष्पथाग्नौ। भुव इति होमस्तु अवभृथादौ दक्षिणाग्नावेव।

## आदिष्टप्रायश्चित्तम्

अग्निहोत्रार्थं दुह्यमानाया गोरुपवेशने प्रायश्चित्तद्वयस्य विधानं कुर्वता कात्यायनेनोक्तम् – '**अग्निहोत्री चेद्दुहानोपविशेद्यजुषोत्थापनमेकऽ – 'उदस्थाद्देव्यदितिरायुर्यज्ञपतावधादिन्द्राय कृण्वती भागं मित्राय वरुणाय चेति।**[2]' अग्निहोत्रशब्देनात्राग्निहोत्रसाधनं पयोऽभिधीयते। तद्यस्यां गवि विद्यते सेयमग्निहोत्रिणी इति प्राप्ते इति प्रत्ययलोपश्छान्दसः। सा

---

1. का० श्रौ० सू० 5/8/6
2. का० श्रौ० सू० 25/1/13

गौर्दुह्यमाना सती उपवेशनं कुर्याद्यदि, तदा तस्या उपविष्टाया गोरेके उदस्थादिति यजुषा उत्थापनमिच्छन्ति। तां गामुत्थाप्य दुग्ध्वा तस्मै ब्राह्मणाय दद्यात् यं ब्राह्मणं यजमानोऽभ्यागमिष्यन्न स्यात्। यः पुनर्यजमानगृहे नागच्छतीत्यर्थः।

यस्य गृहे कार्यार्थमपि यजमानो गमिष्यन्न भवेत्तस्मै दद्यादिति याज्ञिकाः। द्वेष्याय दद्यादिति शांखायनः। ततोऽग्निहोत्रहोम इत्येकः पक्षः।

अथवा दण्डेन जघनप्रदेशे ताडयित्वा तूष्णीमेवोत्थाप्याग्निहोत्रार्थं दुहीत। अस्मिन् पक्षे विशेषमाह –'**अदानं च**[1]' अर्थाद्दण्डेनोत्थापित्ताया गोर्दानं च न कार्यम्। '**अदुहानायामन्याम्**[2]' प्रस्तुताया गोरदोहे सत्युपपातत्वादनादिष्टहोमः प्राप्नोत्यन्यस्या दोहनञ्च। अतः प्रायश्चित्तव्युदासार्थमिदमुक्तम्।

अग्निहोत्री गौर्दुहाना शब्दं कुर्याच्चेत्तदा तृणान्याच्छिद्य ग्रासयेत्। ततस्तामेव दुग्ध्वा होमः।'**तस्यै पयसा जुहोति**[3]' दोहनकाले शब्दं कृतवत्या गोः पयसा जुहुयात्। प्रायश्चित्तविधानेन दुष्टमेतदिति मत्वा नं परित्यजेत्।

## रुधिरदोहे प्रायश्चित्तम्

स्तनेभ्यो लोहितस्रवणे दक्षिणाग्निं कटवस्त्रादिनाऽऽवृतं कृत्वा व्युत्क्रामतेति प्रैषमुक्त्वा गृह्यजनान् गृहाद्बहिर्निष्काश्य दक्षिणाग्नेरेवोष्णे भस्मनि दोहनपात्रेणैव लोहितस्य **रुद्राय स्वाहेति** होमं कृत्वा यमनभ्यागमिष्यन्स्यात्तस्मै लोहितदोहिनीं गां दद्यात्। ततो गवान्तरपयसाऽग्निहोत्रहोमः।

'**हौम्यं गवि सद्रौद्रम्**[4]' इति कात्यायनवचनादिदं विस्पष्टं यद्धोमद्रव्यं गवि स्थितमेव ऋषभाक्रमणामेध्यभक्षणादिना यदि दुष्ट भवेत् तदा न दुह्यात्,

---

1. का० श्रौ० सू० 25/1/16
2. का० श्रौ० सू० 25/1/17
3. का० श्रौ० सू० 25/2/1
4. का० श्रौ० सू० 25/2/3

किन्तु रुद्र एतत्ते पय इत्यतिदेशं कुर्यात्। प्रमादाद् दुग्धं चेद्रुद्राय स्वाहेति जुहुयाद्दोहनपात्रेणैव। इत आरभ्य हुतमैन्द्रम् इत्येतदन्तं सर्वेषु निमित्तेषु विनष्टस्य पयसो होमममतिदेशं वा कुर्यात्। होमासंभवे त्वतिदेश एवेति। होमस्त्वन्येन शुद्धेन पयसा कार्यः।

'**उपसृष्टं वायव्य**'[1]मित्येतेन सूत्रेण वत्से पिबति दुग्धे प्रायश्चित्तविधानमेवमाह – वत्सस्य गोस्तनसम्बन्धावसरे गवि स्थितं पयो दुष्येत चेद् वायो एतत्ते पय इत्यतिदिशेत्। दुह्यमाने पयसि विनष्टे सति अश्विभ्यां स्वाहेति होमः, अश्विनावेतत्ते एतत्ते पय इत्यतिदेशो वा। एवमग्रेऽपि होमोऽतिदेशो वा कार्यः। इतः प्रभृति हुतमैन्द्रम् इत्यन्तस्य अमेध्यमलकेशकीटादिपातादिना विनाशो बोध्यः। अधिश्रयणात्प्राग्दुग्धं पयो विनष्टं चेत्सौम्यं स्यात्। अग्नावधिश्रितं पयो दुष्टं चेत् वरुणाय स्वाहेति होमोऽतिदेशो वा। तापेन स्थाल्यामूर्ध्वं गच्छत् पयो विनष्टं चेत् पूष्णे जुहुयात्। स्थालीतोऽतितापेन पयः स्रंसमानं दुष्येत् चेत् मरुद्देवताकं होमं कृत्वाऽन्येनाग्निहोत्रहोमः। उपरि जातबुद्बुदं पयो दुष्येत चेत्सरस्वते स्वाहेति। उपशान्तेषु विन्दुषु दुष्टं चेत् मित्राय स्वाहेति हुत्वाऽन्येनाग्निहोत्रहोमः। सवितृदेवत्यं भवति। अन्येनाग्निहोत्रहोमः। त्रिरुद्वासनोत्तरकालं दुष्टे पयसि अदित्यै हुत्वाऽन्येनाग्निहोत्रं जुहुयात्। अग्निहोत्रहवण्यां स्रुवेणोन्नीयमानं पयो नष्टं चेद्वैश्वदेवं स्यात्। स्रुचि गृहीते पयसि विनष्टे बृहस्पतये स्वाहेति होमः। आहवनीयं प्रति होमाय नीयमानं पयो धात्रे जुहुयात्। आहवनीयं प्रति नयनोपक्रान्तं कियति मार्गे चालितमर्द्धमार्गात्प्राग्विनष्टं चेद् विश्वकर्मणे स्वाहेति। गार्हपत्याहवनीययोर्मध्यगतं पयो विनष्टं चेद् वैश्वानराय स्वाहेति होमः। होमाय समीपं प्राप्तं चेद्दुष्यति तदा द्यावापृथिवीभ्यां स्वाहेति। होमात् प्रागग्निविनाशे पूर्वाहुतिरिन्द्राग्न्योः सम्बन्धिनी भवेत् तदा इन्द्राग्निभ्यां स्वाहा, इन्द्राग्नी एतत्ते पय इत्यतिदेशो वा कार्यः। पुनश्चतुर्गृहीतेन पूर्वाहुतिः। सकृद्गृहीतेनेति संप्रदायः। प्रागुत्तराहुत्तेर्विनष्टं चेत् प्रजापतिसम्बन्धिनी

1. का० श्रौ० सू० 25/2/4

उत्तराहुतिः कार्या। पुनश्चतुर्गृहीतेनोत्तराहुतिः। सकृद्गृहीतेनेति सम्प्रदायः। होमानन्तरं प्राग्भक्षाद्विनष्टं चेत् इन्द्राय स्वाहेति होमः। दधियवाग्वादिद्रव्यहोमपक्षे चैतानि प्रायश्चित्तानि।[1]

**'हौम्यं गवि सद्रौद्रम्'** इत्यादिसूत्रप्रतिपादिते यस्मिन्यस्मिन् काले दुग्धस्य विनाशस्तत्तद्देवत्यं होमं कृत्वा, रूद्रादिदेवतोद्देशेन गवि स्थितं पयोऽतिदिश्य वाऽन्येन शुद्धेन पयसा नित्याग्निहोत्रहोमं कुर्यात्। तण्डुलाज्ययवागूदध्यादिषु होमद्रव्येषु विनष्टेष्वपि अमुक एते ते तण्डुलाः, एतत्ते आज्यम्, एषा ते यवागूः, एतत्ते दधि इत्यादिप्रयोगेण तान्येव प्रायश्चित्तानि यथासंभवं कार्याणि।

एवमेवान्यत्रोपपातेष्वपि विविधानि प्रायश्चित्तान्युक्तानि तेषामत्र निदर्शनान्येव प्रस्तूयन्ते। तानि यथा –

1. हविः स्कन्दने प्रायश्चित्तम्। 2. स्थालीभेदे तदधोमुखीभावे च प्रायश्चित्तम्। 3. दर्शपूर्णमासादौ हविषि स्कन्ने प्रायश्चित्तम्। 4. सोमे हविषि स्कन्ने प्रायश्चित्तम्। 5. अग्निहोत्रे हविषि स्कन्ने प्रायश्चित्तम्। 6. प्रथमाहुत्यनन्तरमाहवनीयानुगमने प्रायश्चित्तम्। 7. त्रिवारमुद्धृतस्याप्याहवनीयस्यानुगमने प्रायश्चित्तम्। 8. गार्हपत्यानुगमने प्रायश्चित्तम्। 9. त्रिराहृतस्य दक्षिणाग्नेरनुगमने प्रायश्चित्तम्। 10. भ्रान्त्याऽऽहवनीयस्योद्धरणे प्रायश्चित्तम्। 11. गृहीतानुंगमने प्रायश्चित्तम्। 12. अनुद्धृतेष्वग्निषु सूर्योदये जाते प्रायश्चित्तम्। 13. आहवनीयेऽनुद्धृते सूर्योदये जाते प्रायश्चित्तम्। 14. मथ्यमानस्याग्नेर्जन्मनोऽसंभावनायामुद्धरणकाले समागते कल्पाः। 15. आहवनीयेऽनुद्धृते सूर्योदये जाते प्रायश्चित्तम्। 16. पूर्वमेवोद्धृतेष्वग्निषु अनुदितहोमपक्षे कृते सूर्योदये जाते प्रायश्चित्तम्। 17. एकैकहविर्विनाशे प्रायश्चित्तम्। 18. स्तोत्रशस्त्रविपर्यासे स्वजनमरणे च प्रायश्चित्तम्। 19. व्रतदिने मांसादिसेवने अश्रुपाते च प्रायश्चित्तम्। 20. आहवनीयादीनां लौकिकाग्निसंसर्गे प्रायश्चित्तम्। 21. आहवनीयादीनां परस्परं मिश्रणे प्रायश्चित्तम्। 22. दावाग्निनाऽऽहवनीयादीनां मिश्रणे प्रायश्चित्तम्। 23.

1. 25/2/5–22

वैद्युताग्निनाऽऽहवनीयादीनां संसर्गे प्रायश्चित्तम्। 24. यमलजनने प्रायश्चित्तम्। 25. गेहदाहे प्रायश्चित्तम्। 26. इष्ट्यारम्भानन्तरं हविर्निर्वापात्पूर्वं परं च चन्द्रोदयपरिज्ञाने प्रायश्चित्तम्। 27. प्रतिपदि भ्रान्त्या दर्शयागोपक्रमे प्रायश्चित्तम्। 28. उद्वासनकाले कपालविनाशे प्रायश्चित्तम्। 29. सायंप्रातयोः पृथग्वा दोहविनाशे प्रायश्चित्तम् 30. पञ्चशरावस्यौदनस्य सान्नाय्यविनाशे प्रायश्चित्तरूपत्वं, न प्रतिनिधिरूपता। दुष्टस्य हविषः प्रतिपत्तिः। प्रधानयागानन्तरं हविषि दुष्टे आज्येन स्विष्टकृदादीनामनुष्ठानम्। हविषो विस्मृतौ प्रधानयागात् समिष्टयजुषो वा पूर्वं विस्मृतं हविः संस्कृत्य तदनुष्ठानम्। समिष्टयजुरन्ते स्मृतं चेत्तत्कर्म समाप्य पुनर्विस्मृत-स्याग्न्यन्वाधानादितोऽनुष्ठानम्। 31. देवताऽनुयाज्यादि विपर्यासे प्रायश्चित्तम्। 32. जुह्वादिस्थे आज्ये दुष्टे पुनर्ग्रहणम्। 33. आज्यस्थालीस्थे आज्ये दुष्टे प्रायश्चित्तम्। 34. प्रणीतास्कन्दने प्रायश्चित्तम्। 35. स्थाल्यादीनां भेदने प्रायश्चित्तम्। 36. घर्म्यभेदे प्रायश्चित्तम्। 37. घर्मदुहो गोर्मरणेऽदोहे च प्रायश्चित्तम्। 38. पृषदाज्यस्कन्दने प्रायश्चित्तम्। 39. सोमयागे उपपाते प्रायश्चित्तम्। 40. सोमयागे सुत्यासु उपपाते प्रायश्चित्तम्। 41. यूपे ध्वाङ्क्षारोहणे प्रायश्चित्तम्। 42. सोमयागे पृषदाज्यस्कन्दने प्रायश्चित्तम्। 43. घर्मदुहो गोर्व्याघ्रहनने प्रायश्चित्तम्। 44. आग्रयणाकरणे प्रायश्चित्तम्। 45. पुरोडाशदाहे प्रायश्चित्तम्। 46. उपाकृतस्य पशोः पलायने प्रायश्चित्तम्। 47. प्रयाजात्प्राक् पशुमरणे प्रायश्चित्तम्। 48. सोमे प्रयाजानुष्ठानात्प्राक् पशुमरणे प्रायश्चित्तम्। 49. पशववदानविनाशे हृदयनाशे चान्येन यागः। 50. मरणकाले पशोः शब्दकरणे प्रायश्चित्तम्। 51. पशूखायाः सान्नाय्योखायाश्च स्रवणे प्रायश्चित्तम्। 52. यूपस्याङ्कुरोत्पत्तौ प्रायश्चित्तम्। 53. अनूबन्ध्यायां गर्भवत्यां प्रायश्चित्तम्। 54. अग्निहोत्रे पात्रासादनानन्तरमाहवनीयानुगमने, होमात्प्राग्गार्हपत्यगमने च प्रायश्चित्तम्। 55. दक्षिणाग्न्यनुगमने प्रायश्चित्तम्। 56. पात्रासादनानन्तरं सर्वेषामग्नीनां नाशे प्रायश्चित्तम्। 57. अग्निहोत्रहोमस्य कालातिपत्तौ प्रायश्चित्तम्। 58. सत्रं करिष्यामीति सङ्कल्प्य तदकरणे विश्वजित् यागः। 59. दीक्षितानामर्द्धोत्थाने प्रायश्चित्तम्। 60. दक्षिणानयनानन्त्वरमुद्गात्राद्य-पच्छेदे प्रायश्चित्तम्। 61. पत्न्यां रजस्वलायां ज्योतिष्टोममध्ये प्रायश्चित्तम्।

62. दीक्षितस्यामनोज्ञस्वप्नदर्शने प्रायश्चित्तम्। 63. दीक्षितस्य रेतस्कन्दने प्रायश्चित्तम्। 64. दीक्षितस्य जलतरणे प्रायश्चित्तम्। 65. दीक्षितस्योपरि-अववर्षणे प्रायश्चित्तम्। 66. दीक्षितस्यामेध्यदर्शने प्रायश्चित्तम्। 67. दीक्षितस्याङ्गे शोणितोत्पत्तौ प्रायश्चित्तम्। 68. दीक्षितस्य निष्ठीवने प्रायश्चित्तम्। 69. दीक्षितस्य धावने प्रायश्चित्तम्। 70. दीक्षितस्य दिवास्वापे प्रायश्चित्तम्। 71. दीक्षितस्याश्रुपाते प्रायश्चित्तम्। 72. दीक्षितस्य वमने प्रायश्चित्तम्। 73. दीक्षितस्य चमसादौ मूत्रस्य सम्पर्के प्रायश्चित्तम्। 74. दीक्षितस्योपाकृतचमसे मूत्रादिसंसर्गे प्रायश्चित्तम्। 75. हुतस्याहुतस्य च सोमस्य संसर्गे प्रायश्चित्तम्। 76. सोमस्य वर्षाम्बुमिश्रणे प्रायश्चित्तम्। 77. चमसस्य भूमौ पतने प्रायश्चित्तम्। 78. चमसादिस्थ सोमस्य श्वाद्यवघ्राणे प्रायश्चित्तम्। 79. चमसातिरिक्तसोमस्य श्वाद्यवघ्राणे प्रायश्चित्तम्। 80. नाराशंसानां शोषणे प्रायश्चित्तम्। 81.पूतभृति उपक्षीणे प्रायश्चित्तम्। 82. सोमाभिषवपाषाणभेदने प्रायश्चित्तम्। 83. सोमस्यापहरणे प्रायश्चित्तम्। 84. अपहृतस्य सोमस्यालाभे प्रायश्चित्तम्। 85. द्रोणकलशभेदने प्रायश्चित्तम्। 86. सोमातिरेके प्रायश्चित्तम्। 87. दीक्षितस्य ज्वरादौ प्रायश्चित्तम्। 88. सत्रे दीक्षितमरणे प्रायश्चित्तम्। 89. सत्रिणां कर्मापवर्गादारभ्य पुत्राणां पितुर्मरणादारभ्य संवत्सरेऽस्थियज्ञः। 90. सोमदाहे प्रायश्चित्तम्। 91. सत्रे सोमदाहेऽपीदमेव प्रायश्चित्तम्। 92. सत्रे सोमदाहे यदहः सोमदाहस्तस्यैव पुनरनुष्ठानम्। 93. अनादिष्टप्रायश्चित्तस्य ब्रह्मकर्तृकत्वम्।

एतान्युपर्युक्तानि विविधोपपातनिमित्तानि प्रायश्चित्तान्युक्तानि। एतानि सर्वाणि नैमित्तिककर्मान्तर्गतान्येव सन्ति। नैमित्तिककर्मानुष्ठानेन यादृशं फलं लभ्यते तद्विश्लेषणन्त्विह संक्षेपेण लिख्यते –

यत्कर्म यज्ञार्थं न विधीयते तत्कर्माननेकान् दोषानुत्पादयति। तद्विधानि कर्माणि सततं मानवं दुन्वन्ति। स जनुर्निधनचक्रपतितोऽहर्निशं विषीदति। यज्ञार्थकर्माणि तु तेभ्यो नितान्तं विपरीतानि। तानि मानवे निष्काम-भावनामुत्पादयन्ति। निष्कामेषु कर्मसु यदा रुचिरुदेति तदा रागद्वेषादिका दोषा असद्भावाश्च मनोभुवं हित्वा दूरे पलायन्ते। मानवोऽनिर्वचनीयां प्रीतिं यजमानो जीवनस्य चरममुद्देश्यमवाप्तुमभिधावति। भारतीयसंस्कृतौ

निष्कामकर्मवीचयः सर्वत्र उच्छलन्त्यः प्रवहन्त्यश्च संलक्ष्यन्ते। तथा चावादि–

**'तस्मादसक्तः सततं कार्यं कर्म समाचर।**
**असक्तो ह्याचरन् कर्म परमाप्नोति पूरुषः।।[1]'**

नैमित्तिकेष्वेषु कर्मसु यन्निमित्तं कर्मक्रियते, तस्य कर्मणः या देवता तां देवतां प्रीतिकरं द्रव्यं, तां देवतां **सम्बोधकं मन्त्रञ्च** प्रयुज्य कर्मसम्पादनं क्रियते। तेन हि तुष्टे देवे कर्मसम्पूर्तिः, कर्मसम्पूर्त्या चाभीष्टफलप्राप्तिर्भवति। नैमित्तिकं कर्म नित्यकाम्ययोरन्तरं भवति। यथा हि वैज्ञानिकसिद्धान्तानुसारं इलेक्ट्रॉन–प्रोट्रॉनयोर्मध्ये न्युट्रॉन आवश्यकं तथैव नित्यकाम्ययोरन्तरं नैमित्तिकमावश्यकम्। नित्यकाम्ययोर्मध्ये सामञ्जस्यं स्थापयतीदं कर्म। कर्म – फलयोर्मध्ये च मध्यस्थतां कृत्वा कर्मणः फलप्राप्तिरूपपूर्णतायै सहायकं भवति। यथा पूर्वमुक्तं दर्शपौर्णमासयागनिमित्तं 'व्रतग्रहणं' कर्म क्रियते। यदि नैमित्तिकं कर्म निष्फलं तर्हि व्रतग्रहणं नियमपालनं अन्यानि च नैमित्तिकानि प्रायश्चित्तादीनि निष्फलान्येव स्युः। नैमित्तिककर्मणां निष्फलत्वात् कृतस्य कर्मणः यदुचितं फलं न तल्लब्धुं शक्यम्। अत एतस्मादेव कारणात् सङ्कल्पितकार्यसिद्ध्यर्थं नैमित्तिककर्मणामनुष्ठानमत्याज्यमत्यावश्यकञ्च भवति।

अतः स्पष्टमेवेदं यत् नित्य–काम्ययोरुभयोःकर्मणोः सुष्ठुसम्पादनाय नैमित्तिकं कर्मानुष्ठानमनिवार्यमपरिहार्यञ्च। नैतदनुष्ठानं बिना नित्यकाम्ययोः परिपूर्णता जायेत। अत एतस्मात् कारणात् नित्यकाम्ययोः यागयोः यत्फलं तत्फललाभार्थं नैमित्तिककर्मणः महत्वपूर्णं स्थानं वर्तते। इत्यलमतिविस्तरेण।

---

1. गीता 3/19

## अथ षष्ठोऽध्यायः

# काम्यकर्माणि, काम्यानामनुष्ठाने कीदृशं सङ्कल्पादौ परिवर्तनमपेक्षितमिति सर्वं तत्त्वतः प्रामाणिकं विश्लेषणम्

सर्वाण्यपि कर्माणि वेदोक्तानि फलजनकान्येव। तदुक्तं कात्यायनेन '**फलयुक्तानि कर्माणि**[1]' एवं च स्वर्गकामादिपदं पुरुषविशेषणं सदपि विशेषणीभूतस्वर्गादिबोधकमर्थाद् भवति। अन्यथा अफले कर्मणि पुरुषस्य प्रवृत्यनुदयाद् वेदवाक्यस्य प्रवर्तकत्वमेव भज्येत। अतश्च यत्रापि फलं न श्रूयते तत्रापि फलं कल्पनीयमेवेति भावः। फलार्थित्वाविशेषात् देव-मनुष्य-रक्ष-पिशाचतिर्यगादीनां सर्वेषामधिकारः श्रौतक्रतुषु। यतो हि सर्वे हि फलमभिलषन्ति। परं देवा अवाप्तकामत्वान्नाधिक्रियन्ते, रक्ष-पिशाच-तिर्यगादयश्च कर्मानुष्ठानायाशक्ता भवन्ति तस्मात्तेषां नाधिकारः। अत एव मनुष्याणामेव कर्मस्वधिकारः सिध्यति। मनुष्येष्वपि त्रैवर्णिकाः ब्राह्मणराजन्य-वैश्या एवाधिक्रियन्ते, शूद्राः अशुचित्वान्नाधिक्रियन्ते। एवमधिकारनिरूपणदृशा काम्यकर्मणां श्रेष्ठत्वं सिध्यति।

श्रुतिषु यत्र-तत्रैवमुक्तमस्ति - 'नारायणो ह अकामयत, प्रजापतिरकामयत', इति। अत्र कामशब्देन कामना-इच्छा एवाबुध्यते। यं पदार्थं प्राप्तुं कामना भवति तदनुगुणं कर्मानुष्ठानमनुष्ठीयते। '**यत्काम ऋषिर्यस्यां देवतायामार्थपत्यमिच्छन् स्तुतिं प्रयुङ्क्ते तद्दैवतः स मन्त्रो भवति**[2]' इत्यादि मन्त्रेषु देवतापरिज्ञानात्मके सिद्धान्ते कामपदश्रवणात्

---

1. का० श्रौ० सू० 1/1/2
2. निरुक्ते - दैवतकाण्डे 7/1/1

काम्यकर्मणाम्महत्वं प्रतिपादितं भवति। कामनां बिना न कश्चित् किमपि कर्तुं प्रवृत्तः स्यात् तस्मात्तत्कर्मकरणात्प्राक् कामोत्पत्तिरावश्यकी।

ये यज्ञाः लौकिकफलानामवाप्त्यै तत्तत्कामनापूर्वकं क्रियन्ते, ते काम्या उच्यन्ते। यतो लौकिक्यः कामना बहुविधा भवन्ति, अतस्तेषामवाप्त्यै शाखा-ब्राह्मण-श्रौत-गृह्य-धर्मसूत्रादिषु बहूनां काम्यानां यज्ञानां विधानमुपलभ्यते। एषां काम्यकर्मणां विस्तारस्त्रेतायुगे समभवत् - **'तानि त्रेतायां बहुधा सन्ततानि।[1]'**

**काम्यानां त्रयोभेदाः**

काम्या यज्ञास्त्रिविधाः सन्ति। तत्र केचन एतादृशाः सन्ति येषां कामनाविशेषाय स्वतन्त्रं विधानमुपलभ्यते। यथा - **'वैश्वदेवीं सांग्रहणीं निर्वपेद्ग्रामकामः[2]'**। अपरे काम्या यज्ञा एतादृशाः सन्ति, ये नित्यविहिताः सन्तोऽपि स्वल्पभेदेन तेषु काम्यत्वमुक्तम्। यथा नित्यस्य पयसा सम्पाद्यमानस्याग्निहोत्रस्यैव इन्द्रियकामनया दध्ना विधानमुक्तम् - **'दध्नेन्द्रियकामस्य[3]'**। कतिपयान्येतादृशीन्यपि कर्माणि सन्ति यानि नित्यविहितानि सत्यानि तेनैव रूपेण कामनाविशेषेभ्योऽपि क्रियन्ते। यथा - **'वसन्ते वसन्ते ज्योतिषा यजेत[4]' अत्र वसन्ते वसन्ते इति द्विर्वचनं नित्यार्थम्।**[5] इदमेव कर्म **'स्वर्गकामो ज्योतिष्टोमेन यजेत्। एककामः सर्वकामो वा। युगपत् कामयेताहारपृथक्त्वे वा।[6]'**

**'मित्रविन्दा श्रीराष्ट्रमित्रायुष्कामस्य[7]' कारीर्या यजेत्**

---

1. मुण्डकोप० 1/2/1
2. तै० सं० 2/3/9/2
3. तै० ब्रा० 2/1/5/6
4. मीमांसा 3/3/19 – भाष्ये उद्धृतम्।
5. द्र० 'नित्यवीप्सयोः' अष्टा० 8/1
6. आप० श्रौ० सू० 10/2/1
7. का० श्रौ० सू० 5/12/1

**वृष्टिकामः,**'[1] उपर्युक्तैः कैश्चिदपि कामनाविशेषैरनुष्ठेयं कर्म काम्यमित्युच्यते।

काम्यकर्मणामनुष्ठानप्रसङ्गे कात्यायनश्रौतसूत्रभाष्यकृता श्रीमता देवयाज्ञिकेनोक्तम् – '**काम्यानि कर्माणि फलेच्छायां सत्यां कर्तव्यानि नावश्यम्। नित्यानि तु अग्निहोत्र- दर्शपूर्णमास-दाक्षायणा-ऽऽग्रयण-पशु-चातुर्मास्याऽग्निष्टोमादीनि अवश्यं कर्तव्यानि, अकरणे दोषश्रवणात्। नित्यानि कर्माणि अवश्यकर्तव्यत्वाद्यथा-शक्त्यङ्गयुक्तान्यनुष्ठेयानि। काम्यानि तु सर्वाङ्गोपेतानि यथाश्रुतान्येव यदा कर्तुं शक्यन्ते फलेच्छायां सत्यामपि तदैवानुष्ठेयानि नान्यथा।**[2]'

अनेन देवयाज्ञिकवचनेन स्पष्टमिदं भवति यत् ऐन्द्राग्न-वायव्य-राजसूयादीनि काम्यकर्मान्तर्गतान्युक्तानि। एषामनुष्ठानेन यजमानस्य लौकिकसुखसाधनोपायभूताः कामनाः सिध्यन्ति। यद्यपि विद्वांसः सकामकर्माणि बन्धनहेतुभूतानि स्वीकुर्वन्ति। यतः कामनावान् पुरुषः सकामकर्माण्यनुष्ठाय तेषां फलानि च भुक्त्वा पुनः कामनायुतत्वात् जन्म गृह्णाति, मोक्षं न। किन्तु कामनाविहीनाः प्राणिनस्तु निष्कामकर्माण्यनुष्ठाय रूद्रलोके पुण्यं भुक्त्वा पुनरत्र जन्म गृह्णन्ति। तेषां कामनाविहीनानां पुरुषाणां निष्ठा पुनर्जन्मग्रहणानन्तरं तपोयज्ञे भवति। एतदर्थमेव कर्मयज्ञात् तपोयज्ञः श्रेष्ठ उक्तः। शिवपुराणस्य वायुसंहितायां पञ्चविधयज्ञस्य वर्णनमुपलभ्यते- कर्मयज्ञ – तपोयज्ञ – जपयज्ञ – ध्यानयज्ञ – ज्ञानयज्ञभेदात्। एषु पञ्चयज्ञेषु क्रमशः कर्मयज्ञात् तपोयज्ञः श्रेष्ठः, तपोयज्ञात् जपयज्ञः श्रेष्ठः, जपयज्ञात् ध्यानयज्ञः श्रेष्ठः, ध्यानयज्ञाच्च ज्ञानयज्ञः श्रेष्ठतरः, अर्थादुत्तरोत्तरः श्रेष्ठतरः। तत्रापि ज्ञानयज्ञस्तु श्रेष्ठतम एवास्ति। '**ज्ञानेन हीनाः पशुभिः समानाः**[3]' ज्ञानं तु मानवेभ्य अत्यावश्यकम्, परं तत्राप्येवमप्युच्यते – '**ज्ञानं भारः**

---

1. उल्लेखः मीमांसा परिभाषायाम् पृ० 73
2. देवयाज्ञिक पद्धतौ पृ० 3
3. हितोपदेश प्रस्ताविकायाम् – 'धर्मेण हीनाः पशुभिः समानाः' – 25 श्लोके।

**क्रियां बिना**[1]' अर्थात् कर्मयज्ञस्याद्यं सोपानम्। अन्तिमसोपानस्य स्वरूपं तदैव सुदृढं भवति यदाऽऽद्यं सोपानं सुसज्जितं स्यात्। आद्यसोपानेन बिनाऽन्तिमसोपानस्य कल्पनैव वृथा, तस्माल्लौकिकेभ्य मानवेभ्य कर्मयज्ञस्यावश्यकत्वं तु सुतरां सिद्धम्। परं नात्र विरामो भवेत्, '**चरैवेति चरैवेति**' इत्यनेन दार्शनिकसिद्धान्तेन क्रमशः उत्तरोत्तरं वर्धमानं सत् ध्यानयज्ञ-ज्ञानयज्ञयोः परिसीमानमालम्बनमस्माभिः कर्तव्यं तदर्थमुचित-प्रयासो विधातव्यः। एवमुक्तप्रकारेण ध्यानयज्ञ ज्ञानयज्ञाभ्याञ्च प्राणी स्वाभाविकतया संसारसागरं तरति। अतः सिध्यति यदुत्कृष्टानां यज्ञानामनुष्ठानेन क्रमशः मोक्षप्राप्तिजन्यमुद्देश्यं पूर्यते।

**काम्ययज्ञानां प्रकल्पना-प्रयोजनम्**

सृष्ट्यादौ सत्वगुणविशिष्टा योगजशक्तिसम्पन्नाः परावरज्ञा ऋषयः स्वीयदिव्यमानसशक्त्या अस्य चराचरस्य जगतः परमाणुत आरभ्य परममहद्द्रव्यपर्यन्तं समस्तं पदार्थजातं हस्तामलकवद् द्रष्टुं समर्था बभूवुः। तदुक्तं यास्केन –'**साक्षात्कृतधर्माणऋषयो बभूवुः**[2]' इति। उत्तरोत्तरं सत्वगुणस्य ह्रासाद् रजस्तमोगुणयोर्वृद्ध्या च कामक्रोधलोभमोहादयः प्रादुर्बभूवुः। तैर्वशीभूता मानवी प्रजा सुखविशेषेच्छया प्राजापत्यान् शाश्वतनियमानुल्लंघ्य कृत्रिमं जीवनं यापयितुं प्रवृत्ता। यथा यथा आवश्यकता वृद्धिं गतवती तथा तथा जीवनसाधनेषु कृत्रिमता अपि ववर्द्धे। एतेन सहैव मानवीयानां दिव्यशक्तीनां ह्रासोऽपि समजनि। तासां ह्रासेन सूक्ष्मदूरस्थव्यवहिताः पदार्था अज्ञेया अभूवन्। अतो ब्रह्माण्डस्य पिण्डस्य च कीदृशी रचनेति ज्ञातुं मानवा असमर्था समजायन्त। अत एवाधिभौतिकाधिदैविकाध्यात्मिकप्रक्रियानुसारी वेदार्थोऽपि दुरूहः समभवत्। एतादृशे काले तात्कालिकैः साक्षात्कृतधर्मभिः

---

1. मित्रलाभ 18
2. निरुक्ते 1/20

परावरज्ञैर्ऋषिभिर्ब्रह्माण्डस्य पिण्डस्य च रचनां विज्ञापयितुम्, अथ चाधिदैविकस्याध्यात्मिकस्य च प्राचीनवेदार्थस्य सुरक्षायै यज्ञानां प्रकल्पनाऽकारि। यज्ञानां मूलभूतं प्रयोजनं दैवताध्यात्मयोर्विज्ञापनमेव वर्तते। एतस्मिन् विषये भगवता यास्केन – '**वाचं शुश्रुवां अफलामपुष्पाम्**[1]' इति ऋक्चरणस्य व्याख्यान उक्तम् – '**अयं वाचः पुष्पफलमाह याज्ञदैवते पुष्पफले देवताध्यात्मे वा**[2]' इति।

भगवतो यास्कस्य मतानुसारं यज्ञदैवतयोः ज्ञानं यथाक्रमं पुष्फपलस्थानीयम् अर्थाद् यथा पुष्पाणि फलानां निष्पत्तौ कारणानि भवन्ति, तथैव याज्ञिकप्रक्रियायाः ज्ञानं दैवतज्ञाने (=ब्रह्माण्डविज्ञाने) कारणम्। यदा च दैवतज्ञानं सम्पद्यते, तदा तदेवाध्यात्मज्ञानदृष्ट्या पुष्पस्थानीयं सत् फलस्थानीयमध्यात्मज्ञानं सम्पादयति। अत एव ब्राह्मणग्रन्थेषु बहुत्र याज्ञिकप्रक्रियानुसारं मन्त्रं व्याख्याय इत्यधियज्ञम्, इत्युक्त्वा अथाधिदैवतम्, अथाध्यात्मम् इत्यादयो निर्देशा उपलभ्यन्ते। तेन चाधियज्ञाधिदैवताध्यात्मप्रक्रियाणां पारस्परिकी समता निदर्शिता भवति।

उपर्युक्तेन विवेचनेन इदं सुव्यक्तं भवति यद् यज्ञानां प्रकल्पना ब्रह्माण्डस्य पिण्डस्य च सूक्ष्मरचनाया यथावद् विज्ञानायैव प्राचीनैर्ऋषिभिः कृता।

यथा वर्णाश्रमादयः सर्वा व्यवस्था कृतयुगस्यान्त्यचरणे कृतत्रेतायुगयोः सन्धिकाले वा प्राचलन्, तथैव यज्ञानां प्रादुर्भावोऽपि कृतयुगान्ते त्रेतायुगारम्भे वा समभवत्। तद्यथा महाभारते शान्तिपर्वणि –

**'इदं कृतयुगं नाम कालः श्रेष्ठः प्रवर्तितः।**
**अहिंस्या यज्ञपशवो युगेऽस्मिन्न तदन्यथा।।**[3]'

श्लोकेऽस्मिन् कृतयुगे यज्ञानां विद्यमानता प्रोक्ता। मुण्डकोपनिषदि

---

1. ऋ० सं० 10/71/5
2. निरुक्ते 1/2
3. महा० शा० पर्व० 340/82

त्रेतायुगे वेदमन्त्रेषु यानि कर्माणि नित्यनैमित्तिककाम्यानि वर्णितानि ऋषिभिर्दृष्टानि तानि बहुविधानि संजातानि इत्युल्लेखो लभ्यते। यथा -

**'तदेतत् सत्यं मन्त्रेषु कर्माणि कवयो यान्यपश्यंस्तानि त्रेतायां बहुधा सन्ततानि।**[1]**'** इदमत्र ध्येयम् - मनोर्जलप्लवानन्तरं प्राचीनामितिहासपरम्परां सुरक्षयितुं या मन्वन्तरादिकल्पना पूर्वैर्ऋषिभिः कृता, तदनुसारं कृतयुगे स्वायम्भुवमन्वन्तरं समाप्तिं गतम्। **'त्रेतायुगाद् वैवस्वतं मन्वन्तरं प्रारभत इति भरतनाट्यशास्त्रे।**[2]**'** महाभारतेऽपि - **'त्रेतायुगादौ च ततो विवस्वान् मनवे ददौ**[3]**'** इत्युक्तम्। अत्रस्थो मनुर्वैवस्वतमनुरेव। वस्तुतः भारतीयकालगणनाया गम्भीरमनुशीलनमावश्यकं वर्तते। विनैतद् भारतीयैतिह्यस्य ग्रन्थीनां भेदनमसम्भवमेव।

**यज्ञानां क्रमशो विकासः**

यज्ञानां विकासस्य यः क्रम उपलभ्यते, तत्र अग्नेरेकत्व-त्रित्वपञ्चत्वैः सह यज्ञेषु विनियुक्तेषु वेदानामपि एकस्य द्वयोस्त्रयाणां च विनियोजनक्रमो दृश्यते। प्रारम्भेऽग्नेरेकत्वात् **'अङ्गिरसां वा एकोऽग्निः**[4]**'** एकाग्निसाध्यस्य यजुर्वेदमात्रसाध्यस्य अग्निहोत्रस्यैव प्रचलनमभूत्। तदनन्तरं यदा महाराजेन पुरूरवसा ऐलेन त्रिधाऽग्निर्विभक्तः ततः प्रभृति त्रेताग्निसाध्या ऋग्यजुभ्यां क्रियमाणा दर्शपूर्णमासादयो यज्ञाः प्रावर्तन्त। तदुक्तं हरिवंशपुराणे -

**'गन्धर्वेभ्यो वरं लब्ध्वा त्रेताग्निं समकारयत्।**
**एकोऽग्निः पूर्वमासीद् ऐलस्त्रेतामकारयत्।।**[5]**'**

वायुपुराणेऽपि च-**'एकोऽग्निः पूर्वमासीद्वै ऐलस्त्रींस्तानकल्पयत्।।**[6]**'** इति।

---

1. मुण्डके 1/2/1
2. ना० शा० 1/8
3. शान्तिपर्व 348/51
4. ऐ० ब्रा० 6/24
5. हरि० पु० 1/26/47
6. वा० पु० 91/48

उक्तानामेषामग्नित्रयाणां नामानि शतपथब्राह्मणे एवं निदर्शितानि – **'एतानि वै तेषां नामानि यद् भुवस्पतिर्भुवनपतिर्भूतानां पतिः[1]'** इति। ततः पश्चात् महावेद्यां सम्पद्यमाना ऋग्यजुस्सामभिः साध्याः ज्योतिष्टोमादयः प्रवृत्ताः। तदुक्तं शतपथश्रुतौ – **'यजुषा ह वै देवा अग्रे यज्ञं वितेनिरे। अथर्वाऽथ साम्ना तदिदमप्येतर्हि यजुषा एवाग्रे यज्ञमतन्वत, अथर्चाऽथ साम्ना।[2]'** इति। तदनन्तरं पञ्चाग्निसाध्यानां विविधक्रियाकलापानां प्रवृत्तिरजायत।

उपर्युक्तेन विवेचनेनेदं स्फुटं भवति यद्यथा हि यज्ञानां विकासक्रमोऽत्र प्रदर्शितः तथैव नित्ययज्ञात् काम्ययज्ञस्योदयो मन्यते। यद्यपि नैत्यकेष्वपि स्वर्गादिफलान्युक्तानि पूर्वजैरस्माकम्। तान्यपि फलानि काम्यकर्मसु पठितानि, तस्मात् नित्यकाम्ययोः यज्ञयोः कामसाम्यादैक्यमवलोक्यते।

वस्तुतः फलाभिलाषशीलत्वं पुरुषस्य कामात्मता। सा न प्रशस्ता बन्धहेतुत्वात्। प्रोक्तञ्चापि मनुना –

**'कामात्मता न प्रशस्ता न चैवेहास्त्यकामता।**
**काम्यो हि वेदाधिगमः कर्मयोगश्च वैदिकः।।[3]'**

अर्थात् स्वर्गादिफलाभिलाषेण काम्यानि कर्माण्यनुष्ठीयमानानि पुनर्जन्मने कारणं भवन्ति। नित्यनैमित्तिकानि त्वात्मज्ञानसहकारितया मोक्षाय कल्पन्ते। न पुनरिच्छामात्रमनेन निषिध्यते। तदाह – **'न चैवेहास्त्यकामता'** इति। यतो वेदस्वीकरणं वैदिकसकलधर्मसम्बन्धश्चेच्छाविषयावेव। अत्रोपपत्तिमाह –

**'सङ्कल्पमूलः कामो वै यज्ञाः संकल्पसम्भवाः।**
**व्रतानि यमधर्माश्च सर्वे सङ्कल्पजाः स्मृताः।।[4]'**

---

1. श० प० ब्रा० 1/3/3/17
2. श० प० ब्रा० 4/6/7/13
3. मनु० 2/2
4. मनु० 2/3

इदमिष्टफलमनेन कर्मणा साध्यत इत्येवंविषया बुद्धिः संकल्पः, तदनन्तरमिष्टसाधनतयावगम्यते, तस्मिन्निच्छा जायते, तदर्थं प्रयत्नं कुरुते चेत्येवं यज्ञाः संकल्पप्रभवाः, व्रतानि, यमरूपाश्च धर्माः, अन्येऽपि शास्त्रार्थाः सङ्कल्पादेव जायन्ते। इच्छामन्तरेण तान्यपि न सम्भवन्तीत्यर्थः। उक्तञ्चापि-

**'ज्ञानजन्या भवेदिच्छा इच्छाजन्या कृतिर्भवेत्।**
**कृतिजन्यं भवेत्कर्म तदेतत् कृतमुच्यते।।[1]'**

अनेन सिध्यति यदिच्छयैव कर्म क्रियते। इच्छां बिना तु कर्मव्यापार असम्भव एव। तस्मात् प्रत्येकेषां कर्मणां प्रभवं इच्छातत्त्वमेव। अत्रेदमवश्यमवधेयम्-'कर्म्म बन्धनकारकं न कदापि भवति अपि तु बन्धनस्य कारणं केवलमिच्छैव, तदुक्तं ईशोपनिषदि -

**'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः।**
**एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे।।[2]'**

तत्र महीधरः कर्माणि अग्निहोत्रादीनि निष्कामानि मुक्तिहेतुकानि कुर्वन्नेवेह लोके शतवर्षपर्यन्तं जिजीविषेत्। इतः प्रकारादन्यथा प्रकारान्तरेण मुक्तिर्नास्ति। स्वर्गादिप्राप्तौ यथा नानाप्रकाराः सन्ति न तथा मुक्तावित्यर्थः। निष्कामकर्मानुष्ठानेन शुद्धान्तः करणस्यैव मुक्तिरित्यर्थः। ननु कर्मणः फलेन भाव्यम्, कथं मुक्तिरित्यत आह - मुक्त्यर्थं क्रियमाणं कर्म नरे मनुष्ये न लिप्यते न संबध्यते। मुक्तिकारणान्तःकरणशुद्ध्यापादकत्वेनोपक्षीण-शक्तित्वात् यावदिच्छा तावत्कर्मस्वधिकार इति दर्शितम्। एवं प्रकारे त्वयि जिजीविषति नरे एतस्मात्कर्मकरणादन्यथा प्रकारान्तरं नास्ति येन प्रकारेण अशुभं कर्म न लिप्यते। अतः शास्त्रविहितं कर्म कुर्वन्नेव जीवितुमिच्छेत् प्रत्यवायपरिहारायेत्यर्थः।

परं लोके या काचिद्भोजनगमनादिक्रिया, साप्यनिच्छतो न कदाचिद्

---

1. आप्तवाक्यम् उल्लेखः वेदधर्मव्याख्याने 152 तमे पृष्ठे।
2. शु० य० सं० 40/3

दृश्यते। ततश्च सर्वं कर्म लौकिकं वैदिकं च यद्यत्पुरुषः कुरुते तत्तदिच्छाकार्यम्।

मनुना प्रोक्तश्चापि –

**'तेषु सम्यग्वर्तमानो गच्छन्त्यमरलोकताम्।**
**यथा सङ्कल्पितांश्चेह सर्वान्कामान्समश्नुते।।[1]'**

नात्रेच्छा निषिध्यते किन्तु शास्त्रोक्तकर्मसु सम्यग्वृत्तिर्विधीयते। बन्धहेतुफलाभिलाषं बिना शास्त्रीयकर्मणामनुष्ठानं तेषु सम्यग्वृत्तिः सम्यग्वर्तमानोऽमरलोकताममरधर्मकं ब्रह्मभावं गच्छति मोक्षं प्राप्नोतीत्यर्थः। तथाभूतश्च सर्वेश्वरत्वादिहापि लोके सर्वानभिलषितान्प्राप्नोति। तथा च छान्दोग्ये –

**'स यदि पितृलोककामो भवति संकल्पादेवास्य, पितरः समुत्तिष्ठन्ति[2]'** इति।

कामशब्दस्य व्याख्या संकल्परूपेण क्रियते। तदुक्तम् ऋचि –

**'कामस्तदग्रे समवर्तताधि मनसो रेतः प्रथमं यदासीत्।[3]'**

अत्र कामशब्दः संकल्पात्मक एवोक्तः। कमपि कर्मकर्तुं सर्वप्रथमं मनसि संकल्पो भवति। स एव संकल्पः काम उक्तः, स च मनसो रेतः मनसि स्वयमेवोद्भवति। ईश्वरोऽपि **'तदैक्षत् बहुस्यां प्रजायेय[4]'** इतिसंकल्पानुसारमेव सृष्टिनिर्माणादिकं कर्म अकरोत्, इति यत्र-तत्रोल्लेखः। तस्मात् सिध्यति यत् यादृशेन, संकल्पेन कर्म क्रियते तादृशं फलमस्माभिः लभ्यते। संकल्पप्रभवं सर्वमपि कर्म काम्यमेवेति शक्यते वक्तुम्। अत इदानीं काम्यकर्मणामनुष्ठाने कीदृशं संकल्पादौ परिवर्तनमपेक्षितमिति सर्वं तत्त्वतः विचार्यते –

---

1. मनु० 2/5
2. छान्दोग्ये 8/2/1
3. ऋ० 10/129/4
4. छां० उप० 6/2/3

( सङ्कल्पः )

सामान्यतः सङ्कल्पस्य प्रक्रियेयम्भवति यत् भूशुद्धिमात्मशुद्धिं च कृत्वा यज्ञस्थलं गत्वा पुनस्तत्र 'अपवित्रः पवित्रो वे'ति मन्त्रेण जलमादाय पवित्रीकरणम्, तत्पश्चात् मातृपूजाऽऽभ्युदयिकं च सम्पाद्य गणपतिं विष्णुं पञ्चदेवतां च सम्पूज्य देशकालौ संकीर्त्य पूर्वाभिमुखो यजमानः सपत्नीकः कुशत्रयतिलजलान्यादाय –

'ॐ विष्णुर्विष्णुर्विष्णुः श्रीमद्भगवतो महापुरुषस्य विष्णोराज्ञया प्रवर्तमानस्याद्य श्रीब्रह्मणोऽह्नि द्वितीयपरार्द्धे श्रीश्वेतवाराहकल्पे वैवस्वतमन्वन्तरे अष्टाविंशतितमे कलियुगे कलिप्रथमचरणे जम्बूद्वीपे भरतखण्डे भारतवर्षे आर्यावर्तैकदेशे अमुकप्रान्ते अमुकक्षेत्रे अमुकनद्याः अमुकतीरे[1] अमुकनाम्निसंवत्सरे अमुकायने अमुकऋतौ महामाङ्गल्यप्रदे मासोत्तमे मासे अमुकपक्षे अमुकतिथौ अमुकवासरे अमुकनक्षत्रे अमुकयोगे अमुककरणे अमुकराशिस्थिते श्रीसूर्ये अमुकराशिस्थिते चन्द्रे अमुकराशिस्थिते देवगुरौ शेषेषु ग्रहेषु यथास्थानस्थितेषु सत्सु एवं गुणगणविशेषणविशिष्टायां शुभपुण्यतिथौ अमुकगोत्रोऽमुकशर्माऽहं अनाद्यविद्यावासनावासितान्तः प्रवृत्या प्रवर्तमानेऽस्मिन् महति संसारचक्रे विचित्राभिः कर्मगतिभिः विचित्रासु योनिषु अनेकधा जनित्वा केनापि पुण्यकर्मविशेषेण भगवत्कृपाकटाक्षवीक्षणात्मसहायेन साम्प्रतिकं दुर्लभातिदुर्लभं मानवं देहमासादितवतः आजन्मनः सर्वास्ववस्थासु वाक् – पाणि–पाद–पायूपस्थ– घ्राण–रसन–श्रुति–चक्षुस्त्वङ्–मनः सम्पादितैः ऐन्द्रियकव्यापारविशेषैः प्रतिफलितानां ज्ञाताज्ञातावस्थासम्भवानां समेषामेनसामपनोदपूर्वकं मम कुटुम्बस्य सपरिवारस्य अस्मिन् महायज्ञे कायिक–वाचिक – मानसिक – आर्थिकसहयोगेन साहाय्यकारिणां, सर्वेषां भारतवर्षवास्तव्यानां चतुराश्रमस्थानां चातुर्वर्ण्यानां जनानां, विशेषतः एतत्प्रान्तीयानां सर्वेषां आबालवृद्धवनितानां गोमहिष्यादिसमस्ततिरश्चां च

1. अमुकप्रान्ते अमुकमण्डलान्तर्गतामुकग्रामे

कायिक-वाचिक- मानसिक-सांसर्गिक-चतुर्विधपापक्षयपूर्वकम् आध्यात्मिक - आधिदैविक-आधिभौतिक त्रिविधतापोपशान्तिसकल-दुःखाशेषनिवृत्तिपूर्वकम्, व्याध्यादि जरा-मृत्यु-रोग-भय-शोकाद्यपसर्ग-निवृत्तिपुरस्सरम्, जन्म-कुण्डल्यां, वर्षकुण्डल्यां, गोचरे च अरिष्टस्थान-स्थितानामादित्यादिनवग्रहाणामशुभफलनिरासपूर्वकम्, लग्नस्थमन्दार्क-पातालस्थभौममिथुनस्याब्जनवमस्याशिखिगोचराष्टकस्य जीवग्रह-जन्यजायमानजनिष्यमाणसकलारिष्टनिवृत्तिपूर्वकम्, अङ्गारकादिक्रूर-सम्मेलनसम्भाव्यदिव्यभौमान्तरिक्ष-सर्वोपप्लवादि-सर्वापच्छान्त्यर्थम्, अतिवृष्ट्यनावृष्टि-भूकम्प-राष्ट्रविप्लवदुर्भिक्षादिविविध-आधिव्याधि-विविधेष्टनिवृत्तिपूर्वकं नित्यकल्याणप्राप्त्यर्थम्, विपुलधनधान्यदीर्घा-युष्ट्वनैरूज्यकीर्तिलाभ-सद्विद्योपार्जन-क्षेम-स्थैर्यैश्वर्य-गो- गजाश्वादि-सम्पत्प्रवृद्ध्यर्थम्, सद्धर्मसद्बुद्धि - सद्विद्या- सद्विवेक- सदाचारादि-प्राप्त्यर्थम्, तथैकविंशतिकुलोद्धरणपूर्वकं समस्तपितृणां निरतिशयानन्द-शाश्वतवैकुण्ठलोकप्राप्त्यर्थं च सनातनधर्मेऽस्मिन् निरतिशयश्रद्धा-भक्तिसम्पत्यर्थं सनातनधर्मप्रतिपादकानां साङ्गानां सरहस्यानां श्रुति-स्मृति-पुराणोपपुराणादीनां धार्मिकग्रन्थानां सर्वासां विद्यानाञ्चाभिवृद्ध्यर्थम्, जाति-देश-धर्म-समान- राष्ट्राभ्युत्थानपूर्वकतत्तत्सम्प्रदायादिविशिष्टस्य समस्तविश्वस्य सर्वविधकल्याण- सम्पादनार्थम्, विशेषतः सनातने स्वधर्मे प्रीतिविवर्द्धनार्थम् -

सर्वे च सुखिनः सन्तु सर्वे सन्तु निरामयाः।
सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःखभाग्भवेत्।।'

इति सदुद्देश्यसिद्धिद्वारा विश्वस्मिन् जगति सर्वविधशान्त्यर्थं धर्मग्लान्यधर्माभ्युत्थाननिवृत्तिपूर्वकं धर्मसंस्थापनार्थं च पुण्यकालेऽस्मिन् अनन्तकल्याणगुणगुणाकरस्य, ब्रह्मरुद्रादिवृन्दारकवृन्दवन्दित-पादारविन्दस्य, प्रपन्नजनपरिपालनपारिजातस्य, वन्दारुजनमन्दारस्य, निखिलवेदवेदाङ्गैकप्रतिपाद्यस्य, सकललोकपावनस्य, आर्तत्राणपरायणस्य,

ध्रुव-प्रह्लाद-पुण्डरीक-गजेन्द्र-प्रभृतिभक्ततारणनिपुणस्य धर्मार्थकाम-मोक्षचतुर्विधपुरुषार्थप्रदस्य, सायुज्य- सालोक्य-सामीप्य-सारूप्यरूप-निर्वाणान्तसुखप्रदायकस्य, भुक्तिमुक्तिवितरण- विश्रुतानन्तम-हिममणिमण्डितस्य, करुणाकरणान्यथाकरणचणस्य, अखण्डब्रह्माण्ड-मण्डलमण्डनस्य, गो-ब्राह्मणप्रतिपालनबद्धदीक्षस्य, हरकोदण्डखण्डना-खण्डनपण्डितस्य, अखर्वगर्व-पर्वताधित्यकासञ्चरद्रात्रिञ्चरनिकर-परिकरलोकरावणविरावणस्य, देश-काल-शक्तिगुणापरिच्छेद्य-महामहिमनित्ययुक्तस्य आनख-शिख-सौन्दर्यहूणीनङ्गमङ्गलस्वरूपस्य, रिङ्गतुङ्गतरङ्गगङ्गाप्रादुर्भावपटुपाटलपादांगुलिभूषितस्य, सर्वमङ्गलाङ्गसङ्गि-गङ्गाधरार्च्यमानारुणचरणसरोजस्य, श्रीरामकृष्णाद्यनेककलिकल्मषा-पहारिपुण्यागण्यावतारधारकस्य, कर्तुमकर्तुमन्यथाकर्तुं समर्थस्य, सर्वसमर्थस्य, सर्वसूत्रधारस्य, सर्वव्यापकस्य, विश्वज्योतिरवभासकस्य, करुणावरुणागारस्य, 'वामदक्षिणतो भार्याभ्यां श्रीभूभ्यां भूषितस्य, शङ्खचक्रगदापद्मैरलङ्कृतबहुचतुष्टयस्य, अनन्तकोटिब्रह्माण्डनायकस्य, भगवतः श्रीसूर्यमण्डलान्तर्वर्तिजगद्बीजपुरुषोत्तमवैकुण्ठाधिपतेः श्रीविष्णोः प्रीत्यर्थं[1]' सग्रहमखं अमुकयागं चतुर्णां वेदानां परायणं, पुराणादीनां परायणं, नवग्रहादीनां जपं च एभिर्द्विजकुलावतंसैः शमदमादिनिखिल-गुणगणभरितैर्विद्वद्भिः सहाद्यारभ्य........अमुकदिनपर्यन्तं करिष्ये।'

अत्र सङ्कल्पे सर्वप्रथमं 'विष्णुर्विष्णुर्विष्णुः' इति त्रिवारमुच्चारणं कथम्? इत्यस्मिन् सन्दर्भे एवमुच्यते यद् वेदेषु वैष्णवमन्त्रेषु 'इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्[2]' इत्याद्युच्चारणद्वारा त्रिभिपदैः विश्वस्य विष्णुना आक्रमणप्रसङ्गो विधीयते। तथा च पुरुषसूक्तस्य 'त्रिपादूर्ध्वमुदैत्पुरुषः पादोऽस्येहाभवत्पुनः[3]' इत्यस्मिन् मन्त्रे ऊर्ध्वस्थानेन

1. यस्य यागस्य यः प्रधानः तस्य देवस्य प्रीत्यर्थं इति वक्तव्यम्।
2. ऋ० सं० 1/22/17, शु० य० सं० 5/15
3. ऋ० सं० 10/90/4, शु० य० सं० 31/4

कायिक-वाचिक- मानसिक-सांसर्गिक-चतुर्विधपापक्षयपूर्वकम् आध्यात्मिक - आधिदैविक-आधिभौतिक त्रिविधतापोपशान्तिसकल-दुःखाशेषनिवृत्तिपूर्वकम्, व्याध्यादि जरा-मृत्यु-रोग-भय-शोकाद्यपसर्ग-निवृत्तिपुरस्सरम्, जन्म-कुण्डल्यां, वर्षकुण्डल्यां, गोचरे च अरिष्टस्थान-स्थितानामादित्यादिनवग्रहाणामशुभफलनिरासपूर्वकम्, लग्नस्थमन्दार्क-पातालस्थभौममिथुनस्याब्जनवमस्याशिखिगोचराष्टकस्य जीवग्रह-जन्यजायमानजनिष्यमाणसकलारिष्टनिवृत्तिपूर्वकम्, अङ्गारकादिक्रूर-सम्मेलनसम्भाव्यदिव्यभौमान्तरिक्ष-सर्वोपप्लवादि-सर्वापच्छन्त्यर्थम्, अतिवृष्ट्यनावृष्टि-भूकम्प-राष्ट्रविप्लवदुर्भिक्षादिविविध-आधिव्याधि-विविधेष्टनिवृत्तिपूर्वकं नित्यकल्याणप्राप्त्यर्थम्, विपुलधनधान्यदीर्घा-युष्ट्वनैरूज्यकीर्तिलाभ-सद्विद्योपार्जन-क्षेम-स्थैर्यैश्वर्य-गो- गजाश्वादि-सम्पत्प्रवृद्ध्यर्थम्, सद्धर्मसद्बुद्धि - सद्विद्या- सद्विवेक- सदाचारादि-प्राप्त्यर्थम्, तथैकविंशतिकुलोद्धरणपूर्वकं समस्तपितृणां निरतिशयानन्द-शाश्वतवैकुण्ठलोकप्राप्त्यर्थं च सनातनधर्मेऽस्मिन् निरतिशयश्रद्धा-भक्तिसम्पत्यर्थं सनातनधर्मप्रतिपादकानां साङ्गानां सरहस्यानां श्रुति-स्मृति-पुराणोपपुराणादीनां धार्मिकग्रन्थानां सर्वासां विद्यानाञ्चाभिवृद्ध्यर्थम्, जाति-देश-धर्म-समान- राष्ट्राभ्युत्थानपूर्वकतत्तत्सम्प्रदायादिविशिष्टस्य समस्तविश्वस्य सर्वविधकल्याण- सम्पादनार्थम्, विशेषतः सनातने स्वधर्मे प्रीतिविवर्द्धनार्थम् -

सर्वे च सुखिनः सन्तु सर्वे सन्तु निरामयाः।
सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःखभाग्भवेत्।।'

इति सदुद्देश्यसिद्धिद्वारा विश्वस्मिन् जगति सर्वविधशान्त्यर्थं धर्मग्लान्यधर्माभ्युत्थाननिवृत्तिपूर्वकं धर्मसंस्थापनार्थं च पुण्यकालेऽस्मिन् अनन्तकल्याणगुणगुणाकरस्य, ब्रह्मरुद्रादिवृन्दारकवृन्दवन्दित-पादारविन्दस्य, प्रपन्नजनपरिपालनपारिजातस्य, वन्दारुजनमन्दारस्य, निखिलवेदवेदाङ्गैकप्रतिपाद्यस्य, सकललोकपावनस्य, आर्तत्राणपरायणस्य,

ध्रुव-प्रह्लाद-पुण्डरीक-गजेन्द्र-प्रभृतिभक्ततारणनिपुणस्य धर्मार्थकाम-मोक्षचतुर्विधपुरुषार्थप्रदस्य, सायुज्य- सालोक्य-सामीप्य-सारूप्यरूप-निर्वाणान्तसुखप्रदायकस्य, भुक्तिमुक्तिवितरण- विश्रुतानन्तमहिममणिमण्डितस्य, करुणाकरणान्यथाकरणचणस्य, अखण्डब्रह्माण्ड-मण्डलमण्डनस्य, गो-ब्राह्मणप्रतिपालनबद्धदीक्षस्य, हरकोदण्डखण्डना-खण्डनपण्डितस्य, अखर्वगर्व-पर्वताधित्यकासञ्चरद्रात्रिञ्चरनिकर-परिकरलोकरावणविरावणस्य, देश-काल-शक्तिगुणापरिच्छेद्य-महामहिमनित्ययुक्तस्य आनख-शिख-सौन्दर्यहूणीनङ्गमङ्गलस्वरूपस्य, रिङ्गतुङ्गतरङ्गगङ्गाप्रादुर्भावपटुपाटलपादांगुलिभूषितस्य, सर्वमङ्गलाङ्गसङ्गि-गङ्गाधरार्च्यमानारुणचरणसरोजस्य, श्रीरामकृष्णाद्यनेककलिकल्मषा-पहारिपुण्यागण्यावतारधारकस्य, कर्तुमकर्तुमन्यथाकर्तुं समर्थस्य, सर्वसमर्थस्य, सर्वसूत्रधारस्य, सर्वव्यापकस्य, विश्वज्योतिरवभासकस्य, करुणावरुणागारस्य, 'वामदक्षिणतो भार्याभ्यां श्रीभूभ्यां भूषितस्य, शङ्खचक्रगदापद्मैरलङ्कृतबहुचतुष्टयस्य, अनन्तकोटिब्रह्माण्डनायकस्य, भगवतः श्रीसूर्यमण्डलान्तर्वर्तिजगद्बीजपुरुषोत्तमवैकुण्ठाधिपतेः श्रीविष्णोः प्रीत्यर्थं[1]' सग्रहमखं अमुकयागं चतुर्णां वेदानां परायणं, पुराणादीनां परायणं, नवग्रहादीनां जपं च एभिर्द्विजकुलावतंसैः शमदमादिनिखिल-गुणगणभरितैर्विद्वद्भिः सहाद्यारभ्य........अमुकदिनपर्यन्तं करिष्ये।'

अत्र सङ्कल्पे सर्वप्रथमं 'विष्णुर्विष्णुर्विष्णुः' इति त्रिवारमुच्चारणं कथम्? इत्यस्मिन् सन्दर्भे एवमुच्यते यद् वेदेषु वैष्णवमन्त्रेषु 'इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्[2]' इत्याद्युच्चारणद्वारा त्रिभिर्पदैः विश्वस्य विष्णुना आक्रमणप्रसङ्गो विधीयते। तथा च पुरुषसूक्तस्य 'त्रिपादूर्ध्वमुदैत्पुरुषः पादोऽस्येहाभवत्पुनः[3]' इत्यस्मिन् मन्त्रे ऊर्ध्वस्थानेन

1. यस्य यागस्य यः प्रधानः तस्य देवस्य प्रीत्यर्थं इति वक्तव्यम्।
2. ऋ० सं० 1/22/17, शु० य० सं० 5/15
3. ऋ० सं० 10/90/4, शु० य० सं० 31/4

स्वर्गलोकस्य विष्णोः परमपदस्य बोधो भवति। स च विष्णुः त्रिभिः पादैः परमे पदे तिष्ठति एकेन पादेन च अस्य मर्त्यलोकस्य व्यवस्थां सृष्टिं वा करोतीति। तस्मादियं सृष्टिरेकपदी 'ति उच्यते। तस्य त्रयाणां परमे पदे स्थितानां पादानां स्मरणार्थमेव तथा च तस्य त्रिविक्रमस्वरूपस्य गुणगाणाय त्रिवारं विष्णुशब्दस्योच्चारणं क्रियते।

ब्रह्मणोऽह्नि इत्यादिभिर्देशकालस्य च स्मरणं संकीर्तनञ्च। यस्मिन् स्थले यागः क्रियते तस्य भूमण्डलस्य गुणगानमपि तथैवावश्यकं यथा परमेश्वरस्य। यतः – **'पूर्णमदः पूर्णमिदम्'** इत्यनेनौपनिषद्वाक्येनेदं स्फुटं भवति यत् ईश्वरेण निर्मितमिदं भूमण्डलमपि ईश्वरवदेव पूर्णमस्ति। तस्मात् ईश्वरस्य प्रतिरूपभूतस्यास्य भूमण्डलस्य यशोगानं एभिर्वाक्यैः क्रियते। यज्ञो न केवलमेकपक्षमाश्रित्यैवानुष्ठीयते, अपितु यज्ञानुष्ठानं सर्वविधपदार्थानां, सर्वजीवानां, समस्तभूतभौतिकप्रपञ्चानां समृद्ध्यर्थम् अनुष्ठीयते, तस्मात्तेषां समेषामत्रोल्लेखः कर्तव्य एव भवति तयैव बुद्ध्या तेषां समस्तानामपि भूतभौतिकतत्त्वानां संङ्कीर्तनं क्रियते। साम्प्रतं कलियुगस्य प्रभावः सर्वत्र स्पष्टरूपेणावलोक्यते। कलिकालप्रभावात्कर्मानुष्ठाने क्वापि काचित् बाधा नोपस्थिता स्यात् एतद् मत्वैव कलिकालप्रभावारणाय वेद-वेदाङ्ग-पुराणादीनां सद्ग्रन्थानां पाठः सर्वविधसाफल्यलाभाय विविधाघातकारिणां शान्तिः स्मरणञ्चावश्यकं भवति।

**'यत्र सर्वे च सुखिनः सन्तु'** इति पदमुद्धृतम् तत्र यजमानः स्वीयां कामनां वदेत्। अत्र निबन्धे कामनाविशेषेण उच्चार्यमाणानां समेषां सङ्कल्पवाक्यानां स्थापनमसम्भवं तस्मादेतस्मिन्नेव सङ्कल्पे सर्वकामनानां समाहारः कृतोऽस्ति। तदनुसारं यज्ञानुष्ठानकर्ता स्वीयां कामनां यथोचिते स्थाने योजयित्वा सङ्कल्पं कुर्यात्।

श्रौतपद्धतिषु एतावद्वृहत्सङ्कल्पवाक्यं नोपलभ्यते। यतः श्रौतकाले एताः परिस्थितयः पृथग्रूपेणावस्थिता आसन्। अद्यत्वे यादृश उत्पातभयविप्लवो वर्तते न तथा तदानीमासीत्। तस्मात्तदानीमेतादृशस्य वृहद्वाक्योच्चारणस्यावश्यकतैव नासीत्। अत एवेदानीमुपलभ्यमानासु पद्धतिषु एतादृशः सङ्कल्पो न लभ्यते।

## सङ्कल्पादौ परिवर्तनम्

यस्मिन् स्थाने यागः क्रियते तस्य (देशस्य) स्थानस्य महत्ववर्णनम्, भौगोलिकस्थितेर्वर्णनञ्च कर्तव्यं भवति। अत्रोपस्थापितः सङ्कल्पः भारतवर्षे क्रियमाणस्यानुष्ठानदृशा प्रस्तुतोऽस्ति। यदि भारतादन्यत्र यागः क्रियते चेत्तदा तत्रत्यां भौगोलिकीं स्थितिं वर्णनीया, तत्र परिवर्तनमपेक्षितं भविष्यति। तदनुसारमेव यस्मिन् युगे, यस्मिन् मन्वन्तरे, यस्मिन् काले, यया कामनया, येन द्रव्यविशेषेण, यस्याः देवताया प्रीतये यो यागो यथोपलब्धविधया चानुष्ठीष्यते तत्र तत्र सर्वत्र परिवर्तनमपेक्षितं भविष्यति। यतः सङ्कल्प एवानुष्ठानस्य मुख्यमवलम्बनम्। यादृशः सङ्कल्पः तादृशं फलम् इत्यनया बुद्ध्या फलावाप्तिप्रसङ्गानुसारं सङ्कल्पादौ परिवर्तनं कर्त्तव्यम्।

## सङ्कल्पे परिवर्तनस्य साक्षात् प्रमाणम्

'**पुरुषो ह नारायणोऽकामयत। अतितिष्ठेयं सर्वाणि भूतानि। अहमेवेदं सर्वं स्यामिति।**[1]' अर्थात् समस्तप्राणिषु उत्कृष्टं पदं प्राप्स्यामि इत्यनया कामनया पुरुषो नारायणः पुरुषमेधयज्ञस्य सङ्कल्पं कृतवान्। सङ्कल्पानुसारं तेन तदनुष्ठानमनुष्ठितम्। फलतः स तत् पदं प्राप्तवान्। स नारायणः परमं पदं प्राप्तवान्, सर्वप्राणिषु चोत्कृष्टोऽभवत्। अर्थात् यादृशी कामना भवेत् तादृशं परिवर्तनं सङ्कल्पे आवश्यकं भवति।

श्रूयते यत्पुरा नृपो दशरथः पुत्रप्राप्तिकामनया पुत्रेष्टियज्ञस्यानुष्ठानमकरोत्। तेन शुभसङ्कल्पितयज्ञेन सः राम-लक्ष्मण-भरत-शत्रुघ्न-नामकं पुत्रचतुष्टयं प्राप्तवान्। येषां महिमा अद्यापि सर्वेषु गृहेषु गीयते। एवमेव पुत्रकामनया पुत्रेष्टिः, सुवर्णकामनया हिरण्यलाभकामेष्टिः राष्ट्रमित्र-दीर्घायुष्कामनया च मित्रविन्देष्टिः, स्वर्गकामनया दर्शपौर्णमासेष्टिः, अग्निहोत्रम्, अग्निष्टोमादयश्च। बहुविधकामनया सोमयागस्य प्रकृति-विकृत्यादयो भेदप्रभेदभिन्ना अनुष्ठीयन्ते। अत एवोच्यते

1. श० प० ब्रा० 13/4/1/1

**'सर्वकामोऽग्निष्टोमः।**[1]' इति। एतदर्थं यादृशी कामना तादृशः सङ्कल्पः करणीयः। सर्वविधकामनया एकेनैव संकल्पेन कार्यसिद्धिर्न भवति। अतः तत्र परिवर्तनमावश्यकं भवत्येव।

इत्थमभिलषितवस्तूनां प्राप्तिसाधनैरस्माकं श्रौतसाहित्यं गुम्फितं वर्तते। श्रौतेन काम्यानुष्ठानेन सर्वविधकामनानां सम्पूर्तिः भवति। मनुष्यस्य शक्तिरल्पा सीमिता चास्ति। ईश्वरस्य शक्तिः प्रचुरा असीमिता च। अल्पशक्तियुक्तः सर्वदैवं चिन्तयति यत्तस्य साहाय्यमधिकशक्तिसम्पन्नः कुर्यादिति। अल्पशक्तियुक्तो वाञ्छति यत्तस्याल्पता नश्येत्। किन्तु कार्यमिदं सरलं नास्ति। लोके एवं दृश्यते यत् कश्चिदपि साधारणः कर्मचारी स्वाधिकारिणा सह मिलितुमिच्छति चेत् तदर्थं तस्य समक्षं महत्काठिण्यमागच्छति। संयोगाद्यदि अधिकारिणा कमपि कार्यं साधनीयं स्याच्चेत् तस्य काठिण्यस्य सीमा न भवति। एवं विधस्य काठिण्यस्य समाप्तये साधनरूपः श्रौतयागः शास्त्रेषु प्रतिपादितः। उक्तञ्चापि –

**'देवान् भावयतानेन ते देवा भावयन्तु वः।**
**परस्परं भावयन्तः श्रेयः परमवाप्स्यथ।।**[2]' इति।

---

1. सत्या० श्रौ० सू० 7/1/1
2. गीता 3/11

अथ सप्तमोऽध्यायः

# (क) कर्मसु प्रतिनिधीनामुपादानं शास्त्रसम्मतं न वेति सम्यक् निरूपणम्

'प्रति' + नि उपसर्गयोः 'धा' धातोः 'कि' प्रत्यये कृते सति 'प्रतिनिधिशब्दो निष्पद्यते। यस्य प्रतिकृतिः, सदृशः, सहायकः, प्रणिधिः, स्थानापत्तिः, प्रतिमा, समानता इत्यादयोऽनेकेऽर्थाः भवन्ति। कर्मसु प्रतिनिधिविषये व्याख्यानं कुर्वता कात्यायनेन प्राह – '**चोदिताभावेऽनारम्भस्तत्सिद्धित्वात्तस्य**[1]' अर्थात् 'विहितद्रव्याभावे काम्यस्य कर्मण आरम्भ एव न कार्यः, नित्यं च कर्म मुख्यद्रव्याभावेऽपि प्रतिनिधिनाऽप्यारम्भणीय एव[2]' इति देवयाज्ञिकः। अनेन व्याख्यानेनेदं स्पष्टं भवति यत् काम्ये कर्मणि प्रतिनिधेर्निषेधोऽस्ति, किन्तु नित्ये कर्मणि प्रतिनिधिर्गृहीतुं शक्यते।

उक्तेषु श्रौतयागेषु सर्वेऽपि यागाः द्विविधाः नित्य – काम्यभेदात्। यथा – दर्शपौर्णमासादिः। '**यावज्जीवं दर्शपौर्णमासाभ्यां यजेत**' इत्येषः सिद्धान्तस्तु दर्शपौर्णमासयागयोर्नित्यत्वमभिव्यनक्ति, परञ्च '**दर्शपौर्णमासाभ्यां यजेत् स्वर्गकामः**' अस्मिन् वाक्ये काम्यप्रयोगरूपेण दर्शपूर्णमासयोरनुष्ठानं विहितम्। तत्र नित्यानुष्ठानप्रसङ्गे प्रतिनिधिग्रहणं प्रतिपादितं, परं काम्ये कर्मणि प्रतिनिधिग्रहणस्य निषेध उक्तः।

निषेधप्रकरणस्य व्याख्यानं कुर्वता अर्थसंग्रहकारेण लौंगाक्षिभास्करेणोक्तम् – '**पुरुषस्य निवर्तकं वाक्यं निषेधः**'। निषेधवाक्यानामनर्थहेतुक्रियानिवृत्तिजनकत्वेनैवार्थवत्वात्। तथाहि यथा– विधिः प्रवर्तनां

---

1. का० श्रौ० सू० 1/4/1
2. देवयाज्ञिकपद्धतौ 7 तमे पृष्ठे

प्रतिपादयन् स्वप्रवर्तकत्वनिर्वाहार्थं विधेयस्य यागादेरिष्टसाधनत्वमाक्षिपन् पुरुषं तत्र प्रवर्तयति, तथा – **'न कलञ्जं भक्षयेत्'** इत्यादिनिषेधोऽपि निवर्तनां प्रतिपादयन् स्वनिवर्तकत्वनिर्वाहार्थं निषेध्यस्य कलञ्जभक्षणस्य परानिष्टसाधनत्वमाक्षिपन् पुरुषं ततो निवर्तयति।[1]

**नञर्थेन शब्दभावनाया अन्वयः**

सर्वत्र नञ्समभिव्याहृतलिङ्गादिघटितवाक्यस्य **'न भक्षयेत्'** इत्यादेः निषेधपदेन व्यवहारः प्रचलति। लिङ्गादेश्च शक्तिः प्रवर्तनायामेव, अनुशासनबलात्। नञश्चाभावे शक्तिः। येन स सम्बध्यते तदभावबोधने तस्य सामर्थ्यम्। यदि स धात्वर्थेन सम्बध्यते तर्हि तदभावं बोधयति। एतादृशधात्वर्थस्य लिङ्गार्थेनान्वये धात्वर्थवर्जनमेव प्रतीयेत। यदि नञ् लिङ्गर्थेनान्वियात् तदापि प्रवर्तनाभाव एव बोध्येत, न निवर्तना। अतः कथं निषेधवाक्यानां निवर्तनाबोधकत्वमित्याशंकते। समाधत्ते – नञो धात्वर्थेनान्वये 'न भक्षयेत्' इत्यादावव्यवधानम्, असत्यपरपर्यायं कारणं वक्तव्यम्। तत्तु न सम्भवतीत्याह – **'अव्यवधानेऽपि तस्य प्रत्ययार्थभावनोपसर्जनत्वेनोपस्थितेः'** इति।[2]

अर्थाद् धात्वर्थस्य प्रत्ययवाच्यार्थभावनोपसर्जनत्वेन (विशेषणत्वेन) उपस्थितत्त्वात्तेन सह नञर्थस्य नान्वयः। अस्तु धात्वर्थो भावनाया विशेषणम्, तावता तेन सह नान्वय इति हेतोरित्यत्राह– **'न ह्यन्योपसर्जनत्वेनो-पस्थितमन्यत्रान्वयेति।[3]'** सर्वो हि स्वप्रधानेन सहान्वेतुमुत्सहते। प्राधान्यञ्चार्थीभावनायाः, तत्र यथा धात्वर्थोऽन्वयेति तथा नञर्थोऽपि। अतो नञर्थधात्वर्थयोर्मिथो नान्वयः। यदि **'न ह्यन्योपसर्जनमन्येनान्वेति'** इति न्यायो नाङ्गीक्रियेत तदा तत्र दोषमुद्घाटयति – 'अन्यथा **'राजपुरुषमानय'** इत्यादावपि राज्ञः क्रियान्वयापत्तेः[4]' इति। **'राजपुरुषमानय'** इत्यत्रानयने

1. अर्थसंग्रहे पृ० 185
2. अर्थसंग्रहे पृ० 186
3. अर्थसंग्रहे 186 तमे पृष्ठे
4. अर्थसंग्रहे 186 तमे पृष्ठे

पुरुषः कर्म, पुरुषकर्मकानयनमिति। पुरुषपदार्थस्य चोपसर्जनं राजा। अन्यं पुरुषं प्रत्युपसर्जनीभूतस्य राज्ञ अनयनपदार्थे न भवत्यन्वयः। यद्ययं न्यायो नाङ्गीक्रियते तदा राज्ञोऽप्यानयनपदार्थेऽन्वयापत्तिरित्यर्थः। तर्हि नञर्थस्य कुत्रान्वय इत्यत्राह – '**अतः प्रत्ययार्थस्यैव नञर्थेनान्वयः**'[1] इति। प्रत्ययार्थस्तु द्विविधः – शाब्दीभावना आर्थीभावना च। तयोर्मध्ये कुत्रान्वयः? आर्थीभावनायामेवान्वयोऽस्तु, तस्याः कारकापेक्षया प्राधान्यात् प्रत्ययार्थत्वाच्चेत्यत आह – '**तत्रापि नाख्याततत्वांशवाच्यार्थभावनायाः, तस्याः लिङ्गंशवाच्यप्रवर्तनोपसर्जनत्वेनोपस्थितेः, किन्तु लिङ्गंशवाच्यशब्द-भावनायाः, तस्याः सर्वापेक्षया प्रधानत्वात्**'[2] इति। यद्यपि कारकापेक्षया तस्याः प्राधान्यम्, तथापि सा शब्दभावनायां साध्यत्वेनान्वितेति शब्दभावनोपसर्जनीभूता। अन्योपसर्जनीभूतेऽन्यस्यान्वयासम्भवस्योक्तत्वात्। सर्वप्रधानभूतायां शब्दभावनायामेव नञर्थस्य सम्बन्ध इति।

## नञ्स्वभावनिरूपणम्

नन्वेतावता निषेधस्थले निवर्तनाबोधकं कथम्? विध्यर्थेन प्रवर्तनारूपेणान्वये प्रवर्तनाभाव एव बुध्यत इति शङ्कां परिहरति – '**नञश्चैष स्वभावो यत् स्वसमभिव्याहृतपदार्थविरोधिबोधकत्वम्**' इति।[3] नञो न केवलमभावमात्रबोधकत्वं किन्तु स्वसम्बद्धविरुद्धार्थबोधकत्वमित्यर्थः। उदाहरति – '**यथा – घटो नास्ति**' इत्यादौ '**अस्ति**' इति शब्दसमभिव्याहृतो नञ् घटसत्वविरोधि घटासत्वं गमयति।[4] सत्वार्थप्रतिपादकास्तिना समभिहृतो नञ् तद्विरुद्धमसत्वं प्रतिपादयति। दार्ष्टान्तिके सङ्गमयति – '**तद्वदिह लिङ्समभिव्याहृतो नञ् लिङर्थप्रवर्तनाविरोधिनीं निवर्तनामेव**

---

1. अर्थसंग्रहे 186 तमे पृष्ठे
2. अर्थसंग्रहे 186 तमे पृष्ठे
3. अर्थसंग्रहे 188 तमे पृष्ठे
4. अर्थसंग्रहे 188 तमे पृष्ठ

**बोधयति।'**[1] प्रवर्तनाया विरोध्यर्थो निवर्तनैव। अतो नञ् निवर्तनार्थकः, तत्र च लिङ्स्तात्पर्यग्राहकत्वमिति भावः। तत्र लौकिकव्यवहारं प्रमाणयति– **'विधिवाक्यश्रवणे' अयं मां प्रवर्तयति** इति प्रवर्तनाप्रतीतिवत् निषेधवाक्यः श्रवणे **'अयं मां निवर्तयति'** इति निवृत्यनुकूलव्यापाररूपनिवर्तनाया प्रतीतेः। तस्मान्निषेधवाक्यस्थले निवर्तनैव वाक्यार्थः।[2] प्रवर्तनाया निरोध्यर्थो निवर्तनैवेति।

## नञर्थस्य प्रत्ययार्थेनान्वये बाधकं द्विविधम्

नञर्थस्य प्रत्ययार्थभावनायामन्वये क्वचिदपवादमाह– **'यदा तु प्रत्ययार्थे तदन्वये बाधकं तदा धात्वर्थस्यैव तत्रान्वय**[3]**'** इति। नञर्थाभावेन सह प्रत्ययार्थस्यान्वये बाधकद्वयं समापतति। **'तच्च बाधकं द्विविधम् - तस्य व्रतमित्युपक्रमो विकल्पप्रसक्तिश्च।**[4]**'** तस्य व्रतं = स्नातकस्य व्रतमनुष्ठेयपदार्थः, एवं रूप उपक्रम आरम्भ इत्यर्थः। इदमेकं बाधकम्। द्वितीयं बाधकम् – विकल्पप्रसक्तिः। यत्रानुष्ठेयत्वेन पदार्थस्योपक्रमः, यत्र वा नञर्थस्य प्रत्ययार्थान्वयाङ्गीकारे विकल्पप्रसक्तिः तदुभयमपि प्रत्ययार्थान्वये बाधकमित्यर्थः। यत्रेदं बाधकद्वयं न भवति तत्र निषेध इति भावः।

## आद्यं बाधकम्

तत्राद्यं **'नेक्षेतोद्यन्तमादित्यम्'** इत्यादौ **'तस्य व्रतम्'** इत्युपक्रम्यैतद्वाक्यपाठात्'[5] इति। अत्र निषेधानङ्गीकारे कोऽर्थस्स्वीकर्तव्य इत्यत्राह – पर्युदासाश्रयणमिति। यत्र नञ् प्रत्ययार्थप्रवर्तनयान्वयेति तत्र **प्रतिषेधः**। यत्र

1. अर्थसंग्रहे 188 तमे पृष्ठ
2. अर्थसंग्रहे 188 तमे पृष्ठे
3. अर्थसंग्रहे 189 तमे पृष्ठे
4. अर्थसंग्रहे 189 तमे पृष्ठे
5. अर्थसंग्रहे 190 तमे पृष्ठे

च सः प्रत्ययार्थादन्येनान्वयेति तत्र पर्युदासः। तदिदमुपपादयति – 'तथा हि – व्रतशब्दस्य कर्तव्यार्थे रूढ़त्वात् **'तस्य व्रतम्'** इत्यत्र स्नातकस्य व्रतानां कर्तव्यत्वेनोपक्रमात्।[1] अर्थात् व्रतशब्दस्य कर्त्तव्यपदार्थोऽर्थः। कस्स पदार्थो यः कर्तव्य इत्याकांक्षायां तदनन्तरपठितैः **'नेक्षेतोद्यन्तम्'** इत्यादिभिः कर्तव्यार्थ एव प्रतिपादनीयः। अन्यथा कर्त्तव्यरूपार्थाप्रतिपादने एकवाक्यत्वं न स्यादिति। अयमभिप्रायः – स्नातकस्यानुष्ठेयपदार्थनिरूपणप्रसङ्गं **'तस्य व्रतम्'** इत्यादि सामान्यत एव व्रतशब्दो दृश्यते। तस्य च विशेषापेक्षायां तदग्रिमतनैर्वाक्यैर्विशेषस्समर्पणीयः। कर्तव्यस्य विशेषः कर्तव्य एव भवति। पूर्ववाक्यापेक्षितविशेषसमर्पणमुत्तरवाक्यैः कर्तव्यम्। यावदुभयोरेकवाक्यता न स्यात् तावदाकाङ्क्षाशान्तिर्न स्यात्। एकवाक्यत्वाभावे पूर्ववाक्यं साकांक्षमेव सत् अनर्थकं स्यात्। एकवाक्यतायाः कृते उत्तरवाक्यैः कर्तव्योऽर्थः प्रतिपादनीयः। कर्तव्यमित्यारभ्य न कर्तव्यमित्युक्ते कथमेकवाक्यता स्यात्? अतश्च **'नेक्षेत'** इति वाक्येन कर्त्तव्यरूपोऽर्थो यथा प्रतिपादितस्स्यात् तथा नञर्थस्यान्वयो वाच्य इत्याह- **'तस्मात् नेक्षेत्'** इत्यत्र नञा धात्वार्थविरोध्यनीक्षणसंकल्प एव लक्षणया प्रतिपाद्यते, तस्य कर्तव्यत्वसम्भवादिति।[2]

प्रत्ययार्थभावनां परित्यज्य ईक्षति धात्वर्थेनान्वये सतीक्षणभिन्नमित्यर्थ आयाति। ईक्षणभिन्नञ्चानीक्षणम्। तथापि न कर्तव्यत्वप्रकारकबोधस्सम्पद्यत इत्यत्राह – लक्षणयेति। एवञ्च नञोऽनीक्षणसङ्कल्पे लक्षणामङ्गीकृत्य कर्तव्यत्वप्रकारकबोधस्सम्भव इत्यर्थः। ननु लक्षणया ईक्षणभिन्नेऽर्थे स्वीकृतेऽपि तद्भिन्नपदार्थानामनेकेषां सत्वात् कथं सङ्कल्पस्यैव ग्रहणमितिशंकायाम्- ब्रूमः, लक्ष्यार्थस्य शक्याविनाभूतत्वस्यावश्यकत्वेन सर्वप्रवृत्तिकर्मसु सङ्कल्पस्यैव तथात्वात्सङ्कल्प एव लक्ष्यत इति। तदिदं दर्शयति – **'आदित्यविषयकानीक्षणसंकल्पेन भावयेत्**[3]**'** इति। एवं

1. अर्थसंग्रहे 190 तमे पृष्ठे
2. अर्थसंग्रहे 190 तमे पृष्ठे।
3. अर्थसंग्रहे 190 तमे पृष्ठे

विहिताया भावनाया, साध्येन बिना स्वरूपं न सिध्यति इति तस्याः साध्याकाङ्क्षा जायत इत्याह – '**भाव्याकाङ्क्षायाम्**' एतावता हैनसा वियुक्तो भवति इति वाक्यशेषावगतः पापक्षयो भाव्यतयान्वेति।[1] अनीक्षणसंकल्पेन भावयेदित्युक्तौ अफले प्रेक्षावतां प्रवृत्त्यनुदयात् भाव्यस्य कस्यचिदपेक्षायां सत्यामित्यर्थः। एतावता अनीक्षणसङ्कल्पमात्रेण एनसा पापेन वियुक्तो भवति विमुक्तो भवतीत्यर्थवादार्थः। आर्थवादिकं पापक्षयाख्यं फलमन्वेतीत्यर्थः। एवञ्च पूर्वोत्तरयोरेकवाक्यत्वं निर्वहत्येव।

न चात्र धात्वर्थविरोधिनः पदार्थान्तरस्यापि संभवात् कथमनीक्षण-संकल्पस्यैव भावनान्वय इति वाच्यम्। तस्य कर्तव्यत्वाभावेन प्रकृते भावनान्वयायोग्यत्वात्।

**विकल्पप्रसक्तौ पर्युदासाश्रयणम् ( द्वितीयं बाधकम् )**

द्वितीयं '**यजतिषु ये यजामहं करोति नानुयाजेषु**' इत्यादौ। अत्र विकल्पप्रसक्तौ च पर्युदासाश्रयणात्। विकल्पप्रसक्त्या यत्र पर्युदासः तदुदाहरति। अत्रायं विषयविवेकः –

**'चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च।**
**हूयते च पुनर्द्वाभ्यां स नो विष्णुः प्रसीदतु।।**[2]'

इति स्मर्यते। प्रथमचतुश्शब्दस्य '**आश्रावय**' इति चत्वारि अक्षराणि, द्वितीयचतुश्शब्दस्य '**अस्तु श्रौषट्**' इति चत्वार्यक्षराणि, द्वाभ्याम् इत्यस्य '**यज**' इति द्वेऽक्षरे, पञ्चभिरित्यस्य '**ये यजामहे**' इति पञ्चाक्षराणि, द्वितीय द्वाभ्यामित्यस्य '**वौषट्**' इत्यक्षरद्वयम् अर्थः। आहृत्य सप्तदशाक्षराणि सम्पद्यन्ते। दर्शपूर्णमासादिषु क्रतुष्वध्वर्युः तां तां देवतां यक्ष्यन् हूयमानं द्रव्यं जुह्वां यथाविधि परिगृह्याहवनीयाग्नेस्समीपे उत्तराभिमुखस्तिष्ठन् आग्नीध्रं प्रेष्यति आश्रावय इति। हे आग्नीध्रः निर्देक्ष्यमाणदेवतां प्रति श्रावय '**यत्तुभ्यमिदं**' हविर्दीयत इति। आग्नीध्रः प्रतिवदति– '**अस्तु श्रौषडिति।**'

1. अर्थसंग्रहे 190 तमे पृष्ठे
2. तत्रैव अर्थालोकटीकायाम् 194 तमे पृष्ठे।

अस्तु इति शब्देन अध्वर्यो तव प्रैषानुसारेण श्रावयामीति स्वीकृत्य श्रौषट् इति शब्देन श्रावयति हे देवाः युष्मभ्यं दीयमानं हविः शृणुत। तदनन्तरमध्वर्युः होत्रा पुरोऽनुवाक्यामन्त्रे पठिते होतारं प्रेष्यति – '**यज**' इति। अत्र क्रमप्राप्तदेवतानाम् '**अग्निं सोममित्यादि**' योजयति। क्रमप्राप्त-देवताकयाज्यामन्त्रं पठेति। होतापि तदनुसारेण याज्यामन्त्रं पठन् मन्त्रादौ '**ये यजामहे**' इति मन्त्रान्ते '**वौषट्**' इति च शब्दौ योजयति। तत्र ये यजामह इत्यस्य ये वयमध्वर्युणा प्रेषिताः ते होतारो यजामहे याज्यामन्त्रं पठाम इति वौषट् हविर्दीयत इति च तयोरर्थः। अयमेव सन्दर्भः – '**आश्रावयेति चतुरक्षरम्, अस्तु श्रौषडिति चतुरक्षरम्, यजेति द्व्यक्षरम्, ये यजामह इति पञ्चाक्षरम्, द्व्यक्षरो वषट्कारः। एष वै सप्तदशः प्रजापतिर्यज्ञमन्वायत्तः**' इति वेदे समाम्नायते। **यजतिषु यजतिचोदनाचोदितेषु यागेषु ये यजामहशब्दमादौ याज्यामन्त्रेषु करोति योजयेदिति वाक्यार्थः।** नानूयाजेषु अनूयाजशब्दव्यतिरिक्तेषु यागेषु ये यजामह शब्दं कुर्यादित्यर्थः। कथमत्र तत् द्व्यतिरिक्तार्थस्य बोध अनुयाजेषु '**ये यजामह**' इति मंत्रस्य प्रतिषेधः स्यात्, अनुयाजेषु ये यजामहं न कुर्यात् इति। स च प्राप्तिपूर्वक एव, प्राप्तस्यैव प्रतिषेधात्।[1]' येन केनचित्प्राप्तौ न प्रतिषेधस्सङ्गत इत्याह शास्त्रादेवेति। प्रापकमपि शास्त्रम्। प्रतिषेधकमपि शास्त्रमिति प्रसङ्गे नोभयोर्बाध्यबाधकभावः, किन्तु विकल्प इत्याह – '**शास्त्रप्राप्तस्य च प्रतिषेधे विकल्प एव न तु बाधः**[2]' इति। ननु कथं विकल्प एव? बाधोऽपि भवितुमर्हति। कश्चन हननादौ प्रवृत्तः, तं हननप्राप्तिमूलभूतरागस्य बाधेन न हन्यादिति शास्त्रं हननान्निवर्तयति यथा प्रकृते यजतिष्विति शास्त्रेण ये यजामहकरणे प्रवृत्तं पुरुषं नानूयाजशास्त्रं निवर्तयतु इति शंकां निराकरोति – '**प्राप्तिमूलरागस्येव तन्मूलशास्त्रस्य शास्त्रान्तरेण बाधायोगात्**' इति।[3] हननादौ प्रवृत्तिं प्रति मूलं रागः, रागाच्च

1. अर्थसंग्रहे 194 तमे पृष्ठे
2. अर्थसंग्रहे 194 तमे पृष्ठे
3. अर्थसंग्रहे 194 तमे पृष्ठे

शास्त्रं बलीय इति तत्र प्रबलं दुर्बलं बाधत इति युक्तम्, तद्वदत्र ये यजामहकरणस्य मूलं न रागः, किन्तु शास्त्रम्, शास्त्रस्य शास्त्रान्तरेण बाधो न भवति, उभयोस्तुल्यबलत्वात्। अतो न बाध इत्याह - बाधायोगादिति। ननु शास्त्रयोरपि बाध्यबाधकभावो दृश्यते। होमत्वावच्छिन्नोद्देशेनाधिकरणत्वेनाग्निं विधत्ते **'यदाहवनीये जुहोति'** इति शास्त्रम्। तच्च **'पदे जुहोति'** इति शास्त्रेण बाध्यते। ज्योतिष्टोमे सोमक्रयणाय गां नयन् यत्र सा सप्तमं पदं निक्षिपति तत्र होमः कर्तव्यतया विधीयते **'सप्तमे पदे जुहोति'** इति। एवमश्वमेधेऽपि अश्वे यागदेशं नीयमाने **'अश्वस्य पदे पदे जुहोति'** इति पदहोमो विहितः। यथा पदहोमविधायकमपि शास्त्रम् आहवनीयविधायकमपि तथा। उभयोश्शास्त्रत्वेऽपि पदशास्त्रेणाहवनीयशास्त्रं बाध्यत इत्यङ्गीक्रियते न विकल्पः, तथा यजतिष्विति शास्त्रविहितं ये यजामहकरणं नानूयाजशास्त्रेण बाध्यतामिति शङ्कामुत्थापयति - **'न च पदे जुहोति' इति विशेषशास्त्रेण 'आहवनीये जुहोति' इति शास्त्रस्येव 'नानुयाजेषु' इत्यनेन 'यजतिषु ये यजामहं करोति' इत्यस्य बाधः स्यादिति वाच्यम्।**[1] **अस्याः शंकायाः समाधानं कुर्वता कथयति लौंगाक्षिभास्करः - 'परस्परनिरपेक्षयोरेव शास्त्रयोर्बाध्यबाधकभावात्। पदशास्त्रस्य हि स्वार्थविधानार्थ-माहवनीयशास्त्रानपेक्षत्वम्। प्रकृते तु निषेधशास्त्रस्य निषेध्यप्रसक्त्यर्थं यजतिषु ये यजामहम्' इत्यस्यापेक्षणान्न निरपेक्षत्वम् इति।**[2] अर्थात् यत्र द्वे अपि शास्त्रे मिथो निरपेक्षे भवतः तत्र बाध्यबाधकभावः, यत्र च ते सापेक्षे भवतस्तत्र विकल्प इति। पदशास्त्रं पदाधिकरणकहोमं विधातुं नाहवनीयशास्त्रमपेक्षते। अतो यदि स्वविषये तत्प्राप्नुयात्तर्हि तद्बाधितुं समर्थं भवति। अर्थात् पदातिरिक्तस्थल एवाहवनीयशास्त्रप्रवृत्तिः। नानुयाजेष्वित्यत्र। प्राप्तिं विना निषेधस्य न प्रवृत्तिः, प्रतियोगिसापेक्षत्वात्तस्य। अनूयाजेषु ये यजामहकरणस्य प्राप्तौ सत्यां तन्निषेधः कर्तुं शक्यः। अतस्तत्प्राप्तिसापेक्षो

1. अर्थसंग्रहे 194 तमे पृष्ठे
2. अर्थसंग्रहे 194 तमे पृष्ठे

निषेध इति। निषेध्यस्य ये यजामहकरणस्य प्रसक्तिः प्राप्तिः तदर्थमित्यर्थः। अतस्सापेक्षत्वात् पदाहवनीयन्यायप्रसक्तिः प्रकृते न भवति।

**बाधायोगोपसंहारः**

तस्माच्छास्त्रविहितस्य शास्त्रान्तरेण प्रतिषेधे विकल्प एव। स च न युक्तः। विकल्पे शास्त्रस्य पाक्षिकाप्रामाण्यापातात्। अत्र विकल्पस्यायुक्तत्वे कारणमाह – विकल्प इति। विकल्पस्थलेऽन्यतरस्य प्राप्तौ अन्यतरस्या-प्रामाण्यापत्तिः। अप्रामाण्यमेवोपपादयति – **'न ह्यनुयाजेषु ये यजामहम्' इत्यस्यानुष्ठाने 'नानुयाजेषु' इत्यस्य प्रामाण्यं संभवति, व्रीहियागानुष्ठाने यवशास्त्रस्येव।**[1] **'व्रीहिभिर्यजेत', 'यवैर्यजेत'** इत्यत्र व्रीहिशास्त्रप्रवृत्तिदशायां न यवशास्त्रप्रवृत्तिः, यवशास्त्र- प्रवृत्तिदशायां न व्रीहिशास्त्रप्रवृत्तिरिति पक्ष उभयोरपि प्रामाण्यं यथा न सम्भवति तथा प्रकृतेऽपि पाक्षिकमप्रामाण्यं स्यादित्यर्थः। अप्रामाण्यमभिधाय दोषान्तरमाह – **'द्विरदृष्टकल्पना च स्यात्, विधिप्रतिषेधयोरपि पुरुषार्थत्वात्।**[2]**'** अनूयाजेषु **'यजतिषु'** इति शास्त्रेण ये यजामहकरणपक्षे एकमदृष्टम्, तेषु **'नानूयाजेषु'** इति शास्त्रेण तदकरणपक्षेऽपरमदृष्टमित्यदृष्टद्वयकल्पनेत्यर्थः। पुरुषार्थत्वादिति अदृष्टद्वय-कल्पनायां हेतुः। **'यजतिषु'** इति शास्त्रेणारभ्याधीतेनापि यागसामान्योद्देशेन ये यजामहो विधीयते। विधिना विहितस्योपकारजनकत्वं तावत्सिद्धम्। स चोपकारो दृष्टोऽपि भवत्यदृष्टोऽपि। यजतिषु ये यजामहकरणेन न कश्चिद्दृष्ट उपकारः, अनूयाजेषु तदकरणेन कश्चिद्दृष्ट उपकार इत्यदृष्टद्वयं स्वीकर्तव्यम्। तदत्रानूयाजेषु ये यजामहकरणेन न क्रतोर्वैगुण्यं किञ्चित्। अतो विधिप्रतिषेधयोरुभयोरपि पुरुषार्थत्वमित्यर्थः। **'अतो नात्र प्रतिषेधा-श्रयणम्, किन्तु नञोऽनुयाजसम्बन्धमाश्रित्य पर्युदासस्यैव।**[3]**'** प्रतिषेधाश्रयणे विकल्पप्रसक्तेः, विकल्पे च पाक्षिकाप्रामाण्यापत्तेः

---

1. अर्थसंग्रहे 199 तमे पृष्ठे
2. अर्थसंग्रहे 199 तमे पृष्ठे
3. अर्थसंग्रहे 199 तमे पृष्ठे

पर्युदासाश्रयणमुचितम्। तदा नञो भावनया सम्बन्धं परित्यज्यानुयाजैस्सम्बन्ध इति स्वीकारे पर्यवसन्नं वाक्यार्थं दर्शयति – **'इत्थं चानुयाजव्यतिरिक्तेषु यजतिषु' ये यजामहे इति मन्त्रं कुर्यादिति वाक्यार्थबोधः, नञोऽनुयाजव्यतिरिक्ते लाक्षणिकत्वात्। एवं च न विकल्पः।'**[1] पूर्ववन्नञस्तद्व्यतिरिक्ते लक्षणेत्याह – नञ इति। तथा चानुयाजव्यतिरिक्तेषु यजतिषु ये यजामहः कार्य इति वाक्यार्थस्सम्पद्यते। 'अत्र च वाक्ये' ये यजामहे इति न विधीयते यजतिषु- ये यजामहम् इत्यनेनैव प्राप्तत्वात् किन्तु सामान्यशास्त्रप्राप्तस्य ये यजामह इत्यस्यानुवादेन तस्यानुयाजव्यक्तिरिक्तविषयकत्वं विधीयते। यत् यजतिषु ये यजामहं करोति तदनुयाजव्यतिरिक्तेष्विति।'[2] नन्वत्र वाक्ये ये यजामहो विधातव्यः, तस्माननूयाजव्यतिरिक्तत्वञ्च विधेयम्। तथा च वाक्यभेदस्यादित्यत्राह – **'न विधीयत'** इति। सत्यपि विधिप्रत्यये विहितस्य पुनर्विधानायोगात् इति भावः। तर्हि किमनेन क्रियत इत्यत आह – किन्त्विति। सामान्यशास्त्रम् – **'यजतिषु ये यजामहं करोति'** इति। तेन प्राप्तो यो ये यजामहः तमनूद्यानुयाजव्यतिरिक्तविषयता विधीयत इत्यर्थः। एवञ्च यद् यजतिषु ये यजामहं करोति तदनुयाजव्यतिरिक्तेष्विति।

### पर्युदासोपसंहारभेदनिरूपणम्

**'यजतिषु ये यजामहं करोति'** इति सामान्यविधिः। तेन अनुयाजाननुयाजसाधारण्येन प्राप्तः ये यजामहः। तस्य पर्युदासेनानुयाजव्यतिरिक्तार्थबोधने पर्युदासस्योपसंहाररूपत्वं साप्तदश्यस्येव प्राप्नुयात्। सामान्यतः प्राप्तस्य विशेषे सङ्कोचः खलूपसंहार इति शंकते – नन्वेवं सामान्यंशास्त्रप्राप्तस्य विशेषे संकोचनरूपादुपसंहारात् पर्युदासस्य भेदो न स्यादिति चेत्, न, उपसंहारो हि तन्मात्रसंकोचार्थः। यथा – **'पुरोडाशं चतुर्धा करोति'** इति सामान्यप्राप्तचतुर्धाकरणम्, **'आग्नेयं चतुर्धा करोति'** इति

1. अर्थसंग्रहे 199 तमे पृष्ठे
2. अर्थसंग्रहे 199 तमे पृष्ठे

**विशेषादाग्नेयपुरोडाशमात्रे संकोच्यते। पर्युदासस्तु तदन्यमात्रसंकोचार्थ इति ततो भेदः।'**[1] अर्थात् स्वस्मिन् स्वेतरस्मिंश्च प्राप्तं विषयं स्वेतरस्मात् व्यावर्त्य स्वमात्रे सङ्कोच उपसंहारः। अत्र पुरोडाशविभाजनस्य दृष्टान्तः प्रदत्तः। स्विष्टकृद्यागानन्तरम् इडाभक्षणे कृतेऽवशिष्टपुरोडाशस्य चतुर्धा विभजनं विहितं कर्मकरेभ्य ऋत्विग्भ्यो दानाय। तत्रेदं चतुर्धाकरणं सामान्यतः सर्वेषां पुरोडाशानां प्राप्तम्। पूर्णिमायाम् आग्नेयः पुरोडाशः अग्नीषोमीयपुरोडाशश्चेति पुरोडाशद्वयम्। द्वयोरपि पुरोडाशयोश्चतुर्धाकरणे सामान्यविधिना प्राप्ते विशेषवाक्येन **'आग्नेयं पुरोडाशं चतुर्धा करोति'** इत्यनेन सङ्कोच्यते। एवमुपसंहारात्पर्युदासस्य भेदः तदन्येनेत्यनेन पदेन क्रियते। अर्थात् प्राप्तं विषयं स्वस्मात् व्यावर्त्य स्वेतरस्मिन् व्यवस्थापनं पर्युदासः। उपसंहारे स्वमात्रेऽवस्थापनं पर्युदासे तु स्वेतरस्मिन् व्यवस्थापनमिति द्वयोर्भेद इति भावः।

## कुत्रचिद्विकल्पप्रसक्तावपि प्रतिषेधाश्रयणम्

विकल्पप्रयुक्तपर्युदासस्य क्वचिदपवादमाह – **'कुत्रचिद्विकल्प-प्रसक्तावप्यन्यगत्या प्रतिषेधाश्रयणम्। यथा 'नातिरात्रे षोडशिनं गृह्णाति' इति शास्त्रप्राप्तषोडशिग्रहणस्य निषेधात् विकल्पप्रसक्तावपि न पर्युदासाश्रयणम्, असंभवात्।'**[2] गत्यन्तराभावेन विहितस्य प्रतिषेधेन प्राप्तो विकल्पोऽपीष्टापत्या स्वीक्रियत इति भावः। अतिरात्रसंस्थाके ज्योतिष्टोमे षोडशिसंज्ञकं ग्रहं न गृह्णीयादित्यर्थः। अस्य वाक्यस्य याथातथ्येनार्थमवगन्तुं केचन पदार्था विविच्यन्ते। सर्वसोमयागानां प्रतिभूतः क्रतुर्ज्योतिष्टोम इति पूर्वमुक्तम्। तस्मिन् ज्योतिष्टोमे अग्निष्टोमः, अत्यग्निष्टोमः, उक्थ्यः, षोडशी, वाजपेयोऽतिरात्रः आप्तोर्यामश्चेति सप्तसंस्थास्सन्ति। आसु संस्थासु अत्यग्निष्टोमः आप्तोर्यामः वाजपेयश्चेति तिस्रस्संस्थाः अवशिष्टाग्निष्टोमादिसंस्थानां न्यूनाधिकभावेनानुष्ठानप्रकार-

---

1. अर्थसंग्रहे 201–202 पृष्ठे
2. अर्थसंग्रहे 202 तमे पृष्ठे

विशेषा एव। अतश्चतस्रस्संस्था मूलरूपेण सन्ति। संस्थानाम स्तोत्रेण क्रतूपरमः। क्रतूप्रयोगे येन स्तोत्रेण समाप्तिः तत्स्तोत्रनाम्ना क्रतुर्व्यवह्रियते। अग्निष्टोमादिशब्दा मुख्यतया सामवाचकाः। तद् यत्र अग्निष्टोम साम पठित्वा तदुपरि न किञ्चन साम पठ्यते, किन्तु तत्रैव परिसमाप्यते साऽग्निष्टोमसंस्था। एवमग्निष्टोमसामानन्तरमुक्थ्यं साम पठित्वा तदुपरि सामान्तरं यत्र न पठ्यते सा उक्थ्यसंस्था। एवं षोडशिनि अतिरात्रे चावगन्तव्यम्। स्तोत्रं नाम प्रगीतमन्त्रसाध्य गुणिनिष्ठगुणाभिधानम्। सामयुक्तैः ऋङ्मन्त्रैर्देवतानिष्ठ-गुणकीर्तनमित्यर्थः। इदं गुणाभिधानमुद्गातृगणान्तर्गतैः उद्गातृप्रस्तोतृ-प्रतिहर्तृभिः ऋत्विग्भिः क्रियते। तत्राग्निष्टोमसंस्थाकज्योतिष्टोमो नित्यः काम्यश्च। उक्थ्यादिसंस्थाः काम्याः अग्निष्टोमसंस्थाकज्योतिष्टोमस्य विकृतयश्च। अग्निष्टोमादिशब्दानां शक्यार्थः तत्तत्संस्था एव। तत्तत्संस्थावति ज्योतिष्टोमे निरूढलक्षणा, तद्वति क्रत्वन्तरे साम्प्रतिकी लक्षणा, ग्रहणे स्तोत्रे च प्रयोगो गौणः। एवञ्च 'नातिरात्रे षोडशिनं गृह्णाति' इत्यत्रातिरात्रशब्देन तत्संस्थाकज्योतिष्टोमस्य ग्रहणम्। तत्र षोडशिशब्दवाच्यस्य ग्रहस्य ग्रहणं न कर्तव्यमिति प्रकृतवाक्यार्थः।

अतिरात्रे षोडशिग्रहणनिषेधस्य प्राप्तिसापेक्षत्वात् प्रापकं किमित्यत्राह - अतिरात्र इति। उभयोश्शास्त्रत्वेन विकल्पे प्रसक्ते नञः षोडशिपदेन सम्बन्धमाश्रित्यातिरात्रे षोडशिव्यतिरिक्तं गृह्णीयादिति पर्युदास एवाश्रीयतामित्यत्राह - असम्भवादिति। असम्भवमुपपादयति -

'**यद्यत्र षोडशिपदार्थेन नञर्थान्वयस्तदातिरात्रे षोडशिव्यतिरिक्तं गृह्णातीति वाक्यार्थबोधः स्यात्। स च न संभवति, अतिरात्रे षोडशिनं गृह्णाति**' इति प्रत्यक्षविधिविरोधात्। यदि चातिरात्रपदार्थेनान्वयस्तदाति-रात्रव्यतिरिक्ते षोडशिनं गृह्णातीति वाक्यार्थबोधः स्यात्, सोऽपि न संभवति, तद्विधिविरोधात्। अतोऽत्रानन्यगत्या शास्त्रप्राप्तषोडशिग्रहणस्यैव निषेधः। न च विकल्पप्रसक्तिस्तस्याप्यपेक्षणीयत्वात्।"[1]

1. अर्थसंग्रहे 202 तमे पृष्ठे

अत्र नातिरात्र इति वाक्ये मास्तु नञ्षोडशिना सम्बन्धः, अतिरात्रपदेन तस्य सम्बन्धः क्रियताम्, अत्राप्यसंभवमुक्तम् – '**तद्विधि**'इत्यनेन वाक्येन। अतिरात्रे षोडशिग्रहग्रहणविधेर्विरोधादित्यर्थः। अतः सामान्यशास्त्रेण विहितस्य षोडशिग्रहणस्य पाक्षिकः निषेधः भवितव्यः। तस्मात् विकल्पप्रसक्तिं निर्दुष्टम्मत्वा तत्स्वीकरणे नास्ति काचित् विप्रतिपत्तिरिति।

अनेन विवेचनेनेदं स्फुटं भवति यत् कर्मसु प्रतिनिधीनामुपादानं शास्त्रसम्मतं वर्तते। तत्र विशिष्टाविशिष्टधर्माः सम्यगालोचयितव्याः। यथोक्तं कात्यायनेन – '**नित्ये सामान्यतः प्रतिनिधिः स्यात्**[1]' अर्थात् नित्ये कर्मणि विहितद्रव्याभावे तत्स्थाने तत्सदृशस्य द्रव्यान्तरस्य ग्रहणं स्यादेव। कुतः? सामान्यतः = सादृश्यादित्यर्थः। विहितद्रव्यलाभेन प्रथमतः काम्ये कर्मणि आरब्धे अनन्तरं च तस्यापचारे जाते तत्कर्म प्रतिनिधिना समापनीयम्? उत न? इति संशये सिद्धान्तमाह –

'**आरम्भान्नियमः**[2]' काम्यस्य कर्मण आरब्धत्वान्नियमः, प्रतिनिधिनापि समाप्तिरवश्यं कर्तव्येत्यर्थः। ततश्च अवश्यसमापनान्यथा-नुपपत्या प्रतिनिधिरपि भवतीत्यभिप्रायः। यत आरब्धस्य काम्यस्य कर्मणोऽसमाप्तौ दोषोऽपि भवतीति गम्यते। कुतः? सामान्यात्, शिष्टविगर्हणसामान्यादित्यर्थः। यथैव नित्यानुष्ठाने शिष्टा विगर्हन्ते एवमारब्धस्यापि काम्यस्य अपरिसमापने शिष्टा निन्दन्ति। नहि दोषाभावे शिष्टविगर्हणं भवितुमर्हति। तदुक्तं ताण्ड्यब्राह्मणे – '**यदि सोमं न विन्देत्पूतीकानभिषुणुयात्**[3]' इति। सोमाभावे पूतीकेन समाप्त्यभिधानमप्यत्र.लिङ्गम्।

---

1. का० श्रौ० सू० 1/4/2
2. का० श्रौ० सू० 1/4/3
3. ता० ब्रा० 9/5/3

## ( ख ) प्रतिनिधिसु कर्तुः प्रातिनिध्यम्, द्रव्यप्रातिनिध्यम्, तथा च तादृश ऊहोऽपि विश्लेषणीयः

कर्तापदेनात्र यजमानो बुध्यते। यज्ञेषु कार्यकर्तारो बहवो भवन्ति तेषु समस्तेष्वपि कार्यकर्तृषु यजमानस्य प्रधानता भवति। अन्ये कर्तारः यजमानस्य सहायकाः भवन्ति। तदुक्तं समीक्षाचक्रवर्तिना महामहोपाध्याय पं० मधुसूदन ओझा सरस्वतिना स्वीये '**यज्ञमधुसूदन**' नामके ग्रन्थे-'**यज्ञ-सम्पादकाः पुरुषास्त्रेधा विभज्य गृह्यन्ते - प्रधानपुरुषाः, ऋत्विक्पुरुषाः अनृत्विक्पुरुषाश्च। तत्र प्रधानभागे त्रयः पुरुषाः - यजमानः, यजमानपत्नी, पुरोधाश्चेति।**'

**प्रधानसम्पत्तिः**

तत्र को यजमानः स्यादित्यत्राहुः। य आत्मने फलमभिसन्धाय देवयजने प्रवर्तमानोऽन्तर्वेदि कर्म्म कुरुते स यजमानः। स एव मुख्यो यज्ञकर्ता, न त्वन्यः। यो यजते स एव फलेन युज्यते। यः फलेनात्मानं सम्पादयितुमिच्छति स एव यजते, तस्मात्स यजमानो नाम। स चायं यजमानः पुरुषोऽर्द्धवृगलमिवोत्पद्यते, प्राणार्द्धमयत्वात्। तस्यायमाकाशः पत्न्या पूर्य्यते। ततोऽसौ कृत्स्नप्राणः पूर्णरूपो भवति। उक्तं चापि श्रुतिषु - '**अर्द्धमु हैतदात्मनो यन्मिथुनम्। यदा वै सह मिथुनेन अथ सर्वोऽथ कृत्स्नः**'[1] इति। यथा च - '**अर्धो ह वा एष आत्मनो यज्जाया, तस्माद् यावज्जायां न विदन्ते नैव तावत्प्रजायते।** असर्वो **हि तावद्भवति। अथ यदैव जायां विन्दते, अथ प्रजायते। तर्हि हि सर्वो भवति**' इति च वाजपेयश्रुतेः। यज्ञेन हि पूर्णप्राणः स आधिदैविकोऽभिसन्धीयते। स यदि यज्ञकर्तुराध्यात्मिकः प्राणोऽर्द्धखण्डः स्यात्, स तर्हि कृत्स्नस्याकृत्स्नेन योगोऽसमञ्जसः

1. श० प० ब्रा० 8/7/2

स्यात्। तस्मात् पत्न्या सहकृतः पतिर्यज्ञायाधिक्रियते, नैकलः। '**अयज्ञो वा एष योऽपत्नीकः। न प्रजाः प्रजायेरन्। अथा अर्द्धो वा एष आत्मनो यत्पत्नी। यज्ञस्य धृत्या अशिथिलम्भावाय**[1]' इति। अत एव च सा पत्नी शरीरार्द्धमुच्यते। '**सहोभौ चरतां धर्म**[2]' इत्यनुज्ञाय पित्राग्निसाक्षिकं दत्ता सा पत्नी यज्ञसंयोगे धर्मार्द्धहारिणी भवति। तस्मादेनं यजमानं यजमानपत्नीं च व्यासज्यवृत्या पर्याप्नोति यज्ञाहितसंस्कार-स्तदुदर्कश्च। तस्माद्यजमानतत्पत्नीरूपाभ्यां खण्डाभ्यां कृतरूपः कृत्स्नः कश्चिदेकः प्राणपिण्डो यज्ञकर्तेति सिद्धम्।

यजमानो, यष्टा, व्रती, आदिष्टीति समानार्थाः। स्थपतिः, दीक्षितः, सोमपीथी, सर्ववेदाः, यज्वा, यायजूकः, गृहपति - इत्येते यजमानविशेषार्थाः। तत्र '**वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत**[3]' इति विधिसिद्धया बार्हस्पत्येष्ट्या यो यजते स स्थपतिः। सोमेन यष्टा दीक्षित उच्यते। सोमपाः सोमपीथी। सर्वस्वदक्षिणो यागो येनेष्टः स सर्ववेदाः। विधिना य इष्टवान् स यज्वा। इज्याशीलो यायजूकः। इति भेदाः। अथ सत्रे सप्तदशावराश्चतुर्विंशतिपरमाः सत्रिणो दीक्षन्तेऽन्यान्यगोत्राः। तत्र यः प्रधानतयाभिमतो यस्य वा गृहे समागत्य सर्वे दीक्षन्ते, स एको यजमानविशेषो गृहपतिर्नाम। '**गृहपतिमनु सत्रिणो भवन्ती**' त्याहुः।

अथ प्रतिबन्धकवशात् यजमानप्रत्यासत्यलाभे तत्प्रातिनिध्येन यो यजमानस्थानमवगाह्य तत्कर्तव्यं कर्म करोति स पुरोधाः। स ऋत्विगिव दक्षिणया क्रीतो भवति। स हि यजमानासनमवगाहते, यजमानोपस्थितौ तु तस्य कर्म्म नास्ति, इत्यतः स ऋत्विग्भ्यः पृथगिष्यते। अन्तर्वेदि कर्मकर्तृत्वाच्च नास्य परिकर्मित्वम्। यजमानस्थानत्वाच्च तस्य प्रधानवर्गे संनिवेशः।

---

1. तै० ब्रा० 3/3/3
2. मनु० 3/30
3. शां० श्रौ० सू० 15/4/1

**अथ ऋत्विक्सम्पत्तिः**

यो हि द्विजो यजमानक्रीतः परार्थमन्तर्वेदि कर्म्म करोति स ऋत्विक्। अत्रायमभिसन्धिः। स फलेन युज्यते यो यजते, इति हि स्थितिरस्ति। अत एव फलार्थिना स्वयमेव यष्टव्यम्, स्वानुपस्थितौ स्वप्रतिनिधिना वा। न त्वन्येन यागः सम्पादयितव्यः। अन्यथा कर्तृविभागेन फलविभागापत्तेः। परन्तु नहि सर्वं कर्म्मैकेन पुरुषेण सम्भवति। वैतानिकादीनां सुविस्तृतकर्मणामेकेन द्वाभ्यां वा कर्तुमशक्यत्वात्। तस्मादवश्यं विभागेन कर्म्माणि सम्पादयितुं तत्तत्कर्मानुसारेण यावदुपयोगमन्येषामपि पुरुषाणां सहकारिणां वरणीयता प्राप्नोति। किंतु कर्मविभागे सति फलविभागो नाम दोषः सम्भाव्यते, इत्यतस्तद्दोषनिवृत्त्यर्थं तेभ्यः सहकारिभ्यो दक्षिणा विधीयते। तथा च तेषां दक्षिणालाभफलाभिसन्धानेन प्रवृत्तानां यज्ञाधेयातिशयलाभ - फलानभिसन्धानात् सहकर्म्मकरणेऽपि न तत्कर्म्मफलेनाभिसम्बन्धः। अन्यकृतेनापि कर्मणा साध्यस्य फलस्य यजमानमात्रविश्रान्तत्वात् इति नास्त्यसामञ्जस्यम्। ते चैते यजमानवृता दक्षिणाक्रीताः पुरुषा द्वेधा भवन्ति ऋत्विजश्चानृत्विजश्च। तत्र यंजमानसहकारेणान्तर्वेदि कर्मकर्तृषु ऋत्विक्शब्दः। तस्य च ऋतुषु यजतीति व्युत्पत्तिमिच्छन्ति। वस्तुतस्तु ऋतापरपर्यायस्य संवत्सराग्नेः पञ्चमो भाग ऋतुरित्युच्यते। तान् यजति तैर्वा यजतीति व्युत्पत्तिः साध्वी।

वरणीयश्च स ऋत्विग् ब्राह्मण एव स्यान्न क्षत्रियो वैश्यो वा। ऋत्विजां यज्ञाच्छिष्टेडाप्राशित्रभक्षणस्यावश्यकत्वात्। क्षत्रियवैश्ययोस्तु तत्प्रतिषेधात्। तदाह कात्यायनः - '**ब्राह्मणा ऋत्विजो भक्षणप्रतिषेधादितरयोः**[1]' अस्य सूत्रस्य व्याख्यायां कर्काचार्योऽनेकब्राह्मणग्रन्थानां वचनान्युद्धृत्य कात्यायनस्यैतद्वचनस्य दृढतां सम्पादयन्नवोचत् - क्षत्रियवैश्ययोः हुतशेषभक्षणनिषेधात् तेषामार्त्विज्ये अधिकारो नास्ति। तस्माद्ब्राह्मणा-

---

1. का० श्रौ० सू० 1/2/8

नामेवार्त्विज्ये अधिकारो वर्तते। श्रूयते च – '**अग्निहोत्रोच्छिष्टं नाब्राह्मणः पिबेद्, अग्नौ ह्यधिश्रयन्ति। न राजन्यो वैश्यो वा सान्नाय्यं पिबेद्, असोमपीथी ह्येषः**[1]' तस्माद्ब्राह्मणा एव ऋत्विक् स्यान्न त्वन्यः इत्युक्तं प्राक्। तत्रापि –'**ऋत्विगार्षेयोऽनूचानः साधुचरणो वाग्मी अन्यूनाङ्गोनतिरिक्ताङ्गो द्वयसमश्चानतिकृष्णोऽनतिश्वेतः**[2]' इति लाट्यायनोक्त एव यज्ञं सम्पादयितुमधिकारी भवति।

'**एष वै ब्राह्मण ऋषिरार्षेयो यः शुश्रुवान्**[3]' इति तैतिरीयश्रुतेः। '**यो वै ज्ञातोऽनूचानः स ऋषिः**[4]' इति शतपथश्रुतेः। '**ऋषयो मन्त्रद्रष्टार**[5]' इति निरुक्तस्मृतेश्च साक्षात्कृतविद्य ऋषिः। ऋषेरपत्यमार्षेयः। अथवा – आदशमात् पुरुषादव्यवच्छिन्नमार्षं यस्य स आर्षेयः। यस्मै विद्यासम्प्रदानं ऋषिभिः कृतं सोऽनूचानः। यो हि संस्कृतां वाचमुच्चारयति, बहुतरं वचनमनर्थकं यो न भाषते, मतिद्वैधे उत्पन्ने यः संशयच्छेत्ता, यो हि पृष्टः सन् न्यायेन प्रतिवचनं ददाति, सर्वथा यः प्रतिवचनसमर्थः स्यात् स वाग्मी। समुद्रोपज्ञलक्षणशास्त्रप्रतिपन्नप्रमाणवन्ति यस्य गात्राणि भवेयुः, स एषोऽन्यूनाङ्गनातिरिक्ताङ्गः कुणिपङ्गुबधिरादिभिन्नो, द्वयङ्गुष्ठादिभिन्नश्चेति वा। द्वयोरपि वामदक्षिणभागयोः समप्रमाणो द्वयसमः। अथवा – अधश्चोर्द्ध्वं यश्च नाभेस्तु समो यस्मात्प्रमाणतः पादाङ्गुष्ठाङ्गविष्टब्धः स वै द्विसम उच्यते इति।

अतिकृष्णो दग्धाङ्गारसदृशः, अतिश्वेतस्तु पाण्डुवदाभासः प्रकृतिविलक्षणः। अथ व्याधितस्यातुरस्य यक्ष्मगृहीतस्यानुदेश्याभिशस्तस्य क्षिप्तयोनेश्चार्त्विज्यमकार्य्यमित्याश्वलायनः प्राह।

---

1. श० प० ब्रा० 2/3/1/39, उल्लेखः यज्ञमधुसूदने, डॉ० विनोदशास्त्रीसम्पादिते 4 तमे पृष्ठे
2. ला० श्रौ० सू० 1/1/7
3. मैत्रायण्याम् 4/8/2
4. श० प० ब्रा० 4/3/4/19
5. निरुक्ते – 'ऋषिर्दर्शनात्' – 2/3/12

**'त्रीणि यस्यावदातानि विद्या-योनिश्च कर्म्म च।**
**स ब्राह्मणः स आर्त्विज्ये वरणीयो न चेतरः।।[1]'**

इति याज्ञिकसिद्धान्तात् विद्याकर्मवत्कुलतोऽपि ब्राह्मणा परीक्षणीया भवन्ति। तथा च तेषां परीक्षणीयार्थाः षोढा निर्दिश्यन्ते - वर्णः, गोत्रं, प्रवरः, वेदः, शिखा, सूत्रञ्चेति। तत्राद्यास्त्रयः प्रथमजन्मसिद्धाः। उत्तरास्त्रयो व्रतबन्धाख्यद्वितीयजन्मसिद्धाः। यथाऽहं वर्णतो ब्राह्मणः, तस्य मे काश्यवगोत्रम्, काश्यपावत्सारनैध्रुवेति प्रवरास्त्रयः। शुक्लयजुर्वेदः, माध्यन्दिनीशाखा, कात्यायनपारस्करसूत्रञ्चेति।

एवं च भक्षणव्यावृत्या कर्तृत्वमपि व्यावर्तत इति भावः। यतः **'द्वया वै देवाः। आहुतिभिरेव देवान्प्रीणाति दक्षिणाभिर्मनुष्यदेवान्[2]'** इति मनुष्यदेवपदवाच्यानां ब्राह्मणानामेव दक्षिणासम्बन्धदर्शनादित्यर्थः। तदुक्तमादिकविना बाल्मीकिना -

**'क्षत्रियो याजको यस्य चाण्डालस्य विशेषतः।**
**कथं सदसि भोक्तारो हविस्तस्य सुरर्षयः।।[3]'**

अर्थाद्ब्राह्मणा (उपनयनादिसंस्कारैर्द्विजत्वमाप्ताः) एव यज्ञेष्वार्त्विज्यं कर्तुमर्हाः, न राजन्यादयः। राजन्यवैश्ययोः यजमानत्वेन श्रौतक्रतुष्वधिकारो वर्तते। तथा चाह कात्यायनः - **'ब्राह्मणराजन्यवैश्यानां श्रुतेः[4]'** इति। श्रौतक्रतुषु अधिकारिनिरूपणं कुर्वता देवयाज्ञिकेनोक्तम्- **'तत्राग्न्याधेयादि-सर्वकर्मसु ब्राह्मण - क्षत्रिय - वैश्यानामधीतवेदानां वेदार्थज्ञानवता-मङ्गहीनाश्रोत्रिय - षण्ढ - शूद्रवर्जितानां पत्नीसहितानामधिकारो भवति।[5]'** किन्तु ऋत्विजां विषयेषु उपर्युक्तानि वचनान्येव प्रमाणानि। तैः

---

1. यज्ञमधुसूदने 5 तमे पृष्ठे।
2. श० प० ब्रा० 2/2/2/16
3. बा० रामायणे - बालकाण्डे 59-14
4. का० श्रौ० सू० 1/1/6
5. दे० या० प० पृ० 1

प्रमाणैरिदं प्रमाणितं भवति यद्ब्राह्मणा एव यज्ञोच्छिष्टस्य हविषः सोमस्य च भक्षणार्थमधिकृताः नान्ये। तस्माद्ब्राह्मणानामेवार्त्विज्येऽधिकार इति सुतरां सिद्धम्। एतद्गुणविशिष्टानामेषां ऋत्विजां सर्वकर्मसाधारण्येनैकसंख्यानियमो नास्ति। कार्यानुरोधेन यथोपयोगं न्यूनाधिकानां वरणस्यार्थसिद्धत्वात्। अत एवोक्तं तैत्तिरीयब्राह्मणे – '**अग्निहोत्रस्यैक ऋत्विक्। दर्शपूर्णमासयोश्चत्वारः। चातुर्मास्यानां पञ्च। पशुबन्धस्य षट्। सौम्यस्याध्वरस्य सप्त। संवत्सरस्य सत्रसोमस्य सर्वे (षोडशर्त्विजो) भवन्ति।**[1]' ते यथा– '**षोडशर्त्विजो ब्रह्मोद्गातृहोत्रध्वर्युब्राह्मणाच्छंसिप्रस्तोतृमैत्रावरुणप्रतिपस्थातृपोतृप्रतिहर्त्रच्छावाक्नेष्ट्रग्नीत्सुब्रह्मण्यग्रावस्तुदुन्नेतृन्वृणीते।**[2]'

प्राधान्येन तावद्विद्याभेदाच्चत्वार एव ऋत्विजः क्रियन्ते। होता, अध्वर्युः, उद्गाता, ब्रह्मा चेति। ननु त्रयी विद्या श्रूयते च चतुष्टयी। तत्र ऋचा हौत्रं क्रियते, यजुषाऽऽध्वर्यवम्, साम्नौद्गात्रम्, अथ केन ब्रह्मत्वं क्रियत इति चेत् त्रय्या विद्यया इति विद्यात्। वाक् च मनश्चेति द्वे यज्ञवर्तन्यौ भवतः। तत्र वाचा होत्रादयस्त्रयो यज्ञं वर्तयन्ति। ऋचा होता, साम्नोद्गाता, यजुषा त्वध्वर्युरिति। तेनार्धं सम्पद्यते। अथार्धं मनसा सम्पाद्यं ब्रह्मैको वर्तयति – ऋचा च साम्ना च यजुषा च। तस्माद्यस्तिस्रो विद्या जानाति स ब्रह्मा भवति। तदुक्तं यास्केन –'**ब्रह्मा सर्वविद्यः सर्वं वेदितुमर्हति। ब्रह्मा परिवृढः श्रुततः। ब्रह्म परिवृढं सर्वतः।**[3]' अर्थात् सर्वां (त्रयीं) विद्यां वेदेति। तथा विधो ह्यसावधिकारी त्रयीविद्यासंयुक्तो येनासौ सर्वमेव वेदितुमर्हति अतोऽयं ब्रह्मा भवति। ऐतरेयब्राह्मणे एवमुक्तं यत् – '**अथ केन ब्रह्मत्वं क्रियते? त्रय्या विद्यया इति।**[4]' श्रूयत एव (न परं केनचित्क्रियते) इति श्रुतो वेदः। तस्मात् परिवृढः = प्रभुस्तेषां मध्ये नेता

1. तै० ब्रा० 2/3/6
2. का० श्रौ० सू० 7/1/7
3. निरुक्ते 1/3/8
4. ऐ० ब्रा० 5/5/8

(नायकः) **'प्रभौ परिवृढः[1]'** इति निपातः। स हि त्रयीविद्यां वेद। अन्ये त्वेकैकामित्यस्य विद्याप्रकर्षोऽन्यतः। स विद्योत्कर्षात्तेषामेकैकविद्यानां होत्रादीनामादेशकः श्रेष्ठः प्रतितिष्ठति। तदित्थं होता ऋग्वेदी, उद्गाता सामवेदी, अध्वर्युर्यजुर्वेदी, ब्रह्मा तु त्रिवेदीति सिद्धम्। तत्र होता ऋचा कर्तव्यं शंसति। अध्वर्युर्यजुषा यजति जुहोति च। उद्गाता साम्ना गायति। ब्रह्मा तु सर्वेषां कर्मणां प्रत्यवेक्षणं करोति। सर्वेषां च कर्मापचारे स प्रायेण प्रायश्चित्तं करोति। इत्येवमेषां प्राधान्येन कर्माणि।

यो यजति स जुहोति। तथा चाध्वर्योरेव होतृशब्देन व्यपदेशोऽवकल्पत इति चेत्सत्यम्। जुहोति स होतेति नेह व्युत्पत्तिरिष्यते, अपि तु यो यजनीयान् देवानाह्वयति स होतेति होतुर्व्युत्पत्तिर्द्रष्टव्या। तदाहुरैतरेयेण – **'यदन्यो जुहोति। अथ योऽनुचाहयजति च कस्मात् तं होतेत्याचक्षते इति। यद्धाव स तत्र यथा भाजनं देवता 'अमुमावह' 'अमुमावहे'ति आवाहयति तदेव होतुर्होतृत्वम् इति।**[2]

होताऽध्वर्युरुद्गाता ब्रह्मा वा सर्व एवार्षेयानूचानादिपूर्वोक्तगुणविशिष्टा एव योग्या इष्यन्ते। ते च प्रत्येकं त्रिभिस्त्रिभिः स्वैः स्वैः पुरुषैरुपेताः स्वयमप्याहिताग्नयः प्रथमयज्ञेनाग्निष्टोमेनेष्ट्वा गृहपतिसंज्ञकेन सप्तदशेन सहिता द्वादशाहादिसत्रार्थं दीक्षयित्वा स्वस्वसम्बन्धिनोऽग्नीनेकत्र स्थापयित्वा गृहपतिप्रधाना अग्निष्टोमादिभिरेकाहैर्द्विरात्रादिभिरहीनैश्च यागैर्यथायथं सत्राणि सम्पादयेयुः।

त इत्थं षोडश ऋत्विजः सिद्धाः। ननु सौम्यस्याध्वरस्य यज्ञक्रतोः सप्तदशर्त्विजं इति हि श्रूयते, न षोडशेवैति चेत्। सत्यम्। तत्र हि – **'यजमान सप्तदशा ऋत्विजो भवन्ति'** इति उक्तेः सप्तदशोऽयं यजमानो द्रष्टव्यः। तस्यापि ऋतुयाजकत्वेन ऋत्विक्त्वाविशेषात्। ऋत्विक्च्छब्दो हि ऋतुयाजके व्युत्पन्नो न दक्षिणाक्रीते। तेन यजमानोऽपि स शब्दो न

---

1. पा० गृ० सू० 7/2/21
2. ऐ० ब्रा० 1/1/2

विरुद्ध्यते। यजमानपत्नी तु यजमानान्नातिरिच्यते जातवरणस्यापि दक्षिणाभाजोऽपि सदस्यस्य ऋत्विक्त्वानभ्युपगमात्। न हि सदस्यः किञ्चिदपि कर्म कर्तुमधिक्रियते। तादृशविध्यदर्शनात्। क्रियां विना च ऋत्विक्शब्दस्याप्रयोगात्। ननु '**सदस्यं सप्तदशं कौषीतकिनः समामनन्ति, स कर्मणामुपद्रष्टा भवति**' इत्येवमाश्वलायनेन कौषीतकश्रुत्यनुरोधाद् ब्रह्मणो द्रष्टृत्वेऽस्योपद्रष्टृत्वं स्मर्यते। तथा च ब्राह्मण इवास्यापि दर्शनकर्मविनियोगाद् ऋत्विक्त्वमुपपद्यते उपस्थानप्रसर्पणादिकर्मयोगाच्चेति चेन्न। ईदृश दर्शनस्यान्तर्वेदिकर्मत्वाभावाद्, विधेयाननुगमाच्च। ब्रह्मणस्तु दर्शनातिरिक्त- प्रायश्चित्तीयहोमादिकमनुज्ञादानादिविधेयानुगतमप्यस्ति कर्मेति नाव्याप्तिः। उपस्थानादिकानां तु ऋत्विक्त्वप्रयोजकत्वं नास्तीत्यदोषः। किञ्च '**सर्पत्सु न शून्यं सदः कुर्यात्**' इति वदता लाट्यायनेन सवनसंस्थासु सर्पणेषु, सर्पत्सु च ऋत्विग्यजमानेषु सदस्येवावस्थानं सदस्योपदिश्य ऋत्विग्भ्यः पृथग्धर्मत्वमाख्यायते। तस्मादयं सदस्य ऋत्विग्भ्योऽन्योऽष्टादशः पुरुषो द्रष्टव्यः। तस्य पृथग्वरणाम्नानाच्च। परे त्वाहुः – षोडशानामेव– र्त्विजामनृत्विजाऽपि यजमानेन गृहपतिना सदस्येन वा सप्तदशसंख्यापूरणं न विरुद्ध्यते इत्यतो नर्त्विजां सप्तदशत्वमापद्यत इति। युक्तं चैतत्। अन्यथा रहस्यब्राह्मणे ऋत्विजां सप्तदशत्वप्रतिषेधश्रुतिर्व्याकुप्येत। तत्र हि – '**तस्मा एतस्मै सप्तदशाय प्रजापतये एतत् सप्तदशमन्नं समस्कुर्वन् – य एष सौम्योऽध्वरः। अथ या अस्य ताः षोडशकलाः एते ते षोडशर्त्विजः। तस्मान्न सप्तदशमृत्विजं कुर्वीत, नेदतिरेचयानीति**' इत्यादिना सप्तदशत्वस्यातिरिक्तत्वरूपेण विनिन्द्य प्रत्यक्षं प्रतिषेधः श्रूयते। अत एव सोमप्रवाकोऽप्यन्य एव ऋत्विग्भ्यः। तस्य वरणपूर्वककर्मानधिकारात्, अवृतानामृत्विक्त्वायोगात्। तथाहि – सोमेन यक्ष्यमाणो यजमानो यदि सन्निधावुपस्थितं कञ्चनार्त्विज्यगुणविशिष्टं ब्राह्मणं नोपलभ्यते, तदा तं तमृत्विजं वरीतुं यं कञ्चन पुरुषं प्रेषयति स सोमप्रवाको नाम। '**मदीयो यजमानः सोमेन यजते स त्वां प्रत्यार्त्विज्यमर्थयते**' इत्येवं सोमयागवृत्तान्तमृत्विजे प्रवक्तीति सोमप्रवाकः। स च सति सम्भवे

ऋत्विग्भ्योऽन्य एव स्यादित्युक्तम्। अनादेशे तूद्गातैव स्यादिति नियम्यते। अथ ये चमसाध्वर्यवो दश भवन्ति, तेऽप्यन्य एव ऋत्विग्भ्य इत्याहुः। केचित्तु तेषां ऋत्विक्षु सन्निवेशमाहुः। एवं परिकर्मिणामप्यवृतत्वा-दनृत्विक्त्वमेव। **'शमितार उपेत न यज्ञम्' 'शमितारमुपनयीत यज्ञम्'** इत्यादिषु श्रुताः शमितारस्तु ऋत्विग्भ्यो नातिरिच्यन्ते। **'पराङ्वेतेऽध्वर्युः पशोः संज्ञप्यमानात्'** इति श्रुत्याऽध्वर्योः परावृत्तिश्रवणादध्वर्युपुरुषेषु प्रतिप्रस्थात्रादिष्वेव स्थलविशेषे शमितृशब्दप्रयोगात्। तेषामयं संज्ञाभेदः पशुसंज्ञपनयोगादुपपद्यते। एवमुपगोऽपि नोक्तेभ्योऽन्यः। उपगातृत्वयोगा-दुक्तानामेवर्त्विजां संज्ञाभेदेन व्यवहारात्। अत एव **'नाध्वर्युरुपगायेत्'** इति प्रतिषेधोऽर्थवान् भवति। एवमुपवक्तापि नान्यः, हविः कृदपि नान्यः, आग्नीध्रस्यैव कर्मभेदे संज्ञाभेदात्। स हि सोमे सवनीयनिर्वाप-प्रभृतिपुरोडाशाद्यासादनान्तं हविः सम्पादनं करोति। सोमाङ्गभूते च प्रवर्ग्याख्ये कर्मणि रौहिणसंज्ञकपुरोडाशाधिश्रपणादि कर्म करोति। ऐष्टिका-दावप्यध्वर्युकर्तव्ये हविः सम्पादने सहायतां करोति। तेनायं हविष्कृदुच्यते। तदित्थमृत्विजः षोडशैव संसिद्धाः। तेषां कानिचित्कर्माण्युदाहरामः। **'ऋचां त्वः पोषमास्ते पुपुष्वान् गायत्रं त्वा गायति शक्करीषु। ब्रह्मा त्वो वदति जातविद्यां यज्ञस्य मात्रां विमिमीत उत्वः।[1]'** इति।

अपि च -

| 1. | 3. |
|---|---|
| होता – प्रातरनुवाकमनुब्रूते | उद्गाता – उद्गायति |
| प्रशास्ता – प्रेष्यति | प्रस्तोता – प्रस्तौति |
| अच्छावाकः – यजति | प्रतिहर्त्ता – प्रतिहरति |
| ग्रावस्तुत् – ग्रावस्तोत्रीयमन्वाह | सुब्रह्मण्यः – सुब्रह्मण्यामाह्वयति। |

---

1. ऋ० सं० 8/2/24

| 2. |
| --- |
| अध्वर्युः – पुरो विभजति |
| प्रतिप्रस्थाता – मन्थिनं जुहोति |
| नेष्टा – पत्नीमुदानयति |
| नेष्टा – चमसानुन्नयति |

| 4. |
| --- |
| ब्रह्मा – प्रत्यवेक्षते |
| ब्राह्मणाच्छंसी – ब्रह्मप्रतिनिधित्वम् |
| आग्नीध्रः – अग्निमिन्धे |
| पोता – याज्यां पठति |

अन्यानि च बहूनि कर्माण्येषामेकैकस्य श्रूयन्ते तानि पूर्वाध्यायेषु तत्र-तत्र प्रयोगे उक्तानि।

**परिकर्मसम्पत्तिः**

अथ यो यजमानक्रीतः परार्थं बहिर्वेदिकर्म्म करोति सोऽनृत्विक्। तद्यथा – सदस्यः, सोमप्रवाकः, परिकर्मिणश्च। तत्र सदस्यः सदस्यवस्थितो विध्युपद्रष्टा कर्मसाक्षी सदः शोभयति। सति सन्देहे स कर्म्मणो मीमांसां करोति। '**सदस्य एवमेव धिष्ण्यानुपतिष्ठन् ब्राह्मणमनुप्रविशेद् ब्राह्मणाच्छंसिनं वा। तेनास्य समुपहवः स्याद्, भक्षश्च सममानः। वीभत्सेयातां चेन्नाना चमसौ स्याताम्। तस्य दधिभक्षणमात्रं कर्म**' इति वदता लाट्यायनेन तस्य कर्मकाले ब्रह्माणमनु, ब्राह्मणाच्छंसिनमनु वा संनिवेशो विधीयते। सदस्यः, सभासत्, सभास्तारः, सभ्यः, सामाजिक इत्येकार्थाः। तेषामिह प्रकरणवशात् कर्मसाक्षिणि वृत्तिः। ऋत्विग्यजमानभिन्नपुरुषाणां कर्तव्यतया विहितान्यङ्गसंस्कारकर्माणि परिकर्मशब्देनोच्यन्ते। तत्र नियुक्ताः पुरुषाः परिकर्मिण इति।

तदित्थं प्रधानाः, ऋत्विजोऽनृत्विजश्चेति यज्ञनिर्वाहका ब्राह्मणा व्याख्याताः। इदानीं प्रकरणानुसारं कर्तुः प्रातिनिध्यं, द्रव्यप्रातिनिध्य-मितिविषये किंचिद्विचार्यते। तत्र –

**कर्तुः प्रातिनिध्यम्**

कर्तापदमाश्रित्य यजमान-पत्नी-पुरोधा-ऋत्विक्-अनृत्विक-

परिकर्मिणाञ्च विषये पूर्वं बहूक्तम्। उपर्युक्तैः प्रमाणैः एतत्तु सिद्धमेव यत् यः फलाकांक्षी, फलप्राप्त्यर्थं यागानुष्ठानं करोति स कर्ता, स एव यजमानः। यजमानस्य प्रधानकार्ये प्रतिनिधिर्नास्ति इति कात्यायनेनोक्तम् – '**स्वामी फलयोगात्**[1]' इत्यनेन सूत्रेण। सूत्रस्यास्य व्याख्यानं कुर्वता कर्काचार्यो प्राह –'**स्वामिनि मृते, प्रोषिते, कार्यान्तरव्यापृते वा तत्स्थान अन्यः प्रतिनिधिर्न कार्यः**'। कुतः? फलयोगात्। पुरुषान्तरेण क्रियमाणानां ब्रह्मचर्य –द्रव्यत्यागादीनां मृते प्रोषिते वा यजमाने फलसम्पादनायोगादित्यर्थः। एवं यजमानस्य प्रधानकार्ये प्रतिनिधिर्न भवेदिति विचार्येदानीं गुणकार्ये प्रतिनिधिर्भवतीत्युच्यते। तदाह कात्यायनः–

'**गुणेषु प्रतिनिधिः, परार्थत्वात्**[2]' अर्थात् पात्रासादनवेदबन्धनाऽऽ-ज्यावेक्षणादिषु यज्ञाङ्गभूतेषु यजमानकर्तव्येषु पदार्थेषु यजमानस्य प्रतिनिधिर्भवति। कुतः? परार्थत्वात्। पात्रासादनादीनां क्रत्वङ्गत्वात्। अन्येनापि कृते पदार्थस्वरूपनिष्पत्या वैगुण्यासंभवात्। एवं पत्न्यभावेऽप्याज्यावेक्षणाऽन्वारम्भाऽक्षोपाञ्जनादौ गुणकर्मणि प्रतिनिधिर्भवत्येव।

'**सत्रेषु तु श्रुतेः**[3]' इत्यनेन सूत्रेण कात्यायनो ऋषिरेवं प्रतिपादयति यत्सत्रयागेषु तु श्रुतिवचनबलाद्यजमानस्यापि प्रतिनिधिर्भवति। एवं हि श्रूयते – '**यदि दीक्षितानां कश्चित्प्रमीयेत तस्य यो नेदिष्ठी स्यात्तमुपदीक्ष्य तेन सह यजेरन्**[4]' इति। अर्थात् यजमानकर्मणा सम्बन्धात् यजमानधर्मा दीक्षणादयोऽपि तस्य प्रतिनिहितस्य भवन्ति। सत्रे प्रतिनिहितो यो नेदिष्ठी तस्य यजमानसंस्कारा वपनादयो भवन्त्येव। कुतः? कर्मयोगात्, यजमानकर्मणा तस्य नेदिष्ठिनः सम्बन्धात्।

सत्रेषु ब्राह्मणानामेवाधिकार उत त्रयाणामित्याशंकायां कात्यायनेनोक्तम्

---

1. का० श्रौ० सू० 1/6/9
2. का० श्रौ० सू० 1/6/10
3. का० श्रौ० सू० 1/6/11
4. तां० ब्रा० 9/8/1

– '**सत्राणि ब्राह्मणानामृत्विक्श्रुतेः**[1]' इति। सत्राणि ब्राह्मणानामेव। कुतः? ऋत्विक्श्रुतेः। 'ये ऋत्विजस्ते यजमानाः' इति श्रुतेरित्यर्थः। सत्रेषु '**ये ऋत्विजस्ते यजमानाः**[2]' इति यजमानानामृत्विक्पदार्थकर्तृत्वविधानाद् ब्राह्मणानामेव सत्राणि भवन्ति न क्षत्रियवैश्यानाम्। ब्राह्मणानामप्येककल्पानां न भिन्नकल्पानाम्। अयं भावोऽत्र प्रदर्श्यते यत् ऋत्विजां यजमानसंस्कारा विधातुं न शक्यन्ते। तथात्वे केवलादृष्टार्थत्वापत्तेः। अतः ऋत्विक्शब्देन ऋत्विक् कर्तृकाणि कार्याणि लक्षयित्वा तदुद्देशेन यजमानानां विधानमङ्गीकर्तव्यम्। एवञ्च ऋत्विक्कार्ये यजमानविधानात् ऋत्विक्कार्यस्य ब्राह्मणेनैव कर्त्तव्यत्वस्य पूर्वं स्थापितत्वात् ब्राह्मणानामेव सत्रेऽधिकारः। एतच्च जैमिनीये[3] विचारितम्।

'**एककल्पानामवैगुण्यात्**[4]' इत्यनेन सूत्रेण कात्यायन एवं निर्दिशति यदेकस्तुल्यः कल्पः पक्षो येषां ते एककल्पाः। सत्रे एककल्पा-नामेवाधिकारः। कुतः? अवैगुण्यात्, तदानीमेवावैगुण्यस्याभावादित्यर्थः। अयमाशयः – 'वशिष्ठशुनकात्रिवध्यश्वकण्वकश्यपसंकृतिराजन्यवैश्य-प्रजापशुकामानां द्वितीयः प्रयाजः '**समिधो यजति, तनूनपातं यजति, इडो यजति, बर्हिर्यजति, स्वाहा यजति**[5]' इति पञ्चप्रयाजयागाः विहिताः। तत्र केषांचित्तनूनपात्प्रयाजः, केषाञ्चित् नराशंस इति विधीयते। '**तनूनपादन्येषाम्**[6]' इति वाक्येन राजन्यवशिष्ठादीनां नाराशंसाख्यो द्वितीयः प्रयाजो विहितः। तद्भिन्नगोत्राणां च तनूनपात्प्रयाजो द्वितीयः। येषां यो द्वितीयः प्रयाजो विहितस्तेषां तदनुष्ठाने एवावैगुण्यं भवति। यदि भिन्न-भिन्नगोत्रा यजमाना भवेयुस्तदा तनूनपात्प्रयाजानुष्ठाने वशिष्ठादिगोत्राणां

1. का० श्रौ० सू० 1/6/13
2. उल्लेखः दे० या० प० 13 तमे पृष्ठे
3. पूर्वमीमांसायां 6/6/3
4. का० श्रौ० सू० 1/6/14
5. तै० सं० 2/6/1
6. का० हौ० प० 1/4

स्वप्रयाजाननुष्ठानाभावेन वैगुण्यमापद्येत। एवं नराशंसानुष्ठाने वशिष्ठानां स्वप्रयाजाननुष्ठानजनितं वैगुण्यं भवेत्। तत्तु न युक्तम्। अतस्तत्परिहारार्थं सर्वे यजमानास्तनूनपात्कल्पा वा भवेयुः, अथवा सर्वे नराशंसकल्पा भवेयुः, न तु तनूनपान्नराशंसकल्पानां मिलितानामधिकारः।

उक्तन्यायेन '**यजमानसम्मितौदुम्बरी कार्या**[1]' इति वाक्येन औदुम्बरी शाखा यजमानप्रमाणा कार्येति विधीयते। सोमयागे सदोनामकमण्डपमध्ये उद्गात्रादीनां सामगाने अवलम्बनार्थं निखात औदुम्बरकाष्ठविशेष औदुम्बरी शाखा। सत्रयागे सर्वेषां यजमानत्वात् यजमानानां च तुल्य प्रमाणत्वाभावात् यस्यैव यजमानस्य सम्मिता औदुम्बरी न भवेत् तस्यैव वैगुण्यं स्यात्। अतस्तुल्यप्रमाणानामेव यजमानानां सत्रेऽधिकारः, न भिन्नप्रामाणानां दीर्घ-ह्रस्वानामित्याशङ्क्य सिद्धान्तयति - '**न परार्थत्वात्**[2]' इत्यनेन सूत्रेणेदं स्पष्टं भवति यत् तुल्यप्रमाणानामेव यजमानानां सत्रेऽधिकार इति यदुक्तं, तन्न। कुतः? परार्थत्वात् - यजमानस्य स्वार्थसाधनत्वाभावात्। अतो येन केनचिद्यजमानेन सम्मिता औदुम्बरी कार्या। अतो भिन्नप्रमाणानामपि यजमानानां सत्रेऽधिकारः।

सत्रसम्बन्धिगृहपतिकार्येऽपि क्षत्रियादीनामनधिकारः। तत्रेवमुच्यते यत् सत्रे यजमानकार्य्यं त्यागादिकं यः करोति स गृहपतिरित्युच्यते। ऋत्विक्कार्ये यजमानानां विधानात्, तत्र राजन्यवैश्ययोरधिकाराभावेऽपि गृहपतिकार्ये (इदमिन्द्राय न मम) इति द्रव्यत्यागादौ क्षत्रियवैश्ययोरधिकारो भवतु इति आशङ्क्य निराकरोति -'**वैश्यराजन्ययोर्गार्हपते**[3]' अर्थाद् वैश्यराजन्ययोः गृहपतित्वेऽपि नाधिकारः, ब्रह्मसामादिकल्पभेदेन ब्राह्मणैः सह विरोधात्। द्वादशाहाख्यसत्रे ब्रह्मसामाख्ये स्तोत्रे ब्राह्मणराजन्यादीनां सामविशेषः परस्परं भिन्नो विहितः। यथा - '**बार्हद्गिरं ब्राह्मणस्य, पार्थुरश्मं राजन्यस्य,**

---

1. श० प० ब्रा० 3/6/1/6
2. का० श्रौ० सू० 1/6/15
3. का० श्रौ० सू० 1/6/16

रायोवाजीयं वैश्यस्य[1]' इति। ब्राह्मणयजमानके कर्मणि बार्हद्गिरेण साम्ना ब्रह्मसामाख्यं स्तोत्रं सम्पादयेदिति तदर्थः। यदि क्षत्रियवैश्ययोरपि गृहपतित्वमङ्गीक्रियेत, तर्हि बार्हद्गिरपार्थुरश्मयोः परस्परं विरोधादेक-स्यानुष्ठाने इतरस्य वैगुण्यं स्यात्। तत्परिहारार्थं गृहपतिकार्येऽपि ब्राह्मणा-नामेवाधिकारः।

उपर्युक्तेन विवेचनेनेदं सिध्यति यत् श्रौतानुष्ठानेषु यजमानकार्यः अग्निपरिग्रही एव कर्तुं शक्नोति। श्रौतानुष्ठानस्य याजमानं न कश्चिदन्यः कर्तुमर्हति। अत एवाहिताग्निः, अग्निहोत्री, यजमानश्चैमे सर्वे शब्दाः परस्परं पर्यायाः सन्ति। अग्निहोत्रिणां प्रवासः कौटुम्बिककार्यं, नगरभ्रमणं, तीर्थयात्रा, एवमेव मनोरञ्जनार्थमन्यान्यकारणेन च न शक्यः। स तु आजीवनं परिगृहीतस्याग्नेः परिचर्यायै नियुक्तो भवति तस्मादग्निं विहाय नान्यत्र क्वचिदपि गन्तुमर्हः। स केवलं यागोपकरणसञ्चयनिमित्तमेव प्रवासार्हः। तदपि कस्मैचित् योग्याय आहिताग्निने ब्राह्मणाय कार्यभारं समर्प्य स प्रवसितुमर्हति। एवमुक्तप्रकारेण तल्लीनतापूर्वकमनुष्ठानेनेष्टसिद्धिर्भवति नान्यथा।

आहिताग्नेरनुपस्थितौ प्रतिनिधिरूपे नियुक्तः पुरुषः यथासमयमग्नि-परिचर्यां करिष्यन् भविष्यति तथा चाहिताग्नेः प्रवासादागमनानन्तरमेव स तस्मात्कार्याद्विमुक्तो भवितुमर्हति। अग्निहोत्री चापि यथासाध्यं प्रयत्नं कुर्याद्यद् स स्वीयं प्रवासं शीघ्रमेव समाप्य दर्शपौर्णमासादीनामनुष्ठानावसरे स्वीयां यज्ञशालायामुपस्थितो भवेत्। यदि केनापि विशेषकारणेन बाधितः सन् उपर्युक्ते पर्वानुष्ठानावसरे यज्ञशालां न प्राप्नुयात् तदा यत्रोपस्थितो भवेत् तत्रैवानुमानिते काले अग्नेः ध्यानपूर्वकं आसनादिकमादायोपविश्य याजमानकृत्यं सम्पादयेत्। तात्पर्यमिदमस्ति यदग्निपरिग्रहणानन्तरं तस्य सर्वात्मना एकमात्रमेवोपास्योऽग्निर्वर्तते, यजमानश्च तस्याग्नेरुपासक इति।

एतावता संहिताब्राह्मणश्रौतसूत्रेषूपलब्धानां प्रमाणानां संकलनेन कर्तुः

1. तां० ब्रा० 13/4/18

प्रातिनिध्यमित्यस्मिन् विषये विवेचनं कृतमिदानीं द्रव्यप्रातिनिध्यमिति विषयमवलम्ब्य यथोपलब्धप्रमाणैस्तावत् किञ्चिद्विचार्यते।

**द्रव्यप्रातिनिध्यम्**

प्रतिनिधिविषयकं विवेचनं प्रस्तूयता काम्ये कर्मणि प्रतिनिधिर्न भवती'त्युक्तं पूर्वमेव। किन्त्वारब्धस्य काम्यस्य कर्मणोऽसमाप्तौ दोषोऽपि भवति इति गम्यते। कुतः **'दोषश्चासमाप्तौ स्यात्सामान्यात्[1]'** कात्यायनेन प्रतिपादितेऽस्मिन् सूत्रे 'सामान्यात्' इति पदेन एवं ज्ञायते यद्यथैव नित्याननुष्ठाने शिष्टा विगर्हन्ते एवमारब्धस्यापि काम्यस्य अपरिसमापने शिष्टा निन्दन्ति। नहि दोषाभावे शिष्टविगर्हणं भवितुमर्हति। ताण्ड्यब्राह्मणे प्रतिपादितं यत् **'यदि सोमं न विन्देत्पूतीकानभिषुणुयात्[2]'** इति। अर्थात् सोमाभावे पूतीकेनानुष्ठानसमाप्त्यभिधानमप्यत्र लिङ्गम्। दर्शनमेतदाक्षिपन्नाह कात्यायनः–

**'अन्यार्थं दर्शनं, न पुनर्ग्रहणात्[3]'** इति। यद्दर्शनं तदन्यार्थं भवति इदं तु न तथा। कुतः? पुनर्ग्रहणात्, द्रव्यान्तरस्य पूतीकस्य पुनर्विधानादित्यर्थः। यथा ब्रह्मवर्चसकामनया विहिते सौर्ययागे होमार्थं प्रवृत्ते वाक्ये प्रयाजदर्शनं **'प्रयाजे प्रयाजे कृष्णलं जुहोति[4]'** इति। एवं पूतीकविधानार्थमेव प्रवृत्तमिदं वाक्यं कथं दर्शनं भवितुमर्हति, कथं वा इदमवलम्ब्य दोष उद्भावयितुं शक्यत इति भावः। दिविष्ठस्य सोमस्य गायत्र्या भूलोकं प्रति समाह्रियमाणस्य यः खण्डो भूमौ पतितः स पूतीको नाम लता विशेष इत्युक्तं ताण्ड्ये – 'तस्य ये ह्रियमाणस्यांशवः परापतंस्ते

---

1. का० श्रौ० सू० 1/4/4
2. तां० ब्रा० 9/5/3
3. का० श्रौ० सू० 1/4/6
4. तै० सं० 2/3/2 (कृष्णलशब्देन माषपरिमितसुवर्णस्य पञ्चमांश उच्यते। या० स्मृ० आचा० 393)

**पूतीकाः समभवन्'** इति।[1] इदं पूतीकस्य पुनर्ग्रहणं पुनर्विधानमन्यार्थमेव भवितुमर्हति। तदुक्तं कात्यायनेन – **'अन्यार्थं पुनर्ग्रहणम्**[2]' इति अयं भावः – यजेतेत्यनेन देवतोद्देश्यकद्रव्यत्यागरूपस्य यागस्य विधानात् यागस्यावश्यकर्तव्यता प्राप्ता। तत्र विहितस्य सोमस्याभावे प्रतिनिधिशास्त्रेण सुसदृशानां विसदृशानां च द्रव्याणां प्राप्तिर्भवति। सोमाभाव इति पूर्वोक्तवाक्येन तत्र द्रव्यविशेषो नियम्यते। एवं च यथा कथञ्चित् समाप्तेः कर्तव्यतायां प्राप्तायां तत्र विसदृशस्यापि द्रव्यस्य पूतीकस्य नियमः क्रियते इति कृत्वा इदमपि समाप्तौ दर्शनमेव।

**पयोव्रतादावपि प्रतिनिधिरस्ति**

सोमयागे – **'पयो व्रतं ब्राह्मणस्य, यवागू** (तण्डुलैः शिथिलपक्काः यवागूः) **राजन्यस्य**, आमिक्षा (पयस्तप्तं कृत्वा तापविशिष्टे एव तस्मिन् पयसि दधनि प्रक्षिप्ते सति तत्पयो द्विधा जायते घनीभूतं द्रवीभूतं च। तत्र यो घनीभूतोऽशः सा आमिक्षा, द्रवीभूतं च वाजिनम्।) **वैश्यस्य**[3]' इति। श्रुतेर्ब्राह्मणादीनां पयोयवाग्वामिक्षा आहारा उक्ताः, तत्र व्रत्यालाभे व्रतकरणाशक्तौ च प्रतिनिधिरस्ति न वा? इति संशये उच्यते –

**'व्रते प्रसङ्गो न नियमशब्दात्**[4]' सूत्रमिदं पूर्वपक्षपरतया सिद्धान्तपरतया च आवृत्या योजनीयम्। तत्र पूर्वपक्षे प्रसङ्गशब्देन नञ् अन्वेति। सिद्धान्ते च नियमशब्देन सह नञोऽन्वयः। तथा चायमर्थः पूर्वपक्षे व्रते पयोव्रतादौ प्रतिनिधेः प्रसङ्गः प्राप्तिर्न भवति। कुतः नियमशब्दात् – **'व्रत ‹ह्यैवास्यातोऽशनं भवति**[5]' इत्येवकारश्रवणादित्यर्थः। एवं च एवकारेण द्रव्यान्तरव्युदासात् प्रतिनिधिमन्तरा अन्यस्य कस्यचिद-

1. तां० ब्रा० 8/4/5/3
2. का० श्रौ० सू० 1/4/7
3. तै० आ० 2/8
4. का० श्रौ० सू० 1/4/8
5. श० प० ब्रा० 3/1/2/1

विहितत्वेन निषेधायोगात् प्रतिनिधिरेव एवकारेण व्युदस्यते इति। एवं प्राप्ते सूत्रावृत्या सिद्धान्तयति – **'व्रते प्रसङ्गो न नियमशब्दात्'** इति। व्रतेऽपि न नियमशब्दात् प्रतिनिधेः प्राप्तिर्भवति नियमशब्दाभावादित्यर्थः। व्रतं ह्येवेत्यत्र एवकारो नियमबोधकः अर्थान्तरव्युदासको न, किन्तु **'पुरा केशश्मश्र्वोर्व- पनाद्यत्कामयेत तदश्नीयात्'**[1] इत्युक्तेरिति इष्टाशनस्य स्तावकः। अतः प्रतिनिधिरस्त्येवेति भावः।

**प्रतिनिहितद्रव्यस्य श्रुतद्रव्यशब्देनैवाभिधानम्**

विहितस्य छागादेरभावे तत्सदृशद्रव्यान्तरे मेषे प्रतिनिहिते **'छागस्य वपाया मेदसो जुषेता ७ हविर्होतर्यज**[2]**'** इत्यादिषु मन्त्रेषु किं छागशब्द उच्चारणीयः? उत मेषशब्द उच्चारणीय? इति संशये प्रतिनिधिबोधकशब्दो मेष एवोच्चारणीय इति पूर्वपक्षः। मन्त्राणां प्रयोगसमवेतार्थस्मारकत्वं प्रयोजनमुक्तम्, तत्त्वं च शक्त्या स्मरणीयार्थप्रतिपादकत्वमिति निर्णीतम्। शक्त्या प्रतिपादनं च न श्रुतशब्देन भवितुमर्हति। अतश्च शक्त्या प्रतिपादनसिद्ध्यर्थं श्रुतद्रव्यशब्दं परित्यज्य प्रतिनिधिबोधकशब्देनैव प्रतिनिधिर्विधेय इति उत्सूत्रे[3] पूर्वपक्षे प्राप्ते सिद्धान्तमाह– **'शब्देऽविप्रतिपत्तिः**[4]**'** इत्यनेन सूत्रेणेदं स्पष्टं भवति यन्मन्त्रगतद्रव्यबोधकशब्दे अविपरिणामः ऊहो न कार्यः। श्रुतद्रव्यशब्दस्यैवोच्चारणं कार्यमिति भावः। अयमाशयः – यत्र श्रुतद्रव्याभावे तत्स्थाने द्रव्यान्तरं विहितं तत्रैव द्रव्यान्तरबुद्धिरूदेति, प्रतिनिधिस्थाने तु न तथोदेति। प्रतिनिधिमुपाददानाः पुरुषाः तत्र यत्स्थाने प्रतिनिधिरुपात्तस्तद्बुद्धिमेव कुर्वते। यथा गुरुपुत्रे गुरुप्रतिनिधौ गुरुबुद्धिं कुर्वन्ति। एवं प्रकृतेऽपि श्रुतद्रव्यबुद्ध्यैव प्रतिनिधेरुपादानात् श्रुतद्रव्यशब्देनैव प्रतिनिध्युच्चारणम्।

---

1. श० प० ब्रा० 3/1/2/1
2. शु० य० सं० 21/41
3. उत्क्रान्तः सूत्रमुत्सूत्रः। यः पूर्वपक्षः सूत्रकारेण नोक्तः स उत्सूत्र इत्युच्यते।
4. का० श्रौ० सू० 1/4/9

**पूतीकानां सोमशब्देनैवाभिधानम्**

यत्र द्रव्यान्तरबुद्धिर्नास्ति तत्र श्रुतशब्देनैवोपलक्षणम्, यत्र तु विधिनैव द्रव्यान्तरमुपात्तं यथा '**सोमाभावे पूतीकानभिषुणुयात्**[1]' इत्यादौ तत्र तु विशेषवचनात् प्रतिनिधिशब्देनैव विधानमस्तु इत्याशंकायामाह – '**सोमेन जात्यभावात्**[2]' इति। तत्रापि सोमशब्देनैवोच्चारणम्। कुतः? जात्यभावात्, तत्र विहितद्रव्यपरित्यागेन जात्यन्तरस्य विध्यभावात्। द्रव्यान्तरबुद्ध्या पूतीकस्य नात्र विधानं, किन्तु यागविधिशास्त्रेणैव, सर्वेषां द्रव्याणां प्राप्तौ पूतीकानां नियमनमात्रम्। अतः पूतीकानामपि सोमबुद्ध्यैव विधिना उपादानात् सोमशब्देनैवोच्चारणम्।

**पृषदाज्यस्याज्यशब्देनैवाभिधानम्**

यथा सोमाभावे पूतीकेषूपात्तेष्वपि '**अꣳशुरꣳशुष्टे देव सोमाप्यायताम्**[3]' इत्यादौ सोमशब्द एव प्रयोज्यो न पूतीकशब्दः पूतीकानामपूर्वविध्यभावात्। तथा पश्वादौ पृषदाज्यसाधनकेषु अनुयाजेषु सत्स्वपि '**देवाँ आज्यपाँ आवह**[4]' इत्यत्राज्यशब्दस्यानूह एव, आज्यस्यैव कर्बुरस्य पृषदाज्यशब्दवाच्यत्वेन द्रव्यान्तरत्वाभावात्। यद्येवं यत्र द्रव्यान्तरस्यैव वचनाद्विधानं यथा पृषदाज्ये (दधिमिश्रितमाज्यं पृषदाज्यमुच्यते) तत्र तद्बोधकेषु '**देवाँ आज्यपाँ आवह**' इत्यादिषु मन्त्रेषु देवान् आज्यपृषदाज्यपान् इत्येवोच्चारणं भवतु, युक्तं हि तत्राज्यदध्नोः संमिश्रणाद् द्रव्यान्तरत्वम्। श्रूयते– '**द्वयं वा इदं सर्पिश्चैव दधि च**[5]' इति। एवं प्राप्ते आह – '**आज्ये चादर्शनात्**[6]' इत्यनेन कात्यायनसूत्रेणेदं स्पष्टं यत् आज्ये च विपरिणामो न

1. तां० ब्रा० 9/5/3
2. का० श्रौ० सू० 1/4/10
3. शु० य० सं० 5/7
4. का० हौ० प० 1/2, शु० भ० सं० 21/40, श० प० ब्रा० 1/4/2/17
5. श० प० ब्रा० 3/8/4/7
6. का० श्रौ० सू० 1/4/11

कार्यः। कुतः? तत्रापि द्रव्यान्तरस्यादर्शनात्। न पृषदाज्यं नाम द्रव्यान्तरम्, किन्तु आज्ये दधिपृषत्तारूपो गुणो विधीयते। द्वयं वेत्यादि अपि गुणभूतस्य दध्नः प्रशंसापरमेव। अतश्च न शब्दान्तरस्यात्रापि प्रक्षेपः।

'**पशौ मन्त्रवर्णात्**[1]' इत्यनेन सूत्रेण कात्यायन एवं स्पष्टयति यत् पृषदाज्यसाधनके पशुयागेऽपि '**स्वाहा देवा आज्यपान्**[2]' इत्येव मन्त्रः पठ्यते, न तु स्वाहा देवा आज्य – पृषदाज्यपानिति। अतो मन्त्रवर्णादपि न शब्दान्तरस्य प्रक्षेपः। '**अथ पृषदाज्यं गृह्णाति**[3]' इत्येकवचनश्रवणादपि अयमर्थो गम्यते। यद्यत्र दध्नोऽपि प्राधान्यं स्यात्तदा द्विवचनं श्रूयेत, न च श्रूयते।

**वैकल्पिकोपात्तद्रव्यापचारे प्रतिनिधेरेवोपादानम्**

'**व्रीहिभिर्यजेत यवैर्वा यजेत**[4]' इत्यनेन श्रौतसूत्रवचनेन यत्र कर्मणि विकल्पेन व्रीहियवादीनां विधानमुक्तं तत्र एकं द्रव्यमुपादाय कर्मणि प्रवृत्ते कर्ममध्ये च तस्मिन् द्रव्ये नष्टे अनन्तरं वैकल्पिकस्य द्रव्यान्तरस्योपादानं भवितुमर्हति? अथवा श्रुतद्रव्यसदृशस्यैव उपादानम्? इति संशये '**अश्रुतौ ह्यनुमानं स्यात्**' इति न्यायेन वैकल्पिकस्यापि श्रुतद्रव्यस्यालाभे सत्यपि प्रतिनिध्युपादानं युक्तम्? न तु श्रुतद्रव्यस्य वैकल्पिकस्य सत्वे इति प्राप्ते आह – '**विकल्पे प्रवृत्तं, कर्मान्तरत्वात्**[5]' इति। अयं भावः विकल्पस्थले यद् द्रव्यमुपादाय पूर्वं कर्म प्रवृत्तं तस्यैव प्रतिनिधिरूपादेयः। कुतः? द्रव्यान्तरोपादाने द्रव्यान्तरबुद्ध्या कर्मान्तरबुद्ध्यापत्तेः।

**'रूपं कालोऽनुनिर्वापः श्रपणं देवता तथा।**
**आदौ ये विधृताः पक्षास्त इमे सर्वदा स्मृताः।।**[6]'

---

1. का० श्रौ० सू० 1/4/13
2. शु० य० सं० 21/40
3. श० प० ब्रा० 3/8/4/7
4. का० श्रौ० सू० 1/2/1
5. का० श्रौ० सू० 1/4/14
6. त्रिकाण्डमण्डने – का० 29

अर्थात् रूपं = कर्मस्वरूपं दाक्षायण - पौर्णमासेष्ट्यादिकम्। कालः = उदितानुदितादिः। अनुनिर्वापः = वैमृधादित्यौ। श्रपणं = हविषः गार्हपत्ये वा आहवनीये वा। देवता = ऐन्द्रं भवति माहेन्द्रं वेति। एते पञ्चादिविकल्पाः। अन्ये सर्वे इच्छाविकल्पाः। इति न्यायेन वैकल्पिकस्थले प्रथमं यद्द्रव्यमुपादत्ते यजमानस्तदेव यावज्जीवं तस्य द्रव्यं भवति। तद्बुध्या वैकल्पिकं द्रव्यमेव नास्ति। तत्तु द्रव्यान्तरमेव। अतश्च तद्ग्रहणे कर्माण्यत्वमेवापद्येत।

एतस्यां परिस्थितौ देवयाज्ञिकेनेवमुक्तम् - **'ब्रीहिभिर्यजेत यवैर्यजेत' तथा आग्रयणे द्यावापृथिवीययागे 'पुरोडाशेनाज्येन वा यजेत**[1]' तथा **'सरस्वत्यै चतुर्थेऽतिरात्रे मेषी वे**[2]' त्यादौ वैकल्पिकद्रव्यविधाने समविकल्पत्वादन्यतरेण कर्मणि प्रारब्धे सति येन द्रव्येण कर्मारब्धं तस्य नाशदोषादौ जाते पश्चात्तज्जातीयद्रव्यालाभे वैकल्पिकं द्रव्यान्तरं नोपादेयमेव, किन्तु येनारब्धं तत् सदृशमेव प्रतिनिधित्वेनोपादेयम् इति।[3]

## प्रतिनिधिनाशे श्रुतसदृशस्योपादानं न प्रतिनिधिसदृशस्य

यदि कंचित्प्रतिनिधिमुपादाय कर्मण्यारब्धे मध्ये च तस्य नाशे अनन्तरं प्रतिनिधिसदृशमेव द्रव्यान्तरमुपादेयम्? उत श्रुतद्रव्यमेवोपादेयम्? इति संशये पूर्वन्यायेन प्रतिनिधिसदृशस्यैव द्रव्यस्योपादाने प्राप्ते आह -

**'प्रतिनिधौ तत्कालात्**[4]' इति। अर्थात् प्रतिनिहिते द्रव्ये नष्टे न तत्सदृशमुपादेयम्। कुतः? तत्कालात्। श्रुतद्रव्याभावे सत्येव हि तस्य प्रतिनिधिः प्रवर्तते। तत्सत्वे तु श्रुतमेव द्रव्यमुपादेयम्। अतो ब्रीहिभिः कर्मण्यारब्धे ब्रीहिषु विनष्टेषु ब्रीह्यन्तरालाभे सति ब्रीहिसदृशान् नीवारान्[5]

1. का० श्रौ० सू० 4/6/6
2. का० श्रौ० सू० 9/8/5-6
3. दे० या० प० 9 तमे पृष्ठे
4. का० श्रौ० सू० 1/4/15
5. ब्रीहिसदृशो धान्यविशेषो नीवारः। यः खलु ऋषिपञ्चमीव्रतादौ भक्ष्यते। 'तिन्नी' इति भाषायां प्रसिद्धः।

उपादाय कर्मसमापनीयम्, विकल्पेन विहिता अपि यवा नोपादेयाः। एवं सर्ववैकल्पिकेषूह्यम्। एवं ब्रीह्यभावे नीवारः प्रयोगे प्रारब्धे नीवारेषु विनष्टेषु कथंचिद् ब्रीहिप्राप्तौ सत्यां ब्रीहिभिरेव, अप्राप्तौ च ब्रीहिसदृशैरेव कर्म समापनीयम्, न नीवारसदृशैः नापि वैकल्पिकैर्यवैः।

**कार्यासमर्थविहितद्रव्यसत्वेऽपि प्रतिनिधिः**

यत्र मुख्यद्रव्येण कार्यसिद्धिर्न भवति उतवा प्रयोजनसिद्धिर्न भवति, प्रतिनिधिद्रव्येण च भवति, तदा मुख्यद्रव्यमनादृत्य प्रतिनिधिनैव कर्म कर्तव्यम्, यथा पुरोडाशनिष्पत्त्यर्थं ब्रीहय उपादीयन्ते, ते च न पुरोडाशनिष्पत्तिसमर्थाः, नीवाराश्च पुरोडाशनिष्पत्तिसमर्था विद्यन्ते, तथा ब्रीहीननादृत्य नीवारैरेव पुरोडाशो निष्पादनीयः।

एवमेव यत्र '**खादिरः स्त्रुवः**[1]' '**खादिरो यूपः**[2]' इत्यादिना विहितं खदिरादि मुख्यं द्रव्यं होमादिकार्यासमर्थमनुपलब्धं वा वर्तते, प्रतिनिधिद्रव्यमुदुम्बरादि च होमादिकार्यसमर्थमस्ति, तदा किं मुख्यं द्रव्यं ग्राह्यम्? उत प्रतिनिधिद्रव्यम्? इति संशये '**मुख्यामुख्ययोर्मुख्ये संप्रत्यय**' इति न्यायेन मुख्यस्यैव ग्रहणे प्राप्ते आह –

'**अर्थद्रव्यविरोधेऽर्थसामान्यं तत्परत्वात्**[3]' इति। अर्थात् कार्य-मुख्यद्रव्ययोर्विरोधे कार्यसिद्धिसमर्थं प्रतिनिधिद्रव्यं ग्राह्यम्, न मुख्यम्। कुतः? तत्परत्वात् – द्रव्यस्य प्रयोजनार्थत्वात्। अतः कार्यासमर्थं मुख्यमपि द्रव्यं न ग्राह्यमिति भावः।

**विहितगुणकेऽपि प्रतिनिधौ अविहितगुणकस्यापि श्रुतस्यैवोपादानम्**

अथ यदा '**नैर्ऋतः परिवृत्यै कृष्णब्रीहीणा**' मित्यत्र[4] कृष्णानां

1. का० श्रौ० सू० 1/3/33
2. आप० श्रौ० सू० 7/1/16
3. का० श्रौ० सू० 1/4/16
4. का० श्रौ० सू० 15/3/14

ब्रीहीणामभावे अकृष्णा ब्रीहयः सन्ति, कृष्णाश्च नीवारा इति यदा कृष्णगुणमनादृत्य ब्रीहयो गृह्यन्ते, तदा गुणानामनुग्रहः कृतो न भवति, यदा च कृष्णनीवारा गृह्यन्ते न तदा ब्रीहयः, तत्रैवं गुणद्रव्ययोर्विरोधे गुणं हित्वा ब्रीहय एव कृष्णा अप्युपादेयाः।

राजसूये नैर्ऋतयागे '**कृष्णब्रीहीणां नखनिर्भिन्नानां दर्विहोमः**[1]' इति अत्रोच्यते यत् पतिपुत्ररहिता स्त्री परिवृत्तिः। तस्या गृहे नखैर्वितुषीकृतानां कृष्णब्रीहीणां नैर्ऋतचरोर्दर्विहोम इति। कृष्णानां ब्रीहीणां होमो विहितः, तत्र मुख्यस्य विहितब्रीहिद्रव्यस्याकृष्णत्वं प्रतिनिधिभूतस्य नीवारद्रव्यस्य च कृष्णत्वम्, तर्हि किं ब्रीहयो ग्राह्या? उत नीवारा? इति संशये गुणानुरोधेन नीवाराणामुपादाने प्राप्ते आह –

'**गुणद्रव्ययोर्द्रव्यं प्रधानयोगात्**[2]' इति। अर्थात् गुण-मुख्य द्रव्ययोर्विरोधे गुणमनादृत्य मुख्यद्रव्यमेव ग्राह्यम्। कुतः? प्रधानयागेन सह द्रव्यस्य सम्बन्धात्। अतः सन्निकृष्टं यागस्य द्रव्यं, विप्रकृष्टो गुणः। एवं प्राप्ते आह – '**न समत्वात्**[3]' इति। अर्थात् न द्रव्यमेव प्रधानयोगि, किन्तु गुणोऽपि। कुतः? सदृशत्वात्। यथा श्रुतत्वात् द्रव्यं प्रधानयोगि, तथैव श्रुतत्वात् गुणोऽपीति।

एवमेवाग्निहोत्रेऽपि पुंवत्साया अग्निहोत्र्याः पयसोऽभावे पुंवत्सलक्षणं हित्वा स्त्रीवत्साया अपि पय उपादेयम्।

एवं पलाशानां परिधीनामार्द्राणामभावे आर्द्रत्वरूपं गुणं हित्वा शुष्का अपि पलाशा ग्राह्याः। एवं सर्वत्र प्रतिनिधिषूह्यम्।।

एवं ब्रीहीणामपि प्राशित्रेडादिप्रतिपत्तिकर्मपर्याप्तपुरोडाश-निष्पत्तिसमर्थानामभावेऽवदानद्वयपर्याप्तपुरोडाशनिष्पत्तिमात्रा अपि ब्रीहयो ग्राह्याः।

---

1. का० श्रौ० सू० 15/3/14
2. का० श्रौ० सू० 1/4/17
3. का० श्रौ० सू० 1/4/18

**अवत्तस्य हविषो नाशे हविरन्तरमुत्पाद्यम्**

अवदानानन्तरमवत्तस्य होमार्थं 'जुह्वा' गृहीतस्य हविषः केनचित् कारणेन नाशे सति पुनर्हविरन्तरमुत्पाद्यैव यागः, अवशिष्टस्य च हविषस्त्यागः कर्त्तव्यः? उत हविरन्तमनुत्पाद्यैव अवशिष्टादेव हविषः पुनरवदाय यागः क्रियताम्? इति संशये सिद्धान्तेनोपक्रमते –

'**अवत्तनाशेऽन्यद् गुणानुग्रहात्**,[1]' इति। अनेन श्रौतसूत्रेणेदं स्पष्टं भवति यत् होमार्थं गृहीतस्य द्व्यवदानमात्रस्य हविषो नाशे हविरन्तरमेवोत्पादनीयम्। कुतः? गुणानुग्रहात्, तदानीमेव गुणानामनुग्रहः कृतो भवति। अन्यथा गुणहीनेन यागः कृतः स्यात्। प्रोक्षणावघातादयो ये संस्कारास्ते अवदानार्थमेव कृताः। अवदाने कृते तेनैव सह आगताः, तद्विनाशे च विनष्टा एव। अवशिष्टे च हविषि न कश्चित्संस्कारोऽस्तीति संस्कारहीनमेव तद्धविः। अतश्च न तेन यागः कार्यः। किन्तु हविरन्तरमुत्पाद्यैवेति भावः।

एवं प्राप्ते इमं सिद्धान्तमाक्षिपति पूर्वपक्षी – '**न पूर्वशेषात्**[2]' इति। पूर्वपक्षिण एवं कथयन्ति यत् न हविरन्तरमुत्पादनीयम्, किन्तु पूर्वशेषादेव यागः कर्तव्यः। यदर्थं संस्कारा अनुष्ठितास्त– न्निष्पत्तावेव संस्काराणामपवर्गो भवति नान्यथा। अतश्च यागार्थमनुष्ठिताः संस्कारा यागनिष्पत्तावेवापवृक्ता भवन्ति इति अवत्तनाशेऽपि यागानुष्ठानाभावेन संस्काराणामनपवर्गात् अवशिष्टेऽपि हविषि संस्कारसत्वात्तस्मादेव यागः कार्यः। तत्र युक्त्यन्तरमाह – '**अचोदितत्वाच्च**[3]' अर्थात् अवत्तस्य हविषो नाशे हविरन्तरमुत्पादनीयम् इत्येवंविधस्य विधेरभावाच्च पूर्वशेषादेव हविषो यागः कार्यः। किञ्च –

'**स्विष्टकृद्वदानुपूर्व्ययोगात्**[4]' इत्यनेन सूत्रेणेदं स्पष्टीकृतं यदेवं कृते एव हविः स्विष्टकृद्विशिष्टं भवति। कुतः? आनुपूर्व्ययोगात्, प्रधानयाग–

---

1. का० श्रौ० सू० 1/6/1
2. का० श्रौ० सू० 1/6/2
3. का० श्रौ० सू० 1/6/3
4. का० श्रौ० सू० 1/6/4

स्विष्टिकृद्यागयोः परस्परं सम्बन्धलाभादित्यर्थः। यस्माद्धविषः प्रधानयागार्थमवदानं कृतं तत एव स्विष्टकृद्यागार्थमवदानं कार्यम्। स्विष्टकृद्यागस्योपयुक्त-हविः संस्कारार्थत्वात्। अत्र स्विष्टशब्दस्यार्थो भवति –'**प्रधानयागं सुष्ठ इष्टं करोतीति स्विष्टकृद्यागः। इष्टमिति यजे रूपम्। कृतस्य प्रधानयागस्य पौष्कल्यापादक इति।**' अतश्च यदि अस्माद्धविषः प्रधानार्थं नावदानं क्रियेत, तर्हि स्विष्टकृदर्थमप्यवदानं नास्माद्धवितुमर्हतीति सर्वथा हविषो वैयर्थ्यमेव स्यादिति भावः।

इममाक्षेपं परिहरति सिद्धान्ती – '**गुणहानौ तु शेषभावात्**[1]' इत्यस्मिन् सूत्रे तु शब्दः पूर्वपक्षं व्यावर्तयति। नेत्यध्याह्रियते। गुणहानौ सत्यां न पूर्वस्माद्धविषो अवदानं कार्यम्। कुतः? शेषभावात्। संस्काराणामव-दानाङ्गत्वादेवेत्यर्थः। संस्काराणां हविष्ट्वसम्पादनार्थत्वात्, अवदीयमानस्यैव हविष्ट्वाच्च तन्नाशे संस्काराणां नष्टत्वादेव न पूर्वस्माद्धविषोऽवदानमिति भावः।

अतः अवत्तस्य हविषो नाशे हविरन्तरमेवोत्पाद्य तेन स्विष्टकृदादिप्रतिपत्तिसहितो यागः कार्यो न पुनः शेषादवदेयम्।

## अग्नि- शब्द - देवता - क्रियाणां प्रतिनिधिर्नास्ति

देवता[2]नामिन्द्रादीनाम्, अग्नीनामाहवनीयादीनाम्, शब्दानां मन्त्राणा[3]मिषेत्वेत्यादीनाम्, क्रियाणा[4] प्रोक्षणावघातप्रयाजादीनां विस्मरणादौ प्रतिनिधिर्न भवति। कुतः? इत्याशंकायामुक्तं कात्यायनेन – '**न देवताऽग्निशब्दक्रियाः, परार्थत्वात्**[5]' अर्थात् अदृष्टार्थत्वादित्यर्थः। अयं

1. का० श्रौ० सू० 1/6/5
2. तत्तद्विधिबोधितत्वे सति त्यज्यमानद्रव्योद्देश्यत्वं देवतात्वम्।
3. कर्माङ्गभूतद्रव्यदेवतास्मारकत्वं मन्त्रत्वम्।
4. क्रियन्ते इति क्रियाः। ताश्च द्विप्रकाराः दृष्टार्था अदृष्टार्थाश्च। तत्र अवहनन –पेषणाद्या दृष्टार्थाः। प्रयाज- प्रोक्षणाद्या अदृष्टार्थाः।
5. का० श्रौ० सू० 1/6/6

भावः यत्र दृष्टं प्रयोजनमुद्दिश्य द्रव्यादिकं विधीयते तत्र विहितद्रव्यालाभे द्रव्यान्तरेणापि तत्सदृशेन श्रुतद्रव्यनिष्पाद्यं प्रयोजनं सम्पाद्यते इति कृत्वा श्रुतद्रव्यस्थाने द्रव्यान्तरं प्रतिनिधातुं शक्यते। यानि तु अदृष्टार्थानि देवताऽग्न्यादीनि, तेषामदृष्टरूपप्रयोजनमुद्दिश्यैव विहितत्वात् तादृशं श्रुतद्रव्यजन्यमदृष्टरूपं प्रयोजनं प्रतिनिधेयेन द्रव्येण सम्पाद्यत इत्यत्र प्रमाणाभावात् न अदृष्टार्थानां प्रतिनिधिर्भवितुमर्हतीति।

**'कामं देवताम्**[1]' इत्यस्य सूत्रस्य व्याख्यायां कर्काचार्य एवं लिखति यद्देवतादीनामप्रतिनिधेयत्वस्य दृढीकरणार्थमिदं सूत्रम्। प्रतिनिदध्यादिति शेषः। यो अग्न्यादीन्प्रतिनिधातुं यतते स तत्सामान्यात् देवतामपि प्रतिनिदध्यादेव। तत्तु न कदाऽपि युज्यते। यत्र त्यज्यमानद्रव्योद्देशेन अग्न्यादिः विधिना बोधितः स एव तत्र देवता भवितुमर्हति। अन्यस्य अविहितत्वादेव न तत्र देवतात्वम्। अतश्च तदुद्देशेन त्यागे कृतेऽपि न देवतोद्देशेन त्यागः कृत इति यागस्वरूपमेव न निष्पन्नं स्यात्। अतः सर्वथा न देवतायाः प्रतिनिधिरस्ति। तद्वददृष्टार्थत्वाविशेषादग्निः– शब्दादीनामपि न प्रतिनिधिरिति भावः।

## निषिद्धानां माषादीनां प्रतिनिधित्वं नास्ति

श्रुतद्रव्यापचारे द्रव्यान्तरं प्रतिनिधेयमिति निरूपितं पूर्वम्, तेनैव न्यायेन देवतादीनामपि अपचारे संवृत्ते तत्रापि प्रतिनिधिः स्यादिति प्राप्ते आह – **'प्रतिषिद्धं, प्रत्यवायात्**[2]' इति। अर्थात् प्रपूर्वस्मात्सूत्रात् नेत्यनुवर्तते। विहितस्य द्रव्यस्यालाभे निषिद्धो माषादिर्न प्रतिनिधेयः। कुतः? प्रत्यवायात्। निषिद्धानां द्रव्याणां प्रतिनिधित्वेन ग्रहणात् प्रत्यवायो भवति। तदुक्तं श्रुतौ – **'अयज्ञिया उ वै कोद्रव - वरटा अयज्ञिया वै माषाः**[3]' इत्यादिना निषिद्धानामाचरणे दोषादित्यर्थः। तस्मात् प्रतिषिद्धं वस्तु श्रुतद्रव्यसदृशमपि

1. का० श्रौ० सू० 1/6/7
2. का० श्रौ० सू० 1/6/8
3. का० सं० 20/8, मै० सं० 3/2/7, पूर्वमीमांसायां 6/3/6

प्रतिनिधित्वेन न ग्राह्यम्। यथा – श्यामाकचरौ कोद्रववरट्यादि, यथा वा मौद्गे चरौ– माषादि।

ऊहः

प्रकृतौ पठितेषु मन्त्रेषूहो न भवतीति साम्प्रतिकानां मीमांसकानां केषाञ्चिद् याज्ञिकानां च मतम्। आपस्तम्बस्तु स्पष्टमाह – **'न प्रकृतावूहो विद्यते[1]'** अस्मन्मते त्वयमौत्सर्गिको नियमः, प्रायिको वा। वस्तुतस्तु क्वचिद् प्रकृतिपठितमन्त्रेष्वप्यूहो भवति। यथा – दर्शपूर्णमासप्रकरणे पुरोडाशस्य द्वे वैकल्पिके द्रव्ये उक्ते स्तः – **'ब्रीहिभिर्यजेत यवैर्वा यजेत[2]'** इति। दर्शपूर्णमासयोः पुरोडाशयोः श्रपणे सम्पन्ने कपालेभ्यस्तावुद्धृत्य पुरोडाशपात्र्यां निधानाय मन्त्रः पठ्यते – **'तस्मिन्त्सीदामृते प्रतितिष्ठब्रीहीणां मेध सुमनस्यमानः[3]'** इति। मन्त्रोऽयं पुरोडाशयोर्ब्रीहिमयत्वे तु यथावदुपपद्यते, परन्तु यवपक्षे नायं मन्त्रः **'एतद्वै यज्ञस्य समृद्धं यदूपसमृद्धं यत्कर्म क्रियमाणमृग्यजुर्वाऽभिवदति[4]'** इति विनियोगलक्षणानुसारं वक्तुं शक्यते ब्रीहीणां मेधशब्दयोर्विरोधात्। एतस्मिन् विषये आपस्तम्बेन तु यवमयपुरोडाशस्य तूष्णीमासादनमुक्तम्– **'तूष्णीं यवमयम्[5]'** इति। लिङ्गविरोधाच्चेति तत्र हेतुमाह रुद्रदत्तः। हरदत्तेनापि **'न प्रकृतावूहो विद्यते'** इति सूत्रव्याख्यानेऽयमेव पक्ष आस्थितः। वस्तुतस्तु मन्त्रस्य निवृत्तिं कृत्वा यवमययोः पुरोडाशयोस्तूष्णीं स्थापनापेक्षया यवानां मेध इत्येवमूहकरणं युक्तिसंगतम्। मानवश्रौतसूत्रे तु **'यवानां मेध इति यवानाम्[6]'** इति स्पष्टमूहः प्रदर्शितः। भगवता पतञ्जलिनाऽप्युक्तम् – **'न च सर्वैर्लिङ्गैर्न च**

---

1. आप० परि० 3/48
2. का० श्रौ० सू० 1/9/1
3. श्रौतयज्ञमीमांसायाम् 16 तमे पृष्ठे
4. ऐ० ब्रा० 1/4, गो० ब्रा० 2/2/6
5. आप० श्रौ० सू० 2/11/2
6. मानव श्रौ० सू० 1/2/6, 22

**सर्वाभिर्विभक्तिभिर्वेदे मन्त्राः पठिताः, ते च यज्ञगतेन पुरुषेण यथायथमूहितव्याः**[1]' इति। एवञ्च सर्वे विधयः सापवादाः इति नियमेन यत्र प्रकृतावपि यदि क्वचिल्लिङ्गादिविरोध आपद्येत तर्हि तत्र कर्मणः समृद्ध्यर्थं यथायथमूहः कर्तव्यः।

विषयेऽस्मिन् द्रव्यप्रातिनिध्यमित्युपशीर्षकेऽस्मिन् निबन्धेऽपि विश्लेषणं कृतमेव। अतो नात्रातोऽप्यधिकालापस्यावश्यकतेत्यलमति विस्तरेण।

---

1. महाभाष्ये पस्पशाह्निक

# उपसंहारः

प्राचीना भारतीया संस्कृतिः यज्ञप्रधाना आसीत्। तदानीं सर्वेऽपि भारतीयाः प्रतिदिनं नियमपूर्वकं श्रौत-स्मार्तयज्ञानां सम्पादनं कुर्वन्ति स्म। तस्मिन् युगे प्रतिगृहात् यज्ञीयो धूमः बहिरागत्य वायुमण्डलं शोधयति स्म। शनैः शनैः युगपरिवर्तनेन सहैषा सुदीर्घा यज्ञपरम्परा छिन्ना-भिन्ना च जाता। बौद्ध-जैनप्रभावैस्तथा वैदेशिकैः सन्त्राशिताः याज्ञिकाः मनीषिणो हतप्रभास्सन्तः सन्मार्गं परित्यज्यासन्मार्गे प्रवृत्तास्तस्मात् याज्ञिकी संस्कृतिः नष्टा भ्रष्टा कुत्रचिच्च ग्रन्थरूपेण संरक्षिता वर्तते यथा कथा। उदाहरणार्थमेकादशशताधिकाः वेदशाखाः विनाशग्रस्ताः काचिदेव समुपलब्धा विद्यन्ते। तत्र किं वक्तव्यम्। तक्षशिला-विक्रमशिला नालन्दादिविश्वविद्यालयदाहसंतापैरस्माकं सभ्यता-संस्कृतीनां मूलान्युच्छिन्नानि संजातानि। कालान्तरे अनेके वैदिकयज्ञाः लुप्तप्राया अभवन्। ये चावशिष्टास्तेषां प्रक्रिया अपि विस्मृताः। वस्तुतः वैदिकयज्ञाः पर्यावरणशुद्ध्यर्थं प्रकृतेश्च संरक्षणार्थमत्यन्तमुपादेया आसन्, येषां निरन्तरमनुष्ठानेन बाह्याभ्यन्तरशुद्धिः सम्भाव्या आसीत्। तेषां यज्ञानां मूलस्वरूपस्य रक्षणं तथा ऽचागामिनि श्रौताध्ययनपरम्परायां प्रवेशेच्छुकेभ्य प्राचीनैर्ऋषिमहर्ष्यादिभिरनथकपरिश्रमैरूपलब्धानामेषामनुष्ठानानां ज्ञान-विस्ताराय नित्यं नूतनदृष्ट्या गवेषणस्यावश्यकतामनुभूय एवाहमस्मिन् कार्ये सम्पृक्तोऽस्मि।

उपर्युक्ताश्चेमे वैदिकयज्ञाः प्रकृति-विकृतिरूपाभ्याम् अतीवप्राचीन-कालादेवानुष्ठीयन्ते। तस्मादस्मिञ्छोधप्रबन्धे प्रथमेऽध्याये प्रकृतिविकृत्योर्लक्षणं प्रकृतियज्ञानां सविधिनिरूपणञ्च वर्णितमस्ति। तत्र प्रकृतेर्लक्षणमिदमुक्तम् -

**'यत्र कृत्स्नं क्रियाकलापमुक्तं सा प्रकृतिः'** यथा – दर्शपौर्णमासादिः। इति सिद्धान्तात् यज्ञस्याङ्गानि पूर्वोत्तराणि विशदीकृतानि।

द्वितीयेऽध्याये प्रकृतियज्ञानां भेदास्तेषां कारणानि तथा च प्रकृतियज्ञपद्धतिः माध्यन्दिनानुसारि इति शीर्षके इष्टि–पशुसोमसंस्थानां परिचयस्तेषाञ्चोपलब्धमन्त्रब्राह्मणश्रौतसूत्रेषूक्तविधिमनुसृत्य पद्धतिश्च लिखिताऽस्ति। तत्र सर्वेषां होमानां प्रकृतिभूतस्याग्निहोत्रस्य पद्धतिः, सर्वासामिष्टीनां प्रकृतिभूतयोः दर्शपौर्णमासयोः पद्धतिः तथा च सर्वेषां सोमानां प्रकृतिभूतस्याग्निष्टोमस्य पद्धतिः विशेषेणोल्लिखिताऽस्ति।

तृतीयेऽध्याये विकृतियज्ञस्य लक्षणं प्रतिपादयन् विकृतियज्ञानां परिचयः, तेषां भेदाश्च निरूपिताः। विकृतियज्ञानां भेदाः कथं समभवन् इत्यस्मिन् विषयेऽपि किञ्चिदैतिहासिकतथ्यमुपस्थाय विवरणं प्रस्तुतम्। विकृतियज्ञस्य लक्षणं **'यत्र नाङ्गप्राप्तिः सा विकृतिरित्युक्तम्'** तदनुसारं प्रकृतियज्ञेषु पठितानां पूर्वोत्तराङ्गाणां साहाय्येन विकृतियागस्यानुष्ठानं सम्भवति इति प्रकाशयन् विकृतियज्ञेषु प्रकृत्योपकारित्वमपि यथोपलब्धैः प्रामाणिकवचनैरूपस्थापितमस्ति।

चतुर्थेऽध्याये विकृतियज्ञानां पद्धतिः तत्र विशेषेणानुष्ठीयमानानां धर्माणामेवोल्लेखः प्रस्तुतः।

यतो विकृतियज्ञा अपि प्राकृतानामेवानुसरणं कुर्वन्तीत्युक्तम्। तस्मात् विशिष्टधर्माणामेवोल्लेखः कृतः न पृथक् पद्धतिर्लिखिता। उदाहरणार्थं दाक्षायणयागस्य पुरुषमेधयागस्य च संक्षिप्तविधिः तत्र प्रदर्शितः तत्रापि याः खलु विशेषताः भवन्ति तेषां प्रतिपादनं यथाग्रन्थं कृतम्। तस्यैव द्वितीये भागे नित्य–नैमित्तिक – काम्यानां स्वरूपस्य वर्णनं प्रस्तुतम्।

पञ्चमेऽध्याये नित्यकर्माणि तेषामनुष्ठानस्यावश्यकता फलानि च तत्र **'अग्निहोत्रादारभ्य सोमान्ताः नित्ययज्ञाः प्रकीर्तिताः'** इत्यनेन प्रामाणिकेन वचनेन इष्टि–पशु–सोमेषु ये यज्ञा उक्ताः त एव द्विविधाः नित्य–काम्य–भेदेन। तेषु नित्यकाम्यमयेषु यज्ञेष्वपि केनचिद् विशिष्टेन निमित्तेनानुष्ठीयमानं कर्म नैमित्तिकमित्युक्तम्। नित्ययज्ञानामनुष्ठानं

सर्वैरप्यावश्यकं अकरणे प्रत्यवायो भवतीत्युक्तम्। नित्ययज्ञानां फलानि मोक्षप्राप्तिरिति साधितम्। नैमित्तिककर्माणि तत्र विशेषरूपेण **'यस्याहिताग्नेरग्निर्गृहान्दहेत्सोऽग्नये क्षामवतेऽष्टाकपालं पुरोडाशं निर्वपेद्'** इत्युक्तेः गृहदाह - भूकम्पातिवृष्टि-अनावृष्टि - जन्म-मरणादिषु ये दोषाः भवन्ति तन्निमित्तं क्रियमाणं कर्म नैमित्तिकमिति। तत्रापि प्रायश्चित्तं खलु सर्वथा नैमित्तिकमेवोक्तम्। नैमित्तिककर्मणां फलानि अनुष्ठानान्तर्गतं जायमानस्य दोषस्य निवृत्तिरेव प्रतिपादितानि।

षष्ठेऽध्याये काम्यकर्मणां विवेचनं प्रस्तुतम्। **'अग्निहोत्रं जुहुयात् स्वर्गकामः, पुत्रेष्ट्या यजेत् पुत्रकामः'** इत्यादीनां प्रमाणानां संकलनेन काम्यकर्मणां प्रतिपादनं कृतम्। गीतोक्तवचनानुसारं काम्यकर्माणि तु नोचितानि तथाप्यद्यत्वेऽनेकविधकामनाभिरभिभूतानां मानवानां सुख-शान्त्यर्थं तेषामनुष्ठानं विहितमेव। असंतुष्टाः मानवाः स्वर्गादिफलं न लभन्ते। मोक्षप्राप्त्यर्थं सर्वेषां कामनानां पूर्तिरावश्यकी। तस्मात् काम्यप्रयोगानामनुष्ठानमपि मोक्षप्राप्तौ सहायका एव भवन्ति। विविधकामनानुसारं संकल्पेऽपि परिवर्तनमावश्यकं भवति। यतो **'यज्ञाः संकल्पसम्भवाः'** तस्मात् शुभसंकल्पेन क्रियमाणं कर्म शुभं फलं प्रयच्छति। एतदेव विचिन्त्य काम्यानामनुष्ठाने कीदृशं सङ्कल्पादौ परिवर्तनमपेक्षितं इति सर्वं तत्त्वतः विवेचितम्।

सप्तमेऽध्याये कर्मसु प्रतिनिधीनामुपादानं शास्त्रसम्मतं नवेति सम्यग् निरूपितम्। प्रतिनिधिष्वपि कर्तुः प्रातिनिध्यम्, द्रव्यप्रातिनिध्यमिति सम्यक् विविच्य ऊहोऽपि विवेचितः। कर्तापदस्य व्याख्याने यजमानसम्पत्तिः, ऋत्विक्सम्पत्तिः, परिकर्म्मिसम्पत्तिश्च व्याख्याताः। यजमानसम्पत्तौ - यजमानः, यजमानपत्नी, पुरोधाश्च व्याख्याताः। योऽनुष्ठानमाचरति स यजमानः, यजमानः पत्नीं विना अर्ध एव तस्मात् यजमानः सपत्नीक एव यज्ञानुष्ठानायाधिकृतः। यजमानस्य यः प्रतिनिधिर्भवति स पुरोधा। अयं हि पुरुषो यजमानस्य प्रवासकाले अन्यस्यामसमर्थतायाञ्च अन्तर्वेदिकर्म्म सम्पादयति। ऋत्विक्सम्पत्तौ होता - अध्वर्यु - उद्गाता - ब्रह्मा च तेषांञ्च

सहायकाः आहत्य षोडशर्त्विजो भवन्ति। इमे यजमानेन दक्षिणाक्रीता भवन्ति। एतदेव तथ्यमवलोक्य दुर्गाचार्येणोक्तं – **'आशु सङ्गच्छन्त्यत्र देवताः हविर्ग्रहीतुं दक्षिणार्थं वा सदस्याः'** इति। परिकर्म्मिसम्पत्तौ सोमप्रवाकादयो ऋत्विजोऽनृत्विजश्च व्याख्यातास्ते बहिर्वेदि कर्म सम्पादयन्ति।

एवमुक्तप्रकारेण ऋषिभिः उपदिष्टानां तथ्यानामवगाहनेन समुद्रवदपारस्यागाधस्यास्य श्रौतयज्ञस्य देवयाज्ञिकपद्धत्यनुसारं विश्लेषणम्मया स्वीयया मनीषया यथामति कृतम्। आशासे विद्वांसः पाठकाः मदीयेन परिश्रमेण संतुष्टा भविष्यन्तीत्यलम्।

जयपुरराजकीयपण्डितप्रवरेण महामहोपाध्याय समीक्षाचक्रवर्तिना श्रीमता मधुसूदन–ओझासरस्वतिना स्वकीये यज्ञमधुसूदननाम्नि ग्रन्थे यज्ञियवृक्षाणां यथा परिचयः प्रदत्तः तथैवात्रोपस्थाप्यते।

परिशिष्टम्

# अथ यज्ञियवृक्षाणां परिचयः

यज्ञियवृक्षाः

पलाशः खदिरः प्लक्षो बटोऽश्वत्थ उदुम्बरः।।
कृमुको वरणो बिल्वः शमीगर्भो विकङ्कतः।। 1।।
काष्मर्य्यः सरलः सालो देवदारुश्च चन्दनः।।
इमे यज्ञद्रुमा यज्ञे तत्काष्ठैः पात्रनिर्म्मितिः।। 2।।
रसवीर्य्यविपाकेभ्यो मूलात् पुष्पात् फलाद्दलात्।।
आकाराद्देशकालादेर्वनौषध्यर्थमुन्नयेत्।। 3।।
एतेषामभिधा रूढ़ा यौगिका दैशिका अपि।।
निर्द्दिश्यन्ते क्रमात्तद्वद्गुणाः पञ्चाङ्गसंगताः।। 4।।

पलाशः 1

पलाशः, किंशुकः, करकः, सुपर्णी, वातपोतः, इत्येकार्थाः। गुणयोगानुरोधात्तु याज्ञिकः, ब्रह्मवृक्षः, ब्रह्मपादपः, ब्रह्मोपनेता, पूतद्रुः, समिद्वरः, काष्ठद्रुः, पर्णः, त्रिपर्णः, त्रिपत्रकः, वक्रपुष्पः, रक्तपुष्पः, बीजस्नेहः, कृमिघ्नः, क्षारश्रेष्ठ इति चोच्यते।

अस्य देशभाषासु नामानि यथा

| संस्कृत | हिन्दी | बंगला | महाराष्ट्री | गुजराती | कर्णाटी | तैलङ्गी | तामिली | उत्कली | आंगली |
|---|---|---|---|---|---|---|---|---|---|
| पलाशः | पलास ढाक टेसू केसू धारा कांकरिया | पलास | पलस | खांख | मुत्तलु रो | मातु | परशन् काचटू | पराशु | व्युटिया |

पलाशस्य गुणाः।

कषायतिक्तकटुकः स्निग्धोष्णो दीपनः सरः।।
भग्नसंधानकृद् वृष्यः पलाशो गुणतो मतः।। 1।।

त्रिदोषहृत् कृमिघ्नोऽयं पलाशो यज्ञपादपः।।
ग्रहण्यर्शोगुल्मगुदरोगप्लीहाव्रणे हितः।। 2।।

रक्तैः पीतैः सितैर्नीलैः पुष्पैरेष चतुर्विधः।।
सर्वे समगुणा उक्ताः सितस्तु ज्ञानवर्धनः।। 3।।

पुष्पं विपाकमधुरं ग्राहिशीतलभूषणम्।।
कषायतिक्तकटुकं वातलं चोष्णमिष्यते।। 4।।

एतत्पुष्पं कफं पित्तं कुष्ठं दाहं तृषामपि।।
वातरक्तं रक्तदोषं मूत्रकृच्छ्रं च नाशयेत्।। 5।।

फलं विपाककटुकं लघूष्णं रूक्षमिष्यते।।
शूलकुष्ठप्रमेहाशः कृमिगुल्मोदरं हरेत्।। 6।।

पामकण्डूतिदद्रू त्वग्दोषघ्नं वृक्षबीजकम्।।
फलबीजं कटु स्निग्धोष्णं कृमिघ्नं कफापहम्।। 7।।

तन्मूलस्वरसो हन्ति नेत्रच्छायान्ध्यपुष्पकम्।।
नूतनः पल्लवश्चास्य कृमि वातं च नाशयेत्।। 8।।

प्राही तस्य तु निर्य्यासी हरेत् स्वेदातिनिर्गमम्।।
मुखरोगांश्च कासांश्च ग्रहणीं च विनाशयेत्।। ९।।

## खदिरः 2

खदिरः, खद्यपत्री, प्रसरवः, कर्कटी, गायत्री-इत्येकार्थाः। गुणबोधकनामानि यथा-याज्ञिकः, यज्ञाङ्ग, मेध्यः, यूपद्रुः, दन्तधावनः, पथिद्रुमः, रक्तसारः, तिक्तसारः, बहुसारः, क्षितिक्षमः, बालपत्रः, बालपुत्रः, बालतनयः, वक्रकण्टकः, कण्टकी, बहुशल्यः, सुशल्यः, जिह्मशल्यः, जिह्वाशल्यः, कुष्ठारिः, कुष्ठहृत् इति।।

### अस्य देशभाषासु नामानि यथा

| संस्कृत | हिन्दी | बंगला | महाराष्ट्री | गुर्जरी | कर्णाटी | तैलङ्गी |
|---|---|---|---|---|---|---|
| खदिरः | खैर<br>कत्था<br>पपड़िया<br>खयर | खएर<br>गाछ | खयर<br>पांडरा<br>खयर | खेरियो<br>गोरड़ | केपिनखैर<br>विलीय<br>तत्र | चंडचेटू<br>खासु<br>तेल्लचेंड |

### खदिरस्य गुणाः।

शीतोष्णः खदिरो दन्त्यः कषायकटुतिक्तकः।।
अरिमेदो विटूखदिरे कदरः खदिरे सिते।। 1।।

कदरो हन्ति कण्डूतिं कुष्ठं भूतग्रहं ज्वरम्।।
मुखरोगं पाण्डुरोगं रक्तदोषं कृमि व्रणम्।। 2।।
श्वित्रं शोथं चामपित्तं प्रमेहं च विषं तथा।।
मेदोरोगं वातकफं नाशयेत् खदिरः सितः।। 3।।

सारो ब्रण्यो रक्तदोषं मुखरोगं कफं हरेत्।।
निर्य्यासो मधुरो बल्यः खादिरः शुक्रवर्द्धनः।। 4।।

## प्लक्षः 3

प्लक्षः, पर्कटी, कर्परी, प्लवकः, प्लवंगः, कपीतनः, पीतनः, कन्दरालुः, कमण्डलुतरुः – इत्येकार्थाः। गुणबोधकनामानि यथा – अश्वत्थी, पिंपरो वटी, जटी, क्षीरी शृङ्गी, वरीहशाखो, दृढ़प्ररोहः, महाबलः, गर्द्दभाण्डः, चारुदर्शनी, सुपार्श्वः इति।।

अस्य देशभाषासु नामानि यथा

| सं० | हिं० | बँ० | म० | गु० | क० |
|---|---|---|---|---|---|
| पर्कटी | पाकर पाखर पिलखना | पाकुड | पिंपरीवृक्ष | पिपर्य्य | वसुरि |

## प्लक्षस्य गुणाः।

**प्लक्षः कषायकटुकः शिशिरो योनिरोगहृत्।।**
**रक्तदोषं रक्तपित्तं दाहं शोफं व्रणं हरेत्।। 1।।**
**मूर्च्छाभ्रमप्रलापांश्च ह्रस्वपत्रो विशेषतः।।**

## वटः 4

वटः, न्यग्रोधः, भाण्डीरः, नन्दी, ध्रुवः – इत्येकार्थाः। गुणबोधक-नामानि यथा – वनस्पतिः, वृक्षनाथः, महाच्छायः, मण्डली, विटपी, रोहिणः, अवरोधी, शिफारुहः, स्कन्धरुहः, स्कन्धजः, कर्मजः, पादरोहणः, बहुपात्, बहुपादः, बृहत्पादः, जटालः, जटिलः, जटी, क्षोरी, रक्तफलः, शुङ्गः, शुङ्गी, भृङ्गी, नीलः, यक्षतरुः, यक्षावासः, वैश्रवणावासः, वैश्रवणोदयः, यमप्रियः इति।।

अस्य देशभाषासुनामानि यथा-

| सं० | हिं० | बँ० | म० | ता० | क० | तै० | गु० |
|---|---|---|---|---|---|---|---|
| वटः | बड़ | वट | बड़ | अल | आल | मर्रिचेटु मारि पेडिमरि | बड़ |

**वटस्य गुणाः।**

**ग्राही वर्ण्यः शीतरूक्षः कषायो मधुरो वटः।।**
**मूर्च्छां छर्दिं तृषां मोहं दाहं शोफं व्रणं ज्वरम्।। 1।।**
**विसर्पं योनिदोषांश्च कफपित्तं च नाशयेत्।।**

**अश्वत्थः 5**

अश्वत्थः, पिप्पलः, कपीतनः – इत्येकार्थाः। गुणबोधकनामानि यथा – याज्ञिकः, पवित्रकः, शुचिद्रुमः, सेव्यः, मांगल्यः, श्रीमान्, सत्यः, देवात्मा, विप्रः, शुभदः, अच्युतावासः, बोधिवृक्षः, बोधिद्रुमः, चैत्यद्रुमः, महाद्रुमः, क्षीरद्रुमः, चलदत्रः, चलपत्रः, गुह्यपुष्पः, कुञ्जराशनः, राजभक्षः, धनुर्वृक्षः, श्यामलः, नागबन्धुः इति।।

अस्य देशभाषासु नामानि यथा

| सं० | हिं० | बँ० | म० | गु० | क० | तै० | फारसी |
|---|---|---|---|---|---|---|---|
| अश्वत्थः | पीपल | अशोथ गाछ | पिंपल | पीपलो | अरली | राईचेट्ट | लरजां |

**अश्वत्थस्य गुणाः।**

**अश्वत्थः शीतलो रूक्षो गुरुर्वर्ण्यश्च दुर्जरः।।**
**कषायतिक्तमधुरः स हि योनिविशोधनः।। 1।।**

रक्तदोषं कफं पित्तं व्रणं दाहं च नाशयेत्
पक्वं तु तत्फलं हृद्यं शीतलं चारुचिं हरेत्।।
वान्तिं शोषं विषं दाहं रक्तदोषं च पित्तहृत्।। 2।।

## उदुम्बरः 6

उदुम्बरः, प्रतिष्ठितः, सुचक्षुः, जन्तुफलः - इत्येकार्थाः। गुणबोधकनामानि यथा - यज्ञीयः, यज्ञयोग्यः, यज्ञाङ्गः, यज्ञसारः, यज्ञफलः, पवित्रकः, ब्रह्मवृक्षः, सौम्यः, कालस्कन्धः, श्वेतवल्कः, शीतवल्कलः, शीतफलः, जघनेफलः, सदाफलः, जन्तुफलः, अपुष्पफलः, पुष्पशून्यः, पुष्पहीनः, पाणिमुखः, क्षीरवृक्षः, हेमदुग्धः, हेमदुग्धी, कृमिकण्टक इति।।

अस्य देशभाषासु नामानि यथा

| सं० | हिं० | बँ० | म० | गु० | क० | तै० |
|---|---|---|---|---|---|---|
| उदुम्बरः | गूलर | यज्ञडुमुर | उम्बर | उम्बरा | अत्ति | बाडुचेट्टु |

उदुम्बरस्य गुणाः।

कषायमधुरः शीतो रूक्षो वर्ण्य उदुम्बरः।।
व्रणापहोऽस्थसंधानगर्भसंधानकृद्गुरुः।। 1।।
कफपित्तमतीसारं योनिरोगं च हन्ति सः।।
कषायशीतलं वल्कं गर्भ्यं दुग्धं व्रणापहम्।। 2।।
आमं फलं कषायाम्लं मांसवृद्धिकरं जडम्।।
दोषलं रक्तरुक्कारि दीपनं रुच्यमिष्यते।। 3।।
अतिशीतं फलं पक्कं कषायमधुरं जडम्।।
कृमिकृत्कफकृद् रुच्यं हन्ति पित्तं प्रमेहकम्।। 4।।

रक्तरोगं क्षुधां मूर्च्छां दाहं शोषं श्रमं तृषाम्।।
कोमलं तत् तृषां रक्तदोषं पित्तं कफं हरेत्।। 5।।
किञ्चित्तु कोमलं स्वादु कषायं शीतलं फलम्।।
हन्ति प्रहारजं क्लेशं वान्तिं पित्तमसृक्स्त्रुतिम्।। 6।।

### कृमुकः 7

कृमुकः, क्रमुकः, गुवाकः, खपुरः, पूगः, घोण्य, गोपदलः, राजतालः, छटाफलः – इत्येकार्थाः। तत्र कृमुक इति ऋकारवान् शब्दो वेदे प्रयुज्यते, कार्मुकमिति भूरि प्रयोगात्। लोके तु क्रमुक इति रेफवान्। गुणनामानि यथा – दीर्घपादपः, वल्कतरुः, दृढवल्कः, सुरञ्जनः, पूगवृक्षः इति।।

अस्य देशभाषासु नामानि यथा

| सं० | हिं० | बँ० | म० | गु० | क० | तै० |
|---|---|---|---|---|---|---|
| पूगः | सुपारी कसैली | गुया सुपारी | – | – | – | – |

### कृमुकस्य गुणाः।

निर्यासः कार्मुकः क्षारो विपाकोष्णो हिमो गुरुः।।
पित्तलो वातहृत् साम्लो मस्तिष्कमूत्ररोगहृत्।। 1।।
स्वादुतिक्तं कषायं तत् प्राणशुक्रबलर्द्धिकृत्।।
फलं स्वादुकषायं च त्रिदोषशमनं गुरु।। 2।।
संमोहनं रेचनं च मुखक्लेदमलापहम्।।
रूक्षं रुचिकरं पित्तकफकारि च दीपनम्।। 3।।
आर्द्रं तु तदभिष्यन्दि चाग्निदृष्टिहरं गुरु।।
आमं तत्सारकं कण्ठशुद्धिकृत् श्लेष्मपित्तहृत्।।
आमरक्तोदराध्मानहृदास्यमलहृत् तथा।। 4।।

## वरणः 8

वरणः, वरुणः, उरुमाणः, कुमारः, सेतुः, तमालः – इत्येकार्थाः। गुणनामानि यथा – साधुवृक्षः, सेतुवृक्षः, श्वेतद्रुः, शिखिमण्डलः, मारुतापहः, तिक्तशाकः, बर्हपुष्पः, अश्मरीघ्नः इति।।

### अस्य देशभाषासु नामानि यथा

| सं० | हिं० | बँ० | म० | गु० | क० | तै० |
|---|---|---|---|---|---|---|
| वरुणः विलि | वरना भाटवरणा | वरुण | वायवरणा उलिमिरि जाजिचेट्टु | वरणो | मदवसले | उरुमहि |

### वरणस्य गुणाः

वरणो मधुरस्तिक्तः कषायकटुको लघुः।।
स्निग्धोष्णः पित्तलो भेदी चाग्निदीपन इष्यते।। 1।।

मूत्राघातं मूत्रकृच्छ्रं हृद्रोगं कृमिमश्मरीम्।।
गुल्मवातं शीतवातं शीर्षवातं च विद्रधिम्।। 2।।

वातशूलं वातरक्तं रक्तदोषं च नाशयेत्।।
तत्पुष्पं ग्राहि पित्तामवातासृग्दोषनाशनम्।। 3।।

फलं विपाकमधुरं स्निग्धमुष्णं सरं गुरु।।
स्वादु त्रिदोषशमनं वरणस्य प्रचक्षते।। 4।।

## बिल्वः 9

बिल्वः, श्रीफलः, शैलूषः, मालूरः, शाण्डिल्यः, शल्यः, सोमहरीतकी, गोहरीतकी, कपीतनः, शलाटुः, महाकपित्थः, नीलमल्लिकः, कर्कटः, सुनीतिकः – इत्येकार्थाः। गुणनामानि यथा – शिवेष्टः, शिवद्रुमः, मङ्गल्यः, अतिमङ्गलः, समीरसारः, पूतिवातः, पीतफलः, महाफलः, लक्ष्मीफलः,

सदाफलः, गन्धफलः, सत्यफलः, सत्यधर्म्मः, हृद्यगन्धः, गन्धपत्रः, शैलपत्रः, त्रिशाखपत्रः, त्रिशिखः, त्रिदलः, पत्रश्रेष्ठः, कण्टकाव्यः, सिताननः, अधरारुहः इति।।

**अस्य देशभाषासु नामानि यथा**

| सं० | हिं० | बँ० | म० | गु० | क० | तै० | ता० |
|---|---|---|---|---|---|---|---|
| बिल्वः | बेल | वेल | वेलवृक्ष | विलोबिलु | वेललु | मारेडीपंदू विल्व | विल्व पाझाम |

**बिल्वस्य गुणाः।**

**कफानिलहरं तीक्ष्णं स्निग्धं संग्राहि दीपनम्।**
**कटुतिक्तकषायोष्णं बालं बिल्वमुदाहृतम्।।**
**तदेव विद्यात्संपक्वं मधुरानुरसं गुरु।**
**विदाहि विष्टम्भकरं दोषकृत् पूति मारुतम्।।**

**शमी 10**

कामी, समुद्रा, सुभद्रा, लक्ष्मीः – इत्येकार्थाः। गुणनामानि यथा – शान्ताः, सुखदा, भद्रा, शुभदा, मङ्गल्या, शिवा, शङ्करी, ईशानी, शुभकरी, शिवाफला, ईशाना, मेध्या, पवित्रा, सुरभिः, द्रष्टा, हविर्गन्धा, वह्निगर्भा, समीरा, तपनतनया, पापनाशिनी, पापशमनी, दुरितदमनी, कचमथनी, केशहन्त्री, कचरिपुफला, शक्तुफला, सक्तुफली, शङ्कफलो, सुपत्रा, तङ्गाः इति।

**अस्य देशभाषासु नामानि यथा**

| सं० | हिं० | बँ० | म० | गु० | तै० | क० | उ० |
|---|---|---|---|---|---|---|---|
| शमी | छोंकर छिकुर सफेद कोकर | शाई छुई वाव्ला | थोरशमी लघुशमी | खिजड़ो नान्ही खिजड़ी | शमी चेट्टू | वनी कावन्नि | शुमि |

## शम्या गुणाः।

कषायतिक्तकटुका रूक्षा शीता च रेचनी।।
लघुः शमी रक्तपित्तं कासश्वासं कफं कृमिम्।। 1।।
अतीसारं कुष्ठमर्शः कम्पं हन्ति श्रमं भ्रमम्।।
शमीफलं गुरु स्वादु रूक्षमुष्णं च पित्तलम्।। 2।।
तीक्ष्णं मेध्यं च तत् किन्तु नखं केशं च नाशयेत्।।
शम्यासक्तं यस्य मूलं शमीगर्भः स पिप्पलः।। 3।।

## विकङ्कतः 11

विकङ्कतः, वैकङ्कतः, रावणः, मधुपर्णी, गोपघोण्टा, पिण्डारः, किंकरी, पूतकिंकिणीः, हिमकः; इत्येकार्थाः। गुणनामानि यथा – यज्ञीयः, यज्ञवृक्षः, ब्रह्मपादपः, स्रुग्दारुः, स्रुवद्रुमः, स्रुवावृक्षः, सुधावृक्षः, पृथुबीजः, बहुफलः, मृदुफलः, ग्रन्थिलः, दन्तकाष्ठः, पादरोहिणः, व्याघ्रपात्, वृतिकरः, कण्टकी, कण्टकारी, कण्टपादः, कण्टपत्रः, स्वादुकण्टकः, इति।

### अस्य देशभाषासु नामानि यथा

| सं० | हिं० | बँ० | म० | गु० | क० | तै० | उ० |
|---|---|---|---|---|---|---|---|
| विकङ्कत किंकणी | कटाई गाछ वंज | बइंचि | वेहकळ | विकलो | हलु माणिका मालेगु | कानवेगु | वईच कुडि |

## विकङ्कतस्य गुणाः।

कषायोऽम्लश्च मधुरः पाकेऽतिमधुरो लघुः।।
विकङ्कतोऽयं नात्युष्णशीतो दीपनपाचनः।। 1।।

कफं पित्तं रक्तदोषान् नेत्रपुष्पं च कामलाम्।।
शोषं शोफं व्रणं दाहं लूतामशश्च हन्ति सः।।
विकङ्कतफलं पक्कं मधुरं सर्वदोषहृत्।। 2।।

## काष्मर्य्यः 12

काष्मर्य्यः, कार्श्मरी, गम्भारी, श्रीपर्णी, भद्रपर्णी, स्निग्धपर्णी, मधुपर्णी, कुमुदा, मोदिनी, गृष्टिः, भद्रा, सुभद्रा, सर्वतोभद्रा, स्वरूपभद्रा, गोपभद्रा, मधुभद्रा, महाभद्रा, सदाभद्रा, रोहिणी, पीतरोहिणी, हीरा; इत्येकार्थाः। अत्र 'काष्मर्य्य' इति वैदिकी भाषा। गुणनामानि यथा – क्षीरिणी, विदारिणी, मधुरसा, मधुमन्ती, सुफला, पीतफला, कटुफला, कृष्णफला, कृष्णवृन्ता, कृष्णा, अश्वेता, वातहा, स्थूलत्वचा, दृढत्वचा; इति।

### अस्य देशभाषासु नामानि यथा

| सं० | हिं० | बँ० | म० | गु० | क० | तै० |
|---|---|---|---|---|---|---|
| गम्भारी | कुम्भेर<br>खम्भारी | गांभारी<br>गांभार | शींबण<br>गंभारी | शवन्य | सींवनी | साल्ला<br>गुंवुटी<br>चेट्टु |

### काष्मर्यस्य गुणाः।

गम्भारी मधुरा तिक्ता कषाया कटुका गुरुः।।
दीपनी पाचनी मेध्योष्णवीर्य्या भेदनी तथा।। 1।।

हृद्या हन्ति ज्वरं दाहं शोषं शोफं तृषां विषम्।।
आमशूलं प्रमेहार्शस्त्रिदोषं च भ्रमं कृतिम्।। 2।।

शीतलं मधुरं तिक्तं गुरुस्निग्धं च तत्फलम्।।
बृंहणं ग्राहि मेध्यं च वृष्यं केश्यं रसायनम्।। 3।।

हन्ति मूत्रविबन्धञ्च वातं पित्तं तृषां क्षयम्।।
दाहं च रक्तदोषं च सतिक्तमधुरं फलम्।।4।।

फलमम्लकषायं तु गुरुस्निग्धं विशुद्धिकृत्।।
मूत्रलं बुद्धिदं हन्ति वातपित्तं क्षयं तृषाम्।।5।।

रक्तक्षतं रक्तपित्तं रक्तदोषं च हन्ति तत्।।
आमवातं मूत्रकृच्छ्रं दाहं च प्रदरं हरेत्।।6।।

कषायतिक्तमधुरा फलमज्जाऽसृजो रुजम्।।
ग्राहिणी वातला बल्या वृष्या पित्तं कफं हरेत्।।7।।

कषायतिक्तमधुरं पुष्पं तस्यास्तु शीतलम्।।
विपाकमधुरं ग्राहि वातलं रक्तदोषहृत्।।8।।

गम्भारीमूलमत्युष्णं मानुषेषु हितं न तत्।।

## सरलः 13

सरलः, पीतद्रुः, पूतिकाष्ठम्; इत्येंकार्थाः। गुणनामानि यथा – धूपवृक्षः, पीतवृक्षः, पीतदारुः, भद्रदारुः, स्निग्धदारुः, सुरभिदारुः, मरिचपत्रकः, मनोज्ञः, पीतः; इति।

देशभाषासु नामानि यथा

| सं० | हिं० |
|---|---|
| सरलः | चीड |

सरलः कटुतिक्तोष्णः कोष्ठशुद्धिकरो लघुः।।
त्वग्दोषशोफकण्डूतिनाशनः प्रतिपद्यते।। 1।।

स्निग्धोष्णः कर्णकण्ठाक्षिरोगरक्षोहरः स्मृत।।
कफानिलस्वेदयूककामलाक्षिव्रणापहः।। 2।।

## सालः 14

सालः, सर्ज्जः, सर्ज्जरसः, कलः, सस्यसंवरः, उपमेतः, लताशंखः, ललनः, वंशः, शूरः, कुशिकः, कौशिकः, धन्यः; इत्येकार्थाः। गुणनामानि यथा – सर्ज्जकार्य्यः, एलकार्य्यः, एलनिर्य्यासः, कश्वकर्णी, अश्वकर्णः, अजकर्णः, बस्तकर्णः, दीर्घपर्णः, चीरपर्णः, दीर्घशाखः, लतातरुः, वल्लीवृक्षः, गन्धवृक्षः, जरणद्रुमः, शंकुवृक्षः, शंकुतरुः, दिव्यसारः, सुरेष्टकः, सिद्धकः, यक्षधूपः, अग्निवल्लभः, तार्क्ष्यप्रसवः, कललजोद्भवः, जलदाशनः; इति।

अस्य देशभाषासु नामानि यथा –

| सं० | हिं० | बँ० | म० | क० | तै० | ता० |
|---|---|---|---|---|---|---|
| सालः | साल<br>सखुवा<br>सांखु | साल<br>गाछु<br>लतासाल | लघुराच्छेवा<br>साजरा | सज्जरदामर | एषचट्टु | कुंगिलियम् |

### सालस्य गुणाः।

कषायतिक्तकटुकः स्निग्धोष्णः साल इष्यते।।
कर्णरोगं च बाधिर्य्यं विद्रधिं सर्वदा हरेत्।। 1।।

विषदोषं शिरोदोषं कुष्ठं मेहमुरःक्षतम्।।
उरोविस्फोटकण्डूतिकृमिस्वेदव्रणं हरेत्।। 2।।

वातरोगं रक्तरोगं पाण्डुरोगं शिरोरुजम्।।
कफपित्तं हरेदस्य कषायमधुरं फलम्।। 3।।

शीतं रूक्षं स्तम्भनं च मलावष्टम्भकृद् गुरु।।
लेखनं च तथाध्मानशूलवातकरं मतम्।।
रक्तपित्ततृषादाहक्षतक्षयविनाशनम् ।। 4।।

## देवदारुः 15

देवदारुः, भद्रदारुः, पीतदारुः, दारुः, दारुकम्, पारिभद्रकः, द्रुकिलिमम्, पूतिकाष्ठम्; इत्येकार्थाः। गुणनामानि यथा – शक्रपादपः, इन्द्रद्रुमः, सुरदारुः, अमरदारुः, शिवदारुः, भद्रदारुः, स्निग्धदारुः, मस्तदारुः, शाम्भवम्, भूतहारि, भद्रवत्, देवकाष्ठम्, इति।

देशभाषासु नामानि यथा

| सं० | हिं० | बँ० |
|---|---|---|
| देवदारु | देवद्वार | देवदार |

### देवदारुगुणाः।

देवदारु लघुस्निग्धं तिक्तोष्णं कटुपाकि च।।
रूक्ष्मं श्लेष्मानिलध्वंसि भूतदोषविनाशकृत्।। 1।।
विबन्धाध्मानशोथामन्द्राहिक्काज्वरापहम्।।
प्रमेहपीनसश्लेष्मश्वासकासास्त्रनाशकृत्।। 2।।
आमदोषविबन्धार्शः प्रमेहज्वरनाशनः।।
अलक्ष्मी रूक्षतां हन्ति रक्षो विघ्नविनाशकृत्।। 3।।

## चन्दनः 16

चन्दनः, श्रीखण्डम्, मलयजः, गन्धसारः, भद्रश्रीः, तिलपर्णम्, गीशीर्षम्, तैलपर्णिकः, पटीरः, पाटीरः, वर्णकः, भद्राश्रयः, रौहिणः, पीतसारः; इति। गुणनामानि यथा – श्वेतचन्दनम्, महार्हम् मंगल्यम् गन्धराजम्, सुगन्धम्, सर्पावासम्, शीतलम्, गन्धाढयम्, भागिवल्लभम्, पावनम्, शीतगन्धः, चन्द्रद्युतिः हितम्, हिमम्, सेव्यः, याम्यः; इति।

देशभाषासु नामानि यथा

| सं० | हिं० | म्ले० |
|---|---|---|
| चन्दनम् | चन्दन | सदल |

चन्दनस्य गुणाः।

चन्दनं कटुतिक्तं च स्वादे किञ्चित् कषायवत्।।
मुखरुग्नाशनं वृष्यं शीतलं कान्तिवर्द्धनम्।। 1।।
कामवृद्धिकरं लेपे रूक्षं सौरभ्यदं लघु।।
शीर्षरोगं श्रमश्लेष्मविषदाहास्त्रनाशनम्।। 2।।
स्वादे तिक्तं कषे पीतं छेदे रक्तं तनौ सितम्।।
ग्रन्थिकोटरसंयुक्तं चन्दनं श्रेष्ठमुच्यते।।
विना मलयमन्यत्र चन्दनं न प्ररोहति।। 3।।

एतेषामेव वृक्षाणां समिदाहरणे पात्रनिर्म्माणेऽन्यत्र च याज्ञिके कर्मणि सर्वत्राधिकार इत्यतः सर्व एवैते यज्ञिया वृक्षा उच्यन्ते। समिधां स्वरूपे विशेषः स्मर्य्यते –

नाङ्गुष्ठादधिका ग्राह्या समित् स्थूलतया क्वचित्।।
न वियुक्ता त्वचा चैव न सकीटा न पाटिता।। 1।।
प्रादेशान्नाधिका नोना न तथा स्याद्विशाखिका।।
न सपर्णा न निर्वीर्य्या होमेषु च विजानता।। 2।। इति।।

निषिद्धवृक्षाः

अथ निषिद्धा वृक्षा अपि स्मर्यन्ते गोभिलादिभिः –

विभीतकः, कोविदारो, नीपतिल्वकबाधकाः।।
श्लेष्मन्तकोऽरलुर्निम्बो राजवृक्षश्च शाल्मली।। 1।।
दधित्थ इत्यमी वृक्षा निन्दिता यज्ञकर्म्मणि।।
अनिषिद्धा मध्यमाः स्युर्मुख्यालाभे ततो विधिः।। 2।।

इति यज्ञियवृक्षाधिकारः।

# यज्ञपात्राणां परिचयः

अथ प्रयोगसाधनानि दार्वादिमयानि पात्राणि यज्ञोपकरणानि। तानि नवधा मन्थनपात्राणि, स्रुक्पात्राणि, यज्ञायुधपात्राणि, स्थालीपात्राणि, चमसाः, ग्रहाः, उपयोजनपात्राणि, प्रातिस्विकानि, आसनानि चेति। तद्यथा–

## मन्थनपात्राणि

अधरारणिः, उत्तरारणिः, देवयोनिः, प्रमन्थः, चात्रम्, ओविलो, नेत्रम्, अधिमन्थनशकलः– इत्यग्निमन्थनयन्त्रावयवद्रव्याणि।

## अधरारणिरुत्तरारणिश्च

शमीवृक्षेण संसक्तमूलो योऽश्वत्थवृक्षः स शमीगर्भ इत्युच्यते। तस्य शमीगर्भस्याऽश्वत्थस्य प्रशस्तभूमिजातस्य या प्राङ्मुखी वोदङ्मुखी वोर्ध्वगा वा शाखा स्यात्, तां परिवारस्य तन्मयीमधरारणिमुत्तरारणिं च कुर्य्यात्। शमीगर्भानुपलब्धौ त्वशमीगर्भस्याप्यश्वत्थस्य तादृश्या शाखया ते संपादयेत्। आर्द्रा, पाटिता, ससुषिरा, ग्रन्थिमस्तका, घूर्णाङ्गी चेत्येवं विधाऽरणिर्न हिताय भवति। जन्तुभक्षणेन मन्थनेन वा मन्थनायोग्ये जीर्णे अरण्यौ शकलीकृत्य तस्मिन्नग्नौ दाहयेत्। अन्ये च नवे अरणी गृह्णीयात्। अनयोश्चारण्योश्चतुर्विंशत्यंगुलं दैर्घ्यं क्रियते। षडंगुलः प्रसारः; चतुरंगुल उत्सेधः। तत्रैतस्मिन्नरण्यादिमाने छन्दोगानामंगुष्ठसम्बन्धिना, वाजसनेयादीनां त्वंगुलीसम्बन्धिना बृहत्पर्वंग्रन्थिनाऽङ्गुलमापनं कार्य्यमिति संप्रदायः।।

अथैतस्या अधरारणेः प्राणिगात्रवदवयवाश्चतुर्दश कल्प्यन्ते। तद्यथा– शिरश्चक्षुः श्रोत्रम्, वक्त्रम्, ग्रीवा चेति पञ्चांगुलमात्राणि। वक्षोद्वयङ्द्व्यंगुलम्,

हृदयमेकांगुलम्, उदरं त्र्यंगुलम्, कटिरेकाङ्गुला, वस्तिर्द्व्यङ्गुला, द्व्यङ्गुलं गुह्यम्, ऊरुश्चतुरङ्गला, जङ्घा त्र्यंगुला, पादोऽङ्गुलमात्र इति चतुर्विंशत्यङ्गुलानि।।

## देवयोनिः

एषु यदेकादशं गुह्यं नाम सा देवयोनिः। अथवा चतुर्विंशत्यंगुलाया अरणेः समाश्चत्वारो भागाः कार्य्याः। तेष्वग्रारब्धभागेषु यस्तृतीयो भागस्तस्य मध्यं द्व्यङ्गुलं देवयोनिः। अथवा चतुरंगुलानि षडंगुलानि कल्प्यानि। तत्र शिरश्चक्षुः कर्णमास्यमित्येकम्, ग्रीवा वक्षो हृदयमिति द्वितीयम्, उदरं कटिरिति तृतीयम्; वस्तिर्गुह्यमिति चतुर्थम्; ऊरुद्वयं पञ्चमम्; जङ्घा पादा इति षष्ठम्; तत्र चतुर्थं देवयोनिः। अथवा मूलतोऽष्टांगुलमग्रतस्तु द्वादशांगुलं च त्यक्त्वा यदन्तरा देशो भवति सा देवयोनिः। तत्रापि देवयोनौ मूलादंगुलमग्रात्सार्धांगुलं त्यक्त्वा यदन्तरा भवति तत्रैवायमग्निर्म्मन्थ-नादुत्पाद्यो, न त्वन्यत्र। देवयोनावुत्पादितस्यैवाग्नेः कल्याणावहत्वात्। तदन्यस्थानजस्य रोगभयाद्यनिष्टहेतुत्वाच्च एष च नियमः प्रथम एव मन्थने ज्ञेयो नोत्तरेषु।

## प्रमन्थः

अथोत्तरारणिनिष्पन्न एव प्रमन्थः कार्य्यः। अन्यवृक्षान्मन्थसंपादने योनिसाङ्कर्य्यदोषापत्तेः। उत्तरारण्या ईशानदिग्भागादष्टांगुलदीर्घं द्व्यंगुलविस्तारं द्व्यंगुलोत्सेधं प्रमन्थं छेदयेत्। अस्यां चोत्तरारणो चतुर्विंशत्यङ्गुलायतायां षडंगुलविस्तृतायां चतुरंगुलोत्सेधायां षट्सप्ततानि पञ्चांगुलशतानि भवन्ति। प्रमन्थे त्वष्टांगुले द्व्यंगुलोत्सेधे द्व्यंगुलविस्तृते च द्वात्रिंशदंगुलानि भवन्ति। तथा चैकस्यामुत्तरारण्यामष्टादशप्रमन्थाः सम्पाद्यन्ते। मन्थनतो बहुभिर्दिनैर्य्यदा यदा प्रमन्थः क्षीणोऽनुपयुक्तः स्यात् तदा तदैतस्या एवोत्तरारणे-रूर्ध्वादीशानदिग्भागादारभ्य क्रमेण छित्त्वा छित्त्वा प्रमन्था उपनेयाः। तदेकस्या उत्तरारणेरष्टादशकृत्वः प्रमन्था लभ्यन्ते। एतावानेवोत्तरारणे-

रुपयोगः। प्रमन्थरूपेणैवेयमुत्तरारणिरधरारण्या संयुज्याग्निं जनयति, न तु चतुर्विंशत्यंगुलदण्डरूपेणेति बोध्यम्। उत्तरारणितस्तदनिष्पत्तौ त्वधरारणः प्रमन्थो ग्राह्यो न त्वन्यत इति केचिदाहुः। वस्तुतस्तु अधरारणितोऽपि नैव ग्राह्य इति सिद्धान्तः। तत्र केचित् प्रमन्थाग्रेण मथ्यन्ति, केचित्तु मूलेनेत्यविशेषः।

## चात्रम्

अथ चात्रं खादिरं सारवद्दारवं वा द्वादशांगुलदीर्घं वर्तुलं कार्य्यम्। तच्चाग्रेऽर्द्धत्र्यङ्गुललौहकीलयुक्तं बुध्ने तु प्रमन्थाग्रप्रवयनार्थगर्त्तयुक्तं, मूलेऽग्रे चैकांगुलवर्तुललोहपट्टिकया परिणद्धं भवति।

## ओविली

ओविली च खादिरी, सारवद्दारवी वा, द्वादशांगुलदीर्घा, चतुरंगुलविपुला, अधोभागे समा, चात्राग्रस्थितकीलकोपरिस्थापनार्थं सुषिरलौहपट्टिकायुक्ता, उपरिभागे वर्त्तुला च कार्य्या।

## नेत्रम्

अथ मन्थनार्था रज्जुर्नेत्रम्। तच्च गोवालैः शणसूत्रमिश्रितैस्त्रिवृदावर्तितं परिवृत्तमनंशुकं व्यामप्रमाणं कार्य्यम्।

## अधिमन्थनशकलम्

अधिमन्थनशकलस्तूत्तरारणेरधस्तात् स्थाप्यः तदित्थम् अधरारणिखातस्थेन प्रमन्थेन संसक्तबुध्नं चात्रमुपरिकीलं कीलसंसक्तयौविल्या कृतशीर्षकं नेत्ररश्मि संबद्धमग्निमन्थनयन्त्रं भवति।

तद्धैकेऽनुदितेमथित्वा तमुदिते प्राञ्चमुद्धरन्ति। उदित एव तु मन्थेद्वाजसनेयानाम्। अहतं विशुद्धं वासः परिधाय, यथाविधि प्रावृत्य चायं यजमानो मन्थयितुं प्राङ्मुखो यन्त्रं विभ्रियात्। तत्र च परिसमूहनादिपञ्च-

भूसंस्कारान् कृत्वा आच्छाद्य मन्थनमारभेत्। तद्यथा – प्राग्ग्रीवमुत्तरलोम कृष्णाजिनमास्तीर्य्य, तत्र प्रथममधरारणिमुत्तराग्रां संस्थाप्य, तत्पूर्वत उत्तरारणिं च स्थापयित्वा, प्रमन्थमूलं चात्रबुध्ने गाढं प्रवेश्य, चात्रबुध्नप्रोतस्य प्रमन्थस्याग्रं देवयोन्यां रन्ध्रे निधाय, चात्राग्रस्थितकीलकाग्रार्धस्योपरि तामोविलीं प्रत्यर्थतागुदगग्रां यजमानोऽन्यो वा प्राङ्मुखो दृढं धारयति। अथ पश्चिमाभिमुखोपविष्टा पत्नी वाऽध्वर्य्युर्वा प्रत्यङ्मुखश्चात्रं नेत्रेण प्रदक्षिणं त्रिवेष्टयित्वा, तथा मन्थनं करोति यथाऽत्रोत्पादितोऽग्निः प्राच्यां पतति। ततो जातमग्निं मृण्मये पात्रे शुष्कगोमयपिण्डचूर्णोपरि निहिततूले सपुरीषं परिक्षिप्य, संधुक्ष्य, प्रज्वाल्य, पूर्व संस्कृते देशे आदध्यादिति दिक्। स एषोऽग्निमथनप्रकारः। साऽग्न्युद्धार इत्याहुः।।

## स्रुचः।। 5।।

स्रुवः, ध्रुवा, जुहूः, उपभृत्, अग्निहोत्रहवणी इत्येतानि पञ्च स्रुक्संज्ञकानि पात्राणि।

## स्रुवः

खादिरोऽग्रभागेऽङ्गुपर्वमात्रवर्त्तुलबिलयुक्तपुष्करोऽरत्निमात्रदीर्घो बाहुमात्रैः वा खातेन हस्ततलवदाकृत्या पद्मपत्रवत् स्रुवः कार्य्यः। अत्राहुः–

**अरत्निमात्रो हंसास्यो वर्त्तुलोऽङ्गुष्ठपर्ववत्।**
**अर्द्धपर्वप्रणाल्या च युक्तो नासाकृतिर्भवेत्। इति।।**

वैकङ्कत स्रुवोऽप्यस्यैव भेदः। आज्यादिद्रव्यमस्मात् स्रवति तस्मात् स्रुवः।। 1।।

## ध्रुवा

वैकङ्कती जुहूसदृशी ध्रुवा क्रियते। सा हि होमाद्यर्थं स्रुवेण गृह्यमाणस्याज्यस्याऽऽधारभूता यागसमाप्तिं यावदेकत्र वेद्यां स्थित भवति तस्माद् ध्रुवा।। 2।।

## जुहूः

पालाशी चाग्निहोत्रहवणीसदृशाकारा जुहूः क्रियते। हूयतेऽनया, तस्माज्जुहूः। 'पुष्करस्त्रुगि' त्यस्या एव भेद इत्याहुः।। 3।।

## उपभृत्

आश्वत्थी जुहूतुल्या चोपभृत् क्रियते। चतुर्विंशत्यंगुलदण्डा हंसमुखी पर्वखाता च। जुह्वाः समीपे ध्रियते तस्मादुपभृत्।। 4।।

## अग्निहोत्रहवणी

**वैकङ्कती त्वग्निहोत्रहवणी प्रागेवोपदर्शिता।। 5।।**

सर्वाश्चैताः स्रुचो मूलदण्डा हंसमुखप्रसेकास्त्वग्बिलाः पाणिमात्रपुष्करा बाहुमात्र्याः क्रियन्ते। अन्येऽप्येवं स्त्रुवभेदा भवन्ति – वर्त्तुलास्याः, शंकुमुखाः, पर्वखाताः, समानाश्चेति सामान्यो धर्म्मः।

## इति पञ्चस्त्रुक् पात्राणि।।

## आयुधानि

स्फ्यम् कपालानि च; शूर्पम्, अग्निहोत्रहवणी च; शम्या, कृष्णाजिनं च; उलूखलं, मूसलं च; दृषद् उपलं चेत्येतानि दशपात्राणि यज्ञायुधसंज्ञकानि भवन्ति। दर्शपूर्णमासस्य युद्धरूपत्वात्, तत्र चैषां प्राधान्येनोपयोगात्।

## स्फ्यः

खदिरकाष्ठनिर्म्मितो विकङ्कतकाष्ठनिर्म्मितो वा तीक्ष्णाग्रभागः खड्गाकृतिररत्निदीर्घश्चतुरङ्गुलविस्तारः स्फ्यो भवति। स वज्र इत्यप्युच्यते।।

## कपालानि

मृण्मयानि द्विजहस्तघटितानि लौकिकाग्निपरिपक्वानि अश्वशफाकाराणि द्व्यङ्गुलोच्चानि पुरोडाशभर्जनार्थानि। कपालानि कस्मिंश्चित्पुरोडाशे कपालमेकमेव विधीयते, तत्र तदेकमेवाश्वशफाकारमश्वशफपरिमाणं चोपधीयते। यत्र त्वनेककपालः पुरोडाशस्तत्र तस्मिन् कपालसमूहे तदश्वशफाकारत्वं शफपरिमाणत्वं च नेयम्। यथाऽष्टाकपाले पुरोडाशे मध्ये तावदेकं समचतुरस्रं कपालमुपधेयम्। तस्य पुरस्ताच्च पश्चाच्चैकमेकमितीत्थं द्वे समानाकारे शफाकारतासंपत्यर्थमर्द्धचन्द्रवद्रूपे उपधेये। मध्यमस्य दक्षिणतश्चैकमीदृशमेव। तदित्थं चत्वारि जातानि। अथ दक्षिणस्यैकं पुरस्तादाग्नेयकोणे, एकं च पश्चान्नैर्ऋतिकोणे, इत्थं द्वे शफाकारतासंपत्यर्थं त्रिकोणवद्रूपे उपधेये। अथ मध्यमस्योत्तरार्द्धे पश्चिमभागे पूर्वभागे चैकमेकमितीत्थं द्वे शफाकृतिसिद्ध्यर्थं त्रिकोणरूपे उपधेये। तथा चैतान्यष्टौ कपालानि संहत्य संनिवेशितान्याकारेण परिमाणेन चाश्वैकशफसादृश्येन शफाकारताशफपरिमाणतासंपत्यनुरोधेन कार्य्या। केचित्तु द्व्यङ्गुलसमचतुरस्राणि कपालानीत्याहुः।।

## शूर्पम्

वैणवमैषिकं नलमयं वा शूर्पमचर्म्मबद्धं समचतुरस्रमरत्निमात्रं कार्य्यम्। तच्च पुरोडाशादिब्रीह्यादीनां निस्तुषकरणायोपयुज्यते।।

## स्रुक्

वैकङ्कतकाष्ठनिर्म्मिता मूलदण्डा त्वग्बिला पाणिमात्रपुष्कराग्रा दैर्घ्ये प्रादेशमात्री, अरत्निमात्री, बाहुमात्री वाऽग्निहोत्रहवणी स्रुग् भवति। सा यदि हस्त्योष्ठक्रियते तदाष्टांगुलविला कार्य्या। हंसमुखी वा वायसपुच्छका वा क्रियते चेत् तदा पञ्चांगुलविला वा कार्य्या। तत्र हंसमुखसदृशप्रणालिका हंसमुखी; वायसपुच्छवत् प्रसृताग्रमुखी वायसपुच्छका; इत्याद्यूह्यम्।।

## शम्या

खदिरकाष्ठनिर्म्मिता, विकङ्कतकाष्ठनिर्म्मिता, वारणकाष्ठनिर्म्मिता वा अग्रभागेऽष्टास्वङ्गुलिषु कुम्बाष्टकोपेता षट्त्रिंशदंगुलायामा शम्या कार्य्या। द्वात्रिंशदङ्गुला शम्या वाजसनेयिनाम्। प्रादेशमात्रा तीक्ष्णाग्रेति केचित्। वर्त्तुलग्रन्थिसदृशाकारः कुम्बः। इयं च तण्डुलादिपेषणकाले दृषदुपलादिसमाहननादौ च दृषदोऽधस्तात् स्थापनायोपयुज्यते।।

## कृष्णाजिनम्

कृष्णसारमृगचर्म्मखण्डं सग्रीवशिरोभागं सचतुःपादभागं च कृष्णाजिनं कार्य्यम्। तच्च ब्रीह्याद्यवघातकाले उलूखलस्याधः स्थापनायोपयुज्यते। ग्रीवादिनिरपेक्षं चेति केचित्।।

## उलूखलम्

पलाशं वारणं सारवद्वृक्षान्तरकृतं वा उपरितनार्द्धभागे बिलयुक्तं प्रथुबुध्नं बृहद्बकं मध्ये रास्नायुक्तं द्वादशांगुलोच्चायमरत्निमात्रं जानुमात्रं यथेच्छप्रमाणं वोलूखलं कार्य्यम्। तच्च चरुपुरोडाशसम्बन्धिव्रीह्यादीनां कण्डनायोपयुज्यते।।

## मुसलम्

खादिरं वारणं सारवद्वृक्षान्तरकृतं वोलूखलार्द्धत्रिगुणायामं प्रादेशमात्रं त्र्यरत्निमात्रं यथेच्छप्रमाणं वा मुसलं कार्य्यम्। तदप्युलूखलवत्कण्डनायोपयुज्यते।।

## दृषत्

अश्ममयी प्रादेशमात्रदीर्घा षडंगुलनिःसृता चाऽरत्निप्रमाणा इच्छाप्रमाणा वा दृषदुच्यते। सा च पेषणीयद्रव्याणां पेषणकाले आश्रयभूता भवति।।

## उपला

अशममयी षडंगुला प्रकल्पिताग्रभागा पेषणायोपला क्रियते।।'उपलो वर्त्तुलः प्रोक्तो वितस्तिपरिमाणः' इत्यन्ते।।

तदित्थं यथाद्रव्यं यथाकारं यथाप्रमाणं वा प्राचां व्यवहारसिद्ध-मायुधमासीत्; तथेदमुक्तम्। वस्तुतस्तु नात्राऽदृष्टनियमः श्रूयते इति यथेच्छमन्यथाद्रव्यमन्यथाकारमन्यथाप्रमाणं चैतदुपयोगानुसारेण कर्त्तुं शक्यमिति दिक्।।

## इति दशायुधपात्राणि।।

## स्थाल्यः 16

आज्यस्थाली, चरुस्थाली, अन्वाहार्य्यस्थाली, पिष्टोद्वपनी, पिष्टपात्री, हविर्द्धानपात्री, भर्जनपात्री, पुरोडाशपात्री, इडापात्री, दारुपात्री, यजमानपात्री, पत्नीपात्री, पूर्णपात्रम्, प्रणीतापात्रम्, प्रोक्षणीपात्रम्, फलीकरणपात्रम्, मदन्ती, द्रोणकलशः इति स्थाल्यादिपात्राणि षोडश।।

तेषु तावदियं स्थाली शततृण्णा भवति।।

### आज्यस्थाली

तत्र – साऽऽज्यस्थाली यस्यां पवित्रमन्तर्द्धाय स्रुक्षु पूरणार्थमाज्यं गृह्यते। सा च तैजसी वा मृण्मयी वा द्वादशांगुलविस्तीर्णा प्रादेशोच्चा विधीयते। यथाकामं वाज्यस्थाल्याः प्रमाणं भवति।।

### चरुस्थाली

चरुस्थाली च तथैव भवति। अथवा मृण्मय्यौदुम्बरी वा दृढा नातिबृहन्मुखी तिर्य्यगूर्ध्वं च समिन्मात्रा कार्य्या। इह प्रकरणे स्थाल्यादिकं सर्वमेव मृणमयं पात्रं कुलालचक्रघटितमासुरं देवकर्म्मायोग्यं विज्ञेयम्। हस्तघटितमेव तु दैविकं भवति।।

### अन्वाहार्यस्थाली

सा चान्वाहार्य्यस्थाली, यस्यां स्थाल्यां अन्वाहार्य्या ओदनः श्रप्यते। सा यथेच्छं कार्य्या।।

### पिष्टोद्वपनी

सा पात्री पिष्टोद्वपनी; यस्यां गार्हपत्याधिश्रितायां पिष्टानि समुप्यन्ते।।

### पिष्टपात्री

पिष्टपात्री द्वादशांगुला चतुरस्रा विपुला च भवति।। सैव हविर्द्धानपात्रीत्यप्युच्यते।।

भर्जनपात्री भर्जनार्थमपेक्षितं मृण्मयं पात्रम्।।

### पुरोडाशपात्री

पुरोडाशपात्री समचतुरस्रा वर्त्तुलेन खातेनोपेता। पुरोडाशपात्रमप्युच्यते तद्बृहच्चेत्।।

### इडापात्री

इडापात्री चारत्निमात्रा वैकङ्कती स्यादित्येके। आश्वत्थं पदपरिमितायामबिलयुक्तं चतुरंगुलपरिणाहं चतुरंगुलदण्डं पञ्चविंशतिपलं चेडापात्रमित्यन्ये। हुतहविः शेषादवदाय इडापात्रे स्थाप्यमानो हविर्भाग इडा। तदाधारत्वादिदमिडापात्रमित्युच्यते।।

### दारुपात्रम्

दारुपात्रमिडापात्रतुल्यम्। तच्च केनचिच्चिह्नेनेडापात्रात् कृतभेदं संपाद्यते। पक्वान् पुरोडाशान् कपालेभ्य उद्वास्य मन्त्रेणाज्योपस्तरणं कृत्वा कृतोपस्तरणस्थाने तत्रैव दारुपात्रे पुरोडाशान् स्थापयित्वा हविरासादनकाले वेद्यामासादयन्ति। तत्पात्रस्थानामेव च पुरोडाशानां यागकाले प्रधानहोमार्थं,

ब्रह्मभागार्थं, यजमानभागार्थं, स्विष्टकृदर्थं, प्राशित्रार्थमिडापात्रे नीत्वा चतुर्धाकरणार्थं चावदानं क्रियते इति बोध्यम्।।

## यजमानपात्री पत्नीपात्री च

अथ यजमानपात्री पत्नीपात्री च यजमानस्तत्पत्न्योः प्राशनार्थं यथारुचि प्रकल्पिते भवतः।।

## पूर्णपात्रम्

अथ यावताऽन्नेन भोक्तुः पूर्णा तृप्तिः संभाव्यते, तावद्भिर्ब्रीहिभिर्य्यवैर्वा पूर्णं पात्रं पूर्णपात्रम्। ब्रीह्याद्यन्नमुष्टीनां षट्पञ्चाशेन शतद्वयेन पूर्णं पूर्णमात्रमित्याहुः।।

## प्रणीतापात्रम्

प्रणीता प्रणयनम्, आश्वत्थं वारणं वा प्रादेशमात्रमष्टांगुलबिलं चतुरंगुलदण्डं पात्रम्। तेन प्रणीतानाम्न्य आपो नीयन्ते। "प्रस्थमात्रोदकग्राही प्रणीता चमसो भवेदि" त्याहुः।।

## प्रोक्षणीपात्रम्

अथ प्रोक्षणीपात्रम्। पाणिमात्रं वैकङ्कतं हंसमुखप्रसेकं त्वग्बिलं चतुरंगुलं च कार्य्यम्।।

## फलीकरणपात्रम्

पुरोडाशचरुसम्बन्धिब्रीह्यादीनुलूखले मुसलेनावहत्य शूर्पेण निस्तुषीकरोति। तत्र ये तुषादयः पतन्ति ते फलीकरणशब्देन व्यपदिश्यन्ते। यागानन्तरं फलीकरणाख्यानां ब्रीह्यादितुषाणां जुह्वा चतुर्गृहीतेनाज्येन सह दक्षिणाग्नौ होमो विधीयते। तस्मात् ते तुषादयः कस्मिंश्चिदश्वत्थमये पात्रे यागसमाप्तिपर्य्यन्तं संरक्ष्यन्ते। तत्पात्रं फलीकरणपात्रमित्युच्यते।।

**मदन्ती**

अथ भर्जनपात्र्यधिश्रयणकाले यज्जलपात्रमधिश्रितं भवति। तत्रत्यं जलं मदन्तीत्युच्यते। मदन्तीनामिका आपो यस्मिन् पात्रे संताप्यन्ते तत्पात्रमपि लक्षणया मदन्तीत्युच्यते।।

**द्रोणकलशः**

अथ द्रोणकलशः पलशतग्राही पारिप्लवाकृतिः कार्य्यः। जुहूसदृशे महापुष्करे द्वे पात्रे द्रोणकलशावित्याहुः।

**इति स्थाल्यादिपात्राणि।।**

**चमसाः 10**

यजमानचमसः, ब्रह्मचमसः, होतृचमसः, उद्गातृचमसः, आग्निधचमसः, प्रशास्तृचमसः, पोतृचमसः, नेष्टृचमसः, अच्छावाकचमसः, व्रतशंसेचमसः, इत्येतानि चमसपात्राणि दश।।

सर्वे चैते चमसाः विकङ्कतमयाः पलाशमयाः वटमया अन्यकाष्ठमया वा श्लक्ष्णास्त्वग्बिलाः कार्य्याः। तेषां दण्डाश्चतुरङ्गुलाः; स्कन्धो द्व्यङ्गुलः; विस्तारश्चतुरङ्गुल इत्येके। द्वयंगुलदण्डाश्चतुरङ्गुलखाताश्चतुरङ्गुलविस्तृता दशाङ्गुलदीर्घा षडङ्गु"लोच्चायाश्चमसाः कार्य्या इत्यपरे। तेषां दशविधान दण्डेषु विशेषा भवन्ति। तद्यथा - यजमानस्य दण्डः पृथुविस्तीर्णाग्रः कार्य्यः ब्रह्मणश्चतुरस्रोऽल्पदण्डः। होतुर्मण्डलः। उद्गातुस्त्रयस्त्रिः। आग्नीध्रस्य मयूखकः; तीक्ष्णाग्रो मयूखकः। प्रशास्तुरवतष्टः; अधोभाग वक्रोऽवतष्टः पोतुरग्रे विशाखी। नेष्टुर्विगृहीतः। अच्छावाकस्य रास्नायुक्त उपरिवक्रः ब्रह्मणाच्छंसिनोऽयमुपरिवक्रः इति।

**इति दश चमसाः।।**

## ग्रहाः 40

सोमस्य ग्रहाश्चत्वारिंशद्भवन्ति। ते यथा – उपांश्वन्तर्यामौ द्वौ; उपांशुसवन एकः ऐन्द्रवायवः मैत्रावरुणः, आश्विनः इति द्विदेवत्यास्त्रयः, शुक्रामन्थिनौ द्वौ; आग्रयणोक्थ्यध्रुवास्त्रयः; पूतभृत्, आधवनीय इति द्वौ; क्रतुग्रहा द्वादश; ऐन्द्राग्नः, वैश्वदेवः – इति द्वौ; मरुत्वतीयास्त्रयः; माहेन्द्र एकः, आदित्यः सावित्र – इति द्वौ; वैश्वदेवः, पात्नीवतः, हारियोजन – इत्येते त्रयः; अंशुरदाभ्यः इति द्वौ; दधिग्रहः, षोडशी–इति द्वौ। इत्थं चत्वारिंशत्। तत्रादितः षट्त्रिंशदग्निष्टोमीयाः। अंश्वादयस्तु चत्वारोऽत्यग्निष्टोमीयाः। अतएव च तथा विभागेन मन्त्रवर्णकं भवति – षट्त्रिंशांश्च चतुरः कल्पयन्तश्छन्दांसि च दधत आ द्वादशम्। यज्ञं विमाय कवयो मनीषा ऋक्सामाभ्यां प्ररथं वर्त्तयन्ति (9।6।17।2) (10।10।114।6)

अथवा सवनाऽनुसारेणैते द्रष्टव्याः। तत्र उपांशुः, उपांशुसवनः, अन्तर्यामः– इति त्रयः। ऐन्द्रवायवः, मैत्रावरुणः, आश्विन–इति त्रयः। शुक्रः, मन्थी इति द्वौ। आग्रायणः, उक्थ्यः, ध्रुवः, इति त्रयः। पूतभृत्, आधवनीयः – इति द्वौ। ऋतुग्रहस्त्वेकः। ऐन्द्राग्नः, वैश्वदेवः – इति द्वौ।। इत्येते षोडश ग्रहाः, प्रातः सवनीयाः।। शुक्रामन्थिनौ, आग्रयणः, मरुत्वतीयाः, उक्थ्यः, माहेन्द्रः – इत्येतेऽष्टौ माध्यन्दिनसवनग्रहाः। आदित्यः, दधिग्रहः, सावित्रः, वैश्वदेवः, पात्नीवतः, हारियोजनः – इति षट्सायं सवनीयाः।।

औदुम्बरं चतुः स्रक्ति दधिग्रहपात्रम्। रास्नाचिह्नितं पात्रमैन्द्रवायवम्। पिलकाचिह्नितं मैत्रावरुणम्। द्विकोणं पात्रमाश्विनम्। बैल्वं शुक्रपात्रम् वैकङ्कतं श्लक्ष्णं मन्थिपात्रम्। औदुम्बरं चतुः स्रक्ति अंशुपात्रम्। औदुम्बरं श्लक्ष्णमदाभ्यम्। न्यग्रोधकाष्ठनिर्म्मितान्यतिग्राह्याणि। इतराणि तु पात्राणि नैयग्रोधान्यौदुम्बराणि वा कार्य्याणि। तानीमानि दधिग्रहादीनि प्रादेश–मात्राण्युलूखलाकाराणि एकतो मुखानि वायव्यानि सप्तदशपात्राणि। ऋतुपात्रे तु द्वे उभयतोमुखे कार्य्ये।।

सौत्रामण्यां सुराग्रहणार्थं पलाशन्यग्रोधाश्वत्थकाष्ठनिर्म्मितानि त्रीणि प्रादेशमात्राण्युलूखला-काराण्यूर्ध्वमुखानि पात्राणि सुराग्रहा उच्यन्ते। तादृशान्येवान्यानि त्रीणि फलेग्रहेर्यज्ञियस्य पलाशादिवृक्षस्य काष्ठैनिर्म्मितानि पयोग्रहा नाम।।

## अथोपयोजनपात्राणि 29

प्राशित्रहरणम्, श्रृतावदानम्, मेक्षणम्, दर्वी, आकर्षफलत्वम्, कङ्कतम्, धृष्टिः, उपवेषः, अभ्रिः, कूर्चम्, षडवत्तम्, परिधयः, श्रपणी, शूलम् पशूखा, अन्तर्द्धानकटः, वेदः, वेदपरिवासनम्, पवित्रम्, प्रोक्षणी, विधृतिः, प्रस्तरः, बर्हिः, जूना, योक्त्रम्, इध्मः, इध्मप्रव्रश्चनः, शाखा, विषाणम्, आसन्दी - इत्येवमादीन्युपयोजनपात्राणि कर्मभेदाद् बहुधा भिद्यन्ते।।

### प्राशित्रहरणम्

प्राशित्रहरणं खादिरं वैकङ्कतं वा प्रादेशमात्रमादर्शाकारं, चमसाकारं, गोकर्णाकारं वा चतुरङ्गुलदण्डयुक्तं कार्य्यम्। हुतशेषहविर्भागो ब्रह्मणे देयः प्राशित्रम्। तदनेनाह्रियते तस्मात् प्राशित्रहरणम्।।

### श्रृतावदानम्

श्रृतावदानं वैकङ्कतं प्रादेशमात्रदीर्घं पृथुवक्त्रमङ्गुष्ठपर्वमात्रं तीक्ष्णाग्रं कार्य्यम्। श्रृतमन्नमनेनावद्यते तस्मात् श्रृतावदानम्।

### मेक्षणम्

मेक्षणमिध्मजातीयमिध्मार्द्धप्रमाणं वैकङ्कतं प्रादेशमात्रं कार्य्यम्। आश्वत्थमरत्निप्रमाणमग्रभागे चतुरङ्गुलचतुरस्रफलकयुक्तं मूलतो दण्डयुक्तं मेक्षणमित्यन्ये। तच्च भर्जनपात्र्यां समुप्तस्य पिष्टस्य मदन्तीभिरद्भिः संमेलनकरणादावुपयुज्यते। चरुपाकोपयुक्तं तु तच्चरुमेक्षणमुच्यते।। उक्तं च -

"इध्मजातीयमिध्मार्द्धप्रमाणं मेक्षणं भवेत्।
वृत्तं चाङ्गुष्ठपृथ्वग्रमवदानक्रियाक्षमम्।।" इति।।

## दर्वी

मेक्षणसदृशो दर्वी भवति। साऽरत्निमात्रा वारणी तुर्य्यांशाधिकपुष्करा हस्ताकारा द्व्यङ्गुलपृथ्वग्रा सर्पफणा कृत्यग्रा च कार्य्या।। 4।।

## आकर्षफलकम्

अथाकर्षफलकं धनुराकृति हस्तमात्रं सर्पफणाकाराग्रं खादिरं वैकङ्कतं वा कार्य्यम्।।

## कङ्कतानि

कङ्कतानि तु त्रिदन्तीनि वारणानि भवन्ति।।

## धृष्टिः

धृष्टिरपि मेक्षणसदृशी भवति। सा च कपालोपधाने गार्हपत्या-दङ्गारोद्धरणादौ चोपयुज्यते। तेनात्युष्णमपि द्रव्यं सहसा ग्रहीतुं प्रगल्भते तस्मात् धृष्टिः।

## उपवेषः

उपवेषोऽपि धृष्ट्याकारः प्रादेशमात्रः पालाशो वत्सापाकरणशाखायाः पर्णानि छित्वा विनिर्मितो भवति। अरत्निमात्रः खादिरो वैकङ्कतो वा हस्ताकार उपवेष इत्येके। स हि सांनाय्यसंस्कारकाले गार्हपत्याङ्गाराणामुदग्दिशि निरूहणादावुपयुज्यते धृष्टिवदुपवेषः।। 8।।

## अभ्रिः

अभ्रिररत्निप्रमाणा खादिरा वैकङ्कती वारणी वौदुम्बरी वा तीक्ष्णमुखा कार्य्या। काष्ठकुद्दालोऽभ्रिः। तस्याः शासं दशाङ्गुलं कार्य्यम्।।

**कूर्चः**

कूर्चः कुशमयो बाहुमात्रो मकराकारः। मलिनद्रव्यमलापकर्षणादावुपयुज्यते कूर्चः।।

**षड्वत्तम्**

षड्वत्तं तु वारणनिर्म्मितं वैकङ्कतं वा षडङ्गुलप्रमाणं चतुरस्रमुभयतः शातं कार्य्यम्।।

**परिधयः**

परिधयस्तु श्रैपर्णा बाहुमात्रा अपुष्कराः कार्य्याः।।

**श्रपण्यौ**

अथ श्रपण्यौ श्रैपर्ण्यौ हस्तमात्रे भवतः।।

**शूलम्**

शूलं तु हस्तमात्रं यस्य कस्यचित्तरोर्य्यज्ञियस्य क्रियते।।

**पशूखा**

अथ पशूखा मृण्मयी, लौही, ताम्रमयी वा स्यात्।।

**अन्तर्धानकटः**

अन्तर्धानकटस्तु आश्वत्थो वैकङ्कतो वा द्वादशांगुलोऽर्द्धचन्द्राकृतिः किञ्चिदुच्छितशीर्षा भवति। यदा गार्हपत्येऽध्वर्य्युः पत्नीसंयाजैः प्रचरति तदा तत्राहूतानां देवपत्नीनां तिरोधानेनाऽवस्थानायोपयुज्यते सोऽन्तर्धानकटः।।

**वेदः**

वेदस्तु दर्भमुष्टिरुच्यते। यो हि प्रदक्षिणमावेष्टयद्द्विगुणः कृतः प्रादेशमात्र

उपविष्टवत्सजानुसदृशसंपन्नः प्रच्छिन्नाग्रः स्यात्। स च समन्त्रके वेदिसंमार्जनादावुपयुज्यते तस्माद्वेदः।।

## वेदपरिवासनानि

अथ योऽयं प्रच्छिन्नाग्रो वेद उक्तस्तस्य यान्यग्राणि पूर्वं छिन्नानि तानि वेदपरिवासनान्युच्यन्ते।।

## पवित्रम्

पवित्रं त्वनखच्छिन्नं साग्रं प्रादेशमात्रं द्विदलं समपरिणाहं मन्त्रसंस्कारयुक्तं दर्भद्वयम्। तेन प्रोक्षणादिप्रयोगाः क्रियन्ते, तस्मात् पवित्रम्। अत्र द्विदलत्वमावश्यकम्, दर्भद्वयं तु नावश्यकम्। एकस्यापि दर्भस्य पवित्रत्वात्। अत एव – "समावप्रच्छिन्नाग्रौ दर्भौ प्रादेशमात्रौ पवित्रे करोति" इति ब्राह्मणवचने द्विवर्चनं संगच्छते। कर्मप्रदीपेऽप्येवमेवाह।।

## प्रोक्षण्यः

ब्रीह्यादिप्रोक्षाणार्थमग्निहोत्रहवण्यां गृहीता आपः प्रोक्षण्यः।। 20।।

## विधृतिप्रस्तरबर्हिषे

विधृतिप्रस्तरबर्हिष्यपि वेदपवित्रवद्दर्भपुष्टीनां नामानि। दर्शपौर्णमासे चैतान्युपयुज्यन्ते। तत्र वेद्यां तावद् द्वौ दर्भावुदगग्रौ निधीयेते, तयोर्विधृतिसंज्ञा।।

अथ चतस्रो दर्भमुष्टयश्छिद्यन्ते। तत्र प्रथमा दर्भमुष्टिर्मन्त्रसंस्कृता, तयोर्विधृत्योरुपरि प्रागग्रा स्थाप्यते। तत्र च जुहूर्निधीयते स प्रस्तर उच्यते।।

अन्यास्तु तिस्रो मुष्टयो वेद्यास्तरणार्था बर्हिषि। तत्र चास्तृते बर्हिषि हवींषि पात्राणि च निधीयन्ते। तदित्थं दर्भाणामेवावस्थाविशेषादेताः समाख्या भवन्ति – वेदः, पवित्रं, विधृतिः, प्रस्तरः, बर्हिरिति।।

"यज्ञवास्तुनि मुष्टौ च स्तम्बेदर्भवटौ तथा।
दर्भसंख्या न विहिता विष्टरास्तरणेषु च।।"
यत्तु - "पञ्चभिर्नवभिर्वापि सार्द्धद्वितयवेष्टितम्।
ओंकारेणैव मन्त्रेण द्विजः कुर्य्यात् कुशद्विजम्।
पञ्चाशद्भिः कुशैर्ब्रह्मा तदर्द्धेन च विष्टरः।।"

इत्येवमादिभिः क्वचिद्दर्भवटु ब्रह्मविष्टरादिनिर्म्माणे कुशसंख्याऽभिधीयते, तदनुग्रहमात्रम् न तु नियम इति बोध्यम्।।

### जूना

जूनापि दर्भेणैव संपाद्यते। दर्भत्रयं गृहीत्वा प्रदक्षिणमावेष्ट्य तदन्तेऽन्यद्दर्भत्रयं मूलेन संयोज्य वेष्टनेन ग्रथितमिव कृत्वा ततः प्राग्वत् प्रदक्षिणमावेष्ट्य तदन्ते पुनरन्यद्दर्भत्रयं प्राग्वत् करोति तेनास्य मध्ये सन्धित्रयं जायते सद्दर्भसूत्रं द्विगुणं कृत्वा तदन्ते ग्रन्थिः कार्य्या। सा जूना भवति। जूना यज्ञे द्विविधाऽऽख्यायते - बर्हिः संनहनं, चेध्मसंनहनं च। बर्हिषां बन्धनोपयुक्तं बर्हिः संनहनम्। एवमिध्मानामिध्मसंनहनम्। तयोरुभयोर्लौकिकी संज्ञा भवति जूनेति।।

### योक्त्रम्

अथ योक्त्रं मुञ्जमयं संनहनम्। कर्म्मकालेऽध्वर्य्युप्रेषित आग्नीध्रो मन्त्रपूर्वं येन वेष्टनगुणेन त्रिगुणितेन पत्नी कटिदेशे संनह्यति स गुणो योक्त्रम्।

### इध्मानि

अथेध्मानि। बर्हिः संभरणानन्तरमध्वर्य्युः स्थापितकाष्ठप्रदेशं गत्वाऽसिदेन च परशुना वा तूष्णीमिध्मं छिनत्ति। तान्येकविंशतिसंख्याकानि काष्ठानि गृह्यन्ते सोऽयमेकविंशतिदारुकः संघ 'इध्म' शब्देनोच्यते। तानीध्मानि द्वेधा विभज्यन्ते - परिधयः समिधश्चेति। आहवनीयस्य पश्चाद्दक्षिणत उत्तरतश्च प्रथममेखलोपरि स्थापनार्थं मेखलापरिमितायामं

काष्ठत्रयं परिधिशब्देनोच्यते। पुरस्तात्त्वाहवनीयस्य सूर्य्यपरिधित्वेन मना क्लृप्तः। अथान्यान्यष्टादशकाष्ठानि – प्रादेशमात्राणि समिधः। समिंल्लक्षणं छन्दोगपरिशिष्टे यथा –

"नाङ्गुष्ठादधिका कार्य्या समित् स्थूलतया क्वचित्।।
न वियुक्ता त्वचा चैव न सकीटा न पाटिता।। 1।।
प्रादेशान्नाधिका न्यूना न तथा स्याद् द्विशाखिका।।
न सपर्णा न निर्वीर्य्या होमेषु न विजानता।। 2।।"

मरीचिः– "विशीर्णा विदला ह्रस्वा चक्राः ससुषिराः कृशाः।।
दीर्घाः स्थूला घुणैर्जुष्टाः कर्मसिद्धिविनाशिकाः।। 3।।
प्रागग्राः समिधो देयास्ताश्चाऽकामेष्वपाटिताः।।
काम्येषु च सवल्कार्द्रा विपरीता जिघांसत।। 4।। इति।।"

एताश्च यज्ञियवृक्षाणामेव स्युः ते यथा –
"पालाशाश्वत्थन्यग्रोधप्लक्षवैकङ्कतोद्भवाः।।
अश्वत्थोदुम्बरौ बिल्वश्चन्दनः सरलस्तथा।।
शालश्च देवदारुश्च खदिरश्चेति याज्ञिकाः।।" इति।।

तत्रैतासामष्टादशानां समिधां द्वे आहवनीयायतनस्यान्तर्दक्षिणोत्तरयोर्भागयोरूद्ध्वाग्रेरोपणार्थं भवतः। एकमनुयाजार्थम्। पञ्चदश सामिधेन्यर्थानि। क्वचित्तु विकृतीष्ट्यादिषु सामिधेनोवृद्धो अधिका अपि समिधा गृह्यन्ते। क्वचिन्न्यूना अपीत्यूह्यम्। प्रकृतीष्टौ त्वित्थमेतान्यष्टादशैव समिधः संपद्यन्ते।।

### इध्मप्रव्रश्चनानि

अथेध्मच्छेदनकाले यानि काष्ठशकलानीतस्ततः पतन्ति तानीध्मप्रव्रश्चनानि।।

**शाखा**

व्रतोपायनान्ते संनयति यजमानेऽध्वर्युः प्राचीमुदीचीमैशानीं वा दिशं गत्वा पलाशस्य शम्या वा प्राचीमुदीचीमैशानीं वा शाखामसिदेन समन्त्रं छित्त्वा समन्त्रमेव तां विहारमानयति सा शाखा। तस्य अग्र-भागश्छिन्नस्त्रिभिर्दर्भैर्वेण्याकारेण निबद्धः शाखापवित्रमित्युच्यते। यस्तु तस्या मूलभागश्छिन्नपर्णः प्रादेशमात्रः स उपवेशः प्रागुक्तः।।

**विषाणम्/आसन्दी च।**

दीक्षितस्य व्रतस्थस्य कण्डूयनापेक्षायां कण्डूतिसाधनं शृङ्गनिर्म्मितं विषाणं नाम।। औदुम्बरी नाभिदध्नपादा अरत्निमात्रशीर्ष्णी आनूच्या मौञ्जविवयना आसन्दी भवति। यज्ञियस्य वृक्षस्योदुम्बरस्याभावे। मुञ्जाभावे तु दार्भं विवानम्। प्रादेशमात्राः पादाः। अरत्निमात्राणीतराण्यङ्गानि शिरः, अनूची, तिरश्ची, पूर्वपादो, अपरपादो। विवाने प्राञ्च आतानाः, तिर्य्यञ्च आतानाः, आस्तरणम्, उपबर्हणम्, अतीरोकाः, सन्धयः, आत्मा, प्रतिष्ठा, अधस्ताद् द्वौ कूर्चौ इत्येतावन्त्यासन्द्यागात्राणि। औदुम्बरोऽस्या वारयो रोहितेनानडुहेनोत्तरलोम्ना चर्म्मणा विहितः। स्यात्। तस्य दशसु पश्चाच्छिद्रेषु दश दश तन्त्र्यो बद्धाः स्युः। ताश्च स्नायुमय्यो नाडयो लोके प्रतिपन्नाः। इह तु ता मौञ्ज्यो दार्भ्यो वा स्युरिति लाट्यायनः। शाण्डिल्यस्तु त्रिष्वेव पश्चाच्छिद्रेषु सत्सु चतुस्त्रिंशन्मध्यमे तन्त्र्यः स्युरभितस्तु त्रयस्त्रिंशतौ इति मन्यते।

उभयथापि शततन्त्रीको वाणः स्यादिति दिक् तत्र वास आस्तीर्य्य कर्म्मविशेषे यजमानं उपविशति क्वचित् सोमो राजाऽन्यो वा। यथोक्तं लाट्यायनीये – "आरोहन्युद्गातरि कूर्चानाराहेयुः प्रष्टी, ब्रह्मा, गृहपति" रिति। प्रष्टी पार्श्ववर्त्तिनौ प्रस्तोतृप्रतिहर्त्तारौ। या तु प्रवर्ग्यकर्म्मणि चर्मनिधानामर्थमासन्दी भवति सा सम्राडासन्दीत्युच्यते।

**इत्युपयोजनपात्राणि।**

**प्रातिस्विकः**

सिकता, ऊषरमृत्तिका, मूषकबिलमृत्तिका, वल्मीकमृत्तिका, महाह्लदमृत्तिका, अरण्यवराहविहतमृत्तिका, शर्करा, षट् हिरण्यशकलानि, त्रीणि सुवर्णशकलानि, त्रीणि रजतशकलानि, अश्वत्थस्यार्द्राः सपत्राः सप्तरोहाः, प्रादेशमात्रा अशुष्काग्रास्तिस्त्रः समिधः, अश्वत्थः, उदुम्बरः, पलाशः, शमी, विकङ्कतः, अशनिहतम्, अरण्यौ, मुञ्जकुलायः, पद्मिनीपत्रम्। इत्याधाने विंशतिसंभाराः।।

अद्भिरभ्युक्षणम्, हिरण्यम्, उषाः, आखुकरीषम्, शर्कराः। इत्याधाने पञ्चसंभाराः।

वल्मीकवपा, वराहविहतम्, आदाराः, पूतीकाः, अजाक्षीरम्। इति यज्ञशिरसि पञ्चसंभाराः।

महावीरः, शफः, प्रचरणी, उपयमनम्, उपयमनी, परीशासौ, पिन्वने, रौहिणकपाले, रौहिणहवन्यौ स्रूचौ। इत्येतानि दश यज्ञशिरः पात्राणि। तत्र मृत्पिण्डेन प्रादेशमात्रं मध्ये संगृहीतं महावीरं करोति। तस्योपरिष्टात् त्र्यङ्गुलं मुखं तत्र नासिका च क्रियते। तदेतन्महावीरधारणार्थं यज्ञकाष्ठनिर्म्मिते मध्यतो वर्त्तुले द्वे पात्रे शफपदवाच्ये भवतः। वैकङ्कतं जुहूसदृशं पात्रं प्रचरणी नाम। महापुष्करं महादण्डम्। जुहूसदृशं पात्रमुपयमनं। अथोपयमन्यादीन्यु-परिष्टात् प्रकरणान्तरे प्रदर्शयिष्यामः। एवमन्यान्यपि तत्तत्कर्मणां प्रातिस्विकानि पात्राणि तत्तत्कर्म्मप्रकरणे प्रदर्शयिष्यन्ते इति दिक्।

### अथासनानि।

**आसनं ब्रह्मणः कार्यं वारणं वा विकङ्कतम्।**
**हस्तमात्रं चतुः स्त्रक्तिमूलदण्डसमन्वितम्।**
**द्विषडङ्गुलसंख्याको मूलदण्डो विकङ्कतः।**

एवं यजमानासनम्, पत्न्यासनम्, अध्वर्य्वासनम्, होत्रासनम् आग्नीध्रासनम्ः, इत्यादीन्यासनानि सर्वाण्यरत्निमात्राणि कार्य्याणि।। इति।।



1. उत्तरारणिः



2. अधरारणिः



3. नेत्रम्



4. मन्थः



5. ओविली

6. अग्निहोत्रहवणी





7. वज्रः



8. धृष्टिः



9. उपवेषः



10. उलूखलम्



9. मुसलम्


12. शूर्पम्


13. कृष्णाजिनम्


14. दृषदः


15. उपला


16. शृतावदानम्


17. शम्या



18. शकटम्



19. पुरोडाशपात्री

20. प्राशित्रहरणम्





21. षडवत्तम्



22. द्रोणकलशः



23. रथः



43 परीशासः



44 घनः



45 परशुः



46 दर्विः



47 चरूपात्रम्

48 चमसपात्रम्



51 सप्तदशारचक्रम्






50 ग्रहपात्रम्

1 मण्डल–होतृचमसः
2 चतुरस्त्र–ब्रह्मचमसः
3 त्र्यस्त्रि–उद्गातृचमसः
4 पृथु–यजमानचमसः
5 अवतष्ट–प्रशास्तृचमसः
6 उत्तष्ट–ब्राह्मणाच्छंसिचमसः
7 विशाखी–पोतृचमसः
8 द्विगृहीतक–नेष्टृचमसः
9 रास्नावान्–अच्छावाकचमसः
10 मयूख–आग्नीध्रचमसः



49 राजासन्दी

18 उपयमनी



19 जुहू



20 उपभृत्



21 ध्रुवा



22 रौहिणहवणी



23 मयूखः



24 इडापात्री



25 स्रुवः



26 अभ्रिः



27 होतृपीठम्



28 इध्मा



29 आज्यस्थाली



30 बर्हिः



31 अन्तर्धानकटः



34 चरुस्थाली



32 वसतीवरी



33 धमनी



35 महावीरपात्रम्



36 एकघनः



# सन्दर्भग्रन्थानामनुक्रमणिका


| क्रम० | ग्रन्थनाम | लेखकः/सम्पादकः/भाष्यकारः | प्रकाशनम् | संवत्/वर्षम् |
|---|---|---|---|---|
| 1. | ऋग्वेदसंहिता | सायणाचार्यः | वैदिकसंशोधनमण्डलम्, पूना | 1976 |
| 2. | ऋग्वेदसंहिता | शिवनाथ आहिताग्निः | नागप्रकाशकः, देहली | 1985 |
| 3. | ऋग्वेदसंहिता | सातवलेकरः | स्वाध्यायमण्डल, पारडी | 1971 |
| 4. | शुक्लयजुर्वेदसंहिता | उव्वटमहीधरौ | मोतीलाल बनारसीदास | 1971 |
| 5. | शुक्लयजुर्वेदसंहिता | दामोदरसातवलेकरः | स्वाध्यायमण्डल, पारडी | 1985 |
| 6. | शुलयजुर्वेदसंहिता | मूलमात्रम् | नागप्रकाशकः, देहली | 1997 |
| 7. | सामवेदसंहिता | मूलमात्रम् | नागप्रकाशकः, देहली | 1994 |
| 8. | ऋग्वेदसंहिता | मूलमात्रम् | नागप्रकाशकः, देहली | 2000 |
| 9. | अथर्ववेदसंहिता | मूलमात्रम् | नागप्रकाशकः, देहली | 2003 |
| 10. | अथर्ववेदसंहिता | सायणभाष्यम् कृष्णदास अकादमी | शंकरपाण्डुरंग, पण्डित वाराणसी | 2045 सं० |
| 11. | कात्यायनश्रौतसूत्रम् | विद्याधर शर्मा | चौखम्बा संस्कृत प्रतिष्ठानम्, दिल्ली | 2005 |
| 12. | कात्यायनश्रौतसूत्रम् | आचार्य पट्टाभिरामशास्त्री | श्री ला०ब० शा० रा० सं० विद्यापीठम् दिल्ली | 1983 |
| 13. | कात्यायनयज्ञपद्धति विमर्शः | डॉ० मनोहरलालद्विवेदी | राष्ट्रियसंस्कृतसंस्थानम्, दिल्ली | 1988 |
| 14. | तैत्तिरीयसंहिता | श्रीपाददामोदर सातवलेकर | स्वाध्यायमण्डल, पारडी | 2014 सं० |
| 15. | निरुक्तम् | मुकुन्द झा बख्शी | चौखम्बासंस्कृत प्रतिष्ठानम्, दिल्ली | 1989 |
| 16. | शांखायनश्रौतसूत्रम् | अल्फर्ड हिलेब्राण्ट | मेहरचन्द लक्ष्मणदास पब्लिकेशन, दिल्ली | 1981 |
| 17. | वैदिकविज्ञानम् | म० म० गिरिधर शर्मा चतुर्वेदी | श्री ला० ब० शा० रा० सं० विद्यापीठम्, दिल्ली | 2005 |

| क्रम० ग्रन्थनाम | लेखकः/सम्पादकः/ भाष्यकारः | प्रकाशनम् | संवत्/वर्ष |
|---|---|---|---|
| 18. शुक्लयजुर्वेदीय काण्वसंहिता | श्रीपाददामोदर सातवलेकर | स्वाध्यायमण्डल्, पारडी | 1862 शके |
| 19. अग्निष्टोमपद्धतिः | वामनाचार्यः | चौखम्बा संस्कृतसीरीज ऑफिस वारा | 1937 |
| 20. अग्निष्टोमयज्ञ-पद्धतिविमर्शः | डॉ० नारायणदत्त शर्मा | अमर ग्रन्थ पब्लिकेशन्स | 2002 |
| 21. यज्ञतत्त्वप्रकाशः | पं० पी० एन० पट्टाभिराम शास्त्री | मोतीलाल बनारसीदास, दिल्ली | 1992 |
| 22. वेद विज्ञानबिन्दुः | म० म० गिरिधर शर्मा चतुर्वेदी | वाराणसेयसंस्कृत विश्वविद्यालय | 1965 |
| 23. महर्षिकुलवैभवम् | पं० श्री मधुसूदन ओझा | राजस्थान पुरातत्त्व अन्वेषण मन्दिर | 2013 सं० |
| 24. यज्ञमधुसूदन | सम्पा० विनोद शास्त्री | राजस्थान संस्कृत अकादमी, जयपुर | 2003 |
| 25. यज्ञमीमांसा | पं० वेणीरामशर्मा गौड | चौखम्बा विद्याभवन वाराणसी | 1998 |
| 26. श्रौतयज्ञ-परिचयः | पं० वेणी रामशर्मा गौड | चौखम्बा विद्याभवन, वाराणसी | 1999 |
| 27. ऐतरेयब्राह्मणम् | महर्षि ऐतरेय (मूलमात्रम्) | चौखम्बा संस्कृत संस्थान वारा० | 1987 |
| 28. ऐतरेयब्राह्मणम् | षड्गुरुशिष्यः | नागप्रकाशकः दिल्ली | 1991 |
| 29. ताण्ड्यमहाब्राह्मणम् | सायणाचार्यः | चौखम्बासंस्कृत प्रतिष्ठानम्, दिल्ली | 1989 |
| 30. ब्राह्मणोद्धारकोषः | आचार्य विश्वबन्धुः | विश्वेश्वरानन्द संस्थानम्, होशियारपुरम् | 1966 |
| 31. शतपथब्राह्मणम् | सायणाचार्यः | नागप्रकाश, दिल्ली | 1990 |
| 32. कातीयेष्टिदीपकः | डॉ० सुन्दर नारायण झा | सत्यम् पब्लिकेशन, दिल्ली | 2008 |
| 33. पुरुषमेधयज्ञस्य समीक्षात्मकम-ध्ययनम् | डॉ० सुन्दरनारायण झा | सत्यम् पब्लिकेशन्स, दिल्ली | 2006 |
| 34. वेदार्थविमर्शः | डॉ० रामगोपाल | पंजाब विश्वविद्यालय, चण्डीगढ़ | 1985 |
| 35. वैदिकवाङ्मय-स्येतिहासः | आ० जगदीश चन्द्र मिश्रः | चौखम्बा सुरभारती प्रकाशन, वारा० | 1989 |
| 36. वेदान्तसिद्धान्त-मुक्तावली | प्रो० लक्ष्मीश्वर झा | नाग प्रकाशकः दिल्ली | 1996 |
| 37. पारस्करगृह्यसूत्रम् | डॉ० ओमप्रकाशपाण्डेय | चौखम्बा अमरभारती प्रकाशन वारा० | 1980 |
| 38. मनुस्मृतिः | पं० गोपालशास्त्री नेने | चौखम्बा संस्कृत संस्थान, वारा० | 2039 सं० |

| क्रम० ग्रन्थनाम | लेखकः/सम्पादकः/ भाष्यकारः | प्रकाशनम् | संवत्/वर्ष |
|---|---|---|---|
| 39. देवयाज्ञिकपद्धतिः | वेदाचार्य विद्याधरशर्मा | चौखम्बा संस्कृत सीरीज ऑफिस वारा० | 2004 |
| 40. मीमांसान्यायप्रकाशः | पं० चिन्नस्वामी | चौ० संस्कृत संस्थान, वारा० | 2058 सं० |
| 41. अर्थसंग्रहः | प्रो० वाचस्पति उपाध्यायः | चौखम्बा पब्लिशर्स, वारा० | 2001 |
| 42. श्रीमद्भगवद्गीता | | गीताप्रेस गोरखपुर | 2058 सं० |
| 43. अष्टाविंशत्युप-निषद्संग्रहः | (मूलमात्रम्) | चौखम्बा पब्लिशर्स, वारा० | 2006 |
| 44. वेदधर्म्मव्याख्यानम् | पं० मोतीलालशर्मा, भारद्वाजः | राजस्थान पत्रिका प्रकाशनम् | 1990 सं० |
| 45. ब्रह्मविद्या | स्वामी कृष्णानन्द सरस्वती | विश्वेश्वरानन्द वैदिक शो० सं० होशियारपुर | 1982 |
| 46. मीमांसापरिभाषा | गंगाधरमिश्र 'मैथिल' | चौखम्बा ऑरियन्यलिया, वारा० | 1985 |
| 47. अमरकोशः | पं० अमर सिंहः | चौखम्बा अमरभारती प्रकाशन | 1983 |
| 48. गोपथब्राह्मणम् | क्षेमकरणदास त्रिवेदी | विष्णुप्रेस कटुआपुरा, वारा० | 1977 |
| 49. तैत्तिरीयब्राह्मणम् | सायणाचार्यः | आनन्दाश्रम मुद्रणालय | 1898 |
| 50. ब्रह्मविज्ञानम् | पं० श्री मधुसूदन ओझा | राजस्थान पत्रिका प्रकाशनम् | 2044 सं० |
| 51. वैदिक इण्डेक्स | अन्थोनी मैक्डोनल एवं कीथ | चौखम्बा विद्याभवनम्, वारा० | 1962 |
| 52. ऋग्वेदभाष्यभूमिका | सायणाचार्यः | चौखम्बा विद्याभवनम्, वारा० | 1968 |
| 53. वेदस्वरूपविमर्शः | श्रीकरपात्रस्वामी | भक्तिसुधा साहित्य परिषद्, कलकत्ता | 2026 सं० |
| 54. श्रौतयज्ञमीमांसा | पं० युधिष्ठिर मीमांसकः | आर्यभाषा | अज्ञात |
| 55. वेदार्थपारिजातम् | श्री करपात्र स्वामी | ताराप्रिंटिंग वर्क्स, वारा० | 1979 |
| 56. अथर्ववेदसंहिता | श्री पाद दामोदर सातवलेकरः | स्वाध्याय मण्डल, पारडी | 1969 |
| 57. अथर्ववेदसंहिता | सायणाचार्यः | विश्वेश्वरानन्द वै० शो० सं० होशियारपुर | 1961 |
| 58. सामवेदसंहिता | सायणाचार्यः | मुन्शीराम मनोहरदास पब्लिशर्स | 1983 |
| 59. ऋग्वेदसंहिता | सायणाचार्यः | वैदिकसंशोधन मण्डल, पूना | 1976 |
| 60. आपस्तम्बश्रौतसूत्रम् | धूर्तस्वामी भाष्यम् | प्राच्यविद्यासंशोधनालय, मैसूर | 1960 |
| 61. आश्वलायनश्रौत-सूत्रम् | पं० पट्टाभिरामशास्त्री | श्री ला० व० श० रा० स० विद्यापीठम्, दिल्ली | 1984 |
| 62. वाधूलश्रौतसूत्रम् | प्रो० ब्रजबिहारी चौबे | कात्यायनवैदिकसाहित्यप्रकाशनम् होशियारपुरम् | 1993 |

| क्रम० ग्रन्थनाम | लेखकः/सम्पादकः/ भाष्यकारः | प्रकाशनम् | संवत्/वर्ष |
|---|---|---|---|
| 63. शांखायनश्रौतसूत्रम् | हिलेब्राण्ट | मेहरचन्द लक्ष्मीचन्द पब्लिकेशन | 1981 |
| 64. वैदिकशब्दार्थकोशः | सूर्यकान्तः | बनारसहिन्दूविश्वविद्यालयः | 1963 |
| 65. ताण्ड्यब्राह्मणम् | श्री सायणाचार्यः | चौखम्बा संस्कृत सी० ऑ० वारा० | 1991 |
| 66. काण्वशतपथ-ब्राह्मणम् | सी० आर० स्वामिनाथन | इन्दिरागांधी नेशनल से० फार द आर्ट्स | 1997 |
| 67. त्रिकाण्डमण्डन आपस्तम्बसूत्रम् | ध्वनितार्थकारिका मिश्रभाष्य | एशियाटिक सोसायटी बंगाल | 1903 |
| 68. लाट्यायनश्रौतसूत्रम् | मुकुन्द झा बख्शी | का० सं० सीरीज, वारा० | 1932 |
| 69. वाजसनेयिप्राति-शाख्यम् | डॉ० वीरेन्द्र कुमार वर्मा | चौखम्बा संस्कृत प्रति, वारा० | 1987 |
| 71. संस्कृत-हिन्दी-शब्दकोशः | वामन शिवराम आप्टे | मोतीलाल बनारसीदास, दिल्ली | 1993 |

